इब्रीयभाषातो व्याकृतः

# धर्म्मग्रन्थः।

तस्य प्रथमं खण्डं

यद्वा

मूससा रचितं ग्रन्थपञ्चकं

यिहोशूयपुस्तकञ्च।

कलिकातानगरे

ग्रन्थीय मुद्राङ्कितोऽभूत्।

शकाब्दाः १७७० ई १८४८

इङ्ग्रीयभाषातो व्याकृतः

# धर्मग्रन्थः

---

तस्य द्वितीयं खण्डं

यद्वा

यिहोशूयस्य मरणात् परम् इ[illegible]येलीयलोकानां

पुरावृत्तपुस्तकसङ्ग्रहः ।

---

कलिकातानगरे

ग्रन्थोऽयं मुद्राङ्कितोऽभूत् ।

शकाब्दाः १७७४ ई १८५२

# सूचीपत्रं ।

# आदिपुस्तकं।

## मुसालिखितं प्रथमपुस्तकं।

---

### १ प्रथमोऽध्यायः।

१ पृथिव्या आकाशस्य च सृष्टिः ३ दीप्तेः सृष्टिः ६ शून्यगगनायाः सृष्टिः ९ शुष्कभूमेः सृष्टिः ११ वृक्षादीनां सृष्टिः १४ चन्द्रसूर्य्यादीनां सृष्टिः २० मीनपक्षिणां सृष्टिः २४ ग्राम्यवन्यपश्वादीनां सृष्टिः २६ ईश्वरस्य सादृश्येन मनुष्यस्य सृष्टिः २९ मानुषादीनां भक्ष्यं।

१ आदित ईश्वर आकाशं पृथिवीञ्च ससर्ज। पृथिवी निराकारा शून्या
२ चासीत्, अन्धकारश्च गम्भीरजलस्योपरि तस्थौ, तदानीम् ईश्वरस्यात्मा
तोयानि व्याप्यासीत्।
३ अनन्तरं, दीप्तिर्भवतु, इतीश्वरेणाज्ञापिते दीप्तिर्बभूव। तदानीम्
४ ईश्वरो दीप्तिमुत्तमां विलोक्य तमिस्रात् तां पृथक् कृत्वा दीप्ते र्नाम
५ दिवस इति, तमिस्रस्य नाम रात्रिरिति कृतवान्। ततः सन्ध्यायां प्रातः-
काले च जाते प्रथमो दिवसो बभूव।
६ ततः परं तोयानां मध्ये शून्यत्वमुद्भूय तोयानि भागद्वयेन पृथक् करोतु।
७ ईश्वर इत्यादिश्य शून्यत्वं ससर्ज शून्योर्द्धस्थिततोयेभ्यः शून्याधःस्थिततो-
८ यानि पृथक् चकार च, ततस्तादृशं बभूव। तदेश्वरस्तस्य शून्यस्य नाम
गगनं चकार। सन्ध्यायां प्रातःकाले च जाते द्वितीयो दिवसो बभूव।
९ पश्चात् ईश्वर इत्याज्ञापयामास, गगनाधःस्थितानि सर्व्वाम्भांसि एक-
१० स्मिन् मिलन्तु स्थलञ्च प्रकाशतां; ततस्तथैव बभूव। तदेश्वरः स्थलनाम
पृथ्वीति तोयराशेर्नाम समुद्र इति कृतवान्, तच्चोत्तमं ददर्श।
११ अपरम् ईश्वर आदिदेश, मेदिन्यां तृणानि सबीजौषधयो नानाजा-
तीयाः सबीजफलदायिनो महीरुहाश्च समुत्पद्येरन्; ततस्तथैवाभवत्;
१२ अर्थात् पृथिव्यां तृणानि सबीजनानाजातीयौषधयः सबीजफलदायिनो

३० दाम् । तथा वन्यपशुखेचरखगेभ्यो भूमिस्थितसजीवोरक्ष्मजन्तुभ्यश्च
३१ भोक्तुं सर्व्वहरितौषधीरहमदाम्; ततस्तथैव बभूव । अनन्तरम् ईश्वरः
स्वसृष्टसकलवस्तूनि निरीक्ष्य सर्व्वाण्यत्युत्तमानि ददर्श । तथा सन्ध्यायां
प्रातःकाले च जाते षष्ठं दिनं बभूव ।

---

## २ द्वितीयोऽध्यायः ।

१ विश्रामवारस्य निरूपणं ४ सृष्टेर्वृत्तान्तः ७ एदनुद्याननिर्म्माणं १५ तस्य मध्ये मनुष्यस्थापनं १८ स्त्रियाः सृष्टिवृत्तान्तश्च ।

१ इत्थम् आकाशस्य पृथिव्यास्तदुभयस्थानां सर्व्ववस्तूनाञ्च सृष्टिः सम्पूर्णा
२ बभूव । पश्चात् सप्तमे दिने ईश्वरः स्वकृतकर्म्माणि समाप्य तस्मिन् सप्तमे
३ दिने स्वकृतकार्य्येभ्यो विशश्राम । तदा ईश्वरेण सप्तमं दिनं आशिष्य
पवित्रीकृतं, यस्मात् तस्मिन् दिने ईश्वरेण स्वकृतनिखिलसृष्टिकार्य्यात्
विश्रामोऽकारि ।
४ सृष्टिकाले गगनधरित्र्योरियं विवृतिः । यस्मिन् काले प्रभुः परमेश्वरः
पृथिव्याकाशौ ससर्ज, तदानीं पृथिव्यां किमपि क्षेत्रियं द्रव्यं नासीत्
५ क्षेत्रिया काप्योषधिश्च नाजनि, यतः प्रभुः परमेश्वरः पृथिव्यां न वर्षया-
६ मास भूमौ कृषिकर्म्म कर्त्तुं मनुष्यो नासीत् । किन्तु पृथिव्याः शिशिरः
समुत्थाय सर्व्वां भूमिम् असिञ्चत् ।
७ अपरञ्च प्रभुणा परमेश्वरेण मृदा मनुष्यं निर्म्माय तस्य नासारन्ध्रे
८ प्राणवायौ प्रविष्टे स सात्मप्राणी बभूव । अनन्तरं प्रभुः परमेश्वरः
पूर्व्वदिक्स्थिते एदन्नामकदेशे उद्यानमेकं कृत्वा तत्र स्वसृष्टं तं मानवं
९ स्थापयामास । तत्र प्रभुः परमेश्वरः भूमौ सर्व्वजातीयान् सुदृश्यान्
सुखाद्यफलान् पादपान् तस्योद्यानस्य मध्यस्थाने अमरत्वं पादपं सदस-
१० ज्ज्ञानदातारं पादपञ्च जनयाञ्चकार । उद्यानं सलिलेन सेक्तुम् एका
११ स्रवन्ती एदनुद्यानात् निर्गत्य विभिद्य चतुर्मुखी भूत्वा प्रावाह । तस्याः
पीशोनाख्या प्रथमा तटिनी सुवर्णोत्पादिनी हवीला देशनिवहान्
१२ वेष्टित्वा प्रावाह । तस्य देशस्य जातरूपम् अतीवोत्तमं, तस्मिन् स्थाने
१३ रत्नानि वैदूर्य्यमणयश्च जायन्ते । तथा तस्या गीहोनाभिधा द्वितीया
१४ धुनी समस्तकूशदेशं वेष्टमाना प्रावाह । तथा तस्या हिद्देकल्नाम्नी
तृतीया धुनी अश्शूरियादेशस्य पूर्व्वदिशा प्रावाह । तथा तस्याः चतुर्थ-
धुन्या नाम फरात् ।

ततः परं प्रभुः परमेश्वर आदमं नीत्वा एदनुद्यानस्थितस्योद्यानस्य कर्म्मं १५
कर्त्तुं तद्रक्षितुञ्च नियोजयामास। किञ्च प्रभुः परमेश्वरस्तमित्यादिदेश, १६
एतस्योद्यानस्य सकलपादपानां फलानि त्वया स्वच्छन्दं भोक्तव्यानि;
किन्तु सदसज्ज्ञानदातुः पादपस्य फलं मा भुज्यतां, यतो यस्मिन् दिने १७
तत् खादिष्यसि तस्मिन्नेव दिने निश्चितं मरिष्यसि।

अनन्तरं प्रभुः परमेश्वरो जगाद, मनुष्यो यद् एकाकी तिष्ठेत् तन् न १८
भद्रं, तस्य साक्षादिव एकः सहकारी मया निर्म्मास्यते। प्रभुणा परमे- १९
श्वरेण मृदा निर्म्मितानां वन्यपशुखेचरखगानां कानि नामान्यादम् करि-
ष्यतीति वेदितुं परेश्वरः सर्व्वप्राणिनस्तस्य समीपमानयामास, तदानीं
आदम् यस्य यन्नाम चकार, तस्य तदेव नामाभवत्। तदा आदम् सर्व्वेषां २०
पशूनां खेचरखगानां वन्यपशूनाञ्च नामानि कृतवान्, किन्तु तेषां मध्यत
आदमा साक्षादिव एकः सहकारी न प्राप्तः। अनन्तरं प्रभुः परमेश्वर २१
आदमम् अतिनिद्राप्य तस्यां निद्रायां तस्यैकं पञ्जरं गृहीत्वा मांसेन तत्
क्षतस्थानं पूरयामास। किञ्च प्रभुणा परमेश्वरेण यः पञ्जर आदमो नीत- २२
स्तेन स एकां स्त्रियं निर्म्माय ताम् आदमः सन्निधिम् आनिनाय। तदा- २३
नीम् आदम् आचचक्षे, एषैव मदीयास्थ्नाम् अस्थि मदीयमांसस्य मांसं;
नरादियं नरादजनिष्ट, तस्माद् अस्या नाम नारीति कारिष्यते। एतदर्थं २४
मानवः स्वमातापितरौ परित्यज्य स्वभार्य्यायाम् आसंक्ष्यति, तौ द्वौ
जनावेकाङ्गौ भविष्यतः। तदानीम् आदमस्तद्भार्य्यायाञ्च नग्नत्वे स्थिते २५
तयोरपि लज्जाबोधो नासीत्।

---

## ३ तृतीयोऽध्यायः।

१ सर्पेण वञ्चनं ८ तेन मानुषाणां पतनं १४ सर्पस्य दण्डनं १६ नारीपुरुषयोः दण्डनं २१ ताभ्यां चर्म दत्त्वा उद्यानतो दूरीकरणञ्च।

प्रभुणा परमेश्वरेण सृष्टानां भूचरजन्तूनां मध्ये सर्पोऽतीव खल १
आसीत्। स तां नारीमवदत् अये अस्योद्यानस्य कस्यचिदपि पादपस्य २
फलानि भोक्तुं परमेश्वरो युवां न्यषेधत्, किमिदं सत्यं? ततो नारी सर्पं
प्रोवाच, आवाम् एतस्योद्यानस्य सर्व्वेषां विटपिनां फलानि भोक्तुं शक्नुवः ३
केवलम् उद्यानमध्यस्थितस्य पादपस्य फलं प्रतीश्वरेण कथितं, युवाम्
एतत् फलं मा भुञ्जाथाम् मा स्पृशतञ्च, तत् कृत्वा मरिष्यथः। तदा भुजगो ४
नारीं बभाषे, युवां निश्चितं न मरिष्यथः, किन्तु यदा तत् खादिष्यथः, ५

तदा युवयोर्ज्ञानचक्षुःप्रकाशो भविष्यति; तत ईश्वर इव भद्राभद्रज्ञानं
६ लप्स्येथे, इतीश्वरो जानाति। तदा नारी तं महीरुहं सुखाद्यफलं लोचन-
रम्यं ज्ञानलाभाय वाञ्छनीयञ्च विज्ञाय तस्य फलानि पातयित्वा
७ बुभुजे, स्वस्वामिने च ददौ सोऽपि भुक्तवान्। तेन तयोश्चक्षुषो ज्ञान-
प्रकाशो बभूव, ततस्तौ स्वकीयनग्नतां विज्ञाय वटपत्राणि स्यूत्वा कटौ
बबन्धतुः।
८ ततो दिवावसाने मन्दवायौ उद्याने गमनागमनकारिणः प्रभोः परमेश्वरस्य
रवं श्रुत्वा आदम् तस्य जाया च प्रभोः परमेश्वरस्य सम्मुखात् उद्यान-
९ स्थानां वृक्षाणां मध्येऽन्तर्दधाते। तदा प्रभुः परमेश्वर आदमम् आहूय
१० बभाषे, त्वं कुत्र? ततः स उवाच, उद्याने भवतः शब्दं श्रुत्वा नग्नता-
११ कारणात् भीत्वा स्वमगोपयम्। स जगाद, त्वं नग्नोऽसीति कस्त्वामबोधयत्?
यस्य वृक्षस्य फलं भोक्तुं त्वामहं न्यषेधं तस्य वृक्षस्य फलं किं त्वया भुक्तं?
१२ तत् आदमा गदितं, त्वं यां योषितं मम सङ्गिनीमकरोः, सा मह्यं तस्य
१३ पादपस्य फलम् अददात् तन्मया भुक्तं। प्रभुः परमेश्वरो नारीं जगाद,
त्वया किमिदम् अकारि? नारी बभाषे, सर्पस्य प्रवञ्चनयाहं अखादम्।
१४ पश्चात् प्रभुः परमेश्वर उरगं जगाद, त्वमिदं कर्माकरोः, तस्मात्
ग्राम्यवन्यपशुमध्यात् अधिकशापग्रस्तो भूत्वा वक्षसा गमिष्यसि, यावज्जीवं
१५ धूलीः खादिष्यसि च। किञ्च त्वयि योषिता च त्वदीयवंशेन तस्या वंशेन
च परस्परं वैरितां जनयिष्यामि, तेन स त्वदीयशिर आहनिष्यति,
त्वञ्च तस्य पादमूलं आहनिष्यसि।
१६ अनन्तरं स नार्य्यै कथयामास, त्वदीयप्रसववेदनाम् अहम् अतीव
वर्द्धयिष्यामि, ततस्त्वम् अतिशयकष्टेन सन्तानान् प्रसविष्यसि, तथा
स्वामिनो निघ्नीभूय स्थास्यसि स च त्वां शास्यति।
१७ ततः परं स आदमे कथयाञ्चकार, यस्य पादपस्य फलं भोक्तुं त्वामहं
न्यषेधं, त्वं योषितः कथां निशम्य तस्य पादपस्य फलं अभुंक्थाः, तत्-
कारणात् भूमिरभिशप्ता जाता; त्वया यावज्जीवं क्लेशं प्राप्य तस्याः
१८ शस्यादि भक्षिष्यते। तस्यां छागलकण्टकानि नानाकण्टकिद्रुमा उत्प-
१९ त्स्यन्ते, त्वञ्च क्षेत्रस्यौषधीः खादिष्यसि। अपरञ्च यस्या मृत्तिकाया अजा-
यथा यावत् तस्यां लीनो न भविष्यसि तावत् घर्म्माक्तमुखेन भक्ष्यं भोक्ष्यसे;
२० यतस्त्वं मृत्तिका, पुनरपि मृत्तिकायां लीनो भविष्यसि। अनन्तरं आदम्
तस्य योषितो नामधेयं हवा (अर्थात् जीवन्तीति) चक्रे, यतः सा सर्व्वेषां

१३ ग्रस्यं नोत्पत्स्यते, तथा त्वं धरित्र्यां पर्य्यटन् भ्रमन् च भविष्यसि। ततः
१४ काबिल् परमेश्वरं बभाषे, एतादृशो दण्डो मया न सह्यः। अद्य यदि त्वं
माम् अस्मात् स्थानाद् अपसारयसि, तर्हि तव समक्षाद् बहि र्गत्वा
पर्य्यटन् भ्रमन् च भविष्यामि तथा कोपि मानुषो मां प्राप्य हनिष्यति।
१५ तदा परमेश्वरो जगाद, यः कश्चित् काबिलं हनिष्यति, तस्य सप्तगुण-
दण्डो भविष्यति; तस्मात् कोपि तं वीक्ष्य यथा न हनिष्यति, तदर्थं पर-
मेश्वरः काबिलि चिह्नमेकं निदधौ।

१६ काबिल् परमेश्वरस्य समक्षात् प्रस्थाय एदनः पूर्व्वस्यां दिशि नोद्
१७ नामनि देशे न्युवास। अनन्तरं काबिलि स्वभार्य्यामुपगते सा गर्भवती
भूत्वा हनोक्‌नामानं पुत्रं प्रसुषुवे, किञ्च स नगरमेकं निर्म्माय स्वपुत्र-
१८ नामानुसारेण तस्य नगरस्य नाम हनोक् चक्रे। तस्य हनोकः पुत्र ईरद्,
ईरदः पुत्रो मिहूयायेल्, मिहूयायेलः पुत्रो मिथूशायेल्, मिथूशायेलः
१९ पुत्रो लेमक्। तस्य लेमको द्वे जाये, एकस्या नामधेयम् आदा तदन्याया
२० नाम सिल्लासीत्। तस्या आदाया गर्भे जातो यो याबल्, स तूर्य्यगृहवा-
२१ सिनां पशुपालकानाम् आदिपुरुष आसीत्। अपरं यूबल्‌नामा तस्यैको
२२ भ्राता वीणावादकानां वंशीवादकानाञ्चादिपुरुष आसीत्। किञ्च
सिल्लाया गर्भजन्मा तूबल्काबिल्‌नामा पुत्रः पित्तलस्य लोहस्य च नाना-
विधं कर्म्म कर्त्तुं निपुण आसीत्; तस्य तूबल्काबिलो नयमा नामिका
२३ भगिन्यासीत्। पश्चात् लेमक् स्वभार्य्ये अवदत्।

हे आदे शृणु मद्वाक्यं हे सिल्ले त्वञ्च तत् शृणु।
हे मद्भार्य्यौ युवाभ्यां मे वाक्ये चेतो निधीयतां।
आक्रान्तः सन्नहं पूर्व्वं हतवान् लोकमेककं।
आघातः सन्नहं तेन युवानं हतवान् नरं।
२४ सप्तं वधस्य काबिलो यदि सप्तगुणं भवेत्।
गुणितं सप्तसप्तत्या मद्वधस्य फलं भवेत्।

२५ अनन्तरम् आदमि पुनश्च स्वभार्य्याम् उपगते सा गर्भवती भूत्वा
पुत्रमपरं प्रसुषुवे, तथा काविलाद्धतस्य हाबिलः प्रतिनिधिरूपं
पुत्रमपरं ईश्वरो मह्यं दत्तवान् इति कथयित्वा सा तस्य नाम शेत्
२६ (अर्थात् प्रतिनिधिं) चक्रे। अनन्तरं तस्य शेतः पुत्रे जाते स तस्य
नाम इनोश् चक्रे; तदानीं लोकाः परमेश्वरस्य नाम्नि प्रार्थनां कर्त्तुं
प्रारभन्त।

# विचारयितृकर्म्माणि।

## १ प्रथमोऽध्यायः।

१ यिहूदाशिमियोनयोः कर्म्मकथनं ९ कालेवस्य दुहितुः कथनं १६ नानानगराणां जयकथनं २२ यूषफवंशस्य बैथेलनगरवशीकरणं २७ मिनशिवंशस्य कर्म्मकथनं २९ इफयिमवंशस्य कर्म्मकथनं ३० सिवूलूनवंशस्य कर्म्मकथनं ३१ आशेरवंशस्य कर्म्मकथनं ३३ नप्तालिवंशस्य कर्म्मकथनं ३४ दानवंशस्य कर्म्मकथनं।

१ यिहोशूयस्य मरणात् परम् इस्रायेल्वंशाः परमेश्वरं वाचमिमां
पप्रच्छुः किनानीयानां प्रतिकूलं योद्धुं प्रथमतोऽस्माकं को गमिष्यति?
२ ततः परमेश्वर उवाच, यिहूदा गच्छतु, पश्यताहं तस्य करे तं देशं समर्प-
३ यामि। अनन्तरं यिहूदाः स्वभ्रातरं शिमियोनं बभाषे, त्वं ममांशे मया
सार्द्धम् आगच्छ, आवां किनानीयैः समं युध्यावः, अपरम् अहमपि
४ तवांशे त्वया समं यास्यामि, ततः शिमियोनस्तेन समं जगाम। अनन्तरं
यिहूदालोकै र्यात्रायां कृतायां परमेश्वरस्तेषां करेषु किनानीयान् पिरि-
षीयांश्च समर्पयाञ्चकार, ततस्ते वेषके तेषां दशसहस्रलोकान् अवधिषुः।
५ अपरम् अदोनीवेषकं वेषके प्राप्य तेन समं युयुधुः, ततस्तैः किनानीयाः
६ पिरिषीयाश्च लोका जघ्निरे। अदोनीवेषकश्च पलायाञ्चक्रे, ततस्ते तस्य
७ पश्चाद् धावन्तस्तं धृत्वा तस्य हस्तपादानाम् अङ्गुष्ठान् चिच्छिदुः।
ततोऽदोनिवेषको जगाद, येषां हस्तपादानाम् अङ्गुष्ठाश्छिन्नास्तादृशाः
सप्ततिर्न्टपा मम भोजनासनस्याधः खाद्यं समग्टह्णन्, मया यादृशं
कर्म्म कृतम् ईश्वरो मह्यं तदनुरूपं फलमदात्, अनन्तरं स लोकै
८ र्यिरूशालमम् आनीतस्तत्र ममार। अनन्तरं यिहूदावंशो यिरूशाल-
मविरुद्धं युद्ध्वा तद् वशीकृत्य खड्गैर्नागरिकान् जघान नगरञ्च वह्निना
दाहयाञ्चकार।

९ अनन्तरं यिहूदावंशः पर्व्वतदक्षिणदेशसमभूमिषु निवासिभिः किना-
१० नीयैः समं योद्धुम् अवरुरोह। ततो यिहूदावंशो हिब्रोणवासिकिना-
नीयानां विरुद्धं युद्धयात्रां कृत्वा शेशयम् अहिमानं तल्मयञ्च जघान,
११ पूर्व्वं तस्य हिब्रोणस्य नाम किरियथर्व्वमासीत्। अनन्तरं तस्मात् ते

दिबीरनिवासिनां प्रतिकूलं यात्रां चक्रुः, पूर्व्वं दिबीरस्य नाम किरियत-
सेफरमासीत् । ततः कालेवः कथयामास, यः कश्चित् किरियतसेफरं १२
जित्वा वशीकरिष्यति तमहम् अक्षानामिकां स्वदुहितरं विवाहयि-
ष्यामि । अनन्तरं कालेवस्य कनिष्ठभ्रातुः किनसस्य पुत्रो ऽत्नीयेलस्तन्नगरं १३
वशीचकार, ततः स तम् अक्षानामिकां स्वदुहितरं विवाहयामास ।
अपरं सा कन्या तत्समीपमागता स्वजनकं क्षेत्रं याचितुं भर्त्तुरनुमतिं १४
ययाचे, ततस्तस्यां स्वगर्दभाद् अवरूढायां कालेवस्तां पप्रच्छ, त्वं
किमिच्छसि ? सा तमब्रवीत् माम् आशिषं वदतु, भवान् मह्यं १५
दक्षिणदिक्स्थितां भूमिं दत्तवान्, इदानीं तोयप्रस्रवणानि मह्यं ददातु,
ततः कालेव ऊर्द्ध्वस्थान्यधःस्थानि च प्रस्रवणानि तस्यै ददौ ।

अनन्तरं मूससः श्वशुरस्य केनीयस्य वंशो यिहूदावंशेन समं तालवृक्ष- १६
नगराद् अरादस्य दक्षिणदिक्स्थितं यिहूदाप्रान्तरं जगाम, अपरं तत्
स्थानं गत्वा लोकानां मध्ये वसतिं चकार । अनन्तरं यिहूदावंशः स्वभ्रातुः १७
शिमियोनस्य वंशेन समं गत्वा सिफातवासिकिनानीयान् हत्वा निःशेषम्
उच्छिद्य तस्य नगरस्य नाम हर्म्मा (निःशेषोच्छेदनमिति) चकार ।
अपरं यिहूदा असां तस्याः प्रदेशम् अस्किलोनं तस्य प्रदेशम् इक्रोणं तस्य १८
प्रदेशञ्च वशीचकार । परमेश्वरो यिहूदावंशेन समम् आसीत्, अतः १९
कारणात् ते पर्व्वतनिवासिनो दूरयाञ्चक्रुः, किन्तु समभूमिनिवासिनां
लौहनिर्म्मिता रथा आसन्, तस्मात् तान् दवयितुं नाशक्नुवन् । अन- २०
न्तरं ते मूससः आज्ञानुसारेण कालेवाय हिब्रोणं ददुः, स च तस्माद्
अनाकस्य सुतत्रयं दवयामास । किन्तु विन्यामीनवंशो यिरूशालमनि- २१
वासिनो यिबूषीयान् न दवयामास, ततो यिबूषीया जना अद्यापि
यिरूशालमे विन्यामीनवंशेन समं वसन्ति ।

अनन्तरं यूषफवंशीया वैथेलस्य प्रतिकूलं यात्रां चक्रुः, तत्र परमेश्व- २२
रस्तैः समम् आसीत् । अनन्तरं यूषफवंशीया वैथेलं निरीक्षितुं दूतान् २३
प्रेषयामासुः पूर्व्वं तस्य वैथेलस्य नाम लूषम् आसीत् । तेन चरास्तस्मान्न- २४
गरात् निर्गच्छन्तं नरमेकं वीक्ष्य तं जगदुः, वयं विनयामहे त्वं नगरस्य
प्रवेशमार्गम् अस्मान् दर्शय ततो वयं त्वाम् अनुग्रहिष्यामः । ततः स तान् २५
नगरस्य प्रवेशमार्गं दर्शयामास ततस्ते खड्गधारैस्तन्नगरमाजघ्नुः किन्तु
तं मनुष्यं सपरिवारं ररक्षुः । अनन्तरं स हित्तीयानां देशं गत्वा नगर- २६
मेकं निर्म्माय तस्य नाम लूषं चकार तदद्यापि तेन नाम्ना विख्यातमास्ते ।

२७ अपरं बैतशानं तस्य ग्रामाश्च तानकं तस्य ग्रामाश्च दोरं तस्य ग्रा-
माश्च यिब्लियमं तस्य ग्रामाश्च मगिद्दस्तस्या ग्रामाश्च, एतानि स्थानानि
मिनशिवंशो नाधिचकार, तेन किनानीयास्तस्मिन् देशे वस्तुं मतिं चक्रुः।
२८ अनन्तरम् इस्रायेल्वंशो बलवान् भूत्वा किनानीयान् निःशेषं न
दूरयित्वा कराधीनान् चकार।
२९ अपरम् इफ्रयिमवंशीया गेषरनिवासिनः किनानीयान् न दवया-
मासुस्ततः किनानीया गेषरे तेषां मध्ये न्यवसन्।
३० अपरं सिबूलून्वंशीयाः किट्रोणस्य नहलोलस्य च निवासिनो न
दवयामासुस्ततः किनानीयास्तेषां मध्ये न्यवसन् कराधीनाश्चाभवन्।
३१ अपरम् आशेरवंशीया अक्कोः सीदोनस्याहलवस्याक्षीवस्य हिल्वा-
३२ या अफिकस्य रिहोवस्य च निवासिनो न दवयामासुः। तत आशेरीय-
लोका देशनिवासिनः किनानीयान् न दवयित्वा तेषां मध्ये न्यवसन्।
३३ अपरं नप्तालिवंशीया बैतशेमशस्य बैथनातस्य च निवासिनो न दव-
यित्वा देशनिवासिकिनानीयानां मध्ये न्यवसन्, अपरं बैतशेमशस्य
बैथनातस्य च निवासिनस्तेभ्यः करं ददुः।
३४ अपरम् इमोरीयलोका दान्वंशीयान् निम्नभूमिम् अवरोढुं न दत्त्वा
३५ बलेन तान् पर्व्वते रुरुधुः। तत इमोरीया हेरसपर्व्वते अयालोने शाल-
३६ वीमे च न्यवसन्, अपरं यूषफवंशेन जितास्ते करं ददुः। तेषाम् इमो-
रीयाणां सीमा सेलाप्रभृतिस्थानमारभ्य अक्रब्बीमनामानम् ऊर्द्धगामिनं
पन्थानं यावद् आसीत्।

---

## २ द्वितीयोऽध्यायः।

१ बोखीमस्थाने लोकानां तिरस्कारिदूतस्य कथनं ६ यिहोशूयस्य मरणात् परं नूतन-
लोकानां जन्मदुष्टतयोः कथनं १५ तान् प्रति परमेश्वरस्य क्रोधदये २० इस्रायेल्-
वंशस्य परीक्षार्थं रचितस्य किनानीयलोकानां शेषस्य कथनं।

१ अनन्तरं परमेश्वरस्य दूतो गिल्गलाद् बोखीममागत्य जगाद, अहं
युष्मान् मिसरदेशाद् आनयं, अपरं यं देशं दातुं युष्माकं पितृणां सन्निधौ
शपथमकरवं तमेव देशं युष्मान् आनयं, अपरमिदम् अकथयं, युष्माभिः
२ सार्द्धं मम यो नियमस्तमहं कदापि न भंक्ष्यामि। यूयमप्येतद्देशनिवा-
सिभिः समं सन्धिं मा कुरुत, तेषां सर्व्वा वेदीश्च भंक्त। किन्तु युष्माभि
३ र्मम वाचि मनांसि न न्यधीयन्त, यूयं किमिदं कर्म्म कृतवन्तः? तस्मादहं

वदामि, युष्माकं सम्मुखाद् एतान् लोकान् न दवयिष्यामि ते युष्माकं
पार्श्वे कण्टकरूपा भविष्यन्ति तेषां सुराश्च युष्माकम् उन्माथरूपा भवि-
ष्यन्ति। तदानीं परमेश्वरस्य दूतेनेस्रायेलः सर्व्ववंशेभ्य इति [illegible] च कथि- ४
तायां लोका उच्चैःस्वरं रोदितुम् आरेभिरे। ततो हेतोस्ते तस्य ५
स्थानस्य नाम बोखीमं (रोदनस्थानमिति) चक्रुः, अपरं ते तत्र परमेश्वरम्
उद्दिश्य बलीन् ददुः।

यस्मिन् काले यिहोशूय इस्रायेल्वंशं व्यसृजत् तदा देशम् अधि- ६
कर्त्तुम् एकैको जनः स्वेन भोग्यां भूमिं जगाम। तत्कालमारभ्य यिहोशूयस्य ७
यावज्जीवनं तथा ये प्राचा इस्रायेल्वंशस्य कृते परमेश्वरेण कृताः सर्व्वा
महतीः क्रिया वीक्ष्य यिहोशूयस्य मरणात् परं जीवन्तोऽतिष्ठन् तेषामपि
यावज्जीवनं लोकाः परमेश्वरं सिषेविरे। अपरं नूनसुतः परमेश्वरस्य ८
सेवको यिहोशूयो दशाधिकशतवर्षवयस्कः सन् ममार। ततो लोका ९
गाशपर्व्वतस्योत्तरपार्श्वे इफ्रयिमपर्व्वतस्थे तिम्नत्हेरसे तस्य भोग्यभूमेः
सीम्नि तस्य श्मशानं चक्रुः। इत्थं तदानीन्तनसर्व्वलोकेष्वपि स्वस्वपितृलो- १०
कानां समीपे संगृहीतेषु परमेश्वरमधीस्रायेल्वंशार्थं तेन कृतां सकल-
क्रियाञ्चाप्यनभिज्ञा नूतनलोका उत्पन्ना बभूवुः। अनन्तरम् इस्रायेल्वंशः ११
परमेश्वरस्य साक्षात् कुकर्म्म वाल्देवानां सेवनञ्च चकार। अपरं यस्तान् १२
मिसर्देशाद् बहिष्कृत्यानिनाय स्वेषां पैतृकं तं प्रभुं परमेश्वरं विहाय
ते स्वेषां चतुर्दिक्स्थितलोकैः सेवितानाम् इतरदेवानाम् अनुगामिनो
बभूवुः, तांश्च प्रणेमुरित्थं परमेश्वरं क्रोधयामास। ते परमेश्वरं विहाय १३
बाल्देवान् अस्तारोतदेवीश्च सिषेविरे।

तत इस्रायेल्वंशस्य प्रतिकूलं परमेश्वरस्य क्रोधे प्रज्वलिते स तान् १४
लोठकानां करेषु समर्पयामास, ततस्ते तान् लोठयाञ्चक्रुः, अपरं स तेषां
चतुर्दिक्स्थानां रिपूणां करेषु तान् विचिक्राय ततस्ते रिपूणां सम्मुखे
पुनः स्थिराः स्थातुं न शेकुः। अपरं परमेश्वरस्तानधि यद् वाक्यम् अवदत् १५
यच्च शपथमकरोत् तदनुसारेण ते यद्यत् कर्म्म कर्त्तुम् उपक्रम्यन्ते तेन
परमेश्वरस्तेषाम् अमङ्गलं करोतीत्थं तेषाम् अतिक्लेशो भवति। अनन्तरं १६
परमेश्वरेण कृपां कृत्वा रिपूणां करेभ्यस्तान् मोचयितुं विचारकेषूत्पादि-
तेषु ते स्वेषां विचारकाणामपि वाक्येषु मनांसि न निवेश्येतरदेवान् १७
अनुगम्य व्यभिचरन्ति तांश्च प्रणमन्ति, तेषां पूर्व्वपुरुषाः परमेश्वरस्याज्ञा
आचरन्तो येन मार्गेणागच्छन्, ते तदनुसारादकृत्वा तस्मात् मार्गात्

१८ शीघ्रं वहिर्भवन्ति। उपद्रविभ्यः क्लेशकेभ्यश्च तेषां कातरोक्तिं श्रुत्वा पर-
मेश्वरेण कृपां कृत्वा विचारयितृषूत्पादितेषु विचारकस्य साहाय्ये कृते
१९ च तद्विचारयितु र्यावज्जीवनं प्रानुभ्य उद्धृता अपि ते तद्विचार-
यितु र्मरणात् परं पुनः स्वेषां पूर्व्वपुरुषेभ्योपि भ्रष्टा भूत्वा इतरदे-
वान् अनुगम्य सेवन्ते प्रणमन्ति च स्वकर्म्मभ्यः कुमार्गाच्च न परावर्त्तिरे ।
२०　तत इस्रायेल्वंशस्य प्रतिकूलं परमेश्वरस्य क्रोधे प्रज्वलिते सोऽ-
कथयत् एतेषां लोकानां पूर्व्वपुरुषाणां समीपेऽहं यं नियमम् आदिष्ट-
२१ वान् एते तं लङ्घन्ते मम वचसि मनो न निवेशयन्ति। अतो यिहोशूयेन
मरणकाले ये भिन्नजातीया अवशिष्टास्तेषां कमप्येतेषां सम्मुखान्न दव-
२२ यिष्यामि । तेषां पितरो यथा परमेश्वरस्य मार्गेण गच्छन्तस्तस्याज्ञा
अग्रह्नन्, ते तादृशं करिष्यन्ति न वेतीस्रायेल्वंशीयान् परीक्षितुं
२३ परमेश्वरस्तान् जातीयान् शीघ्रं वहिर्न कृत्वा यिहोशूयस्य करे न
समर्प्यावशेषयामास।

---

# ३ तृतीयोऽध्यायः।

१ इस्रायेलीयानाम् अवशिष्टलोकेषु मिश्रितत्वात् कुकर्म्मकरणं ८ कूशनरिशियाथयि-
माद् अत्नीयेल्द्वारा तेषां रक्षणं १२ इग्लोननाम्नो मोयाबदेशीयराजत एहूद्द्वारा
तेषां रक्षणं ३१ शम्गरस्य कथनं ।

१　इस्रायेल्वंशस्य मध्ये ये जनाः किनानदेशीययुद्धानि नावगतास्तान्
२ परीक्षितुं, ये च पूर्व्वं योद्धुं नाजानन् तान् इस्रायेलीयवंशान् युद्धं
शिक्षयितुं परमेश्वरेण ये भिन्नजातीया अवशिष्टास्तेषां निर्णयोऽयं ।
३ पिलेष्टीयानां पञ्चाधिपा वाल्हर्म्मोणपर्व्वतमारभ्य हमातस्य प्रवेश-
मार्गं यावत् लिवानोनपर्व्वतनिवासिनः सर्व्वे किनानीयसीदोनीय-
४ हिव्वीयलोकाश्च। परमेश्वर इस्रायेलीयानां पितृलोकान् प्रति मूससा
यद्यद् आज्ञापयत्, ते तत्र मनांसि निवेशयिष्यन्ति न वेति ज्ञातुं तान्
५ परीक्षितुं ते भिन्नजातीया अवशिष्टाः। तत इस्रायेल्वंशाः किनानीय-
हित्तीय-इमोरीय-पिरिषीय-हिव्वीय-यिबूषीयाणां मध्ये न्यवसन् ।
६ अपरं ते तेषां दुहितृर्व्यवहन् तेषां पुत्रांश्च स्वेषां दुहितृर्व्यवाहयन् तेषां
७ देवान् असेवन्त च । इत्थम् इस्रायेल्वंशीया परमेश्वरस्य साक्षात्
कुकर्म्म चक्रुः स्वेषां प्रभुं परमेश्वरं विस्मृत्य वाल्देवान् चैत्यवृक्षाणि च
सिषेविरे ।

तत इस्रायेलवंशं प्रति परमेश्वरस्य क्रोधे प्रज्वलिते सति सोऽराम- ८
नहरयिमीयभूपस्य कूशनरिशियाथयिमस्य करे तान् व्यक्रीणात् तत
इस्रायेलवंशीया अष्टवर्षाणि यावत् कूशनरिशियाथयिमस्य भूपते र्दासा
आसन्। अनन्तरम् इस्रायेलवंशीयैः परमेश्वरम् उद्दिश्य प्रार्थनायां ९
कृतायां परमेश्वरस्तेषां कृते कालेवस्य कनिष्ठभ्रातुः किनसस्य सुतम् अत्नी-
येलं तेषाम् उद्धारकं निरूप्य तान् उद्धारयामास। अपरं परमेश्वर- १०
स्यात्मनि तमधिष्ठिते सति स इस्रायेलवंशं विचारयाञ्चकार, अपरं
तस्मिन् योद्धुं निर्गते परमेश्वरोऽरामीयभूपतिं कूशनरिशियाथयिमं
तस्य करे समर्पयामास, तेन स कूशनरिशियाथयिमं जितवान्। तत- ११
श्चत्वारिंशद्वर्षाणि यावद् देशो निष्कण्टकस्तस्थौ, अनन्तरं किनसस्य
सुतोऽत्नीयेलो ममार।

अनन्तरम् इस्रायेलवंशीयाः परमेश्वरस्य दृष्टौ पुनः पापं कुर्व्वते, अतः १२
परमेश्वरस्य दृष्टौ तेषां पापकरणात् परमेश्वर इस्रायेलवंशस्य प्रति-
कूलं मोयाबीयराजम् इग्लोनं सबलं चकार। सो ऽम्मोनीयलोकान् १३
अमालेकीयलोकांश्च स्वसमीपे संगृह्य यात्रां कृत्वेस्रायेलवंशं जित्वा
तालवृक्षनगरम् अध्यकरोत्। तत इस्रायेलवंशोऽष्टादशवत्सरान् यावत् १४
मोयाबीयराजम् इग्लोनं सिषेवे। अपरम् इस्रायेलीयलोकाः परमे- १५
श्वरम् उद्दिश्य प्रार्थयाञ्चक्रिरे, ततः परमेश्वरेण तेषां कृते वामहस्त-
कर्म्मकारी बिन्यामीनवंशीयगेरसः पुत्र एहूद उद्धारको न्यरूप्यत, इस्रा-
येलवंशास्तेन मोयाबीयराजस्येग्लोनस्य समीप उपहारं प्राहिन्वन्।
तत एहूदः स्वस्य कृते हस्तप्रमाणं द्विधारयुक्तं खड्गमेकं निर्म्माय स्वदक्षि- १६
णोरौ वस्त्रमध्ये गोपयाञ्चकार। अनन्तरं स मोयाबीयभूपतेरिग्लो- १७
नस्य समीपम् उपहारम् आनिनाय, स इग्लोनो ऽतिस्थूलकायो
मनुष्य आसीत्। अनन्तरम् उपहारदाने समाप्ते स तदुपहारवाह- १८
कान् विससर्ज। किन्तु स गिल्गलस्थपाषाणाकरात् परावृत्यागत्य १९
जगाद, हे राजन् भवतः समीपे मम गोपनीयं वच एकम् आस्ते, राजा-
वदत् मौनीभवत, ततः समीपस्था लोकास्तस्य समक्षाद् वहि र्जग्मुः।
तदानीम् एहूदः केवलं तस्यार्थं निर्म्मिते ग्रैष्मगृहे समुपविष्टतो राज्ञः २०
समीपं गत्वा तं बभाषे भवन्तं प्रतीश्वरस्य वाक्यमेकं ममास्ते, ततः स
स्वासनाद् उदतिष्ठत्। अनन्तरम् एहूदः स्ववामहस्तेन दक्षिणोरुतः २१
खड्गमादाय तस्योदरं तादृग् विद्धवान् येन खड्गेन समं खड्गत्सरुरपि २२

कुक्षिं प्रविवेश पृष्ठेन स खड्गो वहिर्बभूव च, अपरं मेदसा तस्मिन् खड्गे
२३ रुद्धे सति स तं कुक्षितो वहिर्नाकरोत्। अनन्तरम् एहूदो ऽलिन्देन
२४ वहिर्निर्गत्य शैत्यगृहस्य द्वारं रुद्धा कुञ्चिकया बद्धवान्। अपरं तस्मिन्
वहिर्गते नृपस्य भृत्या आगत्य शैत्यगृहद्वारम् अर्गलेन बद्धं वीक्ष्य
२५ कथयामासुः, शैत्यकोष्ठे राजा किं विश्राम्येत्? अनन्तरं तेन शैत्यगृहस्य
द्वारे न मोचिते ते लज्जिता यावद् तावत् विलम्बञ्चक्रुः, अनन्तरं तैः
कुञ्चिकया द्वारे मोचिते स्वेषां प्रभु र्भूमौ पतितो मृतश्च दृष्टः।
२६ तेषु विलम्बमानेष्वेहूदः पलाय्य तं पाषाणाकरम् अतिक्रम्य सियीरां
२७ प्राप्नोत्। तत् स्थानं प्राप्य स इफ्रयिमपर्व्वते तूरीं वादयामास, अनन्तरम्
इस्रायेल्वंशाः सह तेन पर्व्वताद् अवारोहन् ततः स तेषामग्रगामी
२८ भवन् चलितवान्। अपरं स तान् अवदत्, यूयं मम पश्चाद् आगच्छत
परमेश्वरो युष्माकं रिपून् मोयाबीयान् युष्माकं करेषु समार्पयत्, ततस्ते
तस्य पश्चाद् अवरुह्य मोयाबीयानाम् अग्रे यर्द्दनस्य घट्टान् वशीचक्रुः
प्राणिनमेकमपि पारं गन्तुं नानुजज्ञुः।

२९ अस्मिन् समये ते मोयाबीयानां प्रायो दशसहस्राणि लोकान् अव-
३० धिषुः, ते हृष्टकाया बलवन्तश्च, किन्तु तेषां कोपि रक्षां न प्राप। इत्थं
मोयाबीयलोकेष्विस्रायेल्वंशै र्वशीकृतेषु देशो ऽशीतिवत्सरान् यावत्
निष्कण्टकं तस्थौ।

३१ ततः परम् अनातस्य सुतः शम्गर उदतिष्ठत्, स गोचारणदण्डेन
पिलेष्टीयानां षट्शतानि लोकान् अवधीत्, सोऽपि इस्रायेल्वंशस्य
उद्धारको बभूव।

---

# ४ चतुर्थोऽध्यायः।

१ इस्रायेल्वंशीयानां पापं तेषां विचारयित्र्या दिबोराया कथनं १० दिबोराबारकाभ्याम् इस्रायेल्वंशस्योद्धारः १८ यायेल्कर्तृका सीषिरःसेनापतेर्वधः।

१ अनन्तरम् एहूदस्य मरणात् परम् इस्रायेल्वंश ईश्वरस्य दृष्टौ पुनः
२ पापं चकार। ततः परमेश्वरो हात्सोरनिवासिनः किनानीयराजस्य
याबीनस्य हस्ते तान् व्यक्रीणात् हरोशतगोयिमनिवासी सीषिरास्तस्य
३ नृपस्य सेनापतिरासीत्। तस्य नवशतानि लौहरथा आसन्, स
विंशतिवर्षाणि यावद् इस्रायेल्वंशं भृशं चिक्लेश, तत इस्रायेल्वंशः
परमेश्वरमुद्दिश्य प्रार्थनाञ्चकार।

तदानीं लप्पीदोतस्य भार्य्या दिवोरानामिका भविष्यद्वक्त्री इस्रायेल्- ४
वंशस्य विचारं चकार। सा रामतबैथेलयोर्मध्य इफ्रयिमपर्व्वते दिवो- ५
रानामकस्य तालवृक्षस्य मूले न्यवसद् इस्रायेल्वंशश्च विचारार्थं
तत्समीपम् आगच्छत्। अपरं सा लोकं प्रहित्य नप्तालिवंशस्य केद- ६
शाद् अवीनोयमस्य सुतं बारकम् आहूय बभाषे, पश्य, त्वम् इस्रायेलः
प्रभुणा परमेश्वरेणेदम् आदिश्यसे, त्वं नप्तालिसिबूलूनवंशयो र्दशस-
हस्रलोकान् आदाय ताबोरपर्व्वतं याहि। अहं याबीनस्य सेनापतिं ७
सीषिरसं तस्य रथान् सैन्यनिवहञ्च कीशोनसरित्तटे तव समीपम्
आकृष्य तव करे समर्पयिष्यामि। ततो बारकस्तां जगाद, यदि त्वं ८
मया सह यास्यसि तदाहं यास्यामि, किन्तु मया सह त्वयि न गते नाहं
यास्यामि। सा बभाषे, अहमवश्यं त्वया सह यास्यामि, किन्तु युद्धयात्रा- ९
यामस्यां तव यशो न भविष्यति, यतः परमेश्वरः सीषिरसं स्त्रिया हस्ते
विक्रेष्यति, अनन्तरं दिवोरोत्थाय बारकेण समं केदशं जगाम।

अनन्तरं बारकेण सिबूलूननप्तालिवंशयोः केदशि आहूतयो र्दश- १०
सहस्राणि पदातिसैन्यानि तस्य पार्श्वे जग्मुः, दिवोरापि तेन समं
जगाम। तस्मिन् समये मूससः श्वशुरस्य होबवस्य वंशोद्भवः केनीयहे- ११
बरोऽन्यकेनीयवंशात् पृथग् भूत्वा केदशस्य समीपवर्त्तिनि सानन्नीमोद्याने
स्वदूष्यं स्थापितवान्। अनन्तरम् अबिनोयमसुतो बारकस्ताबोरपर्व्वतम् १२
आरोहतीति वार्त्तां प्राप्य सीषिराः सीयसर्व्वरथान् अर्थात् नवश- १३
तानि लौहरथान् निजसङ्गिनो निखिललोकांश्च संगृह्य हरोशत-
गोयिमात् कीशोनसरितं जगाम। तदानीं दिवोरा बारकम् अवदत्, १४
उत्तिष्ठ, परमेश्वरोऽद्यैव सीषिरसं तव करे समर्पयति, परमेश्वरः
किं तवाग्रगामी नास्ति? ततो बारको दशसहस्रसैन्यैः सहताबोरादवारोहत्।
अनन्तरं परमेश्वरो बारकस्य सम्मुखे सीषिरसं तस्य समस्तरथान् १५
सैन्यानि च खड्गैराहन् ततः सीषिराः स्वरथाद् अवरुह्य पदव्रजेन
पलायत। अपरं बारको हरोशतगोयिमं यावत् तस्य रथानां सैन्यानाञ्च १६
पश्चाद् धावितवान्, ततः सीषिरसः सर्व्वसैन्यानि खड्गधारै र्व्यापादितानि
एकमप्यवशिष्टं नातिष्ठत्। किन्तु सीषिराः पदव्रजेन पलायमानः केनीय- १७
हेबरस्य भार्य्याया यायेलो दूष्यं जगाम यतो याबीननाम्नो हात्सोरीय-
भूपतेः केनीयहेबरस्य वंशेन सह तदानीम् ऐक्यमत्यमासीत्।

ततो यायेल् सीषिरसं साक्षात् कर्त्तुं बहिर्भूय तं बभाषे हे मम १८

प्रभो, अभ्यन्तरम् आगच्छतु मम समीपम् आगच्छतु मा बिभेतु, ततः स
दूष्यमध्यं तस्याः समीपं गतवान् सा च कम्बलेन तं समाच्छादयत्।
१९ तदानीं सीषिराख्ता जगाद, विनयेऽहं पातुं मह्यं किञ्चित् तोयं देहि
पिपासितोऽहं, ततः सा दुग्धस्य कूतुं मोचयित्वा पाययित्वा तमाच्छादयत्।
२० अपरं सीषिराख्तां पुनर्बभाषे त्वं दूष्यद्वारे तिष्ठ, यदि कश्चिद् आगत्य
स्थानेऽत्र कश्चित् पुरुषो विद्यते न वेति पृच्छति तर्हि त्वं वदिष्यसि न
२१ हि। अपरं हेवरस्य भार्य्या यायेल् दूष्यस्य कीलकमेकं मुद्गरञ्च करा-
भ्यामादाय धीरं धीरं तस्य समीपं गत्वा कर्णमूलं विद्धा तं कीलकं मृत्ति-
कायां प्रवेशयामास, यतः स श्रान्तो निद्रितश्चासीत्, इत्थं स ममार।
२२ अनन्तरं यायेल् सीषिरसः पश्चाद् धावन्तं बारकं साक्षात् कर्त्तुं बहि-
रागत्य तस्मै कथयामास, आगच्छ त्वं यस्यान्वेषणं करोषि तं नरमहं
त्वां दर्शयिष्यामि, ततस्तस्मिन्नभ्यन्तरे तस्याः समीपं गते स भूमौ पतितं
२३ सीषिरसं मृतं तस्य कर्णमूलञ्च कीलकेन विद्धं ददर्श। इत्थं परमेश्वर-
स्तस्मिन् दिने किनानीयराजं याबीनम् इस्रायेल्वंशस्य साक्षाद् वशीभूतं
२४ चकार। इस्रायेल्वंश उत्तरोत्तरं बलवान् भूत्वा किनानीयभूपतेर्याबी-
नस्य संहारपर्य्यन्तं किनानीयभूपतिं याबीनं जिगाय।

---

## ५ पञ्चमोऽध्यायः।

दिबोराबारकयोर्गीतं।

१ अपरं तस्मिन् दिने दिबोरा अबीनोयमसुतो बारकश्च गीतमिदं जगतुः।

२ इस्रायेलीयवंशानां मुख्या यत्नं प्रचक्रिरे।
नरा अप्युत्सुका जातास्तस्मात् स्तुत परेश्वरं।
३ मनो निधत्त हे भूपाः कर्णान् दत्त नराधिपाः।
अहमेव हि गास्यामि समीपे परमेष्ठितुः।
इस्रायेल्प्रभुमुद्दिश्य गास्यामि परमेश्वरं।
४ हे परेश्वर सेयीरात् कृते विनिर्गमे त्वया।
इदोमप्रान्तराद् याने भूमेः कम्पो बभूव ह।
आकाशादपतद् वृष्टिर्मेघास्तोयमवर्षयन्।
५ पर्व्वताः परमेशस्य साक्षादेव द्रवं गताः।
इस्रायेलः प्रभोः साक्षात् सीनयाद्रिर्द्रवं गतः।

अनातवंशजातस्य शमगरस्य दिनेषु हि । ६
याये़लनामिकायाश्च योषितः समये तथा ।
सकला राजमार्गा हि विहीनाः पथिकैर्जनैः ।
पान्था वक्रोपमार्गेण गमनञ्च प्रचक्रिरे ।
शास्ता नासीत् तदा कोपि यावन्नोत्थितवत्यहं । ७
दिवोरानामिकेस्रायेल्वंशानां मातृरूपिका ।
तावन्मुख्यजना नासन् इस्रायेलीयनीवृति ।
वृतेषु नूतदेवेषु गोपुराण्यागमद् रणः । ८
चत्वारिंशत्सहस्राणामिस्रायेल्संभुवां तदा ।
किमेकं फलकं वासीद् अथवा शल्यमेककं ।
इस्रायेलोऽधिपानां ये लोकानाञ्च य उत्सुकाः । ९
आसते तेषु मम प्रीतिर्यूयं स्तुत परेश्वरं ।
हे चित्रगर्दभारूढा उपविष्टाः सुचेलके । १०
भ्रमन्तः पथिभिः सर्व्वैर्यूयं तमुपगायत ।
निपानेषु च कामिन्यो लोप्त्रद्रव्यविभागतः । ११
यत्र प्रकुर्व्वते नादं सर्व्वैस्तत्र प्रकीर्त्त्यतां ।
धर्म्मकर्म्म परेशस्य धर्म्मकर्म्म च शासितुः ।
इस्रायेलीयदेशे यः परेशेन निरूपितः ।
ततः परेशितुर्लोकैः पुरद्वारं प्रविश्यतां ॥
जागृहि हे दिवोरे त्वं सचैतन्या भव स्वयं । १२
प्रगाय तव गीतञ्च त्वमप्युत्तिष्ठ वारक ।
अवीनोयमपुत्र त्वमादाय याहि बन्दिनः ।
आयातास्तत्र लोकानां ये मुख्याः परिशेषिताः । १३
बलवच्छत्रुभिर्योद्धुं परेशो माम् उपाकरोत् ।
एतेषां मध्यतोऽमालेकदेशीयिफ्रयिमप्यभूत् । १४
मध्ये तव मनुष्याणां बिन्यामीनोऽनुगाम्यभूत् ।
माखीराद् आयुरध्यक्षाः सिवूलूनाच्च लेखकाः ।
इषाखरीयमुख्याश्च सार्द्धमासन् दिवोरया । १५
अवलम्बनरूपश्च वारकस्य त्विषाखरः ।
अधावत् समभूमिं हि तेनैव सहितस्तदा ।
आसीद् गुर्व्वी मनःपीडा रूवेणसरितां तटे ।

१६ रूवेणवंश्य मेषाणां रवं श्रोतुं व्रजस्य वै।
मेषस्थानस्य मध्ये हि कुतो वासः कृतस्त्वया।
आसीद् गुर्व्वी मनःपीडा रूवेणसरितां तटे।
१७ लोका गिलियदीयाश्च यर्द्दन्पारे विशश्रमुः।
दाने ये संस्थिता लोकाः पोते तस्थुः कुतो हि ते।
आशेरोऽस्थात् तटे सिन्धोः खातेषु स उपाविशत्।
१८ नप्तालिसिबूलून्वंश्यौ संग्रामस्य भृगुस्थले।
यावत् स्वमरणं तावद् अकुर्व्वाताम् असोः पणं।
१९ कृतं युद्धं नृपैरेत्य मगिद्दोस्तोयसन्निधौ।
किनानन्तपवर्गेण कृतं युद्धञ्च तानके।
न हि रूप्यं धनं किञ्चित् तैर्जनैः समलम्भि च।
२० अभवद् गगणे युद्धं भानि स्वस्वगमे पथि।
सीषिरःप्रतिकूलं हि समीकं समकुर्व्वत।
२१ कीशोन्सरिच्च प्राचीना भासयित्वाहरच्च तान्।
मामकीनमनस्त्वन्तु सबलीभूय संचल।
२२ वेगात् सञ्चालिताश्वानां वीरैः खुरमभज्यत।
२३ परेशदूत आहेति मेरोसः परिशप्यतां।
तन्निवासिजनेभ्यश्च दत्त शापं कटूल्वणं।
साहाय्यार्थं परेशस्य यतस्ते न समागताः।
बलवच्छत्रुभिर्योद्धुं पक्षीयाः परमेशितुः।
२४ केनीयहेवरो भार्य्या यायेल् धन्यास्ति योषितां।
दूष्यसंवासिनारीभ्यो वरप्राप्ता भविष्यति।
२५ सीषिरसार्थिते तोये तया दुग्धमदीयत।
नृपोपयुक्तपात्रेणानीय क्षीरमदायि हि।
२६ आदाय कीलकं हस्ते दक्षहस्ते च मुद्गरं।
साहन् सीषिरसं तेनाविधत् तस्य च मस्तकं।
कपोलं तस्य विद्धा च परिभिन्नं चकार सा।
२७ स नरः पादयोस्तस्या नमन् पतंश्च लम्बते।
स तस्याः पादयोर्यत्र नमन्नेव पपात हि।
तत्रैव स नमस्कृत्य प्रपतन् निधनं गतः।
२८ तदानीं सीषिरोमाता गवाक्षेण समीक्ष्य वै।

वातायनात् समाहूय वच एतद् अभाषत।
रथस्तस्य समायातुं विलम्बं कुरुते कुतः।
तदीयरथचक्राभ्यां विलम्बः क्रियते कुतः।
ज्ञानवत्यः सख्यायास्ता उत्तरं दातुमुद्यताः। २९
सा चापि निजवाक्यस्य जगाद स्वयमुत्तरं।
लब्धानि यानि वस्तूनि विभज्यन्ते न तानि तैः। ३०
एकैकस्मै पुमांसे किं द्वौककन्या न दीयते।
सीषिरसे च वस्त्रं न विचित्रं सूचिकर्म्मणा।
सूचिभिर्निर्म्मितं वास आहृतं बन्दिकाराठतः।
परेश रिपवः सर्व्वे तव नश्यन्तु ते तथा। ३१
तव प्रेमकृतः सर्व्वे भवन्तूदितभानुवत्॥
अनन्तरं चत्वारिंशद्वर्षाणि यावद् देशो निष्कराटकं तस्थौ।

# ६ षष्ठोऽध्यायः।

१ पापकारणात् मिदियनीयैरिस्रायेल्वंशस्योपद्रुतत्वं तस्माद् भविष्यद्वादिनः कथनं ११ गिदियोनं प्रति परमेश्वरीयदूतस्य कथनं १७ दूतं प्रति गिदियोनस्य निवेदनं नैवेद्यञ्च २५ बालो वेद्या भञ्जनं २८ लोकानां विरुद्धं पक्षस्य कृते योयाशस्य विरोधः ३३ गिदियोनसमीपे लोकानां मेलनं ३६ गिदियोनेन प्रार्थितचिह्नचिह्नानां कथनं।

अनन्तरम् इस्रायेल्वंशेन परमेश्वरस्य साक्षात् पापे कृते परमेश्वरः १
सप्तवर्षाणि यावत् मिदियनीयलोकानां करेषु तान् समार्पयत्। २
इस्रायेल्वंशस्य प्रतिकूलं मिदियनीयलोकाः प्रबला बभूवुरत इस्रायेल्-
वंशास्तेभ्यो भयात् पर्व्वतस्थेषु स्रोतोमार्गेषु गुहासु दुर्गमस्थेषु स्थानेषु
च स्वेषां वासान् निदधिरे। अपरम् इस्रायेल्वंशीयैर्वीजे उप्ते मिदिय ३
नीया अमालेकीयाः पूर्व्वदेशीयाश्च तेषां प्रतिकूलम् आगत्य तेषां सम्मुखे ४
शिबिरं स्थापयन्ति, अससायाः प्रवेशस्थानं यावद् भूमेरुत्पन्नानि शस्या-
दीनि सर्व्वाणि विनाशयन्ति, तथेस्रायेल्देशे मेषगोगर्द्दभादीनां खाद्यं
किमपि वस्तु नावशेषयन्ति च। यतः पशुभिः सहितेषु तेष्वागतेषु बाहु- ५
ल्येन शूककीटवत् तेषां दूष्याणाम् आगमनं भवति ते तेषां मह्याङ्गाश्चा-
संख्याः सन्ति ते च देशं विनाशयितुं तं प्रविशन्ति। इत्थं मिदियनीयैरि- ६
स्रायेल्वंशस्यातिदुर्गतिर्जाता तस्माद् इस्रायेल्वंशः परमेश्वरमुद्दिश्य
कातरोक्तिं चकार।

७ अनन्तरम् इस्रायेल्वंशेन मिदियनीयेभ्यः परमेश्वरम् उद्दिश्य कल-
८ रोलौ कृतायां परमेश्वर इस्रायेल्वंशं प्रति भविष्यद्वादिनमेकं प्रेषया-
मास, सोऽवदत् इस्रायेलः प्रभुः परमेश्वर इति वाचं गदति, अहं
९ युष्मान् मिसराद् आनयं दासत्वागाराद् अमोचयं मिस्रीयादिभ्यो युष्म-
दुपद्राविभ्यश्च युष्मान् उदधारयं युष्माकं सम्मुखात् तान् दूरीकृत्य
१० तेषां देशं युष्मभ्यमददाञ्च। अपरं युष्मानहमुक्तवान् अहमेव युष्माकं
प्रभुः परमेश्वरः, यूयं येषां देशे वसथ तेषाम् इमोरीयाणां देवान् माद्रि-
यध्वं, किन्तु यूयं मम वचसि मनो न न्यवेशयत।
११ अनन्तरं परमेश्वरस्य दूत आगत्य अवीयेस्रीययोयाशेनाधिकृतायाम्
अफ्रायाम् अलोनवृक्षस्य मूले समुपाविशत्, तदानीं तस्य सुतो गिदि-
योनो मिदियनीयेभ्यो रक्षितुं द्राक्षापेषणार्थककुण्डमध्ये गोधूमान् अम-
१२ र्द्दयत्। तत्र परमेश्वरस्य दूतस्तस्मै दर्शनं दत्त्वा तम् अभाषत, हे
१३ महावीर परमेश्वरस्तव सहाय आस्ते। ततो गिदियोनः प्रत्यवदत् हा
हा हे मत्प्रभो परमेश्वरो यद्यस्माकं सहाय आस्ते तर्ह्यस्मान् प्रत्येतानि
कुतो घटन्ति? परमेश्वरः किमस्मान् मिसरान्नानयदिति वचसास्मत्-
पूर्व्वपुरुषैरस्मान् प्रति प्रकाशितानि तस्याश्चर्य्यकर्म्माणि कुत्राधुना?
१४ परमेश्वरोऽस्मान् विहाय मिदियनीयानां करेषु समर्पितवान्। ततः परमे-
श्वरस्तं समालोक्य बभाषे त्वं स्वस्य बलेनानेन गच्छ त्वं मिदियनीयानां
१५ करेभ्य इस्रायेल्वंशम् उद्धारयिष्यसि त्वं किं मया न प्रहितोऽसि? ततः स
तमवदत्, हा हा हे मम प्रभो पश्य मिनशेवंशमध्ये मम कुलं सर्व्वस्मात्
क्षुद्रं, अपरं मम तातस्य निवेशनेऽहं सर्व्वस्मात् क्षुद्रः, अतोऽहं केन प्रका-
१६ रेणेस्रायेल्वंशम् उद्धारयिष्यामि? ततः परमेश्वरस्तं जगाद, अहमेव तव
सहायो भविष्यामि, त्वं मिदियनीयान् मनुष्यैकमिव व्यापादयिष्यसि।
१७ सोऽवदत् यद्यहं भवतो दृष्ट्या कृपां प्राप्तवान्, तर्हि भवानेव मां
१८ सम्भाषत इति चिह्नमेकं मह्यं ददातु। अहं विनये यावदहम् अभ्यन्तरं
गत्वा नैवेद्यमादाय भवतः साक्षात् नोत्सृजामि, तावद् भवता स्थाना-
न्तरं मा गम्यतां, ततः स उक्तवान् यावन्न प्रत्यागमिष्यसि तावदहं
१९ विलम्बिष्यामि। तदा गिदियोनोऽभ्यन्तरं गत्वा छागवत्समेकम् एकैफा-
परिमितस्य गोधूमचूर्णस्य किण्वशून्यापूपकांश्च कृत्वा तन्मांसादीनि
डल्लके यूषञ्च स्थाल्यां निधाय वहिरेलावृक्षस्य मूलमानीय तस्य समीप
२० उत्ससर्ज। तत ईश्वरस्य दूतस्तमवदत्, त्वम् एतन्मांसं किण्वशून्यपूपां-

आच्छाद्य पाषाणस्योपरि निधाय यूषेण निषिञ्च तदा तेन तथैव कृते
परमेश्वरस्य दूतः स्वहस्तस्थितदण्डस्याग्रं विस्तार्य्य तन्मांसं किण्वशून्य- २१
पिष्टकांश्च पस्पर्श ततस्तस्मात् पाषाणाद् वह्निर्निर्गत्य तन्मांसं पिष्टकांश्च
ददाह, अनन्तरं परमेश्वरस्य दूतस्तत्समीपात् प्रतस्थे। तदा स परमे- २२
श्वरस्य दूत एवेति वीक्ष्य गिदियोनो बभाषे हा हा हे प्रभो परमेश्वर,
परमेश्वरस्य दूतः सम्मुखासम्मुखी भूतो मया दृष्टः। ततः परमेश्वरस्तम् २३
अवदत् शुभं तव माभैषीः, न मरिष्यसि। अनन्तरं गिदियोनस्तत्र २४
परमेश्वरमुद्दिश्य वेदिमेकां निर्म्माय तस्या नाम यिहोवाः-शालोम्
(परमेश्वरः शुभकर इति) चकार। अवीयेषीयाणाम् अफ्रायाम्
अद्यापि सा विद्यते।

अनन्तरं तस्यां रजन्यां परमेश्वरस्तं व्याजहार त्वं स्वतातस्य युव- २५
बलीवर्दं सप्तवर्षवयस्कं द्वितीयं बलीवर्दञ्च गृहीत्वा तव तातस्य बाल्-
देवार्थिका या वेदिरास्ते तां भंग्धि तत्समीपस्थं चैत्यवृक्षञ्च छिन्धि।
अपरम् अस्य दृढपर्व्वतस्य शिखरे निरूपितस्थाने स्वप्रभुं परमेश्वरम् २६
उद्दिश्य यज्ञवेदिं निर्म्माहि, अपरं तं द्वितीयं बलीवर्दं गृहीत्वा छेद-
नीयस्य चैत्यवृक्षस्य काष्ठैर्जुहुधि। ततो गिदियोनः स्वभृत्यगणाद् दश- २७
नरान् गृहीत्वा परमेश्वरेणादिष्टं कर्म्म चकार, किन्तु स्वतातस्य परि-
जनेभ्यो नगरस्थलोकेभ्यश्च भयाद् दिवा तद् अकृत्वा रात्रौ चकार।

अपरं बाल्वेदिर्भग्ना समीपस्थचैत्यवृक्षश्च छिन्नो नवनिर्म्मिताया २८
वेद्या उपरि द्वितीयबलीवर्द उत्सृष्ट इति नगरस्थलोकाः प्रत्यूष उत्थाय
वीक्ष्य परस्परं बभाषिरे कर्म्मैतत् केनाकारि? अनन्तरं यत्नतोऽनु- २९
सन्धानेन बुद्ध्वा व्याहरन्, योयाशस्य सुतेन गिदियोनेन कृतमेतत्।
ततो नगरस्था लोका योयाशं व्याहरन् तव सुतं बहिरानय स बधयोग्यो ३०
यतो बालो वेदिं भग्नवान् तत्समीपस्थं चैत्यवृक्षं छिन्नवांश्च। तदा ३१
योयाशः स्वस्य प्रतिकूलं समुत्थितान् सर्व्वान् जगाद, यूयं किं बालो
योद्धारः? यूयं वा किं तं जयिनं विधास्यथ? यो जनस्तस्य कृते युध्यति,
एतत्प्रभातसमये तस्यापमृत्युर्भवतु, स यदि देवः स्यात् तर्हि स्वकृते
स्वयं युध्यतु यतस्तस्यैव वेदिर्भग्ना। अतः स यस्य वेदिं भग्नवान् स बाल् ३२
तेन युध्यतु वचनानेन तद्दिनमारभ्य तस्य नाम यिरुब्बालो बाल्
युध्यत्विति चक्रे।

तदानीं मिदियनीया अमालेकीयाः पूर्व्वदेशीयाश्च लोका मिलित्वा पारं ३३

३४ गत्वा यिष्रीयेलप्रान्तरे शिविरं स्थापयामासुः। किन्तु गिदियोनः परमे-
श्वरस्यात्मनाविष्टः सन् तूरीं वादयामास तत्र अवीयेषीयलोकास्तस्य
३५ समीपे मिलिताः। अपरं तेन मिनशिवंशस्य सर्व्वत्र दूतेषु प्रहितेषु
तद्वंशीया अपि तस्य समीपे मिलिताः। अनन्तरं तेन आशेरवंशस्य
सिबूलूनवंशस्य नप्तालिवंशस्य च समीपं दूतेषु प्रहितेषु ते वंशीयास्तत्स-
मीपम् आगच्छन्।

३६ अनन्तरं गिदियोन ईश्वरं बभाषे, यदि भवान् स्ववाक्यानुसारेण
३७ मम कराभ्याम् इस्रायेलवंशं मोचयति, तदाहं शस्यमर्द्दनस्थाने मेषाणां
यानि छिन्नलोमानि स्थापयिष्यामि केवलं तेषां लोम्नामुपरि यदि
शिशिरस्तिष्ठति सर्व्वा भूमिस्च शुष्का तिष्ठति तर्हि भवान् स्ववाक्यानु-
३८ सारेण मम कराभ्याम् इस्रायेलवंशं मोचयिष्यतीति ज्ञास्यामि। तत-
स्तस्मिन्नेव कर्म्मणि घटिते परदिने स प्रत्यूष उत्थाय तानि लोमानि
३९ निष्पीड्य तेभ्यः पूर्णं कंसमेकं शिशिरं चिक्षेप। तदा गिदियोन ईश्वरं
व्याजहार, भवान् मह्यं न क्रोत्स्यति केवलम् अहं पुनरेकं वचो वदि-
ष्यामि विनयेहं लोमभिः पुनरेकवारं परीक्षिष्ये, अधुना केवलं
४० लोम्नां शुष्कत्वं भवतु सर्व्वभूमेरुपरि शिशिरस्तिष्ठतु। अनन्तरम् ईश्वर-
स्तस्यां रजन्यां तथैव चकार तेन केवलं लोम्नां शुष्कता बभूव सर्व्वभूमौ
च शिशिरः पपात।

---

## ७ सप्तमोऽध्यायः।

१ गिदियोनस्य सैन्यानां न्यूनीकरणं ९ स्वप्नस्य कथां श्रुत्वा गिदियोनस्य मनसः
स्थिरता १५ सैन्यं प्रति गिदियोनस्याज्ञा १९ अपरं प्रदीपतुराघटैर्मिदियनीयानां
पराजयः २४ ओरेवस्य सेवस्य च स्वपक्षावशीकरणं।

१ अनन्तरं यिरुब्बालोऽर्थाद् गिदियोनस्तस्य सङ्गिनश्च सर्व्वे लोकाः
प्रत्यूष उत्थाय ऐनहरोदनामकस्थाने शिविरं स्थापयामासुः, किन्तु
मिदियनीयानां शिविरं तेषामुत्तरदिशि मोरिपर्व्वतस्य समीपस्थोपत्य-
२ कायाम् आसीत्। अनन्तरं परमेश्वरो गिदियोनं व्याजहार तव
सङ्गिजनानां बाहुल्यमधिकं, अतस्तेषां करेषु मिदियनीया मया न
समर्पयिष्यन्ते, समर्पितेषु तेषु वयं स्वबाहुबलेर्जयिनोऽभवामेति वाचं
३ वदन्त इस्रायेललोका मम प्रतिकूलं दर्पिष्यन्ति। अतस्त्वं गत्वा लोकानां
श्रुतिषु कथामिमां घोषय यो जनो भयार्त्तः कम्पमानश्च स प्रत्यूषे गिलि-

यद्भयं तेन परावर्त्ततां ततो लोकानां मध्याद् द्वाविंशति सहस्राणि लोकाः
परावृत्य गता दशसहस्राणि चावशिष्टाः। अनन्तरं परमेश्वरो गिदियोनं ४
व्याहरत्, लोका अधुनापि अधिकाः सन्ति, त्वं तान् तोयसमीपम्
आनय, तत्राहं तव कृते तान् परीक्षिष्ये ततस्त्वया समम् अयं यास्यतीति
यं यमधि गदिष्यामि स एव त्वया समं यास्यति, यच्चाधि नायं यास्यतीति
वदिष्यामि स त्वया समं न यास्यति। ततस्तेन तोयसमीपं लोकेष्वानीतेषु ५
परमेश्वरो गिदियोनं जगाद ये सारमेयवद् रसनाभिस्तोयं लिहन्ति
तान् पृथक् स्थापय, तथा ये पातुं जानूनि पातयन्ति तानपि पृथक्
स्थापय। ततः शतत्रयसंख्या नरा वदनेषु करान् दत्त्वा तोयं लिहन्तः ६
पपुः किन्त्वन्ये सर्व्वे पातुं जानूनि पातयामासुः। अनन्तरं परमेश्वरो ७
गिदियोनं बभाषे, लिहन्तस्तोयपायिनो य एते शतत्रयलोका एतैरहं
युष्मान् तारयिष्यामि मिदियनीयान् युष्माकं करेषु समर्पयिष्यामि च,
तदन्यलोकाः सर्व्वे स्वस्वस्थानं गच्छन्तु। अनन्तरं ते लोकाः स्वस्वकरै ८
भक्ष्यद्रव्याणि तूरीश्च जगृहुः, अपरं स इस्रायेल्वंशस्यावशिष्टान् सर्व्व-
जनान् स्वस्वस्थानं विसृज्य तान् शतत्रयमनुष्यान् स्वसमीपे निदधे,
तदानीं मिदियनीयसैन्यानि तस्याध उपत्यकायाम् अतिष्ठन्।

अनन्तरं तस्यां रजन्यां परमेश्वरस्तं व्याजहार, उत्तिष्ठ तेषां शिविरं ९
याहि यतोऽहं तद् युष्माकं करेषु समार्पयं। यदि त्वं यातुं बिभेषि तर्हि १०
तव दासं फूरसं सङ्गिनं कृत्वा शिविरं याहि। अपरं सेना यद् वदन्ति ११
तत् शृणु ततस्त्वं बलवान् भविष्यसि, अतस्तेषां शिविरं याहि। ततः
स स्वदासेन फूरसा समं शिविरस्थानां सुसज्जलोकानाम् [illegible]
जगाम। ते मिदियनीया अमालेकीयाः पूर्व्वदेशीयाश्च लोका बहुत्वका- १२
रणात् शलभकीटवत् प्रान्तरम् आच्छादयन्, अपरम् उष्ट्रा अपि बहुत्व-
कारणात् जलधितटस्थसिकता इव असंख्या आसन्। अनन्तरं गिदियोने १३
प्रविष्टे तेषां मध्य एको जनः स्वबन्धवे स्वप्नकथामिमामकथयत् पश्याहं
स्वप्नेऽपश्यं यद् यवचूर्णै र्निर्म्मित एकः पूपो मिदियनीयानां शिविरमध्येन
लुठन् दूष्यस्य समीपमुपस्थाय तदाहन् तेन दूष्यं न्युब्जीभूय दिर्घाकारं
निपपात। ततस्तस्य बन्धुः प्रत्यवदत् तद् इस्रायेल्वंशीयो यो यो- १४
याशस्तनुजस्य गिदियोनस्य खड्गं विनान्यत् किं भवेत्? ईश्वरो मिदि-
यनीयलोकान् सर्व्वं शिविरञ्च तस्य करे समार्पयत्।

तदा गिदियोनस्तत्स्वप्नस्य कथां तस्या अर्थञ्च श्रुत्वा प्रणम्य इस्रायेल्- १५

वंशस्य सैन्यानां मध्यं प्रत्यागत्य जगाद उत्तिष्ठत परमेश्वरो युष्माकं करेषु
१६ मिदियनीयानां शिविरं समार्पयत्। अनन्तरं स तान् शतत्रयलोकान्
त्रीन् अंशान् कृत्वा सर्व्वेषां करेष्वेकैकां तूरीम् एकैकं शून्यघटं तन्मध्ये
१७ प्रदीपञ्च ददौ। अपरं स तान् अवदत्, यूयं मां प्रति निरीक्ष्य ममेव
कर्म्म कुरुत, शिविरस्य प्रान्तप्राप्तेन मया यत् कारिष्यते, युष्माभिरपि
१८ तदेव कर्त्तव्यं। मया मम सङ्गिभिश्च तूरीषु वादितासु यूयमपि
शिविरस्य चतुःषु पार्श्वेषु तुरीर्वादयित्वा परमेश्वरस्य गिदियोनस्य च जय
इति वाचं वदिष्यथ।

१९ अनन्तरं मध्यप्रहरस्य प्रथमे नूतनरक्षिणां नियोगात् किञ्चित् परं
गिदियोनस्तस्य सङ्गिन एकशतलोकाश्च शिविरस्य प्रान्तं प्राप्य तूरीर्वाद-
२० यामासुः स्वस्वहस्तस्थितान् घटांश्च बभञ्जुः। इत्थं त्र्यंशा लोकास्तूरीर्वा-
दयामासुः घटांश्च बभञ्जुः, अपरं वामकरेषु प्रदीपान् दक्षिणकरेषु
च वादनीयास्तूरी र्जगृहुः, अपरं परमेश्वरस्य गिदियोनस्य च खड्गायेति
२१ वाचम् उच्चैः कथयामासुः। तेषाम् एकैको जनः शिविरस्य चतुर्दिक्षु
स्वस्वस्थानेऽतिष्ठत् ततो रिपूणां सर्व्वसैन्यान्याटाच्यन्त शब्दायमानानि
२२ च पलायन्त। यतस्तैः शतत्रयलोकैस्तूरीषु वादितासु परमेश्वरः शिविर-
स्थान् सर्व्वखड्गधारिणः परस्परं योधयामास ततः सैन्यानि सिरे-
दास्थवैतशिट्टां टब्बतञ्च यावद् आवेलमिहोलायाः सीमादिशं पलाया-
२३ ञ्चक्रिरे। अनन्तरं नप्ताल्याशेरमिनशिवंशीया इस्रायेल्लोका मिलित्वा
मिदियनीयानां पश्चाद् धावन्तो जग्मुः।

२४ अनन्तरं गिदियोन इफ्रयिमपर्व्वतस्य सर्व्वत्र प्रेरितै र्दूतै र्वाचमिमां
घोषयामास यूयं मिदियनीयानां प्रतिकूलम् अवरुह्यागच्छत तेषामग्रे च
वैतवारां यावद् घट्टान् यर्द्दननदीञ्च वशीकुरुत, तत इफ्रयिमीयाः सर्व्वे
२५ लोका मिलित्वा वैतवारां यावद् घट्टान् यर्द्दननदीञ्च वशीचक्रुः। अपरं ते
ओरेवसेवनामानौ मिदियनीयन्टपौ धृत्वा ओरेवनामकशैल ओरेवं जघ्नुः
सेवनामकस्य द्राक्षापेषणकुण्डस्य च समीपे सेवं जघ्नुः। अनन्तरं ते
मिदियनीयानां पश्चाद् दधावुः किन्त्वोरेवस्य सेवस्य च शिरसी यर्द्द-
नस्य पारे गिदियोनस्य समीपम् आनिन्युः।

## ८ अष्टमोऽध्यायः।

१ इफ्रयिमलोकान् प्रति गिदियोनस्य कथनं ४ गिदियोनं प्रति सुक्कोतीयानां पिनू-

येलीधानाश्च लोकानां तिरस्कारकथनं १० सेवहसल्मुन्नयोर्हतत्वं १३ सुक्कोतपिनू-
येललोकानां शास्तिः १८ द्वयो र्न्टपयो र्वधः २२ राजत्वं कर्त्तुम् अनिच्छता गिदि-
योनेन लब्धैर्लोठितकुण्डलैरेफोदनिर्म्माणं २८ मिदियनीयानां पराजयः २९ गिदि-
योनस्य सन्ततेर्मृत्योश्च कथनं ३२ इस्रायेलवंशस्याकृतज्ञता।

अनन्तरम् इफ्रयिमलोका गिदियोनाय कथयामासुः, त्वं मिदियनीय- १
लोकैः सह योद्धुं गमनकाले यदस्मान् नाह्वयोऽस्मान् प्रति त्वया कुत
ईदृग् व्यवहृतम् इति वाचा तैस्तेन समं भृशं व्यवादि। ततः स २
तान् अवदत् युष्माकं कर्म्मवद् अधुना किं कर्म्म मया कृतं? अवीयेषरस्य
सकलद्राक्षाफलानां चयनाद् इफ्रयिमस्यावशिष्टद्राक्षाफलानाम् उञ्छनं
किं श्रेयो नहि? ईश्वर ओरेवसेवनामानौ मिदियनीयानां द्वौ राजानौ ३
युष्माकमेव करतलीकृतवान् युष्माकं कर्म्मवत् मया किं कर्म्म कर्त्तुं शेके?
एतादृशि वचने कथिते तं प्रति तेषां क्रोधो निववृते।

गिदियोनस्तस्य सङ्गिनः शतत्रयलोकाश्च श्रान्ताः सन्तोऽपि पश्चाद् ४
धावन्तो यर्द्दनमागत्य पारं गताः। ततः स सुक्कोतस्थलोकान् अवदत्, ५
यूयं मम पश्चाद्गामिभ्यो लोकेभ्यो भक्ष्यद्रव्याणि दातुम् अर्हथ यतस्ते
श्रान्ता अभवन्, अहं सेवहसल्मुन्ननाम्नोर्मिदीयनीयानां राज्ञोः पश्चाद्
धावामि। ततः सुक्कोतस्याधिपा अकथयन्, सेवहसल्मुन्नयोः सैन्यानि ६
किमिदानीं तव वशे सन्ति यद् वयं तव सैन्येभ्यो भक्ष्याणि दातुम्
अर्हामः? ततो गिदियोनोऽवदत् यदेश्वरः सेवहसल्मुन्नौ मम वशौ ७
करिष्यति तदाहं काननस्य शृगालकोलिकण्टकैर्युष्माकं मांसं छेत्स्यामि।
अनन्तरं स तस्मात् पिनूयेलं प्रगत्य तत्रस्थलोकानपि तादृशं जगाद, ८
ततः सुक्कोतस्थलोका यादृगवदन् पिनूयेलस्थलोका अपि तादृशं जगदुः।
तदा स तान् पिनूयेलस्थलोकानपि व्याजहार, मया कुशलेनागमन- ९
काले युष्माकं दुर्गमिदं भंक्ष्यते।

तस्मिन् काले सेवहसल्मुन्नौ कर्कोर आस्तां ताभ्यां समं पूर्व्वदेशीय- १०
लोकानां सर्व्वसैन्यानामवशिष्टाः सर्व्वसेना अर्थतः पञ्चदशसहस्राणि
लोका आसन् यतो विंशतिसहस्राधिकं लक्षम् अस्त्रधारिणो लोका
जघ्निरे। अनन्तरं गिदियोनो नोवहस्य यग्बिहस्य च पूर्व्वस्यां दिशि ११
दूष्यनिवासिनां मार्गेणोर्द्ध्वं गत्वा सेना आजघान यस्मात् ताः सेना
निष्कण्टकम् अवसन्। अनन्तरं सेवहसल्मुन्नौ पलायितौ स च तयोः १२
पश्चाद् धावन् सेवहसल्मुन्ननामानौ तौ मिदियनीयराजौ दधार तयोः
सर्व्वाः सेनाः सोद्वेजयाञ्चकार।

१३ अनन्तरं योयाशस्य सुतो गिदियोनो हेरसाख्येनोड्डंगामिमार्गेण
१४ युद्धात् परावृत्यागत्य सुक्कोतनिवासिनमेकं तरुणं धृत्वापृच्छत् ततः स
१५ तत्कृते सुक्कोतस्याध्यक्षाणां समाधिकसप्ततिनामानि लिलेख। अनन्तरं
स सुक्कोतीयलोकानां समीपमुपस्थाय जगाद, सेवहस्य सल्मुन्नस्य च
सैन्यानि किमिदानीं तव वशे सन्ति तत्कृते किं वयं तव क्लान्त-
लोकेभ्यो भक्ष्याणि दातुम् अर्हाम इति वाचा यूयं यावधि मां तिरस्कृत-
१६ वन्तस्तौ सेवहसल्मुन्नौ पश्यत। अपरं स तस्य नगरस्य प्राचीनान् धृत्वा
काननस्य कण्टकैः शृगालकोलिभिश्च तान् सुक्कोतीयलोकान् शिक्षया-
१७ मास। अनन्तरं स पिनूयेलस्य दुर्गं भंक्त्वा तस्य नगरस्य लोकान्
अवधीत्।

१८ अनन्तरं स सेवहं सल्मुन्नञ्च जगाद, तावोरे युवाभ्यां हता लोकाः
कीदृशाः? ततस्तौ प्रत्यवदतां भवान् यादृशस्तेपि तादृशाः, सर्व्वे राज-
१९ पुत्रा इवासन्। ततः स कथयामास ते मम सहोदराः, नित्यजीविनः
परमेश्वरस्य नाम गृहीत्वाहं कथयामि यदि युवां तेषां प्राणान् अरक्षि-
२० ष्यतं तर्हि युवामहं नाहनिष्यं। अनन्तरं स स्वज्येष्ठसुतं येथरं जगाद
त्वमुत्थाय तौ जहि किन्तु स बालक एतत्कारणाद् भयात् खड्गं
२१ न वहिष्चकार। ततः सेवहसल्मुन्नौ कथितवन्तौ, भवान् उत्थायावां
हन्तु, यतो यो यादृशः पुरुषस्तादृशमेव तस्य वीरत्वं, अनन्तरं गिदियोन
उत्थाय सेवहसल्मुन्नौ जघान, अपरं तयोर्महाङ्गानां कण्ठानां सर्व्वान्
चन्द्रहारान् जग्राह।

२२ अनन्तरम् इस्रायेल्वंशा गिदियोनं जगदुः, त्वं पुत्रपौत्रादिपरम्पर-
याऽस्माकमाधिपत्यं कुरु यतस्त्वमस्मान् मिदियनीयानां करेभ्यो रक्षित-
२३ वान्। ततो गिदियोनोऽवदत्, अहं युष्माकम् अधिपतित्वं न करिष्यामि
मदीयसुतोपि युष्माकम् अधिपतित्वं न करिष्यति, यतः परमेश्वरो
२४ युष्माकं अधिपतिरास्ते। अनन्तरं गिदियोनः कथयामास, युष्मानहं
निवेदयामि यूयं स्वस्वलोठितं कर्णकुण्डलं मह्यं दत्त, यतो हतानाम्
२५ इस्मायेलीयलोकानां सौवर्णानि कर्णकुण्डलान्यासन्। ततस्ते प्रत्यवदन्
वयं तान्यवश्यं दास्यामः, अनन्तरं तैर्वसनमेकं पातयित्वा स्वस्वलोठि-
२६ तानि स्वर्णकुण्डलानि तत्र निक्षिप्तानि। ततः कण्ठभूषाः कर्णपुष्पाणि
मिदियनीयनृपतीनां परिधेयानि कापिलरक्तवस्त्राणि तेषां महाङ्गानां
कण्ठाभरणानि विना तेन प्रार्थितकर्णकुण्डलानां परिमाणं सप्तशता-

धिद्नसप्रभृतिगिदियोनस्य भगवत्सु वर्षाणि बभूव। अनन्तरं गिदियोनस्तेनैकम् एफोदं २७
निर्म्माय स्ववसतिपुर्य्याम् अफ्रायां तत् स्थापयाञ्चकार, तेन सर्व्वे इस्रा-
येल्वंशास्तस्मिन् स्थाने तस्य पश्चाद् व्यभिचारी बभूव तच्च गिदियोनस्य
तस्य परिजनस्य चोन्मायरूपं बभूव।

इत्थम् इस्रायेल्वंशस्य सम्मुखे पराजिता मिदियनीयाः स्वं स्वं शिरः २८
पुनरुत्तोलयितुं न शेकुः अनन्तरं गिदियोनस्य समये चत्वारिंशद् वत्स-
रान् यावद् देशो निष्कण्टक आसीत्।

अनन्तरं योयाशस्य सुतो यिरुब्बालो निजगृहं गत्वा न्यवसत्। तस्य २९
गिदियोनस्यौरसपुत्राः सप्ततिरासन् यतस्तस्य बह्व्यो जाया आसन्। ३०
शिखिमे तस्य या उपपत्न्यासीत् सापि तस्य सुतमेकं प्रसुषुवे, अपरं तस्य ३१
नाम अवीमेलक इति चकार।

अनन्तरं योयाशस्य सुतो गिदियोनोऽति वृद्धावस्थायां ममार, ३२
अवीयेष्रीयाणाम् अफ्रायां स्वस्य पितुर्योयाशस्य श्मशाने तस्य श्मशानं
बभूव। अनन्तरं गिदियोने मृत इस्रायेल्वंशाः पुनर्बाल्देवानाम् ३३
अनुगमनेन व्यभिचारिणो भवन्तो बाल्बिरीतं स्वेषाम् इष्टदेवं चक्रिरे।
ते चतुर्दिक्स्थरिपूणां करेभ्यः स्वेषाम् उद्धारयितारं प्रभुं परमेश्वरं ३४
विसस्मरुः। तथा यिरुब्बालो ऽर्थतो गिदियोन इस्रायेल्वंशं यादृशम् ३५
उपाकरोत् इस्रायेल्लोकास्तदनुसारेण तस्य वंशं न तादृशं प्रत्युपचक्रुः।

---

## ९ नवमोऽध्यायः।

१ भ्रातृगणं हत्वा अवीमेलकस्य राजत्वकरणं ७ योथमस्य दृष्टान्तः २२ अवीमेलकस्य विरुद्धं गालस्य कुमन्त्रणा ३० सिवूलस्य तत्प्रकाशनं ३५ युद्धे ऽवीमेलकस्य जयः ४६ बाल्बिरीतदेवस्य दुर्गदहनं ५० तेवेषनगरे स्त्रीनिक्षिप्तपाषाणेनावीमेलकस्य बधः ५६ योथमस्य वाक्यस्य सफलत्वं।

अनन्तरं यिरुब्बालस्य सुतो ऽवीमेलकः शिखिमे निजमातुलानां १
समीपं गत्वा तान् स्वमातामहस्य सर्व्वपरिजनांश्च वाचम् इमां बभाषे
निवेदयामि यूयं शिखिमस्थानां सर्व्वगृहस्थानां कर्णगोचरे कथामिमां २
कथयत, यिरुब्बालस्य सर्व्वेषां सुतानाम् अर्थात् सप्ततिजनानाम् अधिप-
तित्वं किमेकस्य जनस्याधिपतित्वम्, उभयोर्मध्ये युष्माकं भद्रतरं किं?
अपरमहं युष्माकम् अस्थिमांसस्वरूप एतदपि स्मरत। ततस्तस्य मातुल- ३
गणेन शिखिमस्य सर्व्वगृहस्थानां कर्णगोचरे तत्कथायां कथितायाम्

अवीमेलकस्यानुगामिनो भवितुं तेषां सम्मति र्बभूव, यतस्ते बभाषिरे,
४ असावस्माकं भ्राता। अपरं तैर्वालबिरीतस्य मन्दिरात् तस्मै सप्ततिरूप्य-
मुद्रासु दत्तास्ववीमेलको वातुलेभ्य आत्मश्लाघिभ्यश्च लोकेभ्यो वेतनार्थं ता
५ रूप्यमुद्रा अददात् ते च तस्य पार्श्वगामिनो बभूवुः। अनन्तरं सोऽफ्रायां
स्वपितुर्निवेशनं गत्वा यिरुब्बालस्य सुतान् स्वसप्ततिभ्रातॄन् पाषाणै-
कोपरि जघान, किन्तु योथम्नामा यिरुब्बालस्य कनिष्ठः सुतो गुप्त-
६ मानोऽवाशिष्यत। अनन्तरं शिखिमस्य सर्व्वे गृहस्था बैतमिल्लस्याः सर्व्वे
लोकाश्च मिलित्वा शिखिमस्थितस्तम्भस्य समीपवर्त्तिन एलोन्वृक्षस्य
सविधं गत्वा तमवीमेलकं राजानं चक्रुः।
७ अनन्तरं लोकैर्योथमाय वार्त्तायां दत्तायां स गत्वा गिरिषीमपर्व्व-
तस्य शिखरे तिष्ठन् उच्चैस्तेभ्य इमां वाचं कथयामास, हे शिखिमस्य
सर्व्वे लोका मम कथायां मनो निवेशयत ततः परमेश्वरो युष्माकं कथायां
८ मनो निवेशयिष्यति। पादपराज्ये राजानं नियोक्तुं प्रवर्त्तमानाः पादपा
९ जितवृक्षं बभाषिरे, त्वमस्माकं नृपो भव। ततो जितवृक्ष उवाच
मम यस्मात् तैलाद् देवा मनुजाश्च माम् आद्रियन्ते तस्मान्निवृत्य किमहं
१० शाखिनामुपर्य्युन्नतमूर्द्धा भवितुं प्रवर्त्तिष्ये? अनन्तरं पादपा उडुम्बरतरुं
११ बभाषिरे त्वमागत्यास्माकं नृपो भव। तत उडुम्बरतरुः प्रत्युवाच किमहं
स्वीयमिष्टताया उत्तमफलत्वाच्च निवृत्य तरूणामुपर्य्युन्नतमूर्द्धा भवितुं
१२ प्रवर्त्तिष्ये? अनन्तरं पादपा द्राक्षावल्लीं बभाषिरे त्वमागत्यास्माकं
१३ नृपो भव। ततो द्राक्षावल्ली जगाद मम येन रसेन देवा मनुजाश्च
हृष्यन्ति तस्मान्निवृत्य किमहं तरूपर्य्युन्नतमूर्द्धा भवितुं प्रवर्त्तिष्ये?
१४ अनन्तरं पादपाः कण्टकतरुं बभाषिरे त्वमागत्यास्माकं नृपो भव। ततः
१५ कण्टकितरुणान्यतरवो भाषिताः, युष्माभिर्मम राज्याभिषेको यदि सत्य
तया क्रियेत तदा यूयमागत्य मम छायाम् आश्रयत, किन्तु तद् यदि
न भवेत्, तर्हि कण्टकतरोर्वह्निर्निर्गत्य लिवानोनीयान् एरसतरून्
१६ दहतु। पश्यताधुना अवीमेलकस्य राज्याभिषेको यदि सत्यं याथार्थ्य-
ञ्चाचरद्भि र्युष्माभिः कृतः स्यात्, यदि च यिरुब्बालं तस्य वंशञ्च प्रति
भद्रम् आचरद्भि र्युष्माभिस्तस्य कर्म्मणः प्रतिफलं तस्मै दीयेत, तर्हि भद्रं।
१७ मम यो जनको युष्माकं कृते युद्धवान् स्वप्राणान् पणीकृत्य मिदियनीयानां
१८ करेभ्यो युष्मान् उद्धृतवांश्च यूयमद्य तस्य मज्जनकस्य वंशस्य प्रति-
कूलम् उत्थाय पाषाणैकोपरि तस्य सप्ततिसुतान् हत्वा तस्य दासीसुतम्

अवीमेलकं स्वेषां भ्रातृत्वात् शिखिमीयगृहस्थानाम् उपरि नृपमकुरुत।
अतो यिरुब्बालं तस्य वंशञ्च प्रति युष्माकम् अद्यतनाचरणं यदि सत्यं १९
न्याय्यञ्च भवेत् तर्हि यूयम् अवीमेलकम् अभिनन्दत सोऽपि च युष्मान्
अभिनन्दतु। किन्तु यदि न तथा भवेत् तदावीमेलकाद् वह्निर्निर्गत्य २०
शिखिमीयगृहस्थान् मिल्लोः परिजनांश्च दहतु, तथा शिखिमीयगृह-
स्थेभ्यो मिल्लोः परिजनेभ्यश्च वह्निर्निर्गत्यावीमेलकं दहतु। अनन्तरं २१
योथमः पलाय्य वेरं गत्वा स्वभ्रातुरवीमेलकस्य भयात् तत्र न्यवसत्।

अनन्तरम् अवीमेलक इस्रायेलवंशस्योपरि वर्षत्रयं यावद् राजत्वं २२
चकार। ततः परं यिरुब्बालस्य सप्ततिसुतान् प्रति कृतस्य निर्दय- २३
कार्य्यस्य फलं यद् आगच्छेत् तेषां रुधिरपातापराधश्च यत् तेषां
हन्तुस्तेषां भ्रातुरवीमेलकस्य मूर्द्धि तथा स्वभ्रातृवधे तस्य सहकारिणां
शिखिमीयगृहस्थानां मूर्द्धसु वर्त्तेत, तदर्थम् अवीमेलकस्य शिखिमीयगृह- २४
स्थानाञ्च मध्य ईश्वरेण दुर्बुद्धाम् उत्पादितायां शिखिमीयगृहस्था अवी-
मेलकं प्रति विश्वासघातकत्वं चक्रुः। अपरं शिखिमीयगृहस्थास्तत्कृते २५
पर्व्वतशिखरेषु गोपनेन लोकान् उपवेशयामासुः, ततो यावन्तो लोका-
स्तेषां समीपमार्गेण गच्छन्ति तेषां द्रव्याणि ते लोठयित्वा गृह्णन्तीति
वाग् अवीमेलकस्य कर्णगोचरीबभूव। अनन्तरम् एवदस्य सुतो गालः २६
स्वीयभ्रातृभिः सार्द्धम् आगत्य शिखिमं प्रविश्य शिखिमस्य गृह-
स्थानाम् आश्रयन्। अपरं तैः क्षेत्रं गत्वा द्राक्षाक्षेत्रस्यफलानां चयने २७
मर्द्दने च समाप्ते यदा प्रमोदोऽक्रियत तदानीं ते स्वदेवस्य मन्दिरं
गत्वा भोजनं पानञ्च कुर्व्वन्तोऽवीमेलकं शेपिरे। विशेषत एवदस्य सुतो २८
गालः कथयामास, अवीमेलकः कः? शिखिमश्च कः? वयं कुतोऽमुं
सेवामहे? असौ किं यिरुब्बालस्य सुतो न हि? अपरं सिबूलः किं
तस्य सेनापतिर्न हि? यूयं शिखिमस्य पितुर्हमोरस्य लोकान् सेवध्वं,
किमर्थं वयम् अमुं सेवामहे? हा हा लोकेऽस्मिन् मम वशीभूतेऽहम् २९
अवीमेलकं दवयिष्ये, अनन्तरं सोऽवीमेलकम् उद्दिश्य जगाद त्वं स्वकीयां
बहुसेनाम् आदाय बहिरागच्छ।

अनन्तरं नगराधिपतिः सिबूल एवदसुतस्य गालस्य तानि वाक्यानि ३०
निशम्य क्रोधेन प्रजज्वाल। गोपनेन चावीमेलकस्य समीपं दूतान् ३१
प्रहित्यावदत् पश्य, एवदसो पुत्रो गालस्तद्भ्रातरश्च शिखिमम् आगता
अपरं पश्य ते तव विरुद्धं नगरे कुप्रवृत्तिं जनयन्ति। अतस्त्वं स्वीय- ३२

३३ सङ्गिभिर्लोकैः समं रजन्यामुत्थाय क्षेत्रे गुप्तस्तिष्ठ। अनन्तरं प्रातःकाले
सूर्य्योदय एवोत्थाय नगरमाक्राम्य ततः पश्य तस्मिन् तत्सङ्गिषु लोकेषु
च तव विरुद्धं वहिर्गतेषु त्वं तान् प्रति यत् कर्त्तुं शक्नोषि तदेव कुरु।
३४ अनन्तरम् अवीमेलकस्तस्य सङ्गिनश्च लोका रजन्यामुत्थाय चत्वारः
३५ संघा भूत्वा शिखिमस्य विरुद्धं गुप्ता अतिष्ठन्। अपरम् एबदस्य
पुत्रो गालो वहिर्गत्वा नगरस्य द्वारप्रवेशस्थानेऽतिष्ठत् तदावीमेलके
३६ तस्य सङ्गिलोकेषु च गोपनाद् उत्थितवत्सु गालो लोकान् दृष्ट्वा सिवूलं
जगाद, पश्य पर्व्वतशृङ्गेभ्यो जना अवरुह्यागच्छन्ति, ततः सिवूलस्तम्-
३७ वदत् त्वं पर्व्वतानां छायां लोकनिवहमिव पश्यसि। अनन्तरं गालः
पुनरुवाच पश्य भूगुस्थानाल्लोका अवरुह्यागच्छन्ति अपरैकसंघो मियो-
३८ निनीयनाम्न एलोनतरोरागच्छति। ततः सिवूल उवाच, अवीमेलकः कः?
कुतो वयं तं सेवामहे? वाचमिमां त्वं येन वदनेनावदस्तव तद्वदनमधुना
कुत्र? त्वं यान् अतुच्छय एते किं ते लोका न हि? विनयेऽहं त्वमिदानीं
३९ वहिर्भूय सार्द्धमेतै र्युध्य। ततो गालः शिखिमीयगृहस्थानामग्रगामी
४० भवन् वहिर्गत्वावीमेलकेन समं युयोध। ततोऽवीमेलकेन विद्रावितः स
तत्सम्मुखात् पलायाञ्चक्रे, अपरं द्वारप्रवेशस्थानं यावद् बहवो लोका
४१ हता अपतन्। अपरम् अवीमेलक आरुमायां न्यवसत् सिवूलश्च
४२ गालं तस्य भातृगणञ्च शिखिमनिवासाद् द्रवयामास। परदिने लोका
४३ वहिर्भूय क्षेत्रं गच्छन्तीति वार्त्तां प्राप्यावीमेलको लोकान् आदाय
त्रीन् सङ्घान् कृत्वा क्षेत्रे गुप्तस्तस्थौ, अनन्तरं लोका नगराद् वहिर्भूया-
४४ गच्छन् इति निरीक्ष्य स तेषां विरुद्धम् उत्थाय तान् आजघान। अपरम्
अवीमेलकस्तस्य सङ्गिसङ्घश्च द्रुतं गच्छन्तो नगरद्वारस्य प्रवेशस्थानेऽति-
ष्ठन् इतरौ द्वौ सङ्घौ च क्षेत्रस्थानां सर्व्वलोकानां विरुद्धमुत्थाय तान्
४५ अवधिष्टां। अपरम् अवीमेलकस्तत् कृत्स्नं दिनं तस्य नगरस्य विरुद्धं
युद्ध्वा नगरं वशीचक्रे तन्मध्यस्थितान् लोकान् अवधीच्च, अपरं नगरम्
उच्छिद्य तस्य स्थाने लवणं विचकार।
४६ अनन्तरं शिखिमस्य दुर्गस्थिताः सर्व्वे गृहस्था इति वार्त्तां निशम्य
४७ बिरीतदेवस्य मन्दिरस्थं दृढस्थानं प्रविविशुः। अनन्तरं शिखिमस्य
दुर्गस्थिताः सर्व्वे गृहस्था अमिलन् इति वार्त्तावीमेलकस्य कर्णगोचरी-
४८ भूतायाम् अवीमेलकस्तत्सङ्गिनश्च सल्मोनपर्व्वतम् आरुरुहुः, अवीमेल-
कश्च कुठारमेकं करेणादाय वृक्षशाखामेकां छित्त्वा स्कन्धे निधाय

स्वीयसङ्गिलोकान् जगाद, यूयं यत् कुर्व्वन्तं मां पश्यथ तदनुसारं शीघ्रं
कुरुत। ततः सर्व्वे लोकास्तद्वीत्यनुसारेण शाखाश्छित्त्वादाय अवीमेलकस्य ४९
पश्चात् चलिताः, अनन्तरं दुर्गस्य समीपे ताः शाखा निधाय तत्र
वह्निं ददुः ततः शिखिमस्य दुर्गस्थाः सर्व्वे लोका अर्थतो नार्य्यः पुरुषाश्च
प्रायः सहस्रलोका निधनं गताः।

अनन्तरम् अवीमेलकस्तेवेषं गत्वा तस्य विरुद्धं शिविरं स्थापयित्वा ५०
तद् वशीचक्रे। किन्तु तस्य नगरस्य मध्ये दुराक्रमं दुर्गमेकमासीत् तस्मात् ५१
पुरुषा नार्य्यश्च नगरस्य सर्व्वे गृहस्थलोकास्तद्दुर्गमाश्रित्य द्वारं रुद्ध्वा दुर्ग-
पृष्ठमारुरुहुः। अनन्तरम् अवीमेलकस्तस्य दुर्गस्य समीपमुपस्थाय तस्य ५२
विरुद्धं युयोध वह्निना दुर्गद्वारं दाहयितुं तस्य समीपं जगाम च।
ततः काचिद् योषित् पेषण्याः खण्डमेकम् अवीमेलकस्य शिरसि निक्षिप्य ५३
तस्य शिरसः कपालं बभञ्ज। ततः स तूर्णं निजास्त्रवाहकं युवान- ५४
माहूय जगाद स नार्य्या मारित इति वाचं यल्लोका मामधि न वदेयु-
स्तत्कृते त्वं खड्गं निष्कोष्य मां जहि, ततस्तेन यूनाहतः स ममार।
अनन्तरम् अवीमेलको मृत इति दृष्ट्वा इस्रायेल्वंशीयाः सर्व्वे स्वस्वस्थानं ५५
प्रति प्रतस्थिरे।

इत्थम् अवीमेलको निजसप्ततिभ्रातृणां बधेन स्वतातस्य विरुद्धं ५६
यत् कुकर्म्माकरोत् तस्य समुचितो दण्डः, शिखिमस्य गृहस्थाश्च यद्यत् ५७
कुकर्म्माकुर्व्वन्, तेषामपि समुचितो दण्ड ईश्वरेणादायि यिरुव्वाल-
सुतस्य योथमस्य शापश्च तान् प्रति सफलो बभूव।

## १० दशमोऽध्यायः।

१ तोलयनाम्नो विचारयितुः कथनं ३ यायीरनाम्नो विचारकर्त्तुः कथनं ७ पाप-
कारणात् इस्रायेल्लोकानां दुःखं १० परमेश्वरं प्रति निवेदनम् ईश्वरस्योत्तरञ्च
१५ लोकानां पापाङ्गीकारस्तान् प्रतीश्वरस्य दया च।

अवीमेलकस्य मरणात् परम् इषाखरवंशीयो दोदयस्य पौत्रः पूयसः १
पुत्रस्तोलय इस्रायेल्वंशस्य रक्षणायोदपद्यत, स इफ्रयिमपर्व्वतस्थे
शामीरनगरे न्यवसत्, त्रयोविंशतिवत्सरान् यावद् इस्रायेल्लोकान् २
विचारयाञ्चकार च ततः स ममार शामीरे च तस्य श्मशानं बभूव।

ततः परं गिलियदीयो यायीर उत्पन्नः सन् द्वाविंशतिवत्सरान् ३
यावद् इस्रायेल्वंशस्य विचारं चकार। त्रिंशद् गर्द्दभारोहिणस्तस्य ४

त्रिंशत्पुत्त्रा आसन्, तेषाञ्च हवोतयायीरनाम्ना विख्यातानि नगरा-
५ ण्यासन् तान्यद्यापि गिलियद्देशे विद्यन्ते। अनन्तरं यायीरे मृते कामोने
६ तस्य श्मशानं बभूव। ततः परम् इस्रायेल्वंशाः परमेश्वरस्य साक्षात्
पुनर्व्वारं पापं चक्रुर्वाल्देवान् अस्तारोतदेवीररामीयदेवान् सीदोनी-
यदेवान् मोयाबीयदेवान् अम्मोनवंशीयदेवान् पिलेष्टीयदेवांश्च सिषे-
विरे, ते परमेश्वरम् असेवमानास्तत्यजुः।
७ तत इस्रायेल्वंशस्य प्रतिकूलं परमेश्वरस्य क्रोधे प्रज्वलिते स पिलेष्टी-
८ यानाम् अम्मोनवंशीयानाञ्च करेषु तान् व्यक्रीणात्। ततस्तं वत्सर-
मारभ्याष्टादशवत्सरान् यर्द्दनपार इमोरीयाणां गिलियदाख्यप्रदेश-
९ वासिनः सर्व्वे इस्रायेल्वंशास्तैः क्लिष्टा उपद्रुताश्च। तदन्यद् अम्मोन-
वंशीया यिहूदाविन्यामीनिफ्रयिमवंशीयैः समं योद्धुं यर्द्दनस्य पारम्
आजग्मुस्तत इस्रायेलवंशो भृशं क्लेशं प्राप।
१० अनन्तरम् इस्रायेल्वंशः परमेश्वरमुद्दिश्य प्रार्थनामिमां चकार,
वयं निजेश्वरं त्यक्त्वा बाल्सुरान् असेवामहीति कर्म्मणा तव प्रतिकूलं
११ पापमकुर्म्महि। ततः परमेश्वर इस्रायेल्वंशाय कथयामास मिस्रीय
१२ मोरीयाम्मोनीयपिलेष्टीयलोकेभ्यः किमहं युष्मान् नामोचयं? तथा
सीदोनीयामालेकीयमायोनीयलोकै र्युष्मासूपद्रुतेषु युष्माभि र्मामुद्दिश्य
१३ प्रार्थितं, ततोऽहं तेषामपि करेभ्यो युष्मानमोचयं। तथापि यूयं मां
परित्यज्येतरदेवगणं सेवितवन्तस्तस्मादहं युष्मान् पुनर्नोद्धारयिष्यामि।
१४ यूयं गत्वा स्वैरभिरुचितान् देवान् उद्दिश्य प्रार्थयध्वं ते क्लेशदसमये
युष्मानुद्धारयन्तु।
१५ तत इस्रायेल्वंशः परमेश्वरमवदत्, अस्माभिः पापमकारि, इदानीं
त्वं यत् क्षेमं मन्यसे तदेवास्मान् प्रति कुरु, अद्यमात्रमस्मान् उद्धारयेति
१६ वयं प्रार्थयामहे। अपरं ते स्वेषां मध्याद् इतरदेवान् दवयित्वा पर-
मेश्वरम् असेवन्त तत इस्रायेल्वंशस्य दुःखेन तस्य मनो दुःखितं।
१७ तस्मिन् समयेऽम्मोनवंशाः सर्व्वे मिलित्वा गिलियदे शिविरं स्थापया-
१८ मासुः, इस्रायेल्वंशाश्च मिलित्वा मिस्पां शिविरं स्थापयामासुः। ततो
गिलियदस्य मुख्यलोकाः परस्परमवदन् अम्मोनवंशेन सह योद्धुं गमने
कः प्रथमो भविष्यति? स गिलियदनिवासिनां सर्व्वेषां राजा भविष्यति।

# ११ एकादशोऽध्यायः।

१ यिप्तहस्य दूरीकरणं ४ तं पुनरानेतुं लोकप्रेषणं १२ इस्रायेलः सेनापतित्वे नियुक्तेन यिप्तहेनाम्मोनवंशस्य नृपतेः समीपं दूतप्रेषणं तस्यासम्मतिः २९ यिप्तहस्य प्रतिश्रुतिः ३२ तस्य जयः ३४ प्रतिश्रुत्यनुसारेण निजकन्यासमर्पणं।

तस्मिन् काले गिलियदीयो यिप्तहोऽतीव वीर आसीत्। स गिलिय- १
दाद् वेश्याजातपुत्र आसीत्। अपरं गिलियदस्य जायया पुत्रेषु प्रसूतेषु २
तस्य ते जायापुत्रा यौवनप्राप्ताः सन्तो यिप्तहं दर्वयितवन्तो गदितवन्तश्च
त्वं तातस्योपपत्न्याः पुत्रः पितृधनस्याधिकारं न प्राप्स्यसि। ततो यिप्तहः ३
स्वभ्रातॄणां सम्मुखात् पलाय्य टोवदेशे प्रवासं चकार। अपरं कतिपया
दुष्टलोका यिप्तहेन समं मिलित्वा तेन सह गमनागमनं चक्रुः।

कतिपयकालात्परं अम्मोनवंश इस्रायेल्वंशेन समं युयोध। अम्मोन- ४
वंशीया यदा युद्धमारेभिरे तदा गिलियदस्य प्राचीना यिप्तहं टोव- ५
देशाद् आनेतुं गताः। ततस्ते यिप्तहमवदन् त्वम् आगत्यास्माकं सेना- ६
पति भव वयम् अम्मोनवंशेन सह योत्स्यामः। ततो यिप्तहो गिलियदस्य ७
प्राचीनान् अवदत्, अहं किं युष्माभि र्न सन्तोषितः पैतृकनिवेशनाद्
दूरीकृतश्च? अत इदानीं विपद्ग्रस्ता यूयं मम समीपं कुत आगच्छथ?
ततो गिलियदस्य प्राचीना यिप्तहमवदन्, त्वम् अस्माकम् अग्रसरो ८
भूत्वा अम्मोनवंशेन सह युद्धा यदस्माकम् अर्थाद् गिलियदनिवासिनां
सर्व्वेषां लोकानां मुख्यो भव, एतत्कृते वयम् अधुना पुनस्तव समीपं
प्रत्यागत्यागताः। यिप्तहो गिलियदस्य प्राचीनान् अवदत्, अम्मोनवंशैः ९
समं योद्धुं मयि युष्माभिः पुनः स्वदेशम् आनीते परमेश्वरो यदि मम
करे तान् समर्पयिष्यति तर्हि किमहं युष्माकं प्रधानीभविष्यामि? ततो १०
गिलियदस्य प्राचीना यिप्तहम् अवदन्, वयं यदि तव वाक्यानुसारेण
न कुर्म्महे तर्हि परमेश्वरोऽस्माकं विचारं करिष्यति। अनन्तरं यिप्तहो ११
गिलियदस्य प्राचीनजनैः समं जगाम, ततो लोकास्तं स्वेषां प्रधानं
सेनापतिञ्च चक्रुः, अपरं यिप्तहो मिस्प्यां परमेश्वरस्य साक्षात् स्वां
समस्तां वाचं निवेदयामास।

अनन्तरं यिप्तहो ऽम्मोनवंशस्य नृपतेः समीपं दूतं प्रहित्य जगाद १२
मया सह तव कः सम्बन्धो यत् त्वं मया सह योद्धुं मम देशम् आगच्छः?
ततो ऽम्मोनवंशस्य राजा यिप्तहस्य दूतान् उवाच, इस्रायेल्वंशो १३
यदा मिसराद् बहिर्भूयागच्छत् तदा सोऽर्णोनम् आरभ्य यब्बोकं

यर्द्दनञ्च यावत् मम भूमिं हृतवान्, अत इदानीं निर्व्विरोधं तां पुन
१४ र्देहि। ततो यिप्तहोऽम्मोनवंशस्य नृपतेः समीपं पुनर्दूतान् प्रहितवान्
१५ दूतास्तमूचुः, यिप्तह इदं वदति मोयावस्य भूमिरम्मोनवंशस्य च भूमि-
१६ रिस्रायेल्वंशेन हृता नहि। किन्त्विस्रायेल्वंशो मिसराद् आग-
१७ मनकाले सूफसागरं यावत् प्रान्तरस्य मध्येन गत्वा कादेशं प्राप। ततः
परम् इदोमीयनृपस्य समीपं दूतान् प्रहित्य तं गदितवान् वयं निवे-
दयामहे त्वं स्वदेशस्य मध्येनास्मान् यातुं देहि, किन्त्विदोमराजस्तद्वाक्यं
न मेने, अपरं तथैव मोयावीयराजस्य समीपमपि दूतेषु प्रहितेषु सोऽपि
१८ न मेने तदानीम् इस्रायेल्वंशः कादेशे न्यवसत्। अनन्तरं ते प्रान्तरस्य
मध्येन गत्वा इदोमदेशं मोयावदेशञ्च प्रदक्षिणीकृत्य मोयावदेशस्य
पूर्व्वपार्श्वेनागत्य अर्णोनस्य पारे शिविरं स्थापयामासुः, किन्तु मोयावस्य
१९ सीमामध्यं न प्राविशन् यतोऽर्णोनो मोयावस्य सीमासीत्। अपरम्
इस्रायेल्वंशो हिष्वोनभूपालस्येमोरीयराजस्य सीहोनस्य समीपं दूतान्
प्रहित्य तमुवाच त्वं स्वदेशस्य मध्येनास्मान् स्वगन्तव्यस्थानं यातुम् अनुजा
२० नीहि। ततः सीहोनः स्वीयसीम्ना यातुं दातुम् इस्रायेल्वंशे न विश्वस्य स-
र्व्वलोकान् संगृह्य यहसे शिविरं स्थापयित्वेस्रायेल्वंशेन सह युयोध।
२१ तत इस्रायेलः प्रभुः परमेश्वरः सीहोनं तस्य सकललोकांश्चेस्रायेल्
वंशानां करेषु समर्पयामास ततस्ते तान् आजघ्नुः, इत्थं यस्मिन् देश
२२ इमोरीया न्यवसन् स कृत्स्नो देश इस्रायेल्वंशैरधिचक्रे। ते ऽर्णोनम्
आरभ्य यब्बोकं यावत् प्रान्तरञ्चारभ्य यर्द्दनं यावद् इमोरीयाणां सर्व्व
२३ सीमानम् अधिचक्रुः। इत्थम् इस्रायेलः प्रभुः परमेश्वरः स्वलोकस्येस्रायेल्
वंशस्य सम्मुख इमोरीयान् अधिकारात् च्युतान् चकार, इदानीं त्वं किम्
२४ अस्मान् अधिकारात् च्युतान् करिष्यसि? तव किमोशदेवेन दत्ता भूमि-
स्त्वया भोग्या, अस्माकञ्च प्रभुणा परमेश्वरेणास्माकं सम्मुखाद् दूरीकृतानां
२५ जातीनां भूमिरस्माभि र्भोग्येति किं सत्यं नहि? मोयावीयनृपतेः सिप्पो-
रस्य सुताद् वालाकात् किं त्वं श्रेष्ठः? इस्रायेल्वंशस्य प्रतिकूलं स किं
२६ व्यवदत्? तेषां विरुद्धं स किं युयोध? हिष्वोने तदीयग्रामेषु तथा-
रोयेरे तदीयग्रामेषु अर्णोनतटसमीपस्थेषु सर्व्वनगरेषु च शतत्रय-
वत्सरान् इस्रायेल्वंशो वसति, तद्दीर्घकालमध्ये यूयं कुतस्तानि न
२७ पुनर्गृहीतवन्तः? अतस्तव किमपि मया नापराद्धं, किन्तु मया
सह योधनात् त्वं मां हिंसि। इस्रायेल्वंशस्याम्मोनवंशस्य च मध्ये

विचारयिता परमेश्वरोऽद्य विचारयतु। तथाप्यम्मोनवंशीयो राजा २८
यिप्तहेन प्रेषितवाक्येषु मनो न निदधे।

ततः परमेश्वरस्यात्मनाविष्टो यिप्तहो गिलियदमिनशिप्रदेशाभ्यां २९
गिलियदस्थमिस्पीं जगाम, अपरं गिलियदस्य मिस्पीतो ऽम्मोनवंशस्य
समीपं जगाम। अपरं तस्मिन् काले यिप्तहः परमेश्वरम् उद्दिश्य प्रति- ३०
श्रुत्य जगाद त्वं यद्यम्मोनवंशं मम हस्ते समर्पयसि, तदाम्मोनवंशात् ३१
मम कुशलेन प्रत्यागमनकाले मां साक्षात् कर्त्तुं मम निवेशनद्वारात्
निर्गन्ता परमेश्वराय भविष्यति परमेश्वरमुद्दिश्य च होमबलिस्वरूपस्त
मयोत्सृक्ष्यते।

अनन्तरम् अम्मोनवंशीयैः सह योद्धुं यिप्तहे तेषां समीपं पारं गते ३२
परमेश्वरस्तान् तस्य करे समर्पितवान्। ततः सो ऽरोयेरम् आरभ्य ३३
मिन्नीत उत्तरणं यावद् आबेलकिरामीमञ्च यावद् विंशतिनगराणि
वशीकृत्य तान् महानिहननेन जघान, इत्थम् अम्मोनवंश इस्रायेल्-
वंशस्य साक्षात् नम्री बभूव।

अनन्तरं मिस्प्यां स्वनिवेशने यिप्तहस्यागमनकाले तस्य दुहिता मुरज- ३४
वाद्यनृत्यकारिणीभि र्वेष्टिता सती तं साक्षात् कर्त्तुम् आजगाम यिप्तहस्य
सैव सन्ततिरासीत् तदन्यः सुतः सुता वा नासीत्। तदा स स्वदुहितरं ३५
दृष्ट्वा वस्त्रं छित्त्वा बभाषे हा हा हे मम सुते त्वं मां भृशं दुःखिनम्
अकार्षीः, मम क्लेशदायकानां मध्ये त्वमप्येकाभूः, यतोऽहं परमेश्वरम्
उद्दिश्य प्रतिश्रुतकथामकथयम् अधुना तामन्यथा कर्त्तुं न शक्नोमि।
ततः सा तमवदत् हे मत्तात त्वं यदि परमेश्वरमुद्दिश्य प्रतिश्रुतमकरो- ३६
स्तर्हि निजप्रतिश्रुतवाक्यानुसारेण मां प्रति व्यवहर, यतः परमेश्वरस्तव
रिपुभ्योऽम्मोनवंशीयेभ्यस्तवेष्टं समुचितम् अदात्। अनन्तरं सा निज- ३७
तातं जगाद मदर्थं कर्म्मैकं त्वया क्रियतां मासद्वयार्थं मां विसृज ततोऽहं
पर्व्वतेषु गमनागमने कुर्व्वती निजानूढात्वमधि सखीभिः सह विलपामि।
ततः स याहीति वदन् मासद्वयार्थं तां व्यसर्जत् तदा सा पर्व्वतोपरि ३८
गत्वा निजानूढात्वमधि स्वसखीभिः समं विललाप। अपरं मासद्वये गते ३९
सा स्वपितुः समीपं प्रत्यागमत्, ततः स स्वकृतप्रतिश्रुत्यनुसारेण तां प्रति
व्यवजहार, सा केनापि पुरुषेण नोपभुक्ता। तदारभ्य इस्रायेलीय- ४०
कन्या गिलियदीययिप्तहस्य कन्यामधि वत्सरमध्ये चत्वारि दिनानि
विलपितुं प्रतिवत्सरं यान्ति व्यवहारोयम् इस्रायेल्देश उदपादि।

# १२ द्वादशोऽध्यायः।

१ यिप्तहेन समम् इफ्रयिमलोकानां विवादः ७ यिप्तहस्य मरणं ८ इब्सनस्य कथनं ११ एलोनस्य कथनं १२ अब्दोनस्य कथनञ्च।

१ अनन्तरम् इफ्रयिमवंशीयाः सर्व्वे समाहूता उत्तरदिशं गत्वा यिप्तहं
बभाषिरे त्वया सह गन्तुम् अस्मान् अनाहूय त्वम् अम्मोनवंशेन सह
२ योद्धुं कुतः पारमगमः? अतो वयं तव गृहं वह्निना दाहयिष्यामः। ततो
यिप्तहस्तान् अवदत्, अम्मोनवंशेन समं मम मदीयलोकानाञ्च महाविरोधे
समुपस्थिते युष्मानहम् आह्वयं किन्तु यूयं तेषां करेभ्यो मां नोद्धारित-
३ वन्तः। अनन्तरं युष्माभिरहं नोद्धारित इति वीक्ष्याहं स्वप्राणान् करे
कृत्वाम्मोनवंशस्य प्रतिकूलं पारमगमं ततः परमेश्वरो मम करे तान्
समार्पयत्, अतो यूयम् इदानीं मया समं योद्धुं कुतो मम समीपमा-
४ गच्छथ? अनन्तरं यिप्तहो गिलियदस्य सर्व्वलोकान् संगृह्णन् इफ्रयिमवं-
शीयैः समं युयोध गिलियदीयलोकाश्चेफ्रयिमलोकान् आजघ्नुः, यतस्ते
ऽवदन् यूयम् इफ्रयिमात् पलायिता लोका गिलियदीया इफ्रयिममि-
५ नश्योर्मिश्रिता लोकाः। अनन्तरं गिलियदीयलोका इफ्रयिमवंशस्याग्रे
गत्वा यर्द्दनस्य सर्व्वघट्टान् वशीकृतवन्तः, तत इफ्रयिमीयानां पलायि-
तेन लोकेन मां पारं गन्तुं देहीति वचसि कथिते गिलियदीयलोकास्तं
६ पप्रच्छुः, त्वं किम् इफ्रयिमीयो नरः? तेन नाहमिति गदिते तेऽवदन्
त्वं शिब्बोलत् शब्दमुच्चारय ततः स यथार्थम् उच्चारयितुम् अशक्तः
सिब्बोलदित्युवाच, ततः परं ते तं धृत्वा यर्द्दनस्य घट्टे ऽवधिषुः। तस्मिन्
काले इफ्रयिमवंशस्य द्विचत्वारिंशत् सहस्राणि लोका अहन्यन्त;
७ स गिलियदीयो यिप्तहः षड्वत्सरान् यावद् इस्रायेल्वंशं शासित्वा
ममार, ततो गिलियदस्य नगरैकस्मिन् तस्य श्मशानं बभूव।
८ अपरं वैतलेहमीय इब्सन इस्रायेल्वंशस्य विचारयिता बभूव, तस्य
९ त्रिंशत् सुतास्त्रिंशत् कन्याश्चासन्, अपरं स तं कन्यागणं विवाहयित्वा
स्वसुतेभ्यस्त्रिंशत् कन्या जग्राह, स सप्तवत्सरान् यावद् इस्रायेल्वंशम्
१० अशिषत्। अनन्तरम् इब्सने प्रमीते वैतलेहमे तस्य श्मशानं बभूव।
११ अनन्तरं सिबूलूनवंशीय एलोन इस्रायेल्वंशस्य विचारयिता बभूव
१२ स दशवत्सरान् यावद् इस्रायेल्वंशम् अशिषत्। अनन्तरं सिबूलून-
वंशीय एलोनो ममार, ततः सिबूलूनदेशस्थ अयालोने तस्य श्मशानं
बभूव।

अनन्तरं हिल्लेलस्य सुत अब्दोननामा पिरियाथोनीय एको जन १३
इस्रायेलवंशस्य विचारकर्त्ता बभूव। तस्य चत्वारिंशत् पुत्रास्त्रिंशत् १४
पौत्राश्चासन् ते सप्ततिगर्द्दभान् आरोहन्ति स्म। सोऽष्टवर्षाणि यावद्
इस्रायेलम् अशिषत्। अनन्तरं पिरियाथोनीये हिल्लेलसुते ऽब्दोने मृते १५
अमालेकीयपर्व्वत इफ्रयिम्देशस्थे पिरियाथोने तस्य श्मशानं बभूव।

---

## १३ त्रयोदशोऽध्यायः।

१ इस्रायेलवंशस्य पापकरणं २ मानोहस्य भार्य्यां प्रति दूतस्य दर्शनं ८ मानोहं प्रति दूतस्य दर्शनं १५ मानोहस्य नैवेद्योत्सर्जनं दूतस्यान्तर्द्धानं २४ शिम्शोनस्य जन्मकथनं।

अनन्तरम् इस्रायेलवंशीयैः परमेश्वरस्य साक्षात् पुनः पापे समा- १
चरिते परमेश्वरश्चत्वारिंशद् वर्षाणि यावत् तान् पिलेष्टीयानां
करेषु समर्पयामास।

दान्वंशस्य सरियनिवासी मानोहनामा मनुष्यैक आसीत् तस्य २
जाया बन्ध्या निरपत्या चासीत्। अनन्तरं परमेश्वरस्य दूतस्तस्यै स्त्रियै ३
दर्शनं दत्त्वा तां बभाषे पश्य त्वं बन्ध्या निरपत्या चासे, किन्तु त्वं गर्भं
धृत्वा पुत्रं प्रसविष्यसे। अतस्त्वामहं विनये त्वं सावधाना भव द्राक्षारसं ४
सुरां वा न पिब किञ्चनाशुचि वस्तु मा भुंक्ष्व। पश्य त्वं गर्भं धृत्वा यं पुत्रं ५
प्रसविष्यसे तस्य शिरः क्षुरेण न स्प्रक्ष्यते यतः स बालको गर्भस्थिति[illegible]र-
भ्येश्वराय नासरीयो भविष्यति, अपरं पिलेष्टीयानां करेभ्य [illegible]स्रायेल-
वंशम् उद्धारयितुं स आरप्स्यते। अनन्तरं सा नारी समागत्य स्वपतिं ६
बभाषे, ईश्वरस्य लोक एको ममान्तिकम् आगच्छत्, तस्य वदनम् ईश्व-
रीयदूतस्य वदनमिवातिभयङ्करं किन्तु स कस्मादागच्छद् इत्यहं तं
नापृच्छं, अपरं सोपि स्वनाम मह्यं नाकथयत्। स मामवदत् पश्य त्वं ७
गर्भं धृत्वा पुत्रमेकं प्रसविष्यसे तस्मात् कञ्चन द्राक्षारसं सुरां वा न पिब
किञ्चनाशुचिवस्तु मा भुंक्ष्व यतः स बालको गर्भस्थितिमारभ्य मरणदिनं
यावद् ईश्वराय नासरीयो भविष्यति।

ततो मानोहः परमेश्वरम् उद्दिश्य विनीय कथयामास हे प्रभो त्वया ८
प्रहित ईश्वरस्य लोक आवयोः समीपं पुनरागच्छतु तं भाविबालक-
मध्यावाभ्यां यत् कर्त्तव्यं तच्छिक्षयतु च। तदानीम् ईश्वरो मानोहस्य ९
वाक्यं गृहीतवान् अनन्तरं सा योषित् क्षेत्र उपविष्टा तस्मिन् समय

ईश्वरस्य दूतः पुनस्तस्याः समीपम् आजगाम किन्तु तस्याः पतिर्मानोह-
१० स्तया सह नासीत्। ततः सा नारी तूर्णं धावती निजपतिं वार्त्तां जगाद,
पश्यान्यस्मिन् दिने यो लोको मम समीपम् आगच्छत् स पुनर्मह्यं दर्शनं
११ दत्तवान्। ततो मानोह उत्थाय स्वजायायाः पश्चाद् गत्वा तस्य लोकस्य
समीपं प्राप्य तमवदत्, इमां स्त्रियं यो लोकः सम्भाषितवान् स किं
१२ भवान्? स उवाच, अहमेवास्मि। अनन्तरं मानोह उवाच भवतो
वाक्ये सफले सति बालकमधि केन नियमेनावाभ्याम् आचरितव्यं?
१३ ततः परमेश्वरस्य दूतो मानोहमवदत् इमां स्त्रियं यद्यत् मयादिष्टं तदधि
१४ सा सावधाना तिष्ठतु। सा द्राक्षाफलजातं किमपि वस्तु मा भुंक्तां
तथा द्राक्षारसं सुराञ्च मा पिवतु नाशुचिद्रव्यं भुङ्क्तां, तामहं यद्यत्
समाज्ञापयं सा तत्सर्व्वम् आचरतु।

१५ अनन्तरं मानोहः परमेश्वरदूतम् उवाच भवान् अस्मदनुरोधात्
१६ किञ्चिद् विलम्बतां भवतः कृत आवां छागवत्समेकं पच्यावः। तत
ईश्वरस्य दूतो मानोहमवदत् यद्यपि त्वं मां विलम्बयसे, तथापि तवान्नं
नाहं भक्षिष्यामि, यदि च होमबलिं दातुम् इच्छसि तर्हि स
परमेश्वराय दातव्यः, किञ्च स परमेश्वरस्य दूत इति मानोहो नाज्ञा-
१७ सीत्। अनन्तरं मानोहः परमेश्वरस्य दूतम् अवदत् भवतः किन्नाम?
१८ भवतो वाक्ये सफले सत्यावां भवन्तं समादरिष्यावहे। ततः पर-
मेश्वरस्य दूतस्तमवदत् त्वं कुतो मम नाम पृच्छसि? मम नामाश्चर्य्यं।
१९ अनन्तरं मानोहस्तं छागवत्सं तदीयनैवेद्यञ्च गृहीत्वा तत्रस्थपाषा-
णोपरि परमेश्वरमुद्दिश्य निवेदयामास ततो मानोहस्य तज्जायायाश्च
२० दृष्टिगोचरे तेन दूतेनाश्चर्य्यरूपमाचरितं। यतो यदा यज्ञवेद्या अग्नि-
शिखा गगणदिशम् उदगच्छत्, तदा मानोहस्य तज्जायायाश्च दृष्टि-
गोचरं परमेश्वरस्य दूतो यज्ञवेद्याः शिखाम् आश्रित्योर्द्ध्वं जगाम,
२१ ततस्तौ मृत्तिकायां न्युब्जीभूय पपततुः। इतः परं परमेश्वरस्य दूतो
मानोहं तस्य जायाञ्च स्वं पुनर्नादर्शयत् तदा स परमेश्वरस्य दूत इति
२२ मानोहो ज्ञातवान्। अनन्तरं मानोहः स्वीयां जायां जगाद आवाम्
२३ ईश्वरं अदर्शाव तत्कारणाद् अवश्यं मरिष्यावः। किन्तु तस्य जाया तं
बभाषे, परमेश्वरो यद्यावां हन्तुम् ऐषिष्यत् तर्हि स आवयोः करतो
होमं नैवेद्यञ्च नाग्रहीष्यद् एतानि चावां नादर्शयिष्यत् किञ्च समये
ऽस्मिन् यानि कथितवान् तान्यपि नाकथयिष्यत्।

अनन्तरं सा नारी पुत्रं प्रसूय तस्य नाम शिम्शोन इति चकार २४
किञ्च स बालको वर्द्धितुमारेभे परमेश्वरश्च तस्मै वरं ददौ। अपरं परमे- २५
श्वरस्यात्मा सरियस्येष्टायोलस्य च मध्ये दानीयशिविरे प्रथमं तस्मिन्
आविर्बभूव।

---

# १४ चतुर्दशोऽध्यायः।

१ पिलेष्टीयानां कन्यैकस्याः शिम्शोनस्य विवहनेच्छा ५ तिम्नाथायां गमनकाले सिंहवधः ८ तिम्नाथायां द्वितीययात्रायां सिंहस्य कुणपे मधुलाभः १० शिम्शोनस्य विवाहभोज्यं १२ भोजनसमये शिम्शोनस्य प्रहेलिकाकथनं १९ प्रहेलिकार्थकथनफलं।

अनन्तरं शिम्शोने तिम्नायां गते तत्र पिलेष्टीयां कन्यामेकां वीक्ष्य १
प्रत्यागत्य निजपितरौ वार्त्तामिमां बभाषे मया तिम्नाथायां पिलेष्टीया २
कन्यका दृष्टा, अतस्तामानीय मां विवाहयतं। ततस्तस्य पितरौ जगदतुः ३
तव भ्रातृणां मध्ये ऽस्मदीयसर्व्वलोकानाञ्च मध्ये किं कन्या नास्ति यत् त्वम्
अच्छिन्नत्वचां पिलेष्टीयानां कन्यां विवोढुं यास्यसि? शिम्शोनः
स्वपितरं बभाषे, त्वं मदर्थं तामेवानय मम दृष्ट्या सा मनोहरा। किन्तु ४
स यत् पिलेष्टीयानां प्रतिकूलं छिद्रं प्राप्तुं चेष्टेत तदर्थं परमेश्वरादिदं
भवतीति तस्य पितरौ न विविदतुः। तदानीं पिलेष्टीया इस्रायेल्वंश-
स्याधिपतित्वं चक्रुः।

तस्मिन् काले शिम्शोनस्तस्य पितरौ च तिम्नाथाम् अगमन् तेषु ५
तिम्नाथास्थानि द्राक्षाक्षेत्राणि प्राप्तेषु तत्रैको युवसिंहो गर्ज्जन् शिम्शो-
नस्यान्तिकम् आगमत्। तदा परमेश्वरस्यात्मनाविष्टः शिम्शोनः शून्य- ६
हस्तोऽपि सन् छागवत्सवत् तं सिंहं चिच्छेद, किन्तु स तत् कृतवा-
निति स्वपितरौ न जगाद। अनन्तरं शिम्शोनेन गत्वा तया कन्यया ७
मिथः संलापे कृते सा तस्य दृष्टौ मनोहरा बभूव।

अनन्तरं कस्मिंश्चित् समये गते यदा स तां कन्यां विवोढुं तत् स्थानं ८
पुनरगच्छत् तदा तस्य सिंहस्य कुणपं द्रष्टुं मार्गात् जगाम, तत्र तत्-
सिंहकुणपमध्ये मधुमक्षिकायूथं मधुकोषञ्च दृष्ट्वा स्वहस्तेनादाय मधु ९
भक्षन् जगाम, किञ्च पित्रोः समीपम् उपस्थाय ताभ्यामपि किञ्चिद्
ददौ ततस्तौ तद् बुभुजाते, किन्तु सिंहकुणपात् मधु गृहीतमिति ताभ्यां
स न कथयामास।

अनन्तरं तस्य ताते तस्याः कन्यायाः समीपं गते शिम्शोनस्तत्र स्थाने १०

११ भोज्यमासादितवान्, यतो वराणां तादृशो व्यवहार आसीत्। अनन्तरं
तं दृष्ट्वा पिलेष्टीयलोकास्तस्य समीपे स्थातुं त्रिंशत् सहचरान् आनिन्युः।
१२ अनन्तरं शिम्शोनस्तान् जगाद युष्मानहं प्रहेलिकामेकां पृच्छामि
यदि यूयम् अस्य महस्य सप्तदिनमध्ये तस्या अर्थं निश्चित्य मह्यं कथयितुं
शक्नुथ तर्हि युष्मभ्यमहं त्रिंशद् उत्तरासङ्गान् त्रिंशद् वस्त्रयुगानि च
१३ दास्यामि। किन्तु यदि तस्या अर्थं वक्तुं न शक्नुथ तर्हि यूयं मह्यं त्रिंशत्
प्रावारान् त्रिंशद् वस्त्रयुगानि च दास्यथ, ततस्ते जगदुः, तव प्रहेलिकां
१४ त्वं ब्रूहि वयं शृणुमः। स उवाच,

निरगाद् भक्षकाद् भक्ष्यं मिष्टञ्च बलिनस्तथा॥

१५ ततस्ते त्रिभिर्दिनैस्तस्याः प्रहेलिकाया अर्थं कथयितुं नाशक्नुवन्। अन-
न्तरं सप्तमे दिवसे ते शिम्शोनस्य जायाम् अवदन् त्वं निजं स्वामिनं
स्वप्रहेलिकाया अर्थं कथयितुं प्रवर्त्तय नोचेत् वयं त्वां तव पितृनिवेशनञ्च
वह्निना दाहयिष्यामः; अस्माकं सम्पत्तिम् अपहर्त्तुं किं यूयम् अस्मान्
१६ निमन्त्रितवन्तः? ततः शिम्शोनस्य जाया तस्य साक्षाद् रुदती बभाषे
त्वम् अवश्यं माम् ऋतीयसे किञ्चिदपि मयि न प्रीयसे, यतस्त्वं मम
लोकान् प्रहेलिकामेकामवादीः किन्तु मां नावादीः। ततः स उक्त-
वान् पश्याहं तां कथां स्वपितरावपि नावदं तर्हि किं तुभ्यं तां कथयि-
१७ ष्यामि? ततस्तस्य जाया महीयसप्ताहस्य शेषदिनं यावत् तस्य साक्षात्
तादृग् रुदितवती, ततः स तया व्यग्रः सन् सप्तमे दिवसे तस्यै कथया-
१८ मास, ततः सा योषित् स्वलोकेभ्यः प्रहेलिकाया अर्थं कथयामास। अन-
न्तरं सप्तमे दिवसे सूर्य्येऽस्तमगते तन्नगरस्थमनुष्यास्तम् ऊचुः,

मधुतः किं भवेन्मिष्टं बलवान् को मृगेन्द्रतः॥

ततः स तान् अवदत्,

नाभेत्स्यध्वं मम श्लोकं चेन्नाकक्ष्यत मे गवा॥

१९ अनन्तरं परमेश्वरस्यात्मनि तस्मिन् अधिष्ठिते सोऽस्किलोनं गत्वा तत्र-
त्यान् त्रिंशत् जनान् हत्वा तेषां वस्त्राणि गृहीत्वा प्रहेलिकार्थकथकेभ्यः
पूर्व्वोक्तानि वस्त्राणि ददौ, किन्तु तस्य क्रोधस्य प्रज्वलनात् ततस्थानात्
२० स्वपितुर्निवेशनं जगाम। अनन्तरं शिम्शोनस्य यः सहचर आसीत्
तस्मै तस्य जायादीयत।

# १५ पञ्चदशोऽध्यायः ।

१ जायायाः समीपं गन्तुं शिम्शोनस्य निषेधः ४ सेवस्य शस्यस्य दाहः ६ तस्य जायाया धारकीयैर्दाहः शिम्शोनेन प्रतिशोधकरणं ९ यिहूदीयलोकैस्तस्य बद्धत्वं समर्पितत्वञ्च १४ गर्दभस्य हनुना सहस्रलोकानां बधः १८ पिपासानिवारणार्थं तोयपानञ्च।

अनन्तरं गोधूमशस्यकर्त्तनकाले शिम्शोनश्छागवत्समेकं गृहीत्वा स्वजायां साक्षात् कर्तुं गत्वा जगाद स्वजायायाः समीपं अन्तःपुरमहं यास्यामि, किन्तु तस्याः पिता तमन्तरं गन्तुं नानुजज्ञौ। किञ्च तस्या जनको जगाद त्वं ताम् ऋतीयितवान् इति निश्चित्य मया सा तव सहचराय दत्ता, तस्याः कनिष्ठभगिनी किं तस्याः सुन्दरी नहि? अहं निवेदयामि त्वं तस्या विनिमयेन तां गृहाण। ततः शिम्शोनोऽवदत् अहमिदानीं पिलेष्टीयान् हिंसित्वापि तेभ्योऽधिकं निर्दोषो भविष्यामि। अनन्तरं शिम्शोनो गत्वा त्रीणि शतानि शृगालान् धृत्वा बद्धा आनीय द्वौ द्वौ शृगालौ योजयित्वैकैकाम् उल्कां तेषां पुच्छयुगेषु बबन्ध। अनन्तरं तासूल्कासु वह्निं दत्वा पिलेष्टीयानां शस्यक्षेत्रेषु तान् त्यक्ता बद्धशस्यमुष्टीन् अच्छिन्नशस्यानि जितवृक्षोद्यानानि च दाहयामास।

तदानीं पिलेष्टीया अपृच्छन् कर्म्मैतत् केन कृतं? लोका अवदन् तिम्नाथीयस्य जामात्रा शिम्शोनेनेदं कृतं यतस्तस्य जायापहृता तस्य सहचराय दत्ता, ततः पिलेष्टीया आगत्य तां स्त्रियं तस्याः पितरञ्च वह्निना दाहयामासुः। ततः शिम्शोनस्तान् अवदत्, यदि युष्माभिरेतादृशं कर्म्म क्रियेत तर्हि युष्मभ्यं तत्फलमदत्त्वा नाहं स्थास्यामि। ततः परं स सर्व्वथा महाघातेनाहत्य तान् अवधीत्, अनन्तरम् एटमपर्व्वतस्य गह्वरं गत्वा न्यवसत्।

तदानीं पिलेष्टीया गत्वा यिहूदाप्रदेशे शिबिरं स्थापयित्वा लिहीं यावद् व्याप्य तस्थुः। ततो यिहूदाया लोका अपृच्छन् यूयम् अस्माकं प्रतिकूलं कुत आगच्छत? ते कथयामासुः शिम्शोनोऽस्मान् प्रति यदकरोत् तं प्रति तद्वत् कर्त्तुं तं बन्धुञ्च वयं समागताः। तदानीं यिहूदायास्त्रीणि सहस्राणि लोका एटमपर्व्वतस्य गह्वरं गत्वा शिम्शोनाय कथयामासुः, पिलेष्टीया अस्माकम् अधिपतय इति किं त्वं न जानासि? त्वमस्मान् प्रति किं कृतवान्? स कथयामास ते मां प्रति यदकुर्व्वन् अहमपि तान् प्रति तद्वदकरवं। ते तस्मै कथयामासुः, वयमिदानीं त्वां बद्धा पिलेष्टीयानां करेषु समर्पयितुम् आगताः। शिम्शोनस्तान्

१२ अवदत् यूयं मां न हनिष्यथेति मम समीपे शपथं कुरुत । ततस्तेऽव-
१३ दन्, न, वयं केवलं त्वां दृढं बद्धा तेषां करेषु समर्पयिष्यामः किन्तु
निश्चितं त्वां न हनिष्यामः । अनन्तरं ते नूतनरज्जुद्वयेन तं बद्धा तस्मात्
शैलात् तमादाय गताः ।
१४ अनन्तरं तस्मिन् लिह्यीं प्राप्ते तस्य प्रतिकूलं पिलेष्टीया उच्चैः शब्दं
चक्रुः किन्तु परमेश्वरस्यात्मनि तस्मिन्नधिष्ठिते तस्य बाहुस्थिते रज्जू
वह्निना दग्धशणा इव बभूवतुस्तस्य बन्धनानि च तस्य हस्तद्वयाच्चिपेतुः ।
१५ अनन्तरं स आर्द्रां गर्द्दभहनूमेकां दृष्ट्वा करं विस्तार्य्यादाय तद्द्वारा
१६ सहस्रं लोकान् अवधीत् । तदानीं शिमशोनः कथयामास,

एको राशिर्द्वितीयश्च हतौ हन्वा खरस्य हि ।
सहस्रं मम शत्रूणां हतं हन्वा खरस्य हि ॥

१७ अनन्तरं कथां समाप्य हस्ताद् हनूं निक्षिप्य तत्स्थानस्य नाम रामत्-
लिह्यी (हनूनिक्षेप इति) चकार ।
१८ अनन्तरं सोऽतीव तृष्णार्त्तो भूत्वा परमेश्वरस्य समीपे प्रार्थनां चकार
त्वं स्वदासं महोद्धारकर्म्मेदं कारितवान् इदानीं किमहं तृष्णया मरि-
१९ ष्यामि चाच्छिन्नत्वचां वशी भविष्यामि ? ततः परमेश्वरेण लिह्यीस्थिते
कुण्डाकारे छिद्रे सृष्टे तस्मात् तोयं निर्जगाम तदा स तोयं पीत्वा प्राणान्
प्राप्य सचैतन्यो बभूव तस्मात् स तत्स्थानस्य नाम ऐनहक्कोरि (प्रार्थ-
२० कस्य प्रस्रवणमिति) चकार, तत्स्थानम् अद्यापि लिह्यां विद्यते । पिले-
ष्टीयानां काले शिमशोनो विंशतिवत्सरान् यावद् इस्रायेल्वंशस्य
विचारयितासीत् ।

---

## १६ षोडशोऽध्यायः ।

१ शिमशोनस्याससागमनं ४ दिलीलायां प्रेमासक्तता तस्य गुप्तकथां ज्ञातुं दिलीलायाः चेष्टा शिमशोनस्य न प्रकाशनं १५ गुप्तकथाप्रकाशनात् तस्य बलहानिः २१ तस्य कारायां बन्धनं पिलेष्टीयैः सह तस्य मरणं ।

१ तदानीं शिमशोनोऽसां गत्वा तत्र वेश्यामेकां वीक्ष्य तस्या गृहं प्रावि-
२ शत् । ततः शिमशोन एतत्स्थानम् आगच्छद् इति श्रुत्वा असासीयास्तद्
वेष्टयित्वा कृत्स्नां रजनीं तत्कृते नगरद्वारे गुप्ता अतिष्ठन्, यतः
प्रातःकाले दिने जाते तं वयं हनिष्याम इति मदित्वा ते कृत्स्नां रजनीं
३ तूष्णींभूय तस्थुः । अपरं शिमशोनो मध्यरात्रिं यावत् शयित्वा मध्यरा-

चोत्थाय नगरद्वारस्य सार्गलौ कपाटौ स्तम्भद्वयञ्च गृहीत्वा प्रतस्थे किञ्च
स्कन्धे कृत्वा हिब्रोणःभिमुखस्य पर्व्वतस्य शिखरे तानि निदधौ।
अनन्तरं सोरेकोपत्यकावासिनी दिलीलानामिका या स्त्री स तस्यां ४
प्रेमासक्तो। ततः पिलेष्टीयानाम् अधिपतयस्तस्या योषितः समी- ५
पम् आगत्य तां बभाषिरे, त्वं तं परिवञ्चयस्व केन तस्य महापराक्र-
मोऽयं जायते केन वा वयं तं जित्वा क्लेशनार्थं बन्धुं शक्नुमस्तन्निश्चिनु
ततो वयं प्रत्येकं एकादशशतानि रूप्यमुद्रास्तुभ्यं दास्यामः। अनन्तरं ६
दिलीला शिम्शोनम् अवदत्, विनयेऽहं तवायं महापराक्रमः केन
जायते केन वा त्वं परेण बद्धा क्लेष्टुं शक्यसे तन्मां वद। ततः शिम् ७
शोनस्तस्यै कथयामास सप्तभिर्नवीनरज्जुभि वैर्दि यद्यहं बध्ये तदा
दुर्ब्बलो भवन् अन्यलोकस्य सदृशो भविष्यामि। अनन्तरं पिलेष्टी- ८
यानाम् अधिपतयः सप्तागुष्कनवीनवेत्राण्यानीय तस्यै ददुस्ततः सा तैस्तं
बबन्ध। तदानीं तस्या अन्तरागारे लोका गुप्ता आसन् अनन्तरं सा ९
तमवदत्, हे शिम्शोन पिलेष्टीयास्त्वामाक्राम्यन्ति ततो वह्निस्पृष्टशणा-
सूत्राणि यथा छिद्यन्ते तथा तानि वेत्राणि तेन छिन्नानि, इत्थं तस्य बलस्य
तत्त्वं न ज्ञातं। अनन्तरं दिलीला शिम्शोनाय कथयामास, पश्य त्वं मां १०
परिहस्य मृषा गदितवान्, विनयेऽहं केन त्वं बन्धुं शक्यसे तन्मां
वद। ततः स तस्यै कथितवान् याभिः किञ्चन कर्म्म नाकारि तादृशीभि ११
र्नूतनरज्जुभि र्यद्यहं बध्ये तदाहं दुर्ब्बलो भवन् अन्यलोकस्य सदृशो
भविष्यामि। ततो दिलीला नूतनरज्जूरानीय ताभिस्तं बबन्ध तदा तत् १२
अन्तरागारे लोका आसन् सा तस्मै कथयामास हे शिम्शोन पिले-
ष्टीयास्त्वाम् आक्राम्यन्ति ततः स निजबाहुतः सूत्राणीव ताश्चिच्छेद।
अनन्तरं दिलीला शिम्शोनाय कथयामास त्वम् इदानीमपि मां परि- १३
हस्य मृषा वाक्यमवादीः। केन त्वं बन्धुं शक्यसे तन्मां वद। स
कथयामास, यदि त्वं मम शिरसः सप्तकेशरज्जूः सूत्रैः सह वस्त्रवद्
वयसि तर्हि तत् शक्यं भविष्यति। ततः सा कीलेन ता बद्धा तस्मै १४
कथयामास हे शिम्शोन पिलेष्टीयास्त्वाम् आक्राम्यन्ति। ततः स निद्रातो
जागरित्वा सूत्रैः समं स्यूतं कीलञ्चापजहार।
अनन्तरं दिलीला तस्मै कथयामास, मां प्रति तव मनो नास्ति तर्हि १५
त्वयाहं प्रीये इति इदं कथं वक्तुं शक्नोषि? पश्य वारत्रयं त्वं मां परिहस्य
केन तव महापराक्रमो जायते तन्मह्यं नाकथयः। इत्थं सा प्रतिदिनं १६

वाक्यैस्तमाक्राम्यत्, ततः स व्याकुलो भूत्वा जीवनेऽपि विरक्तो बभूव ।
१७ ततः स स्वमनोवाक्यं व्यक्तीकृत्य तस्यै कथयामास, मम शिरः कदापि
क्षुरेण न स्पृष्टं यतोऽहं गर्भस्थितिमारभ्येश्वराय नासरीयोऽस्मि, यद्यहं
शिरो मुण्डयामि तर्हि मम बलं मां त्यक्ष्यत्यहञ्च दुर्ब्बलो भवन् अन्यलो-
१८ कस्य सदृशो भविष्यामि । अनन्तरं तेन स्वमनोवाक्यं व्यक्तीकृतम् इति
बुद्ध्वा दिलीला दूतं प्रहित्य पिलेष्टीयानाम् अधिपतीन् आहूय कथया-
मास, इदानीं यूयम् आगच्छत यतः स स्वमनसः सर्व्वं वाक्यं मह्यं कथि-
तवान्, ततः पिलेष्टीयानाम् अधिपतयः स्वहस्तैर्मुद्रा आदाय तस्याः
१९ समीपम् आगच्छन् । अनन्तरं सा निजजानूपरि तं निद्राप्य जनमे-
कमाहूय तस्य शिरसः सप्तकेशरज्जूः क्षौरयामास ततः परं सा यदा
२० तं क्लेशयितुम् आरभत तदा स बलहीन आसीत् । अर्थतः सा कथ-
यामास हे शिमशोन पिलेष्टीयास्त्वाम् आक्राम्यन्ति ततः स निद्रातो
जागरित्वा मनसि कथितवान् अन्यसमय इव वहिर्गत्वाहम् आत्मानं
मोचयिष्यामि, किन्तु स परमेश्वरेण त्यक्त इति स नाजानात् ।
२१ अनन्तरं पिलेष्टीयास्तं धृत्वा तस्य चक्षुषी वहिष्कृत्य तम् असापुरी-
मानीय पित्तलनिगडै र्बबन्धुः, अनन्तरं स कारागारे शस्यान्यपिनट् ।
२२ तथापि तस्य शिरोमुण्डनानन्तरं तस्य शिरसः केशाः पुनर्वर्द्धितुमारे-
२३ भिरे । अपरं पिलेष्टीयानाम् अधिपाः स्वेषां सुरस्य दागोनस्य समीपे
महानैवेद्यं निवेदयितुम् आनन्दितुञ्च सर्व्वे मिलिता यतस्ते कथयामासुः,
२४ अस्माकं देवोऽस्माकं रिपुं शिमशोनम् अस्माकं करगतमकरोत् । अपरं
तं वीक्ष्य प्रजाः स्वेषां देवं प्रशशंसुः किञ्च कथयामासुरस्माकं देवोऽस्मद्देश-
२५ नाशकं बहुलोकघातिनञ्चास्माकं रिपुं करेऽस्माकं समार्पयत् । अनन्तरं ते
हृष्टचित्ताः सन्तः कथितवन्तः शिमशोन आह्वयताम् अस्माकं साक्षात्
कौतुकं करोतु च ततो लोकाः कारागृहात् शिमशोनम् आहूयानीय
२६ स्तम्भानां मध्ये तमस्थापयन् स च तेषां साक्षात् कौतुकं चकार । अनन्तरं
शिमशोनः स्वहस्तधारिणं बालकमवादीत् मां त्यज यस्य स्तम्भद्वयस्यो-
परि गृहस्य भार आस्ते तद् द्वयमहं स्पृशानि, तत्र भारं दत्त्वा
२७ तिष्ठानि च । तदानीं स्त्रीभिः पुरुषैश्च तद्गृहं परिपूर्णमासीत् पिलेष्टी-
यानां सर्व्वेऽधिपतयोऽपि तत्रासन्, किञ्च स्त्रियः पुरुषाश्च सहस्र-
२८ त्रयलोका गृहपृष्ठेऽतिष्ठन् ते सर्व्वे शिमशोनस्य कौतुकमदर्शन् । ततः
शिमशोनः परमेश्वरमुद्दिश्य प्रार्थनां कुर्व्वन् जगाद हे प्रभो परमेश्वर

विनयेऽहं मां स्मर हे ईश्वर विनयेऽहं केवलमेकवारमात्रं मां बलिनं कुरु,
अहं चक्षुर्द्वययोः परिशोधार्थं पिलेष्टीयेभ्यः समुचितं ददानि। अपरं २९
मध्यस्थितयो ययो द्वयोः स्तम्भयोरुपरि गृहस्य भार आसीत् शिम्शोनो
नतः सन् तयोरेकं दक्षिणबाहुनान्यञ्च वामबाहुना परिगृह्य स्वस्य भारं
ददौ। अनन्तरं पिलेष्टीयैः समं मम प्राणाः वियुज्यन्तामिति वाक्य- ३०
मुक्त्वा शिम्शोनो निजसकलबलेन भारमदात्, ततस्तद्गृहम् अध्यक्षाणां
तन्मध्यस्थितसर्व्वलोकानाञ्चोपरि पपात, ततो जीवनकाले तेन ये
हतास्तेभ्योऽधिका लोका मरणकाले ऽहन्यन्त। अनन्तरं तस्य भ्रातरः ३१
पितृवंशीयाश्चागत्य तमादाय सरियेष्टायोलयोर्मध्यस्थाने तत्पितुर्मानो-
हस्य श्मशाने तस्य श्मशानं चक्रुः, स विंशतिवत्सरान् इस्रायेलवंशस्य
विचारयितासीत्।

## १७ सप्तदशोऽध्यायः।

१ मीखायेन रूप्यचौर्य्यं मूर्त्तिनिर्म्माणं ७ मूर्त्तिसेवनाय याजकनियोगश्च।

इफ्रयिमपर्व्वते मीखायनामा लोक एक आसीत्। स स्वमातरं जगाद १
चोरितं यत् शताधिकसहस्रशेकलपरिमितं रूप्यमधि त्वया शाप उक्तो २
मम कर्णौ आविशच्च तद् रूप्यं मया गृहीतं मत्समीपे विद्यते, ततस्तस्य
माता बभाषे, हे मम पुत्र त्वं परमेश्वरस्याशिषं प्राप्नुहि। अनन्तरं स ३
तत् शताधिकसहस्रशेकलरूप्यं स्वमात्रे पुनर्ददौ तदा तस्य माता कथ-
यामास, अहं निषिक्तामेकां मूर्त्तिं तक्षिताञ्चैकां मूर्त्तिं निर्म्मापयितुं स्वपु-
त्रस्य मङ्गलार्थं तद् रूप्यं परमेश्वरायोदसृजं तदर्थञ्चेदानीं तुभ्यं पुनर्ददां।
तथापि तेन स्वमात्रे तस्मिन् रूप्ये पुनर्दत्ते सा शतद्वयशेकलरूप्यं ४
गृहीत्वा निर्म्मात्रे ददौ ततः स तेन निषिक्तामेकां तक्षिताञ्चैकां मूर्त्तिं
निर्म्मितवान् ते मूर्त्ती मीखायस्य गृहे तस्थतुः। तस्य मीखायस्यैको ५
देवालय आसीत्, अपरम् एकम् एफोदस्त्रम् एका पुत्तलिका च तेन
निर्म्मिता तया स्वीयपुत्राणामेकः पवित्रीकृतः स च तस्य याजको
बभूव। तस्मिन् काले इस्रायेलवंशे कोपि राजा नासीत् यो यत् ६
उत्तमम् अमन्यत स तदेवाकरोत्।

तदानीं यिहूदादेशस्थबैत्लेहमयिहूदानगरीयो लेवीय एकस्तरुणस्तत्र ७
प्रावसत्। स यत्र तत्र प्रवासं कर्त्तुं बैत्लेहमयिहूदानगरान्निर्गत्य ८
यात्रां कुर्व्वन् इफ्रयिमपर्व्वते मीखायस्य निवेशनम् आजगाम। ततो ९

मीखायस्तं पप्रच्छ त्वं कस्माद् आगतोऽसि? स प्रत्यवदत् लेवीयोऽहं
१० बैतलेहमयिहूदाया आगतोऽस्मि यत्र तत्र प्रवस्तुं पर्य्यटामि। ततो
मीखायस्तं बभाषे त्वं मया सार्द्धं तिष्ठ मम पुरोहितः पितृरूपश्च भव
मया संवत्सरे तुभ्यं दशशेकलरूप्यं वस्त्रयुग्मं तव भक्ष्यद्रव्याणि च
११ दायिष्यन्ते। ततः स लेवीयस्तस्य गृहं गत्वा तेन सार्द्धं वस्तुं मतिं चकार,
१२ इत्थं स तरुणस्तस्य पुत्त्रैकइव बभूव। अनन्तरं मीखायस्तं लेवीयं
पवित्रं चकार, ततः स तरुणस्तस्य पुरोहितो भूत्वा मीखायस्य निवेशने
१३ न्यवसत्। ततो मीखायः कथयामास परमेश्वरो मम मङ्गलं करिष्यतो-
त्यहम् इदानीम् अजानां, यतो लेवीयलोको मम पुरोहितोऽभवत्।

---

# १८ अष्टादशोऽध्यायः।

१ अधिकारम् अनुसन्धातुं दानवंशस्य पञ्चजनप्रेषणं ७ लयिशस्थानस्य कथनं ११ षट्शतानि लोकानां तदाक्रमितुं गमनं १४ पथिमध्ये मीखायस्य विग्रहादिचौर्य्यं २२ मीखायस्य कथाम् अगृहीत्वा तै र्लयिशं गत्वा तस्य हस्तगतकरणं ३० तत्र स्थाने विग्रहस्थापनं।

१ तस्मिन् काले इस्रायेल्वंशे कोपि राजा नासीत्। तदानीं दानवंशः
स्ववासार्थम् अधिकारणीयं देशमचेष्टत, यतस्तद्दिनं यावद् इस्रायेल्-
२ वंशानां मध्ये तेनाधिकर्त्तव्या भूमि र्न प्रापि। अतो दानवंशीयाः स्वेषां
प्रदेशाद् अर्थात् सरियेष्टायोलेभ्यः स्ववंशस्य पञ्चवीरान् देशं पर्य्यटितुं
वीक्षितुञ्चेदं कथयित्वा प्रेषयामासुः, यूयं गत्वा देशं निरीक्षध्वं, ततस्ते
३ इफ्रयिमपर्व्वते मीखायस्य गृहमागत्य तत्र यामिनीं यापयामासुः। ते
यदा मीखायस्य परिजनैः सार्द्धम् आसन् तदा तं लेवीयतरुणम् उच्चा-
रणेन परिचित्याभ्यन्तरं गत्वा तं पप्रच्छुः, त्वाम् एतत्स्थानं क आनयत्?
४ स्थानेऽत्र त्वं किं कर्म्म करोषि? अपरं स्थानेऽत्र तव किं किमास्ते? ततः
स तेभ्यः कथयामास मीखायो मया सार्द्धम् अनुरूपं व्यवहृत्य मह्यं
५ वृत्तिं दातुं प्रतिश्रुतवान् अतोऽहं तस्य पुरोहितोऽभवं। ततस्तेऽक-
थयन् वयं विनयामहे, अस्माकं गन्तव्ये पथि शुभं भविष्यति न वेति
६ त्वम् ईश्वरस्य समीपे पृच्छ। ततः पुरोहितस्तान् अवदत् यूयं कुशलेन
गच्छत, युष्माकं गन्तव्यः पन्थाः परमेश्वरस्य गोचर आस्ते।
७ अनन्तरं तैः पञ्चभि र्जनै र्यात्रां कृत्वा लयिशं गत्वा तत्र निवासिनो
लोकाः सिदोनीयलोकानां रीत्यनुसारेण निर्भया निश्चिन्ताः सन्तो

निष्कण्टकं निवसन्ति किञ्च तत्र देशे तान् दमयितुं कोपि शास्ता नास्ति
ते मीदोनाद् दूरस्थाः किञ्च भिन्नलोकैः समं तेषां सम्बन्धो नास्ति
नरिति दृष्टं। अनन्तरं सरियेष्टायोलयोः स्वभ्रातृणां समीपं प्रत्यागत्य ८
तः का वार्त्तेति पृष्टे ते कथयामासुः, उत्तिष्ठत वयं तेषां विरुद्धम् उत्थाय ९
याम यतः स देशोऽतीवोत्तम इति वयं दृष्टवन्तः, यूयं कुतो निष्कर्म्माण
आध्वे? तं देशं गन्तुं प्रविश्याधिकर्त्तुञ्च नालस्यं कुरुत। युष्माभिस्तत्र १०
गमने कृते निश्चिन्तं निवसन्तो लोका लप्स्यन्ते, स देशश्च विस्तारितः,
तत्र पृथिवीजातस्य कस्यापि वस्तुनोऽभावो नास्ति युष्माकं करेषु तं
देशम् ईश्वरः समर्पयिष्यति।

अनन्तरं सरियेष्टायोलाभ्यां दानवंशीयाः षट् शतानि लोका युद्धास्त्रैः ११
सुसज्जमाना यात्रां चक्रुः। ते गत्वा यिहूदादेशस्थे किरियतयिया- १२
रीमि शिविरं स्थापयाञ्चक्रुस्तस्मात् कारणाद् अद्यापि तस्य स्थानस्य
महनेदान (दानस्य शिविरमिति) नामास्ति तत् किरियतयियारीमस्य
पश्चात् स्थितं।

अपरं तस्मात् इफ्रयिमपर्व्वतं गत्वा मीखायस्य निवेशने प्रापे १३
लयिशदेशं निरीक्षितुं गन्तारः पञ्चजनाः स्वजातीयान् अवदन्, अस्मिन् १४
निवेशने एफोद् वस्त्रं पुत्तलिका निर्म्मिता मूर्त्तिस्तक्षिता मूर्त्तिश्च
विद्यन्ते तत् किं यूयं जानीथ? अत इदानीं युष्माभिः किं कर्त्तव्यं तद्
विविच्यतां। ततस्तेऽभ्यन्तरं गत्वा मीखायस्य निवेशनस्थं लेवीयतरुणस्य १५
वासं प्रविश्य तस्य कुशलं पप्रच्छुः। अपरं युद्धास्त्रैः सुसज्जमानाः षट्
शतानि दानवंशीयलोका गोपुरप्रवेशस्थाने स्थिताः। अनन्तरं देशं १७
निरीक्षितुं गन्तारः पञ्च जना उत्थायाभ्यन्तरं गत्वा तां तक्षितमूर्त्तिम्
एफोदं पुत्तलिकां निर्म्मितमूर्त्तिञ्च जगृहुः किन्तु तदानीं पुरोहितो
युद्धास्त्रैः सुसज्जितानां षट् शतानां लोकानां सन्निधौ गोपुरप्रवेशस्थाने
समुत्तिष्ठमान आसीत्। इत्यवसरे इमे मीखायस्य निवेशनं प्रविश्य १८
तां तक्षितमूर्त्तिम् एफोदं पुत्तलिकां निर्म्मितमूर्त्तिञ्चानिन्युः। तदा
पुरोहितस्तान् अवदत्, यूयं किं कुरुथ? ततस्ते प्रत्यवदन् त्वं निःशब्दो १९
भव निजवदने करं दत्त्वास्माभिः समम् आगच्छास्माकञ्च पितृस्व-
रूपः पुरोहितो भव। एकस्य परिजनस्य तव पुरोहितत्वम् इस्रायेल
एकस्य वंशस्य तव पुरोहितत्वञ्चैतयोर्मध्ये किं भद्रं? ततः स पुरोहितो २०
मनोहर्षं गत्वा एफोद्पुत्तलिकातक्षितमूर्त्तीरादाय तेषां लोकानां मध्ये

२१ जगाम। ततः परं ते प्रवृत्ता यात्रां चक्रिरे किञ्च बालकान् पशून्
भारांश्च तेषाम् अग्रसरान् चक्रुः।
२२ तेषु मीखायस्य निवेशनात् कियद्दूरं गतेषु मीखायस्य निवेशन-
समीपस्थगृहनिवासिनो लोका मिलित्वा दानवंशीयानां पश्चाद् दधावुः।
२३ अपरं ते दानवंशीयान् प्रति प्रोच्चैः स्वरे कृते ते वदनानि परावर्त्त्य
मीखायमवदन् तव किं जातं? त्वं लोकनिवहम् आदाय कुत आग-
२४ च्छसि? ततः स जगाद यूयं मन्निर्म्मितदेवगणं पुरोहितञ्चापहृत्य
गच्छथ मम शेषं किमास्ते? अतस्तव किं जातमिति मां कुतः पृच्छथ?
२५ दानवंशीयास्तं जगदुः, अस्मान् त्वया शब्दो मा श्राव्यतां, श्राविते
क्रोधिलोका युष्मान् आक्रमिष्यन्ति तेन तव प्राणास्तव परिजनानाञ्च
२६ प्राणा विनंक्ष्यन्ति। अनन्तरं दानवंशीयाः स्वमार्गेण जग्मुः किञ्च मीखा-
यस्तान् स्वस्माद् अधिकबलवतो विज्ञाय परावृत्य स्वनिवेशनं जगाम।
२७ अनन्तरं दानवंशीया मीखायस्य निर्म्मितवस्तु पुरोहितञ्चादाय निश्चिन्तं
निष्कण्टकं वसतां लोकानां प्रातिकूल्येन लयिशं गत्वा खड्गैस्तान् अवधिषुः
२८ नगरञ्च वह्निना दाहयामासुः। तस्य रक्षिता कोपि नासीद् यतस्तत्
सीदोनाद् दूरमासीद् अन्यलोकैश्च समं तत्रत्यानां सम्बन्धो नासीत् किञ्च
तद् वैतरिहोवस्य समीपस्थोपत्यकायाम् आसीत्, अनन्तरं ते तन्न-
२९ गरं पुनर्निर्म्माय तन्मध्ये न्यूषुः। तेषां पूर्व्वपुरुषस्य इस्रायेल्सुतस्य
दानस्य नामानुसारेण तन्नगरस्य नाम दानमिति चक्रुः किन्तु पूर्व्वं तस्य
नगरस्य नाम लयिशम् आसीत्।
३० अनन्तरं सा तक्षितमूर्त्ति दानवंशीयैः स्वार्थं स्थापिता तथा तद्देशस्य
लोकानां बन्दीभवनपर्य्यन्तं मिनशेः पौत्रो गेर्शोमस्य पुत्रो योनाथन-
३१ स्तस्य वंशश्च दानवंशस्य पुरोहिता बभूवुः। अनन्तरम् ईश्वरस्यावासो
यावत् शीलावतिष्ठत् तावत् मीखायेन निर्म्मिता तक्षितमूर्त्तिस्तैः
संस्थाप्य सेविता।

---

## १९ ऊनविंशोऽध्यायः।

१ उपपत्नीं ग्रहीतुं लेवीयस्य बैत्लेहमनगरे गमनकथनं १६ प्रत्यागमनकाले गिबियानगरे तयोः कस्यचिद् वृद्धलोकस्य गृहे ऽतिथिभवनं २२ गिबियाया लोकैस्तदुपपत्न्या मरणं यावद् बलात् करणं २९ उपपत्न्याः शवं द्वादशखण्डीकृत्य तेनेस्रायेलो द्वादशवंशान् प्रति प्रेषणं।

१ तस्मिन् काले इस्रायेल्वंशस्य मध्ये राजा नासीत्, अपरम् इफ्रयिम-

पर्व्वतस्य पार्श्वे प्रवासी कश्चिल्लेवीयो बैतलेहमयिहूदात उपपत्नीमेकां
जग्राह। किन्तु सोपपत्नी तस्य विरुद्धं वेश्याचारं कृत्वा तं विहाय २
बैतलेहमयिहूदायां स्वपितुर्निवेशनं गत्वा तत्र चतुरो मासान् तस्थौ।
अनन्तरं तस्या उपपतिः स्वदासं द्वौ गर्द्दभौ च समादाय प्रीतिपूर्व्वकं ३
तां सम्भाषितुं पुनरानेतुञ्च तस्याः पश्चात् जगाम ततः सा तं स्वता-
तस्य निवेशनम् आनिनाय तस्या युवत्याः पिता च तं दृष्ट्वा तस्यागमनाद्
आननन्द। तदानीं स श्वशुरेणार्थात् तस्या युवत्याः पित्रावलम्बित- ४
स्तेन सह दिनत्रयम् उषितवान्, अपरं ते भोजनपाने कृत्वा तत्र
स्थाने रात्रिं यापयामासुः। अपरं चतुर्थदिवसे तेषु प्रस्थातुम् अतिप्रत्यूषे ५
समुत्थितेषु योषितः पिता जामातरं जगाद त्वं किञ्चिद् अन्नं भुक्त्वान्तः-
करणं सुस्थिरं कुरु पश्चात् स्वमार्गेण गच्छ। ततस्तावुपविश्य मिलित्वा ६
भोजनपाने चक्रतुः, अनन्तरं तस्या योषितः पिता तं जगाद निवेदया-
म्यहं त्वं रात्रिं यापयित्वा स्वमनस्तुष्टं कर्त्तुम् अर्हसि। किन्तु तस्मिन् ७
गन्तुमुत्थिते तस्य श्वशुरस्तं व्यग्रं चकार तेन स विलम्ब्य तां यामिनीमपि
यापयामास। अनन्तरं पञ्चमे दिने तस्मिन् गन्तुं प्रत्यूष उत्थिते योषितः ८
पिता कथितवान् निवेदयामि निजान्तःकरणं सुस्थिरं कुरु तेन ते
तृतीयप्रहरं यावद् विलम्बिरे तौ द्वौ जनौ च भोजनं चक्रतुः। अन- ९
न्तरं तस्मिन् पुरुषे तस्योपपत्न्यां दासे च गन्तुम् उत्थितेषु तस्य श्वशुरो-
ऽर्थतस्तस्या युवत्याः पिता तं बभाषे, पश्याधुना दिवावसानं जातं वि-
नयेऽहं यूयमत्र रजनीं यापयत, पश्य दिवाशेषोऽभूत्, अतस्त्वमत्र रात्रिं
यापय स्वान्तःकरणं हृष्टं कुरु च, श्वो मार्गेण यातुं प्रत्यूष उत्थाय स्वगृहं
यास्यसि। किन्तु स लोकस्तां यामिनीं विलम्बितुम् अनिच्छन् उत्थाय १०
यात्रां कृत्वा यिवूषस्यार्थतो यिरूशालमस्य सम्मुखमागमत् तेन समं
गच्छन्तौ द्वौ गर्द्दभौ तस्य उपपत्नी चासीत्। यिवूषस्य सम्मुखं तेषूप- ११
स्थितेषु दिवावसानं बभूव, तेन तस्य दासः स्वप्रभुमवदत् निवेदयामि
आगच्छ, वयं यिवूषीयाणाम् एतन्नगरं प्रविश्य यामिनीं यापयाम।
अनन्तरं तस्य प्रभुरवदत्, इस्रायेलवंशादन्यजातीयानां नगरमिदं वयं १२
न प्रवेक्ष्यामः, वयम् अग्रं गत्वा गिबियां यामः। अनन्तरं स स्वदासम् १३
अवदत्, आगच्छ वयं निकटवर्त्ति किञ्चन स्थानं गत्वा गिबियायां
वा रामायां रात्रिं यापयाम। अनन्तरं तेऽग्रं गत्वा स्वपथेन जग्मुः, १४
अनन्तरं बिन्यामीनदेशस्थगिबियायाः समीपं तेषूपस्थितेषु सूर्य्योऽस्तं

१५ गतः। तदा ते तत्र यामिनीं यापयितुं गिबियां प्रविश्य नगरस्य सन्निवेश
उपविविशुः यतः स्वनिवेशने यामिनीं यापनार्थं कोपि तेषामातिथ्यं
न चकार।

१६ अनन्तरं सन्ध्यासमये वृद्ध एकः क्षेत्रस्य कर्म्मणा आगच्छत् स इफ्-
यिमपर्व्वतीयो लोकः किन्तु गिबियायां प्रावसत् किन्तु तन्नगरीयलोका
१७ बिन्यामीनवंशीया आसन्। अनन्तरं स ऊर्द्धदृष्टिं कृत्वा नगरस्य
सन्निवेशे तं पथिकं ददर्श ततो वृद्धः पृष्टवान् त्वं कुत्र यास्यसि कुतो
१८ वागतोऽसि? सोवदद् वयं बैतलेहमयिहूदात इफ्रयिमपर्व्वतस्य पार्श्वं
गच्छामः, अहं तत्स्थानस्य मानुषो बैतलेहमयिहूदाम् अगच्छम् इदानीं
परमेश्वरस्यावासं गच्छामि कोपि स्वगृहे स्थानं दातुं ममातिथ्यं न
१९ करोति। अस्माभिः सह स्वीयगर्द्दभयो र्भक्ष्यतृणानि धान्यानि चासते,
अपरं भवतो दासस्य समीपे मम कृते भवतो दास्या मत्परिचारकस्य च
२० कृते पूपा द्राक्षारसाश्च सन्ति कस्यापि द्रव्यस्याभावो नास्ति। ततः स
वृद्धो बभाषे स्वागतोऽसि तव यत्र यत्र प्रयोजनं तदहं दास्यामि त्वमत्र
२१ सन्निवेशे रात्रिं मा यापय। अनन्तरं स वृद्धस्तं स्वनिवेशनम् आनीय तस्य
गर्द्दभाभ्यां तृणानि ददौ ते च पादान् प्रक्षाल्य भोजनपाने चक्रुः।

२२ अनन्तरं तेषु हृष्टचित्तेषु सत्सु तन्नगरीया लम्पटलोकास्तन्निवेशनं
वेष्टयित्वा द्वारम् आहत्य निवेशनस्याधिपतिं तं वृद्धं जगदुः, तव
निवेशनं यः पुरुष आगमत् तं वहिरानय वयं तमुपगमिष्यामः।
२३ ततो निवेशनाधिपतिः स नरो वहिर्भूय तेषां समीपं गत्वा जगाद हे मम
भ्रातरो नहि नहि विनयेऽहम् एतादृशं दुष्टाचरणं मा कुरुत स पुरुषो
मम निवेशनेऽतिथिरभूत् तस्मात् तं प्रति नैतादृशं त्रपायाः कर्म्म कुरुत।
२४ पश्यत ममानूढा कन्या तस्योपपत्नीश्च वहिरानयामि यूयं ते उपगच्छत
ते प्रति युष्माकं यथा वाञ्छा जायते तथैवाचरत किन्त्वेतं पुरुषं
२५ प्रतीदृशीं दुष्टक्रियां मा कुरुत। तथापि तैस्तस्य वाक्ये न गृहीते स
पुरुषः स्वीयाम् उपपत्नीं धृत्वा तेषां समीपं वहिरानयत् ततस्ते तामुप-
जग्मुः प्रभातपर्य्यन्तं सकलां रात्रिं तां प्रत्यत्याचारं कृत्वा प्रभाते सति
२६ तां परित्यज्य जग्मुः। अपरं सा स्त्री सूर्य्योदयात् पूर्व्वमागत्य पत्युरति-
थ्यकारिणो वृद्धस्य निवेशनद्वारसन्निधौ पतित्वा सूर्य्योदयपर्य्यन्तं तत्रैव
२७ तस्थौ। अनन्तरं प्रातःकाले तस्याः पतिरुत्थाय यदा गृहद्वारं मोचयित्वा
मार्गेण गमनार्थं वहिरागमत् तदा गृहस्य द्वारसमीपे तस्योपपत्नी

पतिता शिला च तस्याः कराभ्याम् अर्पितेति ददर्श। तदानीं स कथ- १८
यामास, उत्तिष्ठ वयं यात्रां करवाम किन्तु सा न प्रत्यवदत्, अनन्तरं
स पुरुषो गर्द्दभोपरि तां निधाय स्वस्थानं जगाम।

अनन्तरं स स्वनिवेशनम् आगत्यास्त्रं गृहीत्वा ताम् उपपत्नीं धृत्वा २९
सास्थिकां द्वादशखण्डीकृत्येस्रायेलः सर्व्वप्रदेशं प्रेषयामास। ततस्तद्दृष्ट्वा ३०
सर्व्वेऽकथयन् इस्रायेल्वंशस्य मिसर्देशाद् वहिर्गमनदिनमारभ्याद्य
यावद् एतादृशं कर्म्मेस्रायेल्वंशमध्ये कदापि नाक्रियत नादृश्यत च,
विषयेऽस्मिन् विविच्य मन्त्रयित्वा किं कर्त्तव्यं तद्वदत।

# २० विंशतितमोऽध्यायः।

१ सभायाः कथनं ८ सभानिरूपणं १२ इस्रायेल्वंशेन समं विन्यामीनवंशस्य युद्धं कर्त्तुं सज्जमानत्वं १७ प्रथमयुद्धे इस्रायेल्वंशानां द्वाविंशति सहस्रलोकानां हतत्वं २२ द्वितीययुद्धे तेषाम् अष्टादशसहस्रलोकानां हतत्वं २९ तृतीययुद्धे विन्यामीनवंशस्य सर्व्वथा परास्तत्वं।

अनन्तरं गिलियद्देशस्थलोकैः समं दानमारभ्य वेर्शेवां यावद् १
इस्रायेलः सर्व्वे वंशा एकमानुषइव मिस्पाम् आगत्य परमेश्वरस्य
साक्षात् समाजे मिलिताः। ततः सर्व्वलोकानाम् अर्थत इस्रायेलः २
सर्व्ववंशानाम् अधिपतयश्चत्वारि लक्षाण्यस्त्रधारिणः पदातयश्चेश्वरस्य
लोकानां समाजम् उपस्थितवन्तः। तदानीम् इस्रायेल्वंशा मिस्पां गता ३
इति वार्त्तां विन्यामीनवंशः शुश्राव, अनन्तरम् इस्रायेल्वंशीया अव-
दन् एषा दुष्टता केन प्रकारेण जाता तत् कथ्यतां। ततस्तस्या हताया ४
योषित उपपति र्लेवीयपुरुषः कथयामास, अहं मदुपपत्नी च यामिनीं
यापयितुं विन्यामीनदेशस्थां गिवियामगच्छावः। ततो गिवियाया ५
गृहस्था मम प्रतिकूलम् उत्थाय यामिन्यां गृहस्य चतुर्दिशं वेष्टयामासुः,
ते मां हन्तुम् उद्यता मदुपपत्नीम् प्रति बलात् कुकर्म्म कृतवन्तस्ततः सा
ममार। अनन्तरम् अहम् उपपत्नीं धृत्वा खण्डखण्डीकृत्येस्रायेल्वंशेना- ६
धिकृतं सर्व्वदेशं प्रहितवान् यतस्त इस्रायेलीयेषु तादृशं त्रपाकरं
लम्पटत्वं चक्रुः। पश्यत यूयं सर्व्व इस्रायेल्वंशाः समागता अत एतस्मिन् ७
विषये समन्त्र्य कर्त्तव्यत्वं निश्चिनुत।

ततः सर्व्वे लोका एकजनइवोत्थाय जगदुः, वयं केपि स्वस्ववासस्थानं ८
न गमिष्यामः स्वस्वपरिवारं पुन र्न यास्यामः किन्त्वधुना गिवियायाः ९

१० प्रतिकूलं गुटिकापातेन कर्म्मेदं करिष्यामः। लोकानां कृते भक्ष्य-
द्रव्याण्यानेतुम् इस्रायेलः शतलोकानां मध्याद् दशनराः सहस्राणां
मध्यात् शतं नरा दशसहस्राणां मध्यात् सहस्रं नरा अस्माभि र्निर्व्वा-
यन्तां, तेषु पुनरागतेषु विन्यामीनदेशस्थगिबियामाक्रम्येस्रायेलीयेषु कृतस्य
११ तत्रत्यानां सकलकुकर्म्मणः फलं दीयतां। अतः सर्व्वे इस्रायेल्वंशा एक-
मनुष्य इव संयुज्य तस्य नगरस्य प्रतिकूलं मिलिताः।
१२ अनन्तरम् इस्रायेल्वंशा विन्यामीनवंशस्य सर्व्वत्र दूतान् प्रहित्य
१३ जगदुः, युष्माकं मध्ये किमिदं कुकर्म्म कृतं? यूयं गिबियानिवासिनस्तान्
लम्पटलोकान् समर्पयत वयं तान् हनिष्याम इस्रायेलः कलङ्कं दूरी-
करिष्यामश्च, किन्तु विन्यामीनवंशः स्वभ्रातृणाम् इस्रायेलवंशानां कथां
१४ ग्रहीतुं न समियेष। अनन्तरं विन्यामीनवंशीया इस्रायेल्वंशैः समं
१५ योद्धुं स्वनगरेभ्यो वहिर्भूय गिबियायां मिलिताः। तदानीं विन्यामीन-
वंशस्य नगरेभ्य आगता अस्त्रधारिणो लोका गणनया षड्विंशति
सहस्राण्यासन् तदन्या गिबियानिवासिनः सङ्ख्यया सप्त शतान्यभिरु-
१६ चितलोका आसन्। तेषां सर्व्वलोकानां मध्ये वामहस्तेन योधिनः सप्त
शतान्यभिरुचितलोका आसन् ते सर्व्वेऽप्यक्षेपकगुणेन प्रस्तरचालनैः केशं
भेदितुं समर्थाः।
१७ विन्यामीनवंशाद् अन्येस्रायेलवंशानाम् अस्त्रधारिणो गणनया लक्षं
१८ लोका आसन्, ते सर्व्वे योद्धार आसन्। अनन्तरम् इस्रायेलवंशा
उत्थाय वैथेलं गत्वेश्वरस्य समीपे जिज्ञासाञ्चक्रिरे विन्यामीनवंशेन समं
योद्धुम् अस्माकं कः प्रथमं यास्यति? ततः परमेश्वरः कथयामास
१९ प्रथमं यिहूदावंशो यास्यति। अनन्तरम् इस्रायेलवंशाः प्रातरुत्थाय
२० गिबियायाः सम्मुखे शिविरं स्थापयाञ्चक्रिरे। इस्रायेल्लोके विन्यामीन-
वंशेन समं योद्धुं वहिर्भूय गमने कृते गिबियायाञ्च युद्धार्थं सैन्यानां
२१ श्रेण्यां रचितायां विन्यामीनवंशा गिबियातो वहिरागत्य तद्दिवस
इस्रायेल्वंशानां द्वाविंशतिसहस्राणि लोकान् संहृत्य भूमौ पातयामास।
२२ अनन्तरम् इस्रायेल्वंशीयाः स्वान् आश्वास्य प्रथमदिवसे यत्र स्थाने
२३ सैन्यानां श्रेणीं रचितवन्तः पुनर्वारं तत्रैव स्थाने व्यूहं चक्रुः। अपरम्
इस्रायेल्वंशा उत्थाय गत्वा सन्ध्याकालं यावत् परमेश्वरस्य साक्षात्
चक्रन्दुः परमेश्वरम् इदं वाक्यं पप्रच्छुश्च वयं स्वभ्रात्रा विन्यामीन-
वंशेन समं योद्धुं पुनर्वारं किं यास्यामः? ततः परमेश्वरः कथयामास,

तस्य प्रतिकूलं यात। अनन्तरम् इस्रायेल्वंशेषु द्वितीयदिवसे बिन्यामीन- २४
वंशस्य प्रतिकूलम् उपस्थितेषु बिन्यामीनवंशा द्वितीयदिवसे पुनर्वारं २५
तेषां प्रतिकूलं गिबियातो निर्गत्येस्रायेल्वंशानां खड्गधारकान् अष्टादश-
सहस्रलोकान् संहृत्य भूमौ पातयामास।

अनन्तरम् इस्रायेलः सर्व्वे वंशाः सर्व्वे लोकाश्च बैथेलं गत्वा तत्र सन्ध्यां २६
यावत् परमेश्वरस्य सम्मुख उपविष्टाः क्रन्दनेनोपवासेन च तं दिवसं
यापयित्वा परमेश्वरस्य साक्षाद् होमार्थकान् मङ्गलार्थकांश्च बलीन्
उत्ससृजुः। तस्मिन् काले तत्र स्थाने परमेश्वरस्य नियममञ्जूषासीत् २७
हारोणस्य पौत्र इलियासरस्य पुत्त्रः पीनिहसश्च तदा तत्सम्मुखे तस्य
परिचर्य्याम् अकरोत्। अपरम् इस्रायेल्वंशास्तेन परमेश्वरम् इति २८
वाचं पप्रच्छुः, वयं स्वभ्रात्रा बिन्यामीनवंशेन समं योद्धुं किं पुनर्वारं
यास्यामः? किं निवर्त्तिष्यामहे? ततः परमेश्वरः कथयामास, गच्छत
श्वो मया युष्माकं करेषु ते समर्पयिष्यन्ते। अनन्तरम् इस्रायेल्वंशा २९
गिबियायाश्चतुर्दिक्षु लोकान् लुक्कायितान् स्थापयामासुः। अपरं तृतीय- ३०
दिवसे इस्रायेल्वंशा बिन्यामीनवंशस्य प्रतिकूलं गत्वा पूर्व्ववत्क्रमानु-
सारेण गिबियाया विरुद्धं सैन्यश्रेणीं रचयाञ्चक्रुः। अपरं बिन्यामीन- ३१
वंशीया लोकानां विरुद्धं बहिरागत्य नगराद् दूरं प्रावर्त्तन्त राजमार्ग-
द्वयोरेकतो बैथेलं गन्तरि मार्गे प्रान्तरस्थगिबियां गन्तरि मार्गे च
पूर्व्ववत् लोकान् आघ्नन् अनारभन्त्यम इस्रायेल्वंशानां प्रायेण त्रिंशत्
जनान् अघ्नुः। यत इमेऽस्माकं सम्मुखे पूर्व्ववत् पराजीयन्त इति बिन्- ३२
यामीनवंशीया बुबुधिरे किन्त्विस्रायेल्वंशा अवदन् वयं पलाय्य ए,
इमे राजमार्गौ यावद् अस्माभिर्नगराद् बहिराकृष्यन्तां। अनन्तरम् ३३
इस्रायेल्वंशीयाः सर्व्वे लोकाः स्वस्वस्थानाद् उत्थाय बालतामरे स्वेषां
सैन्यानि रचयाञ्चक्रुरिस्रायेल्वंशस्य लुक्कायिता लोकाश्च स्वस्वस्थानाद-
र्थतो गिबियायाः प्रान्तरात् निरगच्छन्। इस्रायेलः सर्व्ववंशानां दश- ३४
सहस्राण्यभिरुचितास्ते लोका गिबियानगरस्य प्रतिकूलं बहिराजग्मु-
स्ततो घोरतरः संग्रामो जातः, किन्तु वयं विपदं गन्तुम् उद्यता इति
बिन्यामीनवंशीया नाजानन्। अनन्तरं परमेश्वर इस्रायेल्वंशानां ३५
सम्मुखे बिन्यामीनवंशं पराजिगाय, तस्मिन् दिवसे बिन्यामीनवंशस्य
पञ्चाधिकद्वाविंशतिसहस्राण्यस्त्रधारिणो लोका इस्रायेल्वंशीयै जघ्निरे।
ततो वयं पराजिता इति बिन्यामीनवंशा ददर्श, यतो गिबियायाः ३६

समीपे स्थापितेषु लुक्कायितलोकेषु विश्वसीस्रायेल्वंशीये यदा बिन्या-
३७ मीनवंशस्य समीपाद् अपायात्, तदा लुक्कायितलोका धावन्तो गिबिया-
नगरम् आक्रम्यास्त्रधारेण नगरस्थान् सकललोकान् आहन्तुं प्रावर्त्तन्त।
३८ लुक्कायितलोकै र्नगराद् ऊर्द्धगामिधूममेघस्त्विङ्कार्थम् इस्रायेल्वंशीयान्
३९ दर्शयिष्यत इति मन्त्रणा तैरकारि। अनन्तरं संग्राम इस्रायेल्वंशेष्वपया-
तवत्सु बिन्यामीनवंशः प्रायस्तेषां त्रिंशत् जनान् आहत्य मारयामास
प्रथमयुद्धवद् एतद्वारमपीमे सम्मुखेऽस्माकं पराजीयन्त इति बुबुधे
४० च। इत्यनन्तरं स्तम्भाकृति धूममेघो नगरात् समुदतिष्ठत् बिन्यामीन-
लोकाश्च स्वेषां पश्चात् निरीक्ष्य कृत्स्नं नगरम् अग्नित्वं प्राप्य शून्यम्
४१ उड्डीयत इति ददृशुः। अपरम् इस्रायेल्लोकेषु पुनः परावृत्तेषु वयं
४२ विपद्ग्रस्ता इति वीक्ष्य बिन्यामीनवंश उद्विविजे। अनन्तरं त इस्रायेल्-
वंशानां सम्मुखे प्रान्तरस्य मार्गदिशं परावर्त्तिरे ततस्तस्मिन् स्थानेऽपि
४३ संग्राम उपस्थिते नगरेभ्य आगता लोकास्तन्मध्ये हताः। बिन्यामीन-
वंशश्चतुर्दिक्षु तै र्वेष्टितो विद्रावितो ऽनायासं गिबियायाः सम्मुखे
४४ सूर्य्योदयदिशि निपातितश्च। इत्थं बिन्यामीनवंशस्याष्टादशसहस्राणि
४५ योद्धवीरा अहन्यन्त। अनन्तरम् अवशिष्टेषु प्रान्तरस्य दिशं परावृत्य
रिम्मोणशैलं पलायमानेषु तेषामपि पञ्च सहस्राणि लोका राजमार्गेषु
हताः शत्रवश्च गिदियोमं यावत् तेषां पश्चाद् गत्वा तेषां द्वे सहस्रे
४६ लोकान् जघ्नुः। ततस्तस्मिन्नेव दिने बिन्यामीनवंशस्यास्त्रधारिणः पञ्च-
४७ विंशतिसहस्राणि लोका निपेतुः, ते सर्व्वे एव वीरा आसन्। अपरं षट्
शतानि लोकाः परावृत्य प्रान्तरस्थितं रिम्मोणपर्व्वतम् आश्रित्य तस्मिन्
४८ रिम्मोणपर्व्वते चतुरो मासान् ऊषुः। किन्त्विस्रायेल्वंशा बिन्यामीनदे-
शम् आक्रम्य नगरनिवासिनो लोकान् तेषां पश्वादिसम्पत्तीश्च खड्गधारै-
राजघ्नुस्तेषाञ्च यति नगराण्यासन् तानि सर्व्वाणि वह्निना दाहयामासुः।

---

## २१ एकविंशोऽध्यायः।

१ बिन्यामीनवंशमधि लोकानां विलपनं ८ याबेशगिलियदीयलोकानां विनाशनात् चतुःशतकन्यालाभः १९ शीलो न्त्यत्न्योः कन्या धृत्वा बिन्यामीनवंशाय मन्त्रणादानं।

१ वयं कोऽपि विवाहार्थं बिन्यामीनवंशाय स्वकन्यां न दास्याम इति
२ शपथो मिस्पायाम् इस्रायेल्वंशैरकारि। अनन्तरं लोका ईश्वरस्यावा-
समागत्य सन्ध्यां यावत् तस्मिन् स्थाने ईश्वरस्य सम्मुखे तिष्ठन्त उच्चैर्वि-

लपन्तो जगदुः, हे इस्रायेलः प्रभो परमेश्वर अद्येस्रायेल्वंशानाम् एको ३
लुप्त इस्रायेल्मध्ये कुत ईदृशं घटितं? परदिवसे लोकाः प्रत्यूष उत्थाय ४
तत्र स्थाने यज्ञवेदिं निर्म्माय होमार्थकान् मङ्गलार्थकांश्च बलीन्
उत्ससृजुः। अपरम् इस्रायेल्वंशा अवदन् ईश्वरस्य समीपं समाजं ५
नागमद् इस्रायेलः सर्व्ववंशानां मध्य एतादृशः क आस्ते? यतो मिस्पायां
परमेश्वरस्य समीपं यो नागमिष्यति स घानिष्यत इति महाशपथेन
स तैरभिशप्तः। अनन्तरम् इस्रायेल्वंशाः स्वभ्रातु बिन्यामीनवंशस्य कृते ६
अनुतप्य जगदुः, अद्येस्रायेल्वंशाद् एको वंशः छिन्नः। इदानीं तस्या- ७
वशिष्टलोकानां विवाहार्थम् अस्माभिः किं कर्त्तव्यं? वयं तेभ्यो विवाहार्थं
स्वकन्यां न दास्याम इति कथयित्वा वयं परमेश्वरस्य नाम गृह्णन्तः
शपथम् अकुर्म्म।

अपरं तैरुक्तं मिस्पायां परमेश्वरस्य समीपं नागमद् इस्रायेल्वंशानां ८
मध्य एतादृशः को वंश आस्ते? अपरं पश्यत यावेशगिलियदस्य लोक
एकोपि शिबिरस्थायां समज्यां नागमत्। यतो निखिललोकेषु गणितेषु ९
यावेशगिलियदनिवासिनाम् एको जनस्तस्मिन् स्थाने नासीत्। ततः १०
समाजः श्रेष्ठबलिनां मध्याद् द्वादश सहस्राणि लोकान् तत्स्थाने प्रेषणा-
काल इत्याज्ञापयत्, यूयं गत्वा यावेशगिलियदनिवासिनस्तेषाम् आबा-
लवनिताश्चास्तैराहत। अपरं कर्म्मैतत् कुरुत, सकलपुरुषान् पुरुषाभि- ११
गता योषितश्च निःशेषं मारयत। अनन्तरं ते यावेशगिलियदनिवा- १२
सिनां मध्ये पुरुषं नाभिगताश्चतुःशतानि अनूढयुवतीः प्राप्य शीलो
किनानदेशस्थं शिबिरं ता आनयन्। अनन्तरं सर्व्वसमाजीया रिम्मोण- १३
पर्व्वतस्थितेन बिन्यामीनवंशेन समं दूतैरालप्य सन्धेः कथां जगदुः।
तदानीं बिन्यामीनवंशः पुनराजगाम ततस्ते यावेशगिलियदस्था याः १४
कन्या अजीवयन् ता भार्य्यार्थं तेभ्योऽददन् तथापि तेषां न्यूनत्वं बभूव।
अनन्तरं परमेश्वर इस्रायेल्वंशानां मध्ये एकं वंशं लुप्तवान् इति १५
कारणात् लोका बिन्यामीनवंशमध्यन्वतप्यन्त।

अनन्तरं समाजस्य प्राचीना अवदन् बिन्यामीनवंशस्य स्त्रियो हता १६
अतः शेषाणां विवाहाय किम् अस्माभिः कर्त्तव्यं? इस्रायेल्वंशानाम् १७
एको वंशो यन्न लुप्येत तदर्थं बिन्यामीनवंशस्य शेषलोकेभ्योऽधिकारो
दातव्यः। किन्तु तेभ्यः स्वकन्या दातुम् अस्माभिर्न शक्यं, यतो यो बिन्या- १८
मीनवंशाय कन्यां दास्यति स शापग्रस्त इतीस्रायेल्वंशः शप्तवान्।

१९ अपरं तेऽवदन् शीलौ बैथेलस्योत्तरदिशि बैथेलात् शिखिमगामिनो
मार्गस्य पूर्व्वदिशि लिबोनाया दक्षिणदिशि च परमेश्वराय वार्षिको
२० महो भवति। ततस्ते बिन्यामीनवंशम् आदिशन् यूयं गत्वा द्राक्षाक्षेत्रेषु
२१ गुप्ता वीक्षध्वं शीलोः कन्या नृत्यन्त्यो वहिरागच्छन्तीति दृष्ट्वा यूयं द्राक्षा-
क्षेत्रेभ्यो वहिर्भूय शीलोः कन्यानां मध्यात् स्वस्वजायां धृत्वा बिन्यामीन-
२२ देशं नयत। अनन्तरं तासां पितरो भ्रातरो वावेदयितुं यद्यस्माकं
समीपमागच्छन्ति तर्हि वयं तान् वदिष्यामः, यूयम् अस्मत्कृते तान्
अनुगृह्णीत, यतो युद्धकाले वयं सर्व्वेषां जाया न प्राप्ताः, इदानीं ता
२३ युष्माभि र्न दत्ताः किमपि वा नापराद्धं। ततो बिन्यामीनवंशास्तदेव
कुर्व्वन्तो नृत्यकाले योषितोऽपहरन्तः स्वेषां संख्यानुसाराद् भार्य्या
अलभन्त, अनन्तरं स्वदेशं गत्वा नगराणि पुनर्निर्म्माय तन्मध्य ऊषुः।
२४ अनन्तरम् इस्रायेलीयानामपि वंशाः परिजनाश्च तस्मात् प्रस्थाय
२५ स्वस्वदेशं प्रत्याजग्मुः। तदानीम् इस्रायेल्वंशे कोपि राजा नासीत्
यो यत् क्षेमम् अमन्यत, स तदेवाकरोत्।

---

# रूतोपाख्यानं।

---

## १ प्रथमोऽध्यायः।

१ दुर्भिक्षकारणाद् इलीमेलकस्य नयमीनामिकायास्तस्य योषितः पुत्रयोश्च मोयाबदेशगमनं मोयाबीयकन्ययो र्विवहनं ६ नयम्याः स्वदेशगमनकाले पुत्रवधूद्वयो र्नेतुं विनयनं १४ अर्पायास्तदङ्गीकरणं रूतायास्तस्याः सहात्यजनं १९ नयमीरूतयो र्बैतलेहम उपस्थानं।

१ विचारयितृणां शासनकाले देशे दुर्भिक्षे जाते बैतलेहमयिहूदाया
२ एको जनस्तस्य जाया द्वौ सुतौ च मोयाबदेशे प्रवस्तुं जग्मुः। तस्य नरस्य
नामासीद् इलीमेलकस्तस्य जायाया नाम नयमी तस्य द्वयोः सुतयो
र्नामनी महलोनः किलियोनश्च, सर्व्वे एते बैतलेहमयिहूदानगरनि-
३ वासिन इफ्राथीयलोकाः, इमे मोयाबदेशं गत्वा तत्र प्रोषुः। अनन्तरं
४ नयम्याः पताविलीमेलके मृते सा तस्या द्वौ सुतौ च शेषा अतिष्ठन्।
अपरं तौ अर्पारूतानामिके द्वे मोयाबीयकन्ये व्यूह्य दशवत्सरान् यावत्

तत्र.स्थाने प्रोषतुः। अनन्तरं मह्लोनकिलियोनावपि ममतुस्ततो नयमी ५
पतिपुत्रै विहीनावशिष्टा।

अपरं परमेश्वरः स्वलोकानां दशाम् अवेक्ष्य तेभ्यो भक्ष्यवस्तूनि दत्त- ६
वान् इति वाचं सा मोयावदेशे निशम्य स्वपुत्रवध्वौ गृहीत्वा मोयाव-
देशात् पुनर्गन्तुम् उत्तस्थौ। सा तस्याः पुत्रवध्वौ च स्ववासस्थानाद् ७
वहिर्भूय यदा यिहूदादेशं प्रत्यागन्तुं मार्गेण गच्छन्ति, तदा नयमी द्वे ८
पुत्रवध्वौ जगाद युवां स्वस्वमातु र्निवेशनं परावृत्य यातं, मृतौ प्रति मां
प्रति च युवाभ्यां यादृशी प्रीति र्व्यवहारि परमेश्वरेण युवां प्रति तादृशी
प्रीति र्व्यवक्रियतां। परमेश्वरो युवाम् अनुगृह्य युवाभ्यां स्वस्वपत्यु ९
र्निवेशने विश्रामं ददातु, अनन्तरं सा ते चुचुम्बे ततस्तेऽपि प्रोच्चैररुदतुः।
अनन्तरं ते तां बभाषाते, आवां त्वया समं तव लोकानां समीपं गमि- १०
ष्यावः। नयमी जगाद, हे मम कन्ये युवां परावृत्य यातं, मया समं ११
कुतो गमिष्यथः? युवयोः पती भविष्यतस्तादृशौ सन्तानौ किमिदानीं
मम जठरे विद्येते? हे मम कन्ये परावृत्य यातं यतोऽहं वृद्धा पत्या १२
गृहीतुं न शक्ये; अपरं मम प्रत्याशास्त इत्युक्त्वा यद्यद्य यामिन्यां पतिं
गृहीत्वा सुतौ प्रसूयेऽहं, तर्हि युवां किं तयो र्यौवनप्राप्तिं यावद् विल- १३
म्बिष्येथे तत्कृते च पती गृहीतुं निवर्त्तिष्येथे? हे मम कन्ये तन्नहि मम
क्लेशो युवाभ्यामसह्यो यतः परमेश्वरेण स्वकराभ्याम् अहं निगृहीता।

अनन्तरं ते पुनरुच्चैरक्रन्दतुरपरम् अर्पा स्वश्वश्रूं चुम्बित्वा जगाम १४
किन्तु रूता तां न जहौ। ततः सा बभाषे तव देवरस्य पत्नी स्व[illegible]- १५
कानां स्वदेवानाञ्च समीपं परावृत्य गता त्वमपि स्वीयदेवरस्य ज[illegible]यायाः
पश्चात् परावृत्य याहि। रूता जगाद, त्वां विहाय तव पश्चाद्गमनात् १६
निवर्त्तितुं मां मा विनयस्व त्वं यत् स्थानं गमिष्यस्यहमपि तत् स्थानं
यास्यामि, अपरं त्वं यत्र वत्स्यसि, अहमपि तत्र वत्स्यामि, तव जातिरेव
मम जातिस्तवेश्वर एव ममेश्वरश्च भविष्यति। अपरं त्वं यत्र स्थाने १७
मरिष्यसि तत्रैव स्थानेऽहमपि मरिष्यामि तत्र स्थाने श्मशानं प्राप्स्यामि
मृत्युतोऽन्येन केनापि यदि त्वत्तो मम विच्छेदो जायते तर्हि परमेश्वर-
स्तदनुरूपं ततोऽधिकञ्च प्रतिफलं मह्यं ददातु। अनन्तरं रूता मया साकं १८
गन्तुम् एकमना आस्त इति वीक्ष्य सा तां प्रति कथयितुं निववृते।

अपरं ते द्वे वैतलेहमप्राप्तिपर्य्यन्तं जग्मतुः, यदा वैतलेहमं प्राविशतां १९
तदा तयो र्विषये कृत्स्ननगरे जनरवो जातो योषितश्च पप्रच्छुः किमियं

२० नयमीति? तदा सा प्रत्युवाच मां नयमीं (सुखिनीं) मा वदत, किन्तु
मारां (क्लिष्टाम्) इत्युक्त्वाह्वयत यतः सर्व्वशक्तिमान् मां प्रति बहुदुःख-
२१ मघटयत्। अहं सम्पूर्णा सती प्रातिष्ठे किन्त्वधुना परमेश्वरो रिक्तहस्तां
मां परावर्त्यानयत् परमेश्वरो माम् अक्लिश्नात् सर्व्वशक्तिमान् मां
२२ दुःखिनीमकरोत्, अतो यूयं कुतो मां सुखिनीति वदथ? इत्थं नयमी
मोयाबीया रूतानाम्नी तस्याः पुत्रवधूश्च मोयाबदेशात् परावृत्यागच्छतां
ते यवशस्यच्छेदनारम्भकाले बैतलेहमं प्रापतुः।

---

## २ द्वितीयोऽध्यायः।

१ बोयसस्य क्षेत्रे रूतायाः शस्यसंग्रहणं ४ तां परिचित्य बोयसस्यानुग्रहणं १८ श्वश्र्वाः समीपं सकलशस्यनयनं।

१ तस्या नयम्याः स्वामिन इलीमेलकस्य वंशीयो बोयसनामा धनवानेको
२ ज्ञातिरासीत्। अनन्तरं मोयाबीया रूता नयमीमवदत्, अहं क्षेत्रं
गत्वा यस्य दृष्टावनुग्रहं प्राप्नोमि तस्य पश्चात् शस्यकणिशान्युञ्छानि, ततः
३ सा बभाषे हे मम कन्ये याहि। अनन्तरं सा गत्वा क्षेत्रं प्राप्य शस्य-
च्छेदकानां पश्चात् शस्यानि सञ्चयाञ्च घटनात इलीमेलकस्य वंशीयस्य
बोयसस्य भूमिखण्डे सोपतस्थौ।
४ अनन्तरं बोयसो बैतलेहमाद् आगत्य शस्यच्छेदकान् अवदत् परमे-
श्वरो युष्माकं सङ्गी भवतु ते प्रत्यवदन् परमेश्वरस्तुभ्यम् आशिषं ददातु।
५ अपरं बोयसः शस्यच्छेदकानाम् अध्यक्षं निजभृत्यं पप्रच्छ, एषा युवती
६ कस्य? तदा शस्यच्छेदकाध्यक्षो भृत्यो जगाद, इयं सा मोयाबीया
७ युवती या नयम्या साकं मोयाबदेशाद् आगमत। इयं मामवदत् विनये-
ऽहं शस्यच्छेदकानां पश्चात् मुष्टीनां मध्ये संग्रहीतुं माम् अनुजानीहि,
ततः सा प्रातःकाल आगत्य तदारभ्याधुना यावद् अत्र तिष्ठति, निवेशने
८ तस्याः स्थितिरल्पिका। अनन्तरं बोयसो रूतां जगाद हे मम कन्ये त्वं
शृणु, त्वं संग्रहीतुम् अन्यक्षेत्रं मा गच्छ, स्थानान्तरं मा याहि, किन्त्वत्र
९ मम दासीभिः समं तिष्ठ। शस्यकर्त्तका यत्र स्थाने शस्यानि छिन्दन्ति
तन्निरीक्ष्य तेषां पश्चाद् गच्छ तव स्पर्शनात् तरुणाः किं मया न निवा-
रिताः? अपरं त्वं यदि पिपासिष्यसि तर्हि पात्राणां सन्निधिं गत्वा
१० तरुणैरुत्तोलितं तोयं पिव। ततः सा न्युब्जीभूय भूमौ पतित्वा तं व्याहरत्,

भवान् विदेशिनीं मां परिचितवान् एतावन्तमनुग्रहं कुतोऽहं प्राप्नवं?
बोयसस्तां बभाषे तव स्वामिनो मरणात् परं तव श्वश्रूं प्रति त्वया यत् ११
सद्वृत्तम् आचरितं यच्च स्वपितरौ जन्मदेशञ्च विहायाज्ञातपूर्व्वजाति-
समीपमागतम् एतत् सर्व्वमहं श्रुतवान्। परमेश्वरस्तव कर्म्मणः फलं १२
ददातु त्वं यस्येस्रायेलः प्रभोः परमेश्वरस्य पक्षाध आश्रयितुमागता स
त्वां सम्पूर्णं कर्म्मफलं ददातु। ततः सा व्याहरत्, हे मम प्रभो भवतो १३
दृष्टावनुग्रहमहं प्राप्ता भवताहं सान्त्विता च अहं भवतो दासीतुल्या
नास्मि तथापि भवान् स्वदासीं प्रीत्या सम्भाषितवान्। बोयसोऽवदत् १४
भोजनकाले त्वमेतत् स्थानमागत्य पूपं भुंक्ष्व अपरं स्वभक्ष्यम् अम्लरसे
मज्जय. तदा तस्यां शस्यकर्त्तकानां पार्श्वे उपविष्टायां स भृष्टशस्यान्यानीय
तस्यै दत्तवान् ततः सा भुक्त्वा तृप्तिं गता तथा किञ्चिद् अवाशिष्यत।
अनन्तरं तस्यां चेतुम् उत्थितायां बोयसो निजतरुणान् आदिशत् १५
मुष्टिमध्येऽपि चयन्तीम् एनां मा व्रीडयत। अपरम् अस्याः कृते गुच्छत १६
आकृष्य कतिपयानि युष्माभिरवशेषितव्यानि तान्यनया चीयन्तां यूयम्
एनां मा तिरस्कुरुत। ततः सा सन्ध्यां यावत् तस्मिन् क्षेत्रे चिकाय, अन- १७
न्तरं सञ्चितशस्येषु मर्द्दितेषु तस्याः प्राय एफैकपरिमिता यवा बभूवुः।

अनन्तरं सा तान् गृहीत्वा नगरं जगाम, अपरं स्वसञ्चितशस्यानि १८
श्वश्रूं दर्शयामास तथा तृप्तेः परं यदवशिष्टं तद् वहिष्कृत्य तस्यै ददौ।
तेन तस्याः श्वश्रूस्तां पप्रच्छ त्वमद्य कुत्राचैषीः? कुत्र वा कर्म्माकार्षीः? १९
यस्त्वां पर्य्यचैषीत् स धन्यो भवतु तदा सा यस्य समीपे कर्म्माकार्षीत् तं
श्वश्रूं ज्ञापयन्ती बभाषे यस्य समीपेऽद्य कर्म्माकार्षं स नाम्ना बोयसः।
ततो नयमी स्वपुत्रवधूं अगाद स परमेश्वरस्याशिषं लभतां, स जीव- २०
द्भ्यो मृतेभ्यश्च स्वीयानुग्रहं न निवर्त्तयति, नयमी पुन र्व्याहरत् स
मनुष्योऽस्माकम् आसन्नसम्बन्धीयोऽस्माकं स्वजनानाम् एको जनः। मोया- २१
बीया रूतावदत् स माम् इत्यपि प्रोक्तवान् मम सकलशस्यकर्त्तनसमाप्तिं
यावत् त्वं मम तरुणलोकानां सङ्गं मा त्यज। ततो नयमी स्वपुत्रवधूं २२
रूतां बभाषे, हे मम कन्ये तस्य दासीभिः समं गमनं तव भद्रं लोकाः
कुत्रचिद् अन्यक्षेत्रे त्वां न पश्यन्तु। अतो यवगोधूमशस्यानां कर्त्तन- २३
समाप्तिं यावत् सा चिन्वती बोयसस्य दासीभिः समं तस्थौ स्वीयश्वश्र्वा
समं न्युवास च।

# ३ तृतीयोऽध्यायः।

१ नयम्या उपदेशेन बोयसस्य पदयो रूताया आश्रयणं ८ मध्यरात्रौ बोयसेन चमत्‌करणं स्वजनस्य कर्त्तव्यं कर्त्तुम् अङ्गीकरणं १५ षट् पात्राणि यवान् दत्त्वा गेहं प्रेषणं।

१ अपरं तस्याः श्वश्रू र्नयमी तां बभाषे हे मम कन्ये तव यत् क्षेमो
२ जायते तत्कृते किमहं तव विश्रामं न चेष्टिष्ये? त्वं यस्य बोयसस्य
दासीभिः सममासीः स किमस्माकं ज्ञाति र्नहि? पश्य सोऽद्य यामिन्यां
३ शस्यमर्द्दनस्थाने यवान् प्रस्फोटयिष्यति। अतस्त्वं स्नाहि तैलं मर्दय
स्ववस्त्रे परिधाय शस्यमर्द्दनस्थानं व्रज किन्तु तेन मनुजेन भोजनपानयोः
४ समापने न कृते त्वम् आत्मानं न परिचायय। अनन्तरं स यदा
शयिष्यते तदा तस्य शयनस्थानं वीक्ष्य तत्स्थानं व्रजित्वा तस्य पादावपा-
५ वृत्य शयिष्यसे, ततस्त्वया किं कर्त्तव्यं तत् स एव त्वां वदिष्यति। ततः
६ सा प्रतिजगाद त्वं यद् भाषसे तत् सर्व्वमेवाहं करिष्ये। अनन्तरं सा
७ शस्यमर्द्दनस्थानम् इत्वा स्वश्वश्र्वा यद् आदिष्टं तत् सर्व्वं चक्रे। अपरं
बोयसो भोजनपाने कृत्वा हृष्टचित्तः सन् शस्यराशेः प्रान्ते शयितुं वव्राज,
अनन्तरं रूता धीरमागत्य तस्य पादावपावृत्य शयितवती।

८ अनन्तरं मध्ययामिनीकाले स पुरुषः शरीरं परिवर्त्य चमच्चकार
९ यतस्तस्य पदयोः समीपे योषिदेका शयिता। तदानीं स पप्रच्छ, का त्वं?
सा प्रत्यवादीत् भवतो दासी रूताहं भवान् मह्यम् आश्रयं ददातु
१० यतो भवान् मम स्वजनः। ततः स जगाद हे मम कन्ये त्वं परमेश्वरे
धन्यासि यतस्त्वं पूर्व्वसद्भावात् शेषेऽधिकं सद्भावं दर्शयन्ती धनिनं दरिद्रं
११ वा कञ्चन युवानं नानुगतवती। ततो हे कन्ये मा भैषीः, अहं त्वत्कृते
त्वयोक्तं सर्व्वं साधयिष्यामि यतस्त्वं साध्वीत्यस्मन्नगरद्वारगामिनः सर्व्वे
१२ जानन्ति। अहं तव स्वजन इति सत्यं किन्तु मत्तोपि तव समीप-
१३ सम्बन्धीयोऽपर एकः स्वजन आस्ते। अद्य यामिन्यां तिष्ठ प्रातःकाले स
यदि स्वजनस्य कर्त्तव्यं कर्म्म चिकीर्षति तर्हि भद्रं स तत् कर्म्म करोतु,
किन्तु यदि स त्वां प्रति स्वजनस्य कर्त्तव्यं कर्त्तुं नेच्छति तर्हि परमे-
श्वरस्य नाम्ना शपथं करोमि त्वां प्रति स्वजनस्य कर्त्तव्यं कर्म्माहं करि-
ष्यामि त्वं प्रातःकालं यावत् शेष्व।

१४ ततो रूता प्रातःकालपर्य्यन्तं तस्य पादसमीपे शयाना तस्थौ तत एक-
जनोऽन्यं परिचेतुं शक्नोति एतादृक्कालस्य पूर्व्वम् उदतिष्ठत्, यतो

# शिमूयेलस्य प्रथमं पुस्तकं ।

## १ प्रथमोऽध्यायः ।

१ द्वाभ्यां स्त्रीभ्यां समं शीलौ भजनं कर्त्तुम् इल्कानाहस्य वर्षे वर्षे गमनं ४ हन्नापिनि-
न्नयोर्विरोधकथनं ९ पुत्रार्थं हन्नाया ईश्वरे प्रार्थनं १२ हन्नां प्रत्येलेः कथनं १९
हन्नायाः पुत्रप्रसवाद् गृहे स्थितिः २४ प्रतिश्रुत्यनुसारात् परमेश्वराय पुत्रदानं ।

इफ्रयिमपर्व्वतस्थरामाथयिमसोफीमनिवासील्कानाहनाम्ना कश्चित् १
जन इफ्रायीयलोक आसीत् स सूफस्य वृद्धप्रपौत्रः तोहोः प्रपौत्र
इलीहोः पौत्रो यिरोहमस्य पुत्र आसीत्। तस्य द्वे भार्य्ये आस्ताम् २
एकस्या नाम हन्ना, अन्याया नाम पिनिन्ना पिनिन्नाया अपत्यान्यजायन्त
किन्तु हन्ना निरपत्यासीत्। स नरः शीलौ सैन्याध्यक्षं परमेश्वरम् ३
आराधयितुं तस्मै बलीन् दातुञ्च प्रतिवर्षं निजनगराद् अगच्छत् तत्र
स्थान एलेर्द्वौ पुत्रौ हफ्निपीनिहसौ परमेश्वरस्य याजकावास्तां ;
अनन्तरम् इल्कानाहो यज्ञकरणकाले स्वजायायै पिनिन्नायै तस्याः ४
सकलपुत्रकन्याभ्यश्चांशान् ददौ। तथा हन्नायै द्विगुणांशं ददौ यतः पर- ५
मेश्वरेण तस्या गर्भे रुद्धेऽपि स हन्नायामेवाप्रीयत। परमेश्वरेण तस्या ६
गर्भस्य रुद्धत्वात् तस्याः सपत्नी तां दुःखयितुं निन्दयाक्लिश्नात्। अथ ७
प्रतिवर्षं परमेश्वरस्य मन्दिरे गमनकाले पत्या सत्कृता सपत्न्या च क्लिष्टा
सा क्रन्दन्ती किमपि न भुङ्क्ते। तेन तस्याः पतिरिल्कानाहस्तां वदति ८
हे हन्ने त्वं कुतः क्रन्दसि ? कुतश्च न भुंक्ते ? तव मनः शोकाकुलं कुतः ?
तव समीपे दशभ्यः पुत्रेभ्योऽपि किमहं नोत्तमः ?

एकदा शीलौ भोजने पाने च कृते हन्ना प्रोत्थाय तस्थौ तदा ९
एलिर्याजकः परमेश्वरस्य मन्दिरद्वारसमीप आसन उपविष्ट आसीत्।
एवं काले हन्ना दुःखितमनाः सती परमेश्वरमुद्दिश्य प्रार्थयमाना बहु १०
रुरोद। अपरं व्रतं कुर्व्वन्ती जगाद, हे सैन्याध्यक्ष परमेश्वर यदि त्वं ११
स्वीयदास्याः दुःखं निरीक्ष्य मां स्मरसि स्वदासीम् अविस्मृत्य स्वीयदास्यै
पुत्रमेकं ददासि, तर्हि तस्य यावज्जीवममहं तं परमेश्वरमुद्दिश्य निवे-
दयिष्यामि तस्य शिरः क्षुरेण न स्प्रक्ष्यते।

१२ परमेश्वरस्य साक्षाद् दीर्घकालं प्रार्थयमानायास्तस्या वदनम् एलिना
१३ याजकेन समदृश्यत। यतो मनसि प्रार्थयमानाया हन्नाया ओष्ठावचलतां
१४ कापि वाक् नाश्रूयत तत्कारणाद् एलिस्तां मत्तां विवेद। अपरम्
एलिस्तां बभाषे त्वं कियत् कालं मत्ता सती स्थास्यसि? तव द्राक्षारसं
१५ त्वत्तो दूरय। ततो हन्ना प्रत्यवदत् हे मम प्रभो तन्नहि, अहं दुःखित-
मना नारी द्राक्षारसं सुरां वा नापिवं, किन्तु परमेश्वरस्य साक्षाद्
१६ अहं मनोऽभिप्रायं व्यक्तीकृत्य कथितवती। त्वं स्वीयदासीं दुष्टां योषितं
मा ज्ञासी मम चिन्ताशोकयो र्बाहुल्यात् तदारभ्य मया वचोऽवादि।
१७ तत एलिः प्रत्यवदत्, त्वं कुशलेन याहि, इस्रायेल ईश्वरमुद्दिश्य त्वया
१८ यद् अप्रार्थि तत् स तुभ्यं ददातु। अनन्तरं भवान् स्वदृष्ट्या स्वदासीम् अनु-
गृह्णात्वित्युक्त्वा सा स्वपथेन गत्वा बुभुजे तस्या मुखञ्च पुनर्विषण्णं न बभूव।
१९ अनन्तरं ते प्रत्यूष उत्थाय परमेश्वरं प्रणम्य परावृत्य रामतं
निजनिवेशनम् आजग्मुः, अनन्तरम् इल्कानाहे स्वभार्य्यां हन्नाम्
२० उपगते परमेश्वरस्तां सस्मार। ततो हन्ना गर्भं धृत्वा काले पूर्णे पुत्रं
प्रसुषुवे; अपरं परमेश्वरात् तमयाचत तत्कारणात् तस्य नाम शिमू-
२१ येल (ईश्वरदत्त) इति चकार। अनन्तरम् इल्कानाहः सपरिवारः
२२ परमेश्वराय वार्षिकं बलिं दातुं प्रतिश्रुतं निवेदयितुञ्च जगाम। किन्तु
हन्ना न जगाम यतः सा स्वस्वामिनमवदत् बालकेन स्तन्यपाने त्यक्ते
ऽहं तमादाय गमिष्यामि, ततः स परमेश्वरं साक्षात्कृत्य तत्र स्थाने
२३ सर्व्वदा स्थास्यति। ततस्तस्याः स्वामील्कानाहस्तां जगाद त्वं यत् क्षेमं
मन्यसे तदेव कुरु तस्य स्तन्यपानत्यागपर्य्यन्तं विलम्बस्व परमेश्वरः केवलं
स्वीयवाक्यं चिरस्थं करोतु। ततः सा स्त्री तिष्ठन्ती बालकस्य स्तन्यपान-
त्यागं यावत् तं स्तन्यं पाययामास।
२४ अनन्तरं तेन स्तन्यपाने त्यक्ते सा त्रीन् वृषभान् ऐफापरिमितं गो-
धूमचूर्णं द्राक्षारसपूर्णकुतूञ्च समादाय शीलो परमेश्वरस्यावासं तम्
२५ आनिनाय तदा बालको ऽल्पवयस्क आसीत्। अनन्तरं तौ वृषभान्
२६ मारयित्वा बालकम् एलेः समीपम् आनिन्यतुः। अपरं हन्ना बभाषे, हे
मम प्रभो भवतः प्राणानां शपथं कृत्वाहं कथयामि हे मम प्रभो, स्थाने-
ऽत्र परमेश्वरम् उद्दिश्य प्रार्थयमाना या नारी भवतः सम्मुखे समुद-
२७ तिष्ठत् सैवाहं। बालकमेनमहं याचितवती परमेश्वरस्य समीपे यदहं-
२८ मयाचे स तन्मह्यमदात्। ततो हेतोरहं तं यावज्जीवनं परमेश्वराय

न्यवेदयं यतः स परमेश्वरस्य क्षते मया याचितः। अनन्तरं बालकस्तत्र स्थाने परमेश्वरं प्रणनाम।

---

## २ द्वितीयोऽध्यायः।

१ हन्नाया गीतं ११ रामागमनम् एलेः पुत्रयोः पापाचरणं १८ शिमूयेलस्य कर्म्म २० एलेर्वरेण हन्नायाः पुनः पुत्रप्रसवः २२ स्वपुत्रयोरेलेस्तिरस्करणं २७ एलेर्वंशस्य विपदमभिशापकथनं।

अनन्तरं सा हन्ना प्रार्थयमाना बभाषे। १

समाह्लादं समायाति परमेशात् मनो मम।
भाग्यञ्च मे परेशेन संप्रयाति समुन्नतिं।
समस्तमेव शत्रूणां मद्वक्त्रञ्च प्रसीदति।
त्राणेन त्वत्कृतेनैव प्रहर्षामितरामहं।
परमेशस्य तुल्यो हि पवित्रो नहि कश्चन। २
विना तमीश्वरः कश्चिदपरो नहि विद्यते।
अस्माकमीशतुल्यश्च ह्यचलो नास्ति कश्चन।
मनःसमुन्नते र्वो वाक् श्रूयतां न पुनः पुनः। ३
युष्माकं वदनेभ्यो न निर्यातु निष्ठुरं वचः।
यत्परेशो हि सर्व्वज्ञः परिमाता स कर्म्मणां।
प्रभज्यते च तेनैव वीरस्यापि शरासनं। ४
प्रदीयते स्खलद्भ्यश्च प्रफुल्लं बलरूपकं।
विक्रीणन्ति निजान् भक्ष्ये ये पुष्टा मनुजास्तु ते। ५
कल्याणं परिगच्छन्ति ये क्षुधार्त्ता नराः पुरा।
सूते सप्तसुतान् बन्ध्या क्षीयते बहुपुत्रिका।
मृत्युजीवनयोर्दाता स एव परमेश्वरः। ६
नयेत प्रेतलोकं स आनयेच्च पुनस्ततः।
अपहर्त्ता च दाता च सम्पत्तेः परमेश्वरः। ७
निपातस्योन्नतेश्चापि स एवैकाधिपः स्मृतः।
धूलेरुन्नम्य दीनांश्च भिक्षुंश्चोत्थाप्य सारतः। ८
वासयेत् स नृपैः सार्द्धम् स्वदत्ते ज्योतिरासने।
पृथिव्या भित्तिमूलानि परमेशस्य सन्ति हि।
तेषामुपरि तेनैव स्थापितं सकलं जगत्।

९ स्वीयपूतमनुष्याणां चरणौ स हि रक्षति ।
पापा निधनं यान्ति वीरो जयति नो बलैः ।
१० ते तु भग्ना भविष्यन्ति रिपवो ये परेशितुः ।
स्वर्गे स्थित्वा स तेष्वेव गर्ज्जनं कारयिष्यति ।
आभूम्यन्तं परेशो हि करिष्यति विचारणं ।
स स्वकीयाय भूपाय बलञ्च परिदास्यति ।
अवस्थां स्वाभिषिक्तस्य प्रोन्नताञ्च करिष्यति ।

११ अनन्तरम् इल्कानाख्यो रामसनगरे स्वनिवेशनं जगाम किन्तु स बालक
१२ एली याजकस्य सम्मुखे तिष्ठन् परमेश्वरं परिचरितुम् आरेभे । एलेः
१३ सुतौ दुष्टस्वभावौ तौ परमेश्वरं नामन्येतां । तौ याजकौ लोकान् प्रतीत्थं
व्यवाहरतां केनचित् जनेन बलौ दास्यमाने तस्य मांसपाकसमये याज-
१४ कस्य दासस्त्रिशूलं हस्तेनादायागच्छत् । अपरं भ्राष्ट्रे कटाहे स्थाल्याम्
कर्ज्जोषे वा निहितेन त्रिशूलेन यति मांसम् उदक्राम्यत तदेव याजकः
स्वस्य कृतेऽग्रह्णात् तत्र शीलोवागतान् सर्व्वान् इस्रायेलवंशीयान् प्रति
१५ ताभ्याम् इत्थम् आचारि । मेदोदाहात् पूर्व्वमेव याजकस्य दास आगत्य
यजमानम् अकथयत्, याजकाय भृज्यमांसं देहि यतः स त्वत्तः सिद्ध-
१६ मांसं न जिघृक्षति किन्त्वामं जिघृक्षति । तेन मेदो ऽधुनैव धक्ष्यते,
तस्मिन् दग्धे सति त्वं स्वमनोभिलाषानुसारेण ग्रहीतुं शक्ष्यसीति वाच्यु-
क्तायां त्वम् इदानीमेव देहि नोचेदहं बलेन ग्रहीष्यामीति स प्रत्यवदत् ।
१७ अतः परमेश्वरस्य साक्षात् तयोस्तरुणयोरतीव पापं ववृधे, यतो लोकाः
परमेश्वरस्य नैवेद्यम् अर्त्तीयितुं प्रावर्त्तन्त ।

१८ तदानीं शिमूयेलो बालकः कार्पासनिर्म्मितम् एफोदं परिधाय पर-
१९ मेश्वरं पर्य्यचरत् । तस्य माता प्रतिवत्सरं निजपतिना समं वार्षिकं बलिं
दातुं यदागच्छत् तदा तस्य कृते गात्रीयं क्षुद्रवस्त्रं निर्म्मायानीय तस्मै
प्राददात् ।

२० अनन्तरम् एलिरिल्कानाख्यं तस्य जायाञ्चेत्याशिषं जगाद, परमे-
श्वरस्य कृते तवानया भार्य्यया याचितस्य बालकस्य विनिमयेन परमेश्व-
२१ रस्तुभ्यम् अस्या अपरान् सन्तानान् ददातु । अनन्तरं तयोः स्वस्थानं
गतयोः परमेश्वरो हन्नाया दशाम् अवेक्षाञ्चक्रे तेन सा गर्भवती भूत्वा
क्रमेण त्रीन् पुत्रान् द्वे कन्ये प्रसुषुवे, तदानीं शिमूयेलो बालकः परमे-
श्वरस्य साक्षाद् वर्द्धितुमारेभे ।

तदानीम् एलिरतिशयस्थविर आसीत्, अनन्तरम् इस्रायेलः सकल- २२
वंशान् प्रति स्वपुत्रयो र्व्यवहारं समाजावासद्वारसमीपम् आगताभिः
परिचारिकाभि र्योषिद्भिः समं तयोः शयनस्य वार्त्ताञ्च श्रुत्वा तौ व्याह-
रत्, सकललोकानां प्रमुखाद् युवयो र्दुर्वृत्ते वार्त्तां शृणोमि, युवां कुत २३
एतादृग् दुर्वृत्तम् आचरथः? हे मम पुत्रौ नहि नहि मया या २४
ख्यातिः श्रूयते सा न भद्रा युवां परमेश्वरस्य लोकान् आज्ञा लङ्घ-
येथे। मनुजेन यदि मनुजस्य किमप्यपराध्यते तर्हीश्वरस्तं विचा- २५
रयति, किन्तु परमेश्वरस्य येनापराध्यते तत्कृते को विनेष्यते? तथापि
तौ स्वपितु र्वाचि मनो न निदधाते यतस्तौ विनाशयितुं परमेश्वरस्य
मतिरासीत्। अपरम् उत्तरोत्तरं वर्द्धमाने शिमूयेले बालके परमेश्वरो २६
मनुजाश्चातुष्यन्।

अनन्तरम् ईश्वरस्य कश्चित् लोक एलेः समीपम् आगत्य जगाद पर- २७
मेश्वर इति वाचं वक्ति, यस्मिन् काले तव पूर्व्वपुरुषा मिसरदेशे
फिरौणो राज्ञ आसन् तदानीमहं तान् प्रति दर्शनमदां, मम यज्ञवेद्या २८
उपरि बलीन् उत्स्रष्टुं सुगन्धिधूपं ज्वालयितुं मम साक्षाद् एफोदं
परिधातुञ्च ते यथा मम याजकत्वं कुर्य्युस्तदर्थम् इस्रायेलः सर्व्ववंशे-
भ्यस्ते मयाभिरुचिता इस्रायेल्वंशीयानां वह्निकृताः सकलोपहाराश्च
तव पितृवंशाय मया दत्ताः किमिति न सत्यं? अतोऽहं स्वीयावासे २९
यानि बलिनैवेद्यान्युत्स्रष्टुम् आज्ञापयं यूयं तानि कुतः पदैरभ्याहथ?
त्वं मम लोकस्येस्रायेल्वंशस्य श्रेष्ठनैवेद्यैः स्वान् पुष्टान् कर्त्तुं मत्तोऽपि
स्वीयपुत्रावधिकं सम्मन्यसे। अत इस्रायेलः प्रभुः परमेश्वरो गदति, ३०
तव वंशस्तव पूर्व्वपुरुषाणां वंशश्च सर्व्वदा मां साक्षात् परिचरिष्यति
वाक्यमिदमहम् उक्तवान्, किन्त्वधुना परमेश्वरः कथयति तत् मम
समीपाद् दूरीभवतु मत्सम्मानकारिणो मया सम्मंस्यन्ते मत्तुच्छकारिण-
श्चावज्ञास्यन्ते। पश्याहं यस्मिन् काले तव त्वत्पितृवंशस्य च बाहुच्छेदं ३१
करिष्यामि तव वंशे स्थविर एकोपि न स्थास्यति स समय आयाति।
श्वरिपुं ममावास इस्रायेल्वंशाय मद्दत्ते सर्व्वमङ्गले च नियोजितं वीक्षि- ३२
ष्यसे तदा तव वंशे कदापि स्थविर एकोपि न स्थास्यति। अपरम् अहं ३३
स्वयज्ञवेदितस्तव यं मनुजं नाच्छेत्स्यामि स तव चक्षुःक्षयहेतुक आन्तरिक-
शोकहेतुकश्च भविष्यति, तव वंशोद्भवाः सर्व्वे लोकास्तारुण्यकाले मरि-
ष्यन्ति। अपरं हफ्निपीनिहसाख्यौ तव द्वौ पुत्रौ प्रति यद् घटिष्यते तत् ३४

३४ तवैकं चिह्नं भविष्यति तौ द्वौ जनावेकस्मिन्नेव दिने मरिष्यतः । अहमेकं
विश्वास्यं याजकम् उत्पादयिष्यामि स ममाभिमतम् इष्टञ्च समाचरि-
ष्यति, तस्मादहम् एकं चिरस्थायिवंशम् उत्पादयिष्यामि, स सर्व्वदा
३६ ममाभिषिक्तं साक्षात् परिचरिष्यति । अपरं तव वंशस्यावशिष्ट एकैको
जन आगत्यैकरौप्यमुद्रार्थम् एकखण्डपूपार्थञ्च तं प्रणम्य वदिष्यति,
विनयेऽहं येन खण्डैकं पूपं भक्षितुं प्राप्नोमि तादृशे कस्मिंश्चिद् याजक-
त्वपदे मां नियोजय ।

---

# ३ तृतीयोऽध्यायः ।

१ शिमूयेलं प्रति परमेश्वरस्याह्वानं ११ शिमूयेलं प्रति एले र्वंशस्य विनाशनस्य प्रका-
शितत्व १५ एलेः समीपे शिमूयेलेन तस्य प्रकाशितत्वं शिमूयेलस्य यशोवृद्धिश्च ।

१ अनन्तरं शिमूयेलो बालक एलेः साक्षात् परमेश्वरं पर्य्यचरत् तस्मिन्
काले परमेश्वरस्य वाक्यं दुर्लभमासीत् प्रायेण प्रकाशितं दर्शनं नासीत् ।
२ अपरं क्षीणदृष्टित्वाद् एलेर्दृष्टिशक्ति र्नासीत् । एकराचावीश्वरस्य
३ प्रदीपे न निर्व्वाणे स्वस्थान एलिरशेत शिमूयेलश्चेश्वरस्य मञ्जूषा यत्र
४ स्थान आसीत् तत्र परमेश्वरस्यावासमध्य अशेत । तत्काले परमे-
५ श्वरः शिमूयेलम् आह्वयत्, ततोऽत्राहम् इत्युक्त्वा स एलेः समीपं धावित्वा
जगाद, अत्राहमस्मि भवान् किं माम् आह्वयति? ततः स उक्तवान् नाह-
६ माह्वयं त्वं पुनः शेष्व तदा स गत्वा शयितवान् । अनन्तरं परमेश्वरः
पुनराह्वयत् हे शिमूयेल, ततः शिमूयेल उत्थायैलेः समीपं गत्वा व्याह-
रत्, अत्राहमस्मि भवान् किं माम् आह्वयति? स बभाषे हे मम पुत्र
७ नाहमाहूतवान् त्वं पुनः शेष्व । तदानीं शिमूयेलेन परमेश्वरस्य शब्दो
८ न परिचितः परमेश्वरस्य वाक्यमपि तस्य समीपे न प्रकाशितं । अनन्तरं
परमेश्वरस्तृतीयवारं शिमूयेलम् आह्वयत्, ततः स उत्थायैलेः समीपं
गत्वावदत् अत्राहमस्मि भवान् किं मामाह्वयति? तदानीं परमेश्वरेण
९ बालकोऽयम् आहूयत इत्येलि र्विज्ञाय शिमूयेलं बभाषे, त्वं गत्वा शेष्व,
स यदि पुनर्व्वारं त्वामाह्वयति तर्हि हे परमेश्वर कथयतु, तव दासः
१० शृणोतीति वाचं वद, ततः शिमूयेलो गत्वा स्वस्थाने शिश्ये । अनन्तरं
परमेश्वर आगत्य तिष्ठन् पूर्व्ववद् आह्वयत् हे शिमूयेल हे शिमूयेल, ततः
शिमूयेलः प्रतिजगाद कथयतु तव दासः शृणोति ।
११ तदानीं परमेश्वरः शिमूयेलं जगाद, पश्याहम् इस्रायेलमध्ये कर्म्मैकं

करिष्यामि तद् यः कश्चन श्रोष्यति तस्य कर्णद्वयं शब्दायिष्यते। एलेः १२
परिवारेषु मया यद्यद् उक्तं तान्यारभ्यैकस्मिन्नेव दिने निःशेषं सम्पाद-
यिष्यामि। तस्य पुत्रौ धर्म्माद् भ्रष्टाविति सोऽवगतः सन् तौ नादाम्यद् १३
एतदपराधकारणाद् अहं तस्य वंशं सदा दण्डयिष्यामीति वाक्यं तम-
वोचं। अपरं बलिदाननैवेद्यैरपि तस्य वंशस्यापराधः कदापि मया न १४
क्षमिष्यत इति शपथमहम् एलेः परिवारमधि कृतवान्।

अनन्तरं शिमूयेलः पुनरशेत, ततः परं प्रभाते जाते परमेश्वरावासस्य १५
कवाटौ मुमोच, किन्तु शिमूयेल एलेः समीपे तद्दर्शनं प्रकाशयितुं भीतः।
अनन्तरम् एलिः शिमूयेलम् आहूय जगाद हे मम पुत्र शिमूयेल, १६
ततः स प्रतिजगाद, अहमेषः। तदानीम् एलिः पप्रच्छ तव समीपे तेन १७
किं वाक्यं व्याहारि? अहं विनये तत् मह्यं मापह्नुष्व त्वां प्रतीश्वरेण
यद्यद् अवाचि तस्यैकमेव वाक्यं यदि मह्यम् अपह्नुषे तर्हि सोऽमुकं
तदधिकञ्च फलं तुभ्यं ददातु। तदानीं शिमूयेलस्तस्मै सर्व्वाणि कथया- १८
मास किमपि नापजुह्नुवे। तत एलिर्व्याजहार स परमेश्वर एव स्वीय-
इच्छया यत् क्षेमं मन्यते तदेव करोतु।

अनन्तरं शिमूयेलस्य वयसि वर्द्धिते परमेश्वरस्तेन सार्द्धं तिष्ठन् तस्य १९
किञ्चन वाक्यं व्यर्थं भवितुं न ददौ। ततः शिमूयेलः परमेश्वरेण २०
निश्चितो भविष्यद्वक्ता इति दानमारभ्य वेर्शेबां यावद् इस्रायेलीयैः
सर्व्वैरज्ञायत। अतः परमेश्वरः शीलो पुनरात्मदर्शनं दातुम् आ[illegible]ये २१
यतः परमेश्वरः स्वीयवाक्येन शिमूयेलस्य समीपे शीलौ स्वं प्रा[illegible]यत्,
ततः शिमूयेलस्य वाक्यं सर्व्वान् इस्रायेलीयान् प्रति प्रबभूव।

## ४ चतुर्थोऽध्यायः।

१ एबनेषरस्थाने इस्रायेलवंशस्य पराजितत्वं ३ शीलुतो नियममञ्जूषायाः शिविर आनयनं १० पुनः पराजितत्वम् एलेः पुत्रद्वयस्य हतत्वं १२ तत् श्रुत्वा एलेर्मरणं १९ तस्य पुत्रवध्वाः प्रसवो मरणञ्च।

अनन्तरम् इस्रायेलवंशाः पिलेष्टीयैः समं योद्धुं निर्गत्य एबनेषरे १
शिविरं स्थापयामासुः पिलेष्टीया अफेके शिविरं स्थापयामासुः।
अनन्तरं पिलेष्टीया इस्रायेलवंशस्य विरुद्धं सैन्यानि रचयाञ्चक्रिरे २
तेन युद्धे व्याप्ते सति इस्रायेलवंशः पिलेष्टीयानां सम्मुखे पराजित-
स्तस्याः सैन्यश्रेण्याः प्रायेण चतुःसहस्राणि लोकाः क्षेत्रे हताश्च।

३ अपरं लोकेषु शिबिरं प्रविष्टेष्विस्रायेल्वंशस्य प्राचीना अकथयन
परमेश्वरोऽद्य पिलेष्टीयानां सम्मुखेऽस्मान् कुतः पराजितान् अकार्षीत्?
वयं शीलुतोऽस्माकं समीपं परमेश्वरस्य नियममञ्जूषाम् आनयामहै
४ ततः सोऽस्माकं मध्यमुपस्थाय रिपूणां करेभ्योऽस्मान् रक्षिष्यति। अनन्तरं
लोकाः शीलुं दूतान् प्रहित्य तस्मात् स्थानात् किरूबमध्यवासिनः सैन्या-
ध्यक्षपरमेश्वरस्य नियममञ्जूषाम् आनिन्युः, तदानीं हफ्निपीनि-
हसनामानावेलेः पुत्रौ तत्र स्थान ईश्वरस्य नियममञ्जूषया सार्द्धम्
५ आस्तां। अनन्तरं परमेश्वरस्य नियममञ्जूषायां शिबिर उपस्थितायाम्
इस्रायेलः सर्व्वे वंशा महासिंहनादम् अकुर्व्वन् तेन पृथिवी कम्पिता।
६ तदानीं पिलेष्टीयास्तस्य सिंहनादस्य ध्वनिं निशम्य पप्रच्छुः, इब्रीयाणां
शिबिरे महासिंहनादः कुतो जायते? ततः परमेश्वरस्य नियममञ्जूषा
७ शिबिरमानीतेति ज्ञातवन्तः। अनन्तरम् ईश्वरः शिबिरम् आगत इति
गदन्तः पिलेष्टीया बिभीय पुनरवदन् अस्मान् धिक्, इतः पूर्व्वं
८ कदापि नैतादृग् अघटत। अस्मान् धिक्, एतस्य पराक्रमिण ईश्वरस्य
हस्ताद् अस्मान् क उद्धारयिष्यति? अयमीश्वरः प्रान्तरे सर्व्वप्रकारा-
९ घातै र्मिस्रीयान् जघान। हे पिलेष्टीया बलं प्रकाशयत स्वान् वीरानिव
दर्शयत, इम इब्रीयलोका यद्वद् युष्माकं दासा बभूवुस्तद्वद् यूयं तेषां
दासा न भवत स्वान् वीरानिव दर्शयन्तो युध्यत।
१० ततो युध्यद्भिः पिलेष्टीयैः पराजितानाम् इस्रायेल्वंशानाम् एकैको
जनः स्वस्ववासस्थानं पलायाञ्चक्रे, तस्मिन् महानिहनन इस्रायेल्वंशस्य
११ त्रिंशत्सहस्राणि पदातयो हताः। अपरम् ईश्वरस्य नियममञ्जूषा रिपु-
हस्तगता बभूव, एले र्द्वौ पुत्रौ हफ्निपीनिहसावप्यहन्यतां।
१२ ततः सैन्यश्रेण्याः पलायमानश्छिन्नवस्त्रो धूल्याच्छन्नमूर्द्धा बिन्यामीन-
१३ वंशीयो जन एकस्तस्मिन्नेव दिने शीलुम् आगमत्। तस्यागमनसमये
तत्र स्थाने पथपार्श्व आसने समुपविष्ट एलिः प्रतीक्षितवान्, यतस्त-
स्यान्तःकरणम् ईश्वरस्य मञ्जूषायाः कृते चकम्पे तेन मनुजेन नगर-
मध्यं गत्वा तस्यां वार्त्तायाम् उक्तायां नगरस्थाः सर्व्वे लोका हाहा-
१४ कारं चक्रुः। तदानीम् एलिस्तस्य हाहाकारस्य शब्दं श्रुत्वा पप्रच्छ,
अस्य कलहशब्दस्य किं कारणं? ततः स लोकः शीघ्रमागत्यैलिं जगाद।
१५ तदानीम् एलिरष्टानवतिवत्सरवयस्क आसीत् स च दीर्घदृष्टिकार-
१६ णाद् द्रष्टुं न शशाक। स मनुष्य एलिं बभाषे, सैन्यश्रेण्या आगतो

लोकोऽहम् अद्यैव सैन्यश्रेण्याः पलायित्वागमं, तत एलिः पप्रच्छ हे
मम पुत्र का वार्त्ता? स दूतः प्रतिजगाद, इस्रायेल्वंशीयाः पिलेष्टीयानां १७
सम्मुखात् पलायाञ्चक्रिरे लोकानां महानिहननं जातञ्च हफ्निपीनि-
हसाख्यौ तव द्वौ पुत्रावपि हतौ तथेश्वरस्य मञ्जूषा रिपुभिरपहृता।
तदानीम् ईश्वरस्य मञ्जूषाया नाम्नि तेनोच्चारिते सत्येलिरासनात् १८
पश्चाद् गोपुरपार्श्वे निपपात तेन तस्य ग्रीवाभञ्जनात् स ममार यतः
स वृद्धो गुरुश्चासीत्, स एलिश्चत्वारिंशद्वत्सरान् यावद् इस्रायेल्-
वंशम् अशिषत्।

तदानीं तस्य पुत्रवधूः पीनिहसस्य भार्य्या गर्भवती तस्याः प्रसव- १९
कालः सविधश्चासीत्, अत ईश्वरस्य मञ्जूषा रिपुहस्तगता मम
श्वशुरः पतिश्च मृताविति वार्त्तां निशम्य साधोमुखी भूत्वा प्रसुषुवे
यतस्तदानीं तस्याः प्रसववेदना समुपातिष्ठत्। तदानीं तस्यां मृत- २०
कल्पायां सत्यां तस्याः सन्निधाववतिष्ठमाना नार्य्यस्तां जगदुः, भीति
र्नास्ति त्वं पुत्रं प्रसूता किन्तु सा न प्रतिजगाद तच्च मनसा न निदधे।
अनन्तरं सा तनयस्य नाम इखावोदो (निस्तेजा) इति चक्रे तथेश्वरस्य २१
मञ्जूषाया रिपुहस्तगतत्वात् स्वश्वशुरस्य पत्युश्च मरणाच्च बभाषे, इस्रा-
येल्वंशात् तेजो विगतं। ईश्वरस्य मञ्जूषाया रिपुहस्तगतत्वादेव सा २२
जगाद, इस्रायेल्वंशात् तेजो विगतं।

## ५ पञ्चमोऽध्यायः।

१ दागोनदेवस्य मन्दिरे मञ्जूषानिधानं ३ दागोनस्य भग्नत्वम् अपरम् असदोदस्य गातस्य च लोकानां पीडितत्वं विनष्टत्वञ्च १० इक्रोणे मञ्जूषायाः प्रेषणं।

अनन्तरं पिलेष्टीयैरपहृतेश्वरमञ्जूषा एवनेषराद् असदोदम् आ- १
नीता। ततः परं पिलेष्टीया ईश्वरस्य मञ्जूषां गृहीत्वा दागोनदेवस्य २
मन्दिरमानीय दागोनस्य पार्श्वे स्थापयामासुः।

ततः परदिने असदोदीयलोकाः प्रत्यूष उत्थाय दागोनदेवं परमे- ३
श्वरस्य मञ्जूषायाः सम्मुखेऽधोमुखं भूमौ पतितं ददृशुः, ततस्ते दागोनदेवं
धृत्वा पुनः स्वस्थाने स्थापयामासुः। अपरं तस्य परदिवसेऽपि लोकाः ४
प्रत्यूष उत्थाय दागोनदेवः परमेश्वरस्य मञ्जूषायाः सम्मुखेऽधोमुखो
भूमौ पतित इति दागोनस्य शिरः करद्वयञ्च प्रच्छिन्ने शिलायां

५ स्थिते केवलं तस्य मत्स्याकारो देहोऽवशिष्ट इति ददृशुः। एतस्मा-
रणाद् दागोनस्य पुरोहिता दागोनमन्दिरगामिनो लोकाश्च अस्-
६ दोदे स्थितायां दागोनशिलायाम् अद्यापि पादौ न निदधते। पर-
मेश्वरस्तान् अस्दोदीयलोकान् भृशं क्लिश्नन् नाशयामास तथा हि
७ सोऽस्दोदीयलोकान् तच्चतुर्दिक्स्थलोकांश्चार्शोरोगेणाजघान। अनन्तरम्
अस्दोदीयलोका एतादृशं विलोक्य जगदुः, इस्रायेल ईश्वरस्य मञ्जूषा
नास्माकं समीपे स्थास्यति यतः सोऽस्मान् अस्मद्देवं दागोनञ्च भृशं
८ क्लिश्नाति। अतस्ते दूतान् प्रहित्य पिलेष्टीयानाम् अधिपतिगणं स्वेषां
समीपमानीय जगदुः, इस्रायेल ईश्वरस्य मञ्जूषामध्यस्माभिः किं कर-
णीयं? अधिपतयोऽवदन् इस्रायेल ईश्वरस्य मञ्जूषा गातनगरं नीयतां,
९ ततस्त इस्रायेल ईश्वरस्य मञ्जूषां तत्स्थानं निन्युः। तदा तस्यां तत्र
नीतायां परमेश्वरो महाहननेन तन्नगरम् अक्लिश्नाद् अर्थतस्तस्य नगरस्य
क्षुद्रान् महतश्च सर्व्वलोकान् आजघान, तेन तेषां गुह्यस्थानेष्वर्शो-
रोगो बभूव।
१० अनन्तरम् ईश्वरस्य मञ्जूषा तैरिक्रोणं प्रेषिता तत ईश्वरस्य मञ्जूषा-
याम् इक्रोणम् आगतायाम् इक्रोणनगरीया उच्चैरवदन् अस्माकम्
अस्मल्लोकानाञ्च बधार्थम् इस्रायेल ईश्वरस्य मञ्जूषास्माकं समीपं
११ तैरानायि। ततस्ते दूतान् प्रहित्य पिलेष्टीयानाम् अधिपतिगणं संगृह्य
जगदुः, इस्रायेल ईश्वरस्य मञ्जूषा युष्माभि र्विसृष्टा पुनः स्वस्थानं प्रति-
गच्छतु सोऽस्मान् अस्मदीयप्रजाश्च न नाशयतु यतस्तन्नगरस्य सर्व्वत्र
१२ महाहननं जातं, तच्च स्थानम् ईश्वरेण भृशमक्लिश्यत। अपरं ये
लोका अजीवन् ते ऽर्शोरोगेण पीडितास्ततो नगरीयलोकानाम् आर्त्तस्वर
आकाशं यावद् उदतिष्ठत्।

---

## ६ षष्ठोऽध्यायः।

१ इस्रायेल्लोकानां समीपं मञ्जूषां प्रेरयितुं पिलेष्टीयानां मन्त्रणा १० मञ्जूषाप्रेरणं १९ बैतशेमशे मञ्जूषायां दृष्टिपातनात् लोकानां मध्ये महामारीसमुत्पत्तिः २१ किरियत-यियारीमं प्रति मञ्जूषाप्रेरणं।

१ परमेश्वरस्य मञ्जूषा पिलेष्टीयानां देशे सप्तमासान् यावत् तस्थौ।
२ अपरं पिलेष्टीयाः पुरोहितान् गणकांश्चाहूय व्याहरन् परमेश्वरस्य

मञ्जूषामधि किं करणीयम् अस्माभिः? वयं केन प्रकारेण तां स्वस्थानं
प्रेषयिष्यामः? तद् अस्मान् ज्ञापयत। ते ऽवदन् यदि यूयम् इस्रायेल ३
ईश्वरस्य मञ्जूषां विसृजथ तर्हि शून्यां तां न विसृजत किन्तु दोषार्थ-
कदानानि तस्मै दत्त ततः स युष्मान् निरामयान् करिष्यति, अपरं युष्मान्
क्रोधं स कुतो न न्यवर्त्ततेदं ज्ञास्यथ। तेन ते पप्रच्छुः, दोषार्थकदानीयं ४
वयं किं द्रव्यं तस्मायुत्सृक्ष्याम? ते ऽवदन् पिलेष्टीयाध्यक्षाणां संख्यानु-
सारात् पञ्च स्वर्णार्शांसि पञ्च स्वर्णमूषिकाश्च दत्त यतो युष्माकं सर्व्वेषां
युष्मदध्यक्षाणाञ्चैकरूप एव शापो जातः। अतो यूयं युष्माकम् अर्शसां ५
देशनाशकमूषिकाणाञ्च प्रतिमा निर्म्मायेस्रायेल ईश्वराय ददत्त
समादरिष्यध्वे तेन भवितुं शक्नोति स युष्मभ्यं युष्मद्देवगणाद् देशाच्च
स्वकरं निवारयिष्यति। मिस्रीयलोकाः फिरौण् राजा च यादृशं स्वेषाम् ६
अन्तःकरणान्यकठिनयन् यूयमपि तादृशम् अन्तःकरणं कुतः कठि-
नयथ? तेषां मध्ये तेनाश्चर्य्यकर्म्मसु कृतेषु लोकास्तैः किं न विसृष्टाः?
ततस्ते किं न गताः? अतः सम्प्रति यूयं नूतनं शकटमेकं निर्म्मात यच्च युगं ७
कदापि नावहत् तादृशं दुग्धवतीगोद्वयम् आनीय शकटे योजयत
तयो वत्सौ तयोः पश्चाद् गृहमानयत च। अपरं परमेश्वरस्य मञ्जूषां ८
गृहीत्वा तच्छकटोपरि स्थापयत, अपरं दोषार्थकप्रायश्चित्तस्वरूपाणि
स्वर्णाभरणानि पात्रे निधाय तत्पार्श्वे स्थापयत, अनन्तरं तद् यातुं
विसृजत। तत् शकटं यदि परमेश्वरस्य सीमाया मार्गेण बैत्शेमशं याति ९
तर्ह्यस्माकं महदमङ्गलं तेनैव कृतं, यदि तु न याति तर्हि न तस्य करेण
वयम् आहताः किन्त्वस्मान् प्रति दैवी घटनाभवत् इति युष्माभि र्ज्ञास्यते।

अनन्तरं लोकैस्तदेवाकारि दुग्धवतीगोद्वयं गृहीत्वा शकटे योजितं १०
तयो वत्सौ च गृहे निबबन्धाते। अनन्तरं परमेश्वरस्य मञ्जूषा स्वर्णमू- ११
षिकार्शःप्रतिमाधारपात्रञ्च शकटोपरि निदधाते। अनन्तरं तद्गवी- १२
द्वयम् ऋजुमार्गेण गच्छत् बैत्शेमशस्य दिशं जगाम, तत् शब्दायमानम्
एकमेको राजमार्गेणैव जगाम दक्षिणं वामं वा न परावर्त्तत; पिलेष्टी-
यानाम् अधिपतयश्च बैत्शेमशस्य सीमां यावत् तस्य पश्चात् जग्मुः।
तदानीं बैत्शेमशनिवासिनः समभूमौ गोधूमं छिन्दन्ति त ऊर्द्धदृष्टिं १३
कृत्वा मञ्जूषां ददृशुस्तां दृष्ट्वा चाजह्लादिरे। तदानीं तत् शकटं बैत- १४
शेमशीययिहोशूयस्य क्षेत्रमुपस्थाय स्थगितं बभूव तत्र स्थाने महाप्रस्तर
एक आसीत् ते शकटस्य काष्ठानि छित्त्वा तद्गवीद्वयं होमबलिरूपेण

१५ परमेश्वराय ददुः । अनन्तरं लेवीयाः परमेश्वरस्य मञ्जूषां तत्समीपस्थं
स्वर्णालङ्काराधारपात्रञ्चावरोह्य तस्मिन् महाप्रस्तरे निदधिरे, अपरं
वैतशेमशीयलोकास्तस्मिन् दिने परमेश्वरमुद्दिश्य होमार्थकादीन् बलीन्
१६ उत्ससृजुः । तद् दृष्ट्वा पिलेष्टीयानां पञ्चाधिपतयस्तस्मिन् दिने इक्रोणं
१७ प्रत्याजग्मुः । अपरं दोषार्थकदानरूपेण पिलेष्टीयैरस्दोदस्य निमित्तम्
एकम् अस्सायाः निमित्तम् एकम् अस्किलोनस्य निमित्तम् एकं गातस्य
निमित्तम् एकम् इक्रोणस्य निमित्तम् एकञ्चैतानि पञ्चस्वर्णार्शांसि,
१८ पिलेष्टीयानां यावन्ति नगराणि, पञ्चानाम् अधिपतीनाम् अधीनान्या-
सन् (तानि प्राचीरवेष्टितानि नगराणि सामान्यग्रामा वा स्युः) तावन्ति
स्वर्णमूषिकाश्च परमेश्वरमुद्दिश्य तत्रानीयन्त । यस्मिन् महाप्रस्तर
ईश्वरस्य मञ्जूषा निरधायि स महाशिलाख्यः प्रस्तरोऽद्यापि वैतशेम-
शीययिहोशूयस्य क्षेत्रे विद्यते ।
१९ अनन्तरं वैतशेमशीयलोकाः परमेश्वरस्य मञ्जूषायां दृष्टिं पातया-
मासुः, तत्कारणात् स तान् आजघानार्थतस्तेषां सप्तत्यधिकपञ्चसहस्राणि
लोकान् विनाशयाञ्चकार परमेश्वर एतेन महाप्रहारेण तान् आजघान
२० ततो हेतोः लोका विललपुः । अपरं वैतशेमशीयलोका अवदन् एतस्य
पवित्रस्य प्रभोः परमेश्वरस्य साक्षात् के संस्थातुं शक्नुवन्ति सोऽस्मत्तः
कस्य समीपं यास्यति ?
२१ अनन्तरं लोकाः किरियतयियारीमनिवासिनां समीपं दूतान् प्रहित्य
जगदुः, पिलेष्टीयाः परमेश्वरस्य मञ्जूषां पुनरानयन् यूयम् इत्य तां स्वेषां
समीपं नयत ।

## ७ सप्तमोऽध्यायः ।

१ अवीनादबस्य गेहे मञ्जूषानिधानं ५ मिस्पाम् इस्रायेल्लोकानाम् आगतयनं ८ पिलेष्टीयानां युद्धं कर्त्तुं सज्जीभवनं ९ शिमूयेलस्य बलिदानं प्रार्थनञ्च तदानीं महा-भयङ्करवातैः पिलेष्टीयानां पराजितत्वं १३ पिलेष्टीयानां वशीभूतत्वं १५ शिमूयेलस्य विचारकथनञ्च ।

१ अनन्तरं किरियतयियारीमीयलोका आगत्य परमेश्वरस्य मञ्जूषां
गृह्णन्तः पर्व्वतस्थितम् अवीनादबस्य निवेशनम् आनयन्, अपरं
परमेश्वरस्य तां मञ्जूषां रक्षितुं तस्य पुत्रम् इलियासरं पवित्रं चक्रुः ।
२ परमेश्वरस्य सा मञ्जूषा किरियतयियारीमे दीर्घकालम् अर्थाद् विंशति

यत्तश्शारीम् यावत् तस्थौ। अनन्तरम् इस्रायेलीयाः सर्व्वे विलपन्तः पर-
मेश्वरम् अनुगन्तुम् आरेभिरे।

ततः शिमूयेल इस्रायेलः सकलवंशान् अवदत्, यदि यूयं स्वीय- ३
सर्व्वान्तःकरणैः समं परमेश्वरं प्रति परावर्त्तितुम् इच्छथ तर्हि स्वेषां
मध्याद् इतरदेवान् अस्तारोतदेवींश्च दवयत परमेश्वरे च मनांसि
निवेश्य केवलं तमेव सेवध्वं तेन स पिलेष्टीयानां करेभ्यो युष्मान् उद्धा-
रयिष्यति। तत इस्रायेलः सर्व्वे वंशाः बाल्देवान् अस्तारोतदेवींश्च ४
दवयित्वा केवलं परमेश्वरं सेवितुम् आरेभिरे। तदानीं शिमूयेलो ५
ऽवदत् मिस्पायाम् इस्रायेलः सकललोकान् संगृह्णीत युष्माकं कृतेऽहं
परमेश्वरम् उद्दिश्य प्रार्थयिष्ये। ततस्ते सर्व्वे मिस्पायां मिलित्वा तोयानि ६
तोलयित्वा परमेश्वरस्य साक्षाद् भूमौ न्यक्षिपन् अपरं तस्मिन् दिने
उपवसन्तस्तत्र स्थाने जगदुः, परमेश्वरस्य विरुद्धं पातकमस्माभि-
रकारि। अनन्तरं शिमूयेलो मिस्पायाम् इस्रायेल्वंशस्य विचारं चकार।

अनन्तरम् इस्रायेल्वंशा मिस्पायां मिलिता इति वार्त्तायां पिलेष्टीयैः ७
श्रुतायां तेषाम् अध्यक्षा इस्रायेलवंशस्य विरुद्धम् आगच्छन् इस्रायेल्-
वंशास्तत् श्रुत्वा पिलेष्टीयेभ्यो बिभ्युः। अपरम् इस्रायेल्वंशाः शिमूयेलम् ८
अवदन् अस्माकं प्रभुः परमेश्वरः पिलेष्टीयानां करेभ्यो यदस्मान् उद्धा-
रयेत् तदर्थं तस्य समीपे प्रार्थयितुं त्वं मा विरम।

तदानीं शिमूयेलो दुग्धपोष्यं मेषवत्सं गृहीत्वा परमेश्वरमुद्दिश्य ९
सर्व्वहोमबलिरूपेणोत्ससर्ज, अपरं शिमूयेल इस्रायेल्वंशस्य कृते
परमेश्वरस्य सन्निधौ प्रार्थयाञ्चक्रे ततः परमेश्वरस्तस्मै प्रत्युत्तरं ददौ।
यस्मिन् काले शिमूयेलो होमबलिम् उदसृजत् तस्मिन् काले पिलेष्टीया १०
इस्रायेल्वंशेन समं योद्धुं तस्य समीपम् आगमन्, किन्तु तस्मिन् दिने
परमेश्वरो मेघनादेनातीव गर्जन् पिलेष्टीयान् व्याकुलान् चकार,
तेन त इस्रायेल्वंशेन पराजिता बभूवुः। तदानीम् इस्रायेल्- ११
वंशो मिस्पाया बहिर्भूय पिलेष्टीयानां पश्चाद् धावन्तो बैतकरस्याधः-
स्थानं यावत् तान् आजघ्नुः। ततः शिमूयेलः पाषाणमेकं गृहीत्वा मिस्पी- १२
शेनोर्मध्यस्थाने स्थापयामास, परमेश्वरोऽस्मान् एतत् स्थानं यावद् उप-
कृतवान् इत्युक्त्वा तस्य पाषाणस्य नाम एवनेषरम् उपकारसूचकपाषाण
इति चकार।

इत्थं पराजिताः पिलेष्टीया इस्रायेल्वंशस्य देशं पुन र्नागमन् अपरं १३

१४ परमेश्वरः शिमूयेलस्य यावज्जीवनं पिलेष्टीयान् अक्लिश्नात्। अपरं
यानि नगराणि पिलेष्टीयैरिस्रायेल्वंशाद् अपहृतानि तानि पुनरिस्रा-
येलीयैरधिचक्रिरे, इक्रोणं गातं तयोः सीमाश्च यावत् सर्व्वदेशः पुन-
रिस्रायेल्वंशेन पिलेष्टीयेभ्य उद्धारयाञ्चक्रे, अपरम् इमोरीयैः समम्
इस्रायेल्वंशस्य सन्धि र्बभूव।
१५ स शिमूयेलो यावज्जीवनम् इस्रायेल्वंशम् अशिषत्। स प्रतिवत्सरं
१६ बैथेलं गिल्गलं मिस्पीञ्च पर्य्यटन् तेषु स्थानेष्विस्रायेल्वंशम् अशिषत्।
१७ अपरं यत्र स्थाने तस्य निवेशनमासीत् तद् रामतनगरं प्रत्यागत्य तत्र
स्थानेऽपीस्रायेल्वंशम् अशिषत् स च तत्र स्थाने परमेश्वरमुद्दिश्य वेदि-
मेकां निर्म्मितवान्।

## ८ अष्टमोऽध्यायः।

१ शिमूयेलस्य पुत्रयोरन्यायकारणात् लोकानां राजनीप्सा ६ तेषां याच्ञायां शिमूयेलस्यातुष्टिः १० भाविराजानां वर्णनं १९ राजानं नियोजयितुं शिमूयेलं प्रतीश्वरस्याज्ञा।

१ अनन्तरं वार्द्धक्यं प्राप्तः शिमूयेलः स्वपुत्राविस्रायेल्वंशस्योपरि विचा-
२ रयितृपदे न्ययुङ्क्त। तस्य ज्येष्ठपुत्रस्य नाम योयेल इति द्वितीयपुत्रस्य च
३ नामाबिय इत्यासीत्; तौ बेर्शेबायां विचारयितारौ बभूवतुः। किन्तु
तस्य पुत्रौ पितुर्मार्गेण न चलन्तौ लोभानुगामिनौ बभूवतुस्तावुत्कोचं
४ गृहीत्वा विचारेऽन्यायं कृतवन्तौ। अत इस्रायेल्वंशस्य प्राचीना मिलित्वा
५ रामते शिमूयेलस्य समीपमागत्य तमवदन् पश्य त्वं वृद्धो जातस्तव
पुत्रौ च तव मार्गेण न चलतोऽतस्त्वं भिन्नदेशीयानिवास्मान् शासितुं
राजानमेकं नियोजय।
६ अस्मान् शासितुं राजानमेकं नियोजयेति तेषामेतेन वचसा शिमूयेलो
७ विरेजे, ततः शिमूयेलः परमेश्वरम् उद्दिश्य प्रार्थयाञ्चक्रे। तदानीं
परमेश्वरः शिमूयेलम् अवोचत् एते लोकास्तव समीपे यद्यद् व्याह-
रन्ति तेषां तत् सर्व्ववाक्यं त्वं गृहाण यतस्तैस्त्वं न परित्यक्तः किन्त्वहं
८ यत् तेषां राजा न भवेयं तदर्थमहमेव तैः परित्यक्तः। मिसर्देशात्
मया तेषाम् आनयनदिनमारभ्याद्य यावत् ते स्वेषां सर्व्वकर्म्मभि र्यथा
९ मां त्यजन्त इतरदेवान् सेवन्ते तथा त्वां प्रत्यपि व्यवहरन्ति। अधुना

त्वं तेषां वचनानि गृहाण किन्तु तान् सुदृढरूपं प्रबोध्य तेषां शासन-
कारिणो भाविभूपते रीतिं तान् ज्ञापय।

अनन्तरं राजप्रार्थकानां समीपे परमेश्वरीयाणि वचांस्येतानि शिमू- १०
येलेनोक्तानि। स व्याजहार युष्माकमुपरि राजत्वकारिणो राज्ञ एता- ११
दृशी रीति र्भविष्यति स युष्माकं पुत्रान् गृहीत्वा स्वरथाश्वारोहिगणेषु
निधास्यति तेषां कांश्चन स्वरथस्याग्रे धाविनः करिष्यति। स तान् सहस्र- १२
पतीन् पञ्चाशत्पतींश्च करिष्यति, तांश्च स्वीयभूमिं कर्षयिष्यति स्वीयश-
स्यानि छेदयिष्यति युद्धास्त्राणि रथसज्जाश्च निर्म्मापयिष्यति। अपरं स १३
युष्माकं कन्या गृहीत्वा स्वस्य सूपकाराः सूदा आपूपिकाश्च करिष्यति।
अपरं युष्माकम् उत्तमानि शस्यक्षेत्राणि द्राक्षाक्षेत्राणि जितवृक्षांश्च १४
गृहीत्वा स्वभृत्येभ्यो दास्यति। अपरं युष्माकं शस्यानां द्राक्षाणाञ्च दश- १५
मांशं गृहीत्वा राजसभासद्भ्यो दास्यति। अपरं स युष्माकं दासान् १६
दासीरुत्तमतरुणान् गर्द्दभांश्च गृहीत्वा तै र्निजकार्य्यं कारयिष्यते। स १७
युष्माकं मेषाणां दशमांशं ग्रहीष्यति यूयञ्च तस्य दासा भविष्यथ।
तदानीं यूयं स्वैरभिरुचितस्य राज्ञः कारणाद् विलपिष्यथ किन्तु परमे- १८
श्वरस्तदानीं युष्माकं वचो न श्रोष्यति।

तथापि लोकाः शिमूयेलस्य वाक्यम् अगृहीत्वा जगदुः, नहि नहि, १९
राजैकोऽस्माभि र्नियुज्यतां, तेन वयं भिन्नजातीयैः समा भूत्वा स्वराजेन २०
शासिष्यामहे स चास्माकमग्रसरः सन् युद्धं गमिष्यति। तदानीं शिमूयेलो २१
लोकानां सर्व्ववाचं निशम्य परमेश्वरस्य कर्णगोचरे निवेदयामास। ततः २२
परमेश्वरः शिमूयेलं बभाषे त्वं तेषां वाक्यं गृहाण तेषां राजानमेकं नियुङ्क्ष्व
च। अनन्तरं शिमूयेल इस्रायेल्वंशं जगाद यूयं स्वस्वनगरं गच्छत।

## ९ नवमोऽध्यायः।

१ शौलेन पितृगर्द्दभीणां गवेषणं ११ शिमूयेलस्य समीपगमनं १५ शिमूयेलेन समं शौलस्य भोजनं २५ तं विसृज्य तेन भव्य वादिगमनं।

तदानीम् अफीहस्य वृद्धप्रपौत्रो विखोरतस्य प्रपौत्रः सिरोरस्य १
पौत्रोऽवीयेलस्य पुत्रः कीशनामा विन्यामीनवंशीयः कश्चित् महावीर्य्य-
वान् लोक आसीत्। अपरं शौलनामा तस्य परमसुन्दरस्तरुणः पुत्र २
आसीत्, इस्रायेल्वंशेषु तस्मात् सुन्दरः कोऽपि पुरुषो नासीत्, स

२ शिरसा सकललोकेभ्यो दीर्घ आसीत् । अनन्तरं तस्य शौलस्य पितुः
कीशस्य गर्द्दभीषु हारितासु स निजपुत्रं शौलं जगाद त्वं दासानाम्
४ एकं सङ्गिनं कृत्वा गर्द्दभीर्गवेषयितुं याहि । ततः स इफ्रयिमपर्व्वतेन
भ्रमित्वा शालिशाप्रदेशं पर्य्यटत् किन्तु तासाम् उद्देशं न प्राप, अनन्तरं
तौ शालिमप्रदेशं पर्य्यटितवन्तौ तथापि न प्रापतुरनन्तरं स विन्यामी-
५ नदेशं जगाम किन्तु तत्रापि न प्राप । अनन्तरं तयोः सूफप्रदेशं प्राप्तयोः
शौलः स्वसङ्गिनं दासं जगाद, आगच्छावां परावर्त्तावहै नो चेत् मम
६ तातो गर्द्दभीनां चिन्ताया विरम्यावयोः कृते चिन्तयिष्यति । ततः स
कथितवान्, पश्य नगरेऽस्मिन् ईश्वरस्य मनुष्य आस्ते सोतीव मान्यस्ते
यद्यद् उच्यते तत् सर्व्वं सिद्ध्यति तस्माद् आवाम् अधुना तत्स्थानं याव,
७ भवेत्तु स गन्तव्यं मार्गम् आवां दर्शयिष्यति । शौलो दासमवदत् पश्य
गमने कृत आवां तस्मै नराय किं दास्यावः ? आवयोः पात्रस्थभक्ष्यस्य
शेषो जातः । ईश्वरस्य लोकाय दातुम् आवयोः पारितोषिकं नास्ति,
८ आवयोः किमास्ते ? ततः स दासः शौलं प्रत्यवदत्, पश्यात्र मम हस्ते
शेकलस्य चतुर्थांशं रजतं विद्यते पन्थानं दर्शयितुम् ईश्वरीयलोकाय
९ तदेव दास्यामि । ततः शौलो व्याजहार, सम्यगुक्तवान् आवां याव । तत-
१० स्तावीश्वरीयलोकस्य निवासनगरस्य दिशं जग्मतुः । पूर्व्वकाल इस्रा-
येलो मध्ये य ईश्वरस्य समीपे प्रष्टुम् अगच्छन् तै वयं प्रदर्शकस्य समीपं
यामेति वचोऽवादि यतः पूर्व्वकाले भविष्यद्वादिन उपाधिः प्रदर्शक
इत्यासीत् ।
११ यदा तावूर्द्ध्वगामिमार्गेण नगरं गच्छतस्तदा तोयमुत्तोलयितुं बहि-
र्गामिनीः कतिपययुवतीं दृष्ट्वा पृष्टवन्तौ स्थानेऽत्र प्रदर्शकः किं विद्यते?
१२ ता अवदन् विद्यते पश्य स तवाग्रे विद्यते, शीघ्रं गच्छ सोऽद्य
१३ नगरमागमत् यत उच्चस्थाने लोकानाम् अद्य जज्ञो भविष्यति । युवाभ्यां
नगरं प्रविश्यैव भोजनार्थं उच्चस्थाने तस्य गमनात् प्राक् स मृग-
यितव्यो यतस्तस्मिन् नागते लोका भोजनं न करिष्यन्ति, यतस्तेन
जग्यद्रव्येषु आशिष्युक्तायां सत्यां निमन्त्रिता भुञ्जते तस्माद् एतस्मिन्नेव
१४ क्षणे उत्थाय यातं यतोऽधुनैव स युवाभ्यां द्रष्टुं शक्यते । तदानीं तयो
र्नगरं गत्वा नगरस्य मध्यं प्राप्तयोः शिमूयेल उच्चस्थानं गन्तुं स्वनिवेशनात्
निर्गच्छन्नेव तौ साक्षाच्चकार ।
१५ तस्य शौलस्योपस्थितेः पूर्व्वदिवसे परमेश्वरः शिमूयेलस्य कर्णगोचरे

कथितवान्, श्व एतस्मिन् समये मनुष्य एको विन्यामीनप्रदेशात् तव १६
समीपं मया प्रेषयिष्यते मम लोकस्येस्रायेल्वंशस्य राज्ये स त्वयाभिषि-
ष्यतां, स एव पिलेष्टीयानां करेभ्यो मम लोकान् उद्धारयिष्यति यतो मम
लोकानां विलापस्य मम कर्णगोचरीभूतत्वात् तान् प्रति मया कृपादृष्टिः
कृता। अनन्तरं शिमूयेलेन शौले दृष्टे परमेश्वरस्तमवदत्, अहं यमधि १७
त्वां समभाषे सोऽयमेव नरः, एष पुमान् मम लोकान् शासिष्यति।
तदानीं शौलो द्वारमध्ये शिमूयेलं प्राप्य पृष्टवान् विनयेऽहं प्रदर्शकस्य १८
भवनं कुत्र मां वद? ततः शिमूयेलः शौलं प्रत्यवदत्, अहमेव प्रदर्शको १९
ममाग्रेऽग्र उच्चस्थानमागच्छ युवामद्य मया सह भोक्ष्यथः श्वः प्रत्यूषेऽहं
त्वां विस्रक्ष्यामि अपरं तव मनसः समस्तं वाक्यं त्वां ज्ञापयिष्यामि। अद्य २०
दिनत्रयं जातं तव या गर्द्दभ्यो हारितास्तासां कृते मनसि मा चिन्तय
ताः पुनर्लब्धा याताः। इस्रायेल्वंशस्य परमेच्छा कं प्रति? किं त्वां तव
सकलपितृवंशं प्रति नहि? ततः शौलः प्रत्यवदत्, अहं किं विन्या- २१
मीनवंशीयो नहि? इस्रायेल्वंशस्य मध्ये विन्यामीनवंशः किं सर्व्वेभ्यः
क्षुद्रो नहि? अपरं विन्यामीनवंशस्य मध्ये मम गोत्रं किं सर्व्वेभ्यः
क्षुद्रं नहि? तर्हि भवान् मां कुत इत्थं वचो वदति। अनन्तरं शिमू- २२
येलः शौलं तस्य दासञ्च गृहीत्वा भोजनशालाम् आनिनाय, अपरं प्रायेण
त्रिंशत् जनानां निमन्त्रितानां मध्ये तावुत्तमस्थान उपावेशयत्। अपरं २३
शिमूयेलः पाचकं जगाद इदं गोपयेति यत् मांसखण्डमधि तुभ्यं गदित-
वान् तदानय। ततः पाचकेन स्कन्धे तस्योपरि यदासीत् तस्मिंश्चा[illegible] २४
शौलस्य सम्मुखे स्थापिते च शिमूयेलो बभाषे पश्य त्वं गुप्तमिदं खण्डं
स्वसम्मुखे निधाय भुंक्ष्व, यतो मया यस्मिन् काले लोका निमन्त्रितास्तमा-
रभ्य त्वत्कृते रक्षितमिदमास्ते, ततस्तस्मिन् दिवसे शौलः शिमूयेलेन
सार्द्धं भोजनं चकार।

अनन्तरं तेषूच्चस्थानात् नगरम् अवरूढेषु शिमूयेलो गृहपृष्ठे शौलेन २५
सार्द्धं संललाप। अनन्तरं ते प्रत्यूष उत्थितवन्तो यतोऽरुणोदयसमये २६
शिमूयेलो गृहपृष्ठे स्थितं शौलम् आहूय जगाद, उत्तिष्ठ त्वं मया विसृ-
ष्टव्यः। ततः शौल उत्थिते स शिमूयेलश्च वहिर्जग्मतुः। अनन्तरं पथे- २७
नावरोहतोस्तयो र्नगरस्य प्रान्तभागं प्राप्तयोः शिमूयेलः शौलं बभाषे
तव दासम् आवयोरग्रेऽग्रे यातुं वद, किन्तु त्वं कियत्कालं तिष्ठ त्वाम-
हम् ईश्वरस्य वाक्यं श्रावयामि। ततो दासो अग्रेऽग्रे चलितः।

# १० दशमोऽध्यायः ।

१ शौलस्याभिषिक्तत्वं तद्गमनसमये घटनाप्रकाशनं ९ शौलस्यान्यप्रकारमनुष्यभवनं १४ मातुलस्य समीपे शिमूयेलस्य कथाप्रकाशनं १७ शौलस्य राजत्वमनोनीतत्वं २६ तं प्रति लोकानां प्रेमाप्रेमे ।

१ अनन्तरं शिमूयेलस्तैलाधारपात्रमादाय तस्य शिरसि तैलं निषिषेच,
अपरं तं चुम्बित्वा बभाषे परमेश्वरः स्वाधिकारोपरि त्वां राजत्वपदे
२ ऽभिषिक्तवानिति किं सत्यं नहि? त्वमद्य यदा मम समीपाद् गमि-
ष्यसि तदा बिन्यामीनप्रदेशस्य सीमास्थिते सेल्सहे राहेलस्य श्मशान-
समीपे द्वौ जनौ प्राप्स्यसि तौ त्वां वदिष्यतः त्वं या गर्द्दभीरन्वेष्टुं गत-
वान् ताः सर्व्वाः प्राप्ताः, अपरं पश्य तव तातो गर्द्दभीविषयिकां चिन्तां
विहाय पुत्रस्य कृते किं करिष्यामीति वदन् युवयोः कृते शोचति ।
३ अनन्तरं त्वयि तस्मात् स्थानादग्रसरो भूत्वा ताबोरस्थम् एलोन-
वृक्षं प्राप्ते तत्र स्थाने छागवत्सत्रयवाहको जन एकः पूपत्रयवाहको जन
एको द्राक्षारसीयकुतूवाहक एको जनश्च बैथेल ईश्वरस्य समीपगन्तार
४ एते त्रयो जनास्त्वां साक्षात् करिष्यन्ति । ते तव मङ्गलं प्रक्ष्यन्ति तुभ्यं
५ द्वौ पूपौ दास्यन्ति च त्वञ्च तेषां करेभ्यस्तौ ग्रहीष्यसि । अनन्तरं यत्र
पिलेष्टीयानां सैन्यदलानि सन्ति तम् ईश्वरपर्व्वतं प्राप्य त्वं तत्र स्थाने
नगरं प्रविशन् उच्चस्थानाद् अवरोहन्तं मुरजमृदङ्गवंशीवीणावाद्येन
सहितं भविष्यद्वादिनां गणं साक्षात् करिष्यसि ते भविष्यद्वाक्यं
६ वदिष्यन्ति । तदानीं परमेश्वरस्यात्मा त्वयि अधिष्ठास्यति त्वञ्च तैः
सह भविष्यद्वाक्यं वदिष्यसि, अन्यप्रकारो मनुजो भविष्यसि च ।
७ एतेषु सकललक्षणेषु त्वयि घटितेषु त्वं निजोपस्थितप्रयोजनात् करि-
८ ष्यसि यतः परमेश्वरस्त्वया सार्द्धं विद्यते । अनन्तरं त्वं ममाग्रेऽग्रे गिल्-
गलं यास्यसि, पश्चादहं होमबलीन् मङ्गलार्थकबलींश्चोत्स्रष्टुं तव समीपं
यास्यामि, यावदहं तव समीपं न प्राप्नोमि तावत् सप्तदिनानि विलम्बं
करिष्यसि, अपरम् अहं तव कर्त्तव्यं त्वां ज्ञापयिष्यामि ।

९ अनन्तरं तेन शिमूयेलस्य समीपाद् यातुं ग्रीवायां परावर्त्तितायाम्
ईश्वरस्तस्य मानसान्तरं चकार, अपरं तस्मिन् दिने तानि सर्व्वाणि
१० लक्षणानि तस्य प्रत्यक्षीबभूवुः । तयोस्तत्र पर्व्वतम् उपस्थितयो र्भवि-
ष्यद्वादिनां गणस्तेन सार्द्धं मिलितस्तत ईश्वरस्यात्मनि तस्मिन् अधि-
११ ष्ठिते तेषां मध्ये सोऽपि भविष्यद्वाक्यानि वक्तुमारेभे । तदानीं स

भविष्यद्वादिनां मध्ये भविष्यद्वाक्यानि वदतीति वीक्ष्य तस्य पूर्व्वपरि-
चितलोकाः परस्परं जगदुः, कीशसुतस्य किं जातं? शौलोऽपि किं
भविष्यद्वादिनाम् एको जातः? ततस्तत्रत्यो जन एकः प्रतिजगाद १२
तेषां जनकः कः? इत्थं भविष्यद्वादिनां मध्ये शौलोपि किमेको जन इति
वचनं लोकानां मध्ये प्रमाणवाक्यं बभूव। अनन्तरं स भविष्यद्वाक्यकथ- १३
नाद् विरम्य भजनस्थानं जगाम।
अनन्तरं शौलस्य मातुलस्तं तस्य दासञ्च पप्रच्छ युवां क्व गतवन्तौ? १४
सोऽवदत् गर्द्दभौ गवेषयितुं किन्तु गर्द्दभ्यः कुत्रापि स्थाने न विद्यन्त
इति वीक्ष्यावां शिमूयेलस्य समीपं गतवन्तौ। शौलस्य मातुलो बभाषे १५
विनयेऽहं शिमूयेलो युवां किं गदितवान्? तत् मां वद। ततः शौलो १६
मातुलं जगाद सर्व्वा गर्द्दभ्यः प्राप्ता इति स आवां स्पष्टमवदत्। किन्तु
राजत्वमधि शिमूयेलेन यद् उक्तं तत् स तस्मै न कथयामास।
अनन्तरं शिमूयेलो लोकान् मिस्पायां परमेश्वरस्य समीपम् आहूये- १७
स्रायेल्वंशान् जगाद, इस्रायेलः प्रभुः परमेश्वरो वदति मयेस्रायेल- १८
वंशो मिसरदेशाद् वहिष्कृत्यानायि, तथा युष्मदुपद्रवकारिणां मिस्री-
याणां तदन्येषां नृपाणाञ्च करेभ्यो मयैव यूयम् उद्धारयाञ्चक्रिरे। किन्तु १९
समस्तदुर्दशाभ्यो दुर्गतिभ्यश्च युष्मदुद्धर्त्ता यो युष्माकम् ईश्वरो यूय-
मद्य तम् अग्रहीत्वा वदथ अस्माकमुपरि राजानमेकं नियोजय, अतो
यूयम् इदानीं स्वस्ववंशानुसारेण सहस्रसंघानुसारेण च परमेश्वरस्य
समीपम् उपतिष्ठत। अनन्तरम् इस्रायेलः सकलवंशेषु शिमूयेलेन समीप- २०
मानीतेषु बिन्यामीनवंशो निरचीयत। अपरं बिन्यामीनवंशस्य परि- २१
वारेषु समीपमानीतेषु मट्रिपरिवारो निरचीयत। अपरं तन्मध्ये
कीशस्य सुतः शौलो निरचीयत, किन्तु गवेषणे कृते तस्योद्देशो
नाप्तापि। तस्मात् ते परमेश्वरस्य समीपे पुनः पप्रच्छुः स किम् एतत्- २२
स्थानम् आगतोऽस्ति? ततः परमेश्वरः कथयामास पश्य स भाराणां
मध्ये लुक्कायित आस्ते। अनन्तरं ते धावित्वा तस्मात् तमानयामासुः। २३
लोकानां मध्ये ऽवतिष्ठन् सो ऽन्यलोकेभ्यो मस्तकेन दीर्घ आसीत्।
अनन्तरं शिमूयेलो लोकान् जगाद परमेश्वरेणाभिरुचितं पुरुषमेनं २४
वीक्षध्वं लोकानां मध्ये तस्य तुल्यः कोपि न विद्यते, ततो लोका उच्चैः-
स्वरं बभाषिरे, राजा चिरजीवी भवतु। अनन्तरं शिमूयेलो लोकान् २५
राजनीतिं ज्ञापयामास, अपरं तां ग्रन्थे लिखित्वा परमेश्वरस्य साक्षात्

निदधे । अनन्तरं शिमूयेलः सर्व्वान् लोकान् स्वं स्वं निवेशनं यातुं
विससर्ज्ज ।
२६ शौलोऽपि गिबियानगरे स्वनिवेशनं प्रतिजगाम, तथेश्वरो येषां
सैन्यानाम् अन्तःकरणेषु प्रवृत्तिं दत्तवान् तानि च तेन सार्द्धं
२७ जग्मुः । किन्तु पुरुषेणानेन वयं किम् उपकारिष्यामहे इति वाचम्
उक्त्वा केचिद् दुष्टलोकास्तं तुच्छीकृत्योपायनं न ददुः ततः स बधिर
इव स्थितवान् ।

## ११ एकादशोऽध्यायः ।

१ नाहशस्याभियमकथनं ४ शौलस्येस्रायेल्वंशस्य च समीपे दूतप्रेषणं तेन रक्षणं ११
शौलस्याऽभिषिक्तत्वं ।

१ अनन्तरम् अम्मोनीयनाहश आगत्य याबेशगिलियदस्य सम्मुखे
शिबिरं स्थापयामास ततो याबेशीयलोका नाहशं बभाषिरे त्वमस्माभिः
२ सार्द्धं नियमं कुरु, वयं त्वां सेविष्यामहे । अम्मोनीयो नाहशस्तान् प्रति-
जगाद, अहं युष्माकं सर्व्वेषां दक्षिणनेत्रमुत्पाटयिष्यामीत्यम् इस्रायेलः
सकलवंशस्य कलङ्कं स्थापयिष्यामि युष्माभिः समम् एनं नियमं करि-
३ ष्यामि । ततो याबेशस्य प्राचीना अवदन् त्वं सप्तदिनान्यस्मान् प्रति क्षमस्व
वयम् इस्रायेल्वंशस्य सकलप्रदेशं दूतान् प्रेषयामः, ततः कोपि यद्य-
स्मान् न रक्षति तर्हि वयं तव समीपं बहिरागमिष्यामः ।
४ अनन्तरं दूताः शौलस्य वासस्थानं गिबियाम् उपस्थाय लोकानां
कर्णगोचरे तां वार्त्तां कथयामासुस्ततः सर्व्वे लोका उच्चैःस्वरं क्रन्दितु-
५ मारेभिरे । अपरं शौलः क्षेत्राद् वृषभाणां पश्चाद् आगत्य पप्रच्छ
लोकानां किमभूत् ? ते कुतो रुदन्ति ? ततो लोका याबेशीयदूतानां
६ वार्त्तां तस्मै कथयामासुः । तद्वार्त्ताश्रवणसमय ईश्वरस्यात्मनि शौल-
७ मधिष्ठिते तस्य क्रोधोऽतिशयं प्रजज्वाल । अपरं स वृषभद्वयं गृहीत्वा
खण्डखण्डीकृत्य दूतैरिस्रायेलदेशस्य सर्व्वत्र प्रहित्य जगाद यः कश्चित्
शौलस्य शिमूयेलस्य च पश्चात् नागमिष्यति तस्य वृषभान् प्रतीत्थं
कारिष्यते । ततः परमेश्वरात् लोकानां भये जाते ते सर्व्वे एको नर इव
८ बहिर्बभूवुः । अनन्तरं बेषके तेषु गणितेष्विस्रायेल्वंशस्य त्रीणि लक्षाणि
९ यिहूदावंशस्य च त्रिंशत् सहस्राणि लोका आसन् । अनन्तरं त आग-
तान् दूतान् जगदुः, यूयं श्वः प्रखररौद्रसमय उपकारं प्राप्स्यथेति

वाक्यं यूयं गत्वा याबेशगिलियदीयलोकान् वदत, ततो दूता आगत्य
याबेशीयलोकान् तां वार्त्तां जगदुः ततस्त आनन्दिता बभूवुः। अनन्तरं १०
याबेशीयलोका अवदन् श्वो वयं युष्माकं समीपं बहिर्भूय गमिष्यामस्ततो
यूयं यद्यद् क्षेमं मंस्यध्वे तद् अस्मान् प्रति कुरुत। परदिवसे शौलः ११
स्वलोकान् त्रिसंघीकृत्य प्राक्‌यामे शत्रुसैन्यमध्यं प्रविश्य प्रचण्डरौद्र-
पर्य्यन्तम् अम्मोनीयान् पराजिग्ये ततस्तेषाम् अवशिष्टलोकानां विकी-
र्णत्वाद् द्वौ जनावेकस्थाने न तस्थतुः।

अनन्तरं लोकाः शिमूयेलं जगदुः शौलः किमस्माकं राजा भवेदिति १२
वाक्यं क उक्तवान्? तान् मनुष्यान् आनय, वयं तान् हनिष्यामः।
ततः शौलोऽवदत्, अद्य कोऽपि न हन्तव्यो यतोऽद्य परमेश्वर इस्रायेल्- १३
वंशं रक्षितवान्। अनन्तरं शिमूयेलो लोकान् अवदत्, आगच्छत १४
वयं गिल्गलं गत्वा तत्र राज्यं पुनः स्थिरीकरवाम। अनन्तरं सर्व्वे १५
लोका गिल्गलं गत्वा तत्र परमेश्वरस्य साक्षात् शौलं राज्ये ऽभिषिषि-
चुरपरं तस्मिन् स्थाने परमेश्वरम् उद्दिश्य मङ्गलार्थकान् बलीन् उत्-
ससृजुश्च, ततः शौल इस्रायेलः सर्व्वे मनुष्याश्च तत्र महानन्दं चक्रिरे।

## १२ द्वादशोऽध्यायः।

१ शिमूयेलस्य निर्दोषत्वं ६ लोकानाम् अकृतज्ञत्वप्रकाशः १६ मेघगर्ज्जनस्य समये मेघगर्ज्जनेन तेषां भीतत्वं २० शिमूयेलस्य तेभ्यः सान्त्वनोपदेशदानं।

अनन्तरं शिमूयेल इस्रायेलः सकलवंशान् जगाद, पश्यत यूयं मां १
यद्यद् अवोचत युष्माकं तानि वाक्यानि गृहीत्वाहं युष्माकमुपरि रा-
जानमेकं नियुक्तवान्। पश्यतायं राजा युष्माकम् अग्रसरश्चरति, अहञ्च २
वृद्धः पक्वकेशश्च जातः, पश्यत मम पुत्रौ युष्माभिः समं स्तः, बाल्यका-
लमारभ्याद्य यावद् अहं युष्माकं समक्षं चरामि। अतोऽधुना यूयं ३
परमेश्वरस्य तेनाभिषिक्तस्य च साक्षात् मामधि साक्ष्यं दत्त कस्य गौ
र्गर्द्दभो वा मयापहृतः? को वा मया क्लिष्टो वा हिंसितः? अथवा स्वनेत्रे
अन्धीकर्त्तुं कस्य हस्तात् मयोत्कोचो गृहीतः? तदहं परावर्त्य युष्मभ्यं
दास्यामि। ते अवदन् भवान् अस्मान् न क्लिष्टवान् न वा हिंसितवान् ४
कस्यापि हस्तात् किमपि न गृहीतवान्। अनन्तरं स तेभ्योऽकथयत् ५

युष्माकं किमपि द्रव्यं मम करे युष्माभि र्न प्राप्तं, परमेश्वरस्तेनाभिषिक्त-
श्चाद्य तस्य साक्षिणौ विद्येते। ते प्रत्यवदन् साक्षिणौ विद्येते।
६ अनन्तरं शिमूयेलो लोकान् अवदत्, परमेश्वरो मूससं हारोणञ्च
न्ययुङ्क्त स च युष्माकं पूर्व्वपुरुषान् मिसरदेशाद् वहिष्कृत्यानिनाय।
७ अतो यूयम् इदानीम् अवतिष्ठत, युष्मान् युष्माकञ्च पितॄन् प्रति
परमेश्वरेण कृतानि समस्तधर्म्मकर्म्माणि परमेश्वरस्य साक्षात् मया
८ सह युष्माभि र्विचार्य्यन्तां। याकूबि मिसरदेशमागते यदा युष्माकं
पूर्व्वपुरुषाः परमेश्वरस्य साक्षात् प्रार्थनां चक्रिरे तदा स मूसोहा-
रोणौ प्रहितवान् तौ च मिसरदेशाद् युष्माकं पूर्व्वपुरुषान् वहिरा-
९ नीय स्थानेऽस्मिन् वासयामासतुः। अनन्तरं तैः स्वीयप्रभौ परमे-
श्वरे विस्मृते स हात्सोरीयसेनापतेः सीषिरसः पिलेष्टीयानां मोया-
वीयभूपतेश्च करेषु तान् समर्पितवान् ततस्ते तैः सार्द्धं युद्धं चक्रिरे।
१० अनन्तरं वयं परमेश्वरं परित्यज्य वाल्देवान् अस्तारोतदेवींश्चासे-
वामहीति कर्म्मणा पापम् अकुर्म्म, किन्तु त्वमधुना शत्रुहस्ताद् अस्मान्
उद्धारय ततो वयं त्वां सेविष्यामहे इति वदन्तो यदा ते परमेश्वरम्
११ उद्दिश्य प्रार्थयन्त, तदा परमेश्वरो यिरुव्वालं वारकं यिप्तहं शिमूयेलञ्च
प्रहित्य युष्माकं चतुर्दिक्स्थानां रिपूणां करेभ्यो युष्मान् उद्धार ततो
१२ यूयं निर्व्विघ्नम् अवसत। अनन्तरम् अम्मोनवंशीयो राजा नाहशो
युष्माकं प्रतिकूलम् आगच्छतीति दृष्ट्वा युष्मत्प्रभुपरमेश्वरे युष्माकं राजनि
सत्यपि यूयं माम् अवदत न तथा किन्तु राजैकोऽस्मान् शास्तु।
१३ अतो युष्माभिरभिरुचितं याचितञ्च राजानम् एनं पश्यत, परमेश्वरो
१४ युष्माकमुपरि राजानं नियुक्तवान्। यदि यूयं परमेश्वराद् बिभीथ
तर्हि तमेव सेवध्वं तस्याज्ञाः समाचरत परमेश्वरस्य निदेशं न लङ्घध्वं
१५ यूयं युष्मच्छास्ता राजा च प्रभुं परमेश्वरम् अनुगच्छत च। किन्तु यदि
परमेश्वरस्याज्ञा न समाचरथ परमेश्वरस्य निदेशं लङ्घध्वे च, तर्हि
परमेश्वरो युष्मत्पूर्व्वपुरुषाणामिव युष्माकमपि प्रतिकूलो भविष्यति।
१६ इदानीमेव यूयम् अवतिष्ठमाना युष्मत्समक्षं परमेश्वरेण कारिष्यमाणं
१७ महाकर्म्म पश्यत। अद्य किं गोधूमशस्यकर्त्तनस्य समयो नहि? परमे-
श्वरम् उद्दिश्य मया प्रार्थनायां कृतायां तेन मेघगर्जनवर्षणे प्रेषयिष्येते,
ततो यूयं राजप्रार्थनया परमेश्वरस्य साक्षाद् अतीवापराधिनो जाता
१८ इति यूयं दृष्ट्वा भोत्स्यध्वे। अनन्तरं शिमूयेलेन परमेश्वरम् उद्दिश्य

प्रार्थनायां कृतायां परमेश्वरस्तस्मिन्नेव दिवसे मेघगर्जनं वर्षाञ्च प्रेष-
यामास, ततः सर्व्वे लोकाः परमेश्वरात् शिमूयेलाच्च भृशं बिभ्युः। अपरं १९
सर्व्वे लोकाः शिमूयेलं बभाषिरे वयं यन्न म्रियामहे तदर्थं त्वं स्वदासानां
कृते स्वप्रभोः परमेश्वरस्य समीपे प्रार्थयस्व, यतो वयं राजप्रार्थनया
पापोपरि पापं वर्द्धितवन्तः।

अनन्तरं शिमूयेलो लोकान् अवदत्, यूयं मा बिभीत। यद्यपि सर्व्वमे- २०
तत् दुष्टत्वम् आचरत तथापि परमेश्वरस्य पश्चाद्गमनात् न निवृत्य
स्वेषां सर्व्वान्तःकरणैः समं परमेश्वरं सेवध्वं। यूयम् असारान् सुरान् २१
अनुगन्तुं विपथगामिनो मा भवत ते कमप्युपकर्त्तुम् उद्धारयितुं वा न
शक्नुवन्ति यतस्ते असारा एव। परमेश्वरः स्वीयमहानाम्नोऽनुरोधात् २२
स्वलोकान् न परित्यक्ष्यति, युष्माकं स्वलोककरणं परमेश्वराय रोचते।
अहं परमेश्वरस्य विरुद्धं पापं कुर्व्वन् यद् युष्माकं कृते प्रार्थनातो विर- २३
मामि, नैतादृग् भवतु, अहं युष्मान् उत्तमम् ऋजुं मार्गं दर्शयिष्यामि।
यूयं केवलं परमेश्वराद् बिभीत स्वेषां सर्व्वान्तःकरणैः समं सत्यरूपेण २४
तं सेवध्वं, अपरं स युष्माकं कृते यद्यत् महाकर्म्म कृतवान् तद् आलो-
चध्वं। नोचेद् यदि यूयं दुष्टा भवथ, तर्हि यूयं युष्माकं राजा च २५
विनाशं गमिष्यथ।

---

## १३ त्रयोदशोऽध्यायः।

१ मनुष्यलोकानां शौलेन वरणं ५ युद्धकर्म्म पिलेष्टीयानां मेलनं ८ शिमूयेलोऽनप-स्थितेऽपि शौलस्य होमकरणं ११ शौलं प्रति शिमूयेलस्य तिरस्करणं १७ पिलेष्टी-यानां संग्रामचयकथनं १९ इस्रायेलो मध्ये कर्म्मकारस्याभावः।

शौलो वत्सरमेकं राजत्वमकरोत्, अनन्तरं वत्सरद्वयम् इस्रायेल्- १
वंशस्योपरि राजत्वं कृत्वा शौल इस्रायेल्वंशस्य त्रीणि सहस्राणि सैन्यानि २
वव्रे, तेषां द्वे सहस्रे मिक्मसे बैथेलपर्व्वते च शौलेन सह तस्थतुः, अपरं
सहस्रमेकं बिन्यामीनप्रदेशस्थगिबियायां योनाथनेन सार्द्धं तस्थौ; अपरं
अन्यलोकान् स्वस्ववासस्थानं प्रति व्यसृजत्। अनन्तरं योनाथनो गेबास्थितं ३
पिलेष्टीयानां सैन्यदलं जितवान् ततः पिलेष्टीयैस्तद्वार्त्तायां श्रुतायां
शौलो देशस्य सर्व्वत्र तूरीवाद्येन घोषयामास इब्रीयलोकैः श्रूयतां।
ततः पिलेष्टीयानां दलस्य शौलेन जितत्वाद् इस्रायेल्वंशः पिलेष्टीयानां ४
घृणास्पदं बभूवेति वार्त्तां सर्व्वे इस्रायेल्लोकाः शुश्रुवुः। अनन्तरं लोकाः
शौलस्य पश्चाद् गिल्गले मिलिता बभूवुः।

५ अनन्तरं पिलेष्टीया इस्रायेल्वंशेन समं योद्धुं त्रिंशत् सहस्राणि
रथान् षट् सहस्राणि हयारोहिणः सागरतटस्थसिकतावद् बहुसं-
ख्यकानि सैन्यानि च संगृहीतवन्तः, त आगत्य वैथावनस्य पूर्व्वदिशि
६ मिक्मसे शिविरं स्थापयामासुः। तदा क्लेशकारणाद् इस्रायेल्वंशाः
स्वान् विपन्नान् विलोक्य गुहासु स्तम्बेषु पर्व्वतेषु भगुस्थानेषु गर्त्तेषु च
७ स्वान् गोपयाञ्चक्रिरे। इब्रीयाणां केचिद् यर्द्दनस्य पारं गत्वा गाददेशं
गिलियद्देशञ्च जग्मुः। शौलो गिल्गले ऽवातिष्ठत्, किन्तु तस्य पश्चा-
द्गामिनः सर्व्वे मनुष्यास्तकम्पिरे।
८ अनन्तरं शिमूयेलेन यः समयो निरूपितस्तदनुसारेण शौलेन सप्त
दिनानि विलम्बे कृते शिमूयेलो गिल्गलं नागमत् लोकाश्च तस्य समीपाद्
९ विकीर्णा अगमन्। ततः शौलोऽवस्थाने मम समीपं होमबलिं मङ्गलार्थ-
१० कबलींश्चानयतेत्युक्त्वा होमबलिम् उत्ससर्ज। होमबलिदानस्य समाप्तिमात्रे
शिमूयेल उपतस्थौ, ततः शौलस्तं नमस्कर्त्तुं साक्षात् कर्त्तुञ्च बहिर्जगाम।
११ अनन्तरं शिमूयेलो बभाषे त्वया किं कृतं? शौलो निवेदयामास,
लोका मम समीपाद् विकीर्णा गच्छन्ति निरूपिते समये भवानपि नाग-
१२ मत् पिलेष्टीयाश्च मिक्मसे मिलन्तीति वीक्ष्य मया कथितम्, अप्राप्त-
परमेश्वरप्रसादस्य ममान्तिकं पिलेष्टीया गिल्गलम् आगमिष्यन्तीति
१३ भयादहं साहसं कृत्वा होमबलिम् उत्सृष्टवान्। ततः शिमूयेलः शौलं
व्याहरत् अज्ञानेनैव त्वया कर्म्म कृतं, तव प्रभुणा परमेश्वरेणादि-
ष्टाज्ञा च त्वया लंघिता, त्वं यदि तन्नाकरिष्यस्तर्हि परमेश्वरोऽधुना
१४ इस्रायेल्वंशस्योपरि तव राजत्वं नित्यस्थाय्यकरिष्यत्। इदानीं तव राजत्वं
स्थिरं न स्थास्यति, परमेश्वरः स्वमनोभिलषितं जनमेकं निरीक्ष्य स्वलो-
१५ कानां राजत्वे नियोक्ष्यते, यतः परमेश्वरस्याज्ञा त्वया लंघिता। अनन्तरं
शिमूयेल उत्थाय गिल्गलाद् विन्यामीनीयगिबियां प्रतस्थे, ततः शौलस्य
समीपे विद्यमाना लोकास्तेन गणितास्ते संख्यया प्रायेण षट्शतान्यासन्।
१६ शौलस्तस्य पुत्रो योनाथनस्तयोः समीपे विद्यमाना लोकाश्च विन्यामी-
नीयगेबायां तस्थुः, पिलेष्टीयाश्च मिक्मसे शिविरं स्थापयित्वा तस्थुः।
१७ अनन्तरं पिलेष्टीयानां शिविराद् विनाशकसैन्यं सङ्घत्रयं निरगमत्
१८ तस्यैकः संघोऽफ्रामार्गेण शियालदेशं जगाम। द्वितीयः संघो वैथोरोणस्य
पन्थानं प्रति परावृते तृतीयश्च संघः प्रान्तरस्थसिवोयिमोपत्यकाभि-
मुखस्य जनपदस्य पथा जगाम।

तस्मिन् समये इस्रायेलः सकलदेशे कर्म्मकारा नासन् यतः पिलेष्टीया १९
अवदन् इब्रीयलोकैः स्वेषां कृते खड्गाः शल्यानि च न निर्म्मीयन्तां। अत २०
इस्रायेलीयाः सर्व्वे स्वस्वफालं छुरिकां कुठारं कुद्दालं वा शाणयितुं
पिलेष्टीयानां समीपम् अगच्छन्। अथतः फालस्य वा छुरिकाया वा २१
त्रिशूलस्य वा कुठारस्य तीक्ष्णत्वे तथाङ्कुशस्याग्रभागे नष्टे तेऽगच्छन्।
एतत्कारणाद् युद्धकाले शौलयोनाथनयोः सङ्गिलोकानां करेषु खड्गाः २२
शल्यानि वा नासन्, केवलं शौलस्य तत्पुत्रस्य च कर आसन्। अनन्तरं २३
पिलेष्टीयानाम् एकं सैन्यदलं मिक्मसस्य घट्टं वहिर्भूयागच्छत्।

## १४ चतुर्दशोऽध्यायः।

१ पिलेष्टीयानां सैन्यदलं प्रति योनाथनस्याक्रमणं ४ तद्दलस्य पराजयः १९ परास्तलोकानां पश्चाद् गन्तुं लोकानां मेलनं २४ शौलस्य शपथो योनाथनेन च तस्य लङ्घनं ३१ शोणितेन समं मांसभोजनेन लोकानां दोषकथनं ३६ लोकैर्योनाथनस्य रक्षणं ४६ शौलस्य नानाकर्म ४९ शौलस्य वंशावलिश्च।

एकस्मिन् दिवसे शौलस्य सुतो योनाथनः स्वीयास्त्रवाहकं युवानम् १
अवदद् आगच्छावां पारं गत्वा पिलेष्टीयानां सैन्यदलस्य समीपं याव
किन्तु स एतत्कथां स्वपितरं न ज्ञापितवान्। तदा शौलो गिबियायाः २
प्रान्तभागे मिग्रोणस्थदाडिम्बवृक्षस्य मूल आसीत्, अपरं तेन सह
प्रायेण षट्शतानि लोका आसन्। पुरा य एलिः शीलो परमेश्वरस्य ३
याजक आसीत् तस्य पौत्रस्य पीनिहससुतस्येखावोदस्य भ्रातुरहीटूबस्य
पुत्रोऽहियस्तदानीम् एफोदवस्त्रधारक आसीत्, अपरं योनाथनो
वहिर्भूय गत इति लोका नावगच्छन्।

अपरं योनाथनो येन घट्टेन पिलेष्टीयानां सैन्यदलं प्राप्तुम् अचे- ४
ष्टत तस्य घट्टस्यैकपार्श्वे एकं शैलशृङ्गम् अन्यपार्श्वे चान्यत् शैलशृङ्गम्
आसीत् तयोरेकस्य नाम वोत्सेषम् अन्यस्य च नाम सेनिरासीत्।
तयोरेकं शृङ्गं मिक्मसाभिमुखम् उत्तरस्यां दिशि, अन्यच्च गिबिया- ५
भिमुखं दक्षिणस्यां दिश्यासीत्। अनन्तरं योनाथनः स्वीयास्त्रवाहकं ६
युवानम् अवदत्, आगच्छावां पारं गत्वैतेषाम् अच्छिन्नत्वचां सैन्यदलं
याव ततो भवितुं शक्नोति परमेश्वर आवाम् उपकरिष्यति यतो
बहुभिरल्पै र्वा उद्धारयितुं परमेश्वरस्य कापि बाधा नास्ति। तत- ७
स्तस्यास्त्रवाहकस्तमवदत् तव सर्व्वं मनोगतं कुरु, अग्रसरो भव पश्य तव

८ मनोवाञ्छानुसारेणाहं त्वया सार्द्धम् आसे। ततो योनाथनोऽवदत्
पश्यावां पारं गत्वा लोकानामेतेषां समीपं गच्छन्तौ निजौ प्रकाश-
९ याव। ततस्ते यद्यावां वाचमिमां वदन्ति, यावद् वयं युवयोः समीपं
नागच्छामस्तावद् विलम्बं कुरुतं, तदावां स्वस्थाने स्थास्यावस्तेषां समीपं
१० न यास्यावः। किन्त्वस्माकं समीपम् ऊर्द्धम् आगच्छतमिति यदि वदन्ति
तर्ह्यावाम् ऊर्द्ध्वं यास्यावो यतः परमेश्वर आवयो र्हस्ते तान् समर्पयिष्य-
११ त्येतद् आवयोश्चिह्नं भविष्यति। अपरं तौ पिलेष्टीयानां सैन्यदलसमीपे
स्वौ प्राकाशयतां ततः पिलेष्टीया अवदन् पश्यतेब्रीयलोका येषु गर्त्तेषु
१२ लुक्कायिता आसन् तेभ्यो वहिर्भवन्ति। अनन्तरं सैन्यदलस्य लोका
योनाथनं तस्यास्त्रवाहिनञ्च जगदुः, युवाम् अस्माकं समीप ऊर्द्धम्
आगच्छतं वयं युवां किञ्चित् शिक्षयिष्यामः। ततो योनाथनः स्वीयास्त्र-
वाहिनं बभाषे त्वं मम पश्चाद् आगच्छ, परमेश्वर एतान् इस्रायेलो
१३ हस्तगतान् करिष्यति। अनन्तरं योनाथनः करपादैरूर्द्ध्वं जगाम
तदीयास्त्रवाही च तस्य पश्चाद् वव्राज, ततः केचित् मनुजा
१४ योनाथनेन पातितास्तदनुगामिनास्त्रवाहिना हताश्च। योनाथनेन
तदीयास्त्रवाहिना च प्रथमं वृषभद्वयकर्षणयोग्यायां भूमौ प्रायेण
१५ विंशति जना अहन्यन्त। ततः शिविरे क्षेत्रे च कृत्स्नसैन्यदलस्य कम्पो
जातो नाशकलोका अपि चकम्पिरे, तथा भूमिश्च चकम्पे, इत्थम्
१६ ईश्वरकृतो महाकम्पो जज्ञे। अपरं रिपुगणो विभीय विकीर्णत्वं याति
तस्य व्याकुलता वर्द्धते चेति बिन्यामीनीयगिबियास्थिताः शौलस्य
१७ रक्षिणो ददृशुः। तदानीं शौलः स्वीयसंगिनो मनुजान् अवदत्,
अस्माकं मध्यात् को गतस्तत् ज्ञातुं गणना क्रियतां। अनन्तरं तै र्गणनायां
१८ कृतायां योनाथनस्तस्यास्त्रवाही च न विद्येते इति ददृशे। तस्मिन्
समय ईश्वरस्य मञ्जूषेस्रायेलवंशस्य मध्य आसीत् तस्मात् शौलो ऽहियं
जगाद ईश्वरस्य मञ्जूषामत्रानय।
१९ अनन्तरं शौलो यदा याजकं समभाषत तदा पिलेष्टीयानां शिबिर-
मध्य उत्तरोत्तरं कोलाहलो ऽवर्द्धत, ततः शौलो याजकम् अवदत् त्वं
२० कर्म्मणो विरम। अनन्तरं शौलस्तस्य सङ्गिलोकाश्च मिलित्वा योद्धुं जग्मुः।
किन्तु रिपूणां शिबिरे लोकानां परस्परं खड्गाघातेन महाकोला-
२१ हलो बभूव। ये सर्व्वे इब्रीयलोकाश्चतुर्दिक्स्थस्थानेभ्यः पिलेष्टीयैः सार्द्धं
तेषां शिबिरमध्यम् आगमन् ते तदा पूर्व्ववत् पिलेष्टीयानां मध्ये

तिष्ठन्तोऽपि शौलयोनाथनयोः सङ्गिनाम् इस्रायेलीयानां पक्षिणो
बभूवुः । अपरं य इस्रायेलीयमनुजा इफ्रयिमपर्व्वते लुक्कायिता आसन् २२
तेऽपि पिलेष्टीयानां पलायनप्रवृत्तिं निशम्य योद्धुं तेषां पश्चाद् अधा-
वन् । तस्मिन् दिवसे परमेश्वरेणेस्रायेल्वंश उदधारि, युद्धञ्च वैथावनं २३
यावद् विस्तीर्णं बभूव ।

तस्मिन् दिन इस्रायेल्लोका अतीवाक्लिश्यन्त, यतः शौलो मनुजान् २४
एतं शपथमकारयत्, वैरिभ्यः समुचिते फले मया न दत्ते यः कश्चित्
सायंकालात् पूर्व्वम् अन्नं भोक्ष्यते स शप्तो भविष्यति, तत्कारणात् सर्व्वे
मनुजाः किमपि भक्ष्यं नास्वादयामासुः । अनन्तरं सर्व्वे काननं प्राप्तवन्तः, २५
तत्र मृद उपरि बहूनि मधून्यासन् । तत्र स्थाने मधुनो बाहुल्ये सत्यपि २६
अरण्यं प्रविष्टानां लोकानां कोपि किमपि करेणादाय वक्त्रे न ददौ
यतस्ते तस्मात् शपथाद् भीता आसन् । किन्तु तस्य तातः शपथेन मनुजान् २७
यदाशापयत् तस्याश्रवणाद् योनाथनः स्वकरस्य दण्डाग्रं विस्तार्य्य मधु-
कोषेऽमज्जयत् ततः करे वक्त्रम् आनीते तस्य नेत्रे प्रसन्ने बभूवतुः । तदानीं २८
लोकानाम् एकस्तं व्याजहार, तव तातः शपथेन लोकान् इत्था-
शापयत्, यो जनोऽद्य खाद्यं भोक्ष्यते स शप्तो भविष्यति, किन्तु लोकाः
सर्व्वे क्लान्ता अभूवन् । योनाथनोऽवदत् मम जनको लोकान् अदुःखयत् २९
पश्यताधुनैतस्य मधुन आस्वादनात् मम नेत्रे कीदृक् प्रसन्ने जाते ।
यदि रिपुभ्यो लब्धै र्लोठितद्रव्यैरद्य लोकानां यथेष्टं भोजनम् अभ- ३०
विष्यत्, तर्ह्यधुना पिलेष्टीयानां निहननं किं गुरुतरं नाभविष्यत

तस्मिन् दिने ते मिक्मसमारभ्यायालोनं यावत् पिलेष्टीयान् ताडया- ३१
मासुस्ततो लोका अतीव क्लान्ता बभूवुः । अपरं लोका लोठितद्रव्यम् ३२
अभिपत्य मेषान् गा गोवत्सांश्च धृत्वा मृद उपरि हत्वा शोणितेन
समं मांसं भोक्तुमारेभिरे । ततः पश्य लोकाः सशोणितं मांसं भुञ्जमानाः ३३
परमेश्वरस्य विरुद्धं पातकं कुर्व्वन्तीति वार्त्तां निशम्य शौलोऽवदत् युष्मा-
भिराज्ञालङ्घनं क्रियते, यूयम् अधुना मम समीपं वृहन्तं पाषाणमेकम्
आनयत । शौलोऽपरमप्यवदत् यूयं लोकानां मध्यमित्वा तान् वदत ३४
युष्माभिरेकैकस्य गौ र्मेषो वा मम समीपम् आनीयतां स्थानेऽस्मिन् मार-
यित्वा भुज्यताञ्च सशोणितमांसभोजनेन परमेश्वरस्य विरुद्धं पापं मा
क्रियतां । ततस्तस्यां रजन्याम् एकैको जनः स्वां स्वां गां करेणानीय तत्र

३५ स्थाने जघ्नुः। अपरं शौलः परमेश्वराय यज्ञवेदीमेकां निर्म्ममे, सा
परमेश्वरमुद्दिश्य तेन निर्म्मिता प्रथमा यज्ञवेदिः।
३६ अनन्तरं शौलो जगाद, वयम् अस्यां रजन्यां पिलेष्टीयानां पश्चाद्
गत्वारुणोदयं यावत् तेषां द्रव्याणि लोठयाम, तेषाम् एकजनमपि
नावशेषयाम। ततस्ते ऽवदन् त्वया यत् क्षेमं बुध्यते तदेव क्रियतां।
३७ अनन्तरं याजको ऽवदद् वयमत्र स्थाने ईश्वरस्य समीपं याम। अनन्तरं
शौल ईश्वरं पृष्टवान्, मया किं पिलेष्टीयानां पश्चाद् गन्तव्यं? त्वं किं
तान् इस्रायेल्वंशस्य हस्ते समर्पयिष्यसि? किन्तु तस्मिन् काले स तस्मै
३८ नोत्तरं दत्तवान्। तदानीं शौलो व्याहरत् लोकानां मुख्याः सर्व्वे समीपम्
आगच्छन्तु पापमिदं केन जातं तद् युष्माभिः परीक्ष्य विविच्यतां।
३९ इस्रायेल उद्धर्त्तुः परमेश्वरस्य नाम्ना शपथं करोमि, स यदि मम
पुत्रो योनाथनः स्यात् तर्हि तेनापि मर्त्तव्यं। किन्तु लोकानां मध्ये कोपि
४० तस्मै नोत्तरं दत्तवान्। अनन्तरं स सर्व्वान् इस्रायेल्वंशान् जगाद, यूयम्
एकदिशि तिष्ठत, अहं मम सुतो योनाथनश्चान्यस्यां दिशि स्थास्यावः। ततो
४१ लोकाः शौलम् अवदन् त्वया यद् भद्रं बुध्यते तदेव क्रियतां। अनन्तरं
शौल इस्रायेलः प्रभुं परमेश्वरं बभाषे यथार्थं गुटिकापातं करोतु,
४२ ततः शौलयोनाथनौ निरचीयेतां लोकाश्चाहीयन्त। अपरं शौलो
व्याहरत् मम मत्पुत्रस्य योनाथनस्य च विषये गुटिकापातं कुरुत, ततो
४३ योनाथनो निरचीयत। तदा शौलो योनाथनं जगाद त्वया किं कृतं तत्
मह्यं कथ्यतां। योनाथनोऽवदत्, अहं करस्थदण्डेन स्वल्पं मधु गृहीत्वा
४४ खादितवान् पश्य तेन मया मर्त्तव्यं। शौलोऽवदत्, ईश्वरो मह्यम् अमुकं
४५ दण्डं ततोधिकञ्च ददातु हे योनाथन त्वया मर्त्तव्यमेव। किन्तु लोकाः
शौलम् अवदन्, इस्रायेल्वंशस्य येन तादृक् महोद्धारः कृतः स यो-
नाथनः किं मरिष्यति? तन्न भवतु। परमेश्वरो यद्यमरो भवति, तर्हि
तस्य शिरस एकः केशोपि भूमि न पतिष्यति, यतोऽद्य स ईश्वरेण
समं कृतकार्य्यो ऽभवत्। इत्थं लोकै रक्षितो योनाथनो न ममार।
४६ अनन्तरं शौलः पिलेष्टीयानां पश्चाद्गमनात् निवृत्य जगाम, पिले-
४७ ष्टीया अपि स्वीयस्थानं जग्मुः। इस्रायेल्वंशस्य राज्यं लब्ध्वा शौलश्चतु-
र्दिक्षु सकलशत्रुभिरर्थतो मोयाबीयैरम्मोनवंशीयैरिदोमीयैः सोबाया
नृपतिभिः पिलेष्टीयैश्च सह युयोध यं कञ्चनाचक्राम तमेव पराजिग्ये।

इत्थं वीर्य्यं प्रकाश्य तथामालेकीयान् पराजित्य लोठकानां करेभ्य इस्रा- ४८
येल्वंशम् उद्धार।

योनाथनो यिश्विर्मल्किशूयश्चेति नामभिः शौलस्य त्रयः सुता ४९
आसन्, अपरं तस्य द्वे कन्ये ज्येष्ठाया नाम मेरबा कनिष्ठाया नाम
मीखलासीत्। अपरम् अहीमायम्नी नामाहीमासस्य सुता तस्य भार्य्या- ५०
सीत्, अपरम् तस्य पितृव्यस्य नेरस्याब्नेरनामा पुत्रस्तस्य सेनाप-
तिरासीत्। शौलस्य जनकस्य नाम कीश इत्यासीद् अब्नेरस्य जन- ५१
कस्य नाम नेर इत्यासीत् तयो र्जनकस्य नामाबीयेल आसीत्।
शौलस्य यावज्जीवनं पिलेष्टीयैः समं घोरतरे युद्धे सति शौलेन यः ५२
कश्चन बलवान् पुरुषो वीरो वादृश्यत स तेन स्वसमीपं समगृह्यत।

---

## १५ पञ्चदशोऽध्यायः।

१ अमालेकीयान् प्रति शौलस्य प्रेषणं ६ केनीयान् प्रति तस्यानुग्रहो ऽमालेकीयान् प्रति जयश्च १० शौलेनेश्वराज्ञालङ्घनं २४ आज्ञालङ्घनात् शिमूयेलेन तस्य दण्डप्रकाशः ३१ अगागस्य हननं ३४ शिमूयेलस्य स्वस्थानगमनं।

अपरं शिमूयेलः शौलं जगाद परमेश्वरः स्वलोकानाम् अर्थत इस्रा- १
येल्वंशानां राजत्वपदे त्वाम् अभिषेक्तुं मां प्राहिणोत्, अत इदानीं त्वं
परमेश्वरस्य वाक्यानि शृणु। सैन्याध्यक्षः परमेश्वर इति वदति २
मिसराद् इस्रायेलीयानां बहिरागमनकाले ऽमालेकीयास्तान् मार्गे
आक्रामन् इति कार्य्यं मया स्मर्य्यते। त्वं गत्वा तान् अमालेकीयान् आघा- ३
तय, तेषां सर्व्वस्वं निःशेषं विनाशय, तान् न दयस्व यूयं तेषां नारीपुरु-
षबालकस्तनपायिशिशून् गोमेषान् उष्ट्रगर्द्दभांश्च मारयत। अनन्तरं ४
शौलो लोकान् आहूय टिलायीमे गणयामास ततो द्वे लक्षे पदातय
आसन्, तेषां दशसहस्राणि यिहूदावंशीयलोकाः। अनन्तरं शौलो ५
ऽमालेकीयानां नगरमागत्य उपत्यकायां लुक्कायितस्तस्थौ।

शौलः केनीयान् अवदत्, यूयं स्थानान्तरं यात, अमालेकीयानां ६
मध्याद् गच्छत, नो चेत् तैः सह युयमपि मया विनष्टव्याः, किन्तु
मिसराद् इस्रायेल्वंशस्यागमनकाले यूयं तं प्रति प्रेमाकुरुत। ततः
केनीया अमालेकीयानां मध्यात् प्रतस्थिरे। अनन्तरं शौलो हवीलाम् ७
आरभ्य मिसरदेशसम्मुखस्थस्य शूरस्य प्रान्तं यावद् अमालेकीयान्

८ जघान। स अमालेकीयानाम् अगागं राजानं जीवन्तं दधार अपरं
९ सकललोकान् खड्गधारेण निःशेषं जघान। किन्तु शौलो लोकाश्चागागं
उत्तमान् मेषगोपुष्टपशुमेषशावकान् उत्तमवस्तूनि च दयमाना निःशेषं
विनाशयितुम् अनिच्छुका अभवन् किन्तु तुच्छनीयम् अकर्म्मण्यञ्च सर्व्वं
द्रव्यं निःशेषं नाशयामासुः।
१० अनन्तरं परमेश्वरः शिमूयेलं व्याजहार शौलस्य राजकरणात् ममा-
११ नुतापो भवति यतः स मत्तः पराङ्मुखो बभूव मदाज्ञां न साधयामास।
ततः शिमूयेलः शोकान्वितः सन् कृत्स्नां रजनीं परमेश्वरम् उद्दिश्य
१२ प्रार्थयाञ्चक्रे। अपरं शिमूयेले शौलं साक्षात् कर्त्तुं प्रत्यूष उत्थिते पश्य
शौलः कर्म्मिलं प्राप्य जयस्तम्भं स्थापितवान् अनन्तरं तस्मात् प्रस्थाय
१३ गिल्गलं गतवान् इति वार्त्ता शिमूयेलेनाश्रावि। शिमूयेले शौलस्य
समीपम् आगते शौलस्तं जगाद भवान् परमेश्वरेण धन्यो भवतु परमे-
१४ श्वरस्याज्ञा मया साधिता। ततः शिमूयेलो जगाद तर्हि मेषादीनां यत्
क्रन्दनं मम कर्णकुहरम् आयाति यञ्च गवां शब्दो मया श्रूयते स किं?
१५ शौलो ऽवदत्, मनुजा उत्तमान् गोमेषान् अनुकम्प्य तव प्रभुं परमेश्वरम्
उद्दिश्य बलिदानार्थम् अमालेकीयतस्तान् आनयन् अन्ये सर्व्वेऽस्माभि
१६ र्निःशेषं विनष्टाः। तदानीं शिमूयेलः शौलम् अवोचत्, अवतिष्ठ गत-
रजन्यां परमेश्वरो मां यद् अवदत् तदहं त्वां ज्ञापयामि। स उक्तवान्
१७ कथयतु। अनन्तरं शिमूयेलो बभाषे, यत्काले त्वं स्वदृष्ट्या क्षुद्र आसी-
स्तदा किं त्वम् इस्रायेल्वंशानां मूर्द्धा नाजायथाः? अपरं परमेश्वरेण
१८ किम् इस्रायेल्वंशस्य राज्ये नाभ्यषिच्यथाः? अपरं परमेश्वरस्त्वां युद्ध-
यात्रां कर्त्तुं प्रहित्यादिष्टवान्, याहि पापिष्ठान् अमालेकीयान् निःशेषं
१९ विनाशय तेषां लोपं यावत् तैः सह रणं कुरु। अतस्त्वं परमेश्वरस्य
तम् आदेशं कुतो न समाचरः? कुतो लोठितद्रव्याण्यभिपतन् परमेश्व-
२० रस्य साक्षात् पापम् अकार्षीः? शौलः शिमूयेलं जगाद परमेश्वरस्य
वाक्यमहं समाचरितवान् अपरं यां यात्रां कर्त्तुं परमेश्वरो मां प्रहित-
वान् तां कृतवानहम्, अमालेकीयो नृपतिरगागश्च मयानीतोऽमालेकी-
२१ याश्च निःशेषं विनष्टाः। किन्तु मनुजा गिल्गले तव प्रभवे परमेश्वराय
बलिरूपेण निवेदितानि श्रेष्ठद्रव्याणि दातुं लोप्यद्रव्यमध्याद् उत्तमान्
२२ गोमेषान् आनयन्। ततः शिमूयेलोऽवदत् परमेश्वरीयाज्ञाग्रहणेन
परमेश्वरो यथा तुष्यति, तथा स किं होमादिबलिदानैस्तुष्यति?

यज्ञाज्ञायज्ञयाँ यस्तद् बलिदानेभ्य उत्तमं।
वाक्ये मनोनिधानञ्च श्रेयो मेषस्य मेदसः।
पापं गणकतातुल्यं भवेद् श्रादेशलङ्घनं। २३
देवपूजकपाषण्डाविवाबाध्योऽपि पातकी।

त्वं परमेश्वरस्य कथां दूरीकृतवान् अतः कारणात् स त्वां राजत्वाद् दूरीकृतवान्।

अनन्तरं शौलः शिमूयेलम् अवोचत्, अहं लोकेभ्यो भीत्वा तेषां २४
कथायां मनो निधाय परमेश्वरस्याज्ञां तव वाक्यञ्च लङ्घितवान् इति
कर्म्मणा मया पापं कृतं। अहमिदानीं विनये मम पातकं क्षमस्व परमे- २५
श्वरस्य भजनं कर्त्तुं मया समं परावृत्यागच्छ। ततः शिमूयेलः शौलम् २६
अवदत् अहं त्वया समं परावृत्य न यास्यामि यतस्त्वं परमेश्वरस्य वाक्यं
मागृह्णा अतः कारणात् परमेश्वरस्त्वाम् इस्रायेल्वंशस्य राजत्वाद्
अग्राह्यम् अकरोत्। तदा शिमूयेले परावृत्य गन्तुम् उद्यते शौलस्तस्य २७
वस्त्रस्याञ्चलं धृत्वाकर्षत्, ततस्तत् चिच्छिदे। ततः शिमूयेलस्तं जगाद, २८
परमेश्वरोद्य त्वत्त इस्रायेल्वंशस्य राजत्वम् आच्छिनत् त्वत्त उत्तमाय
तव समीपवासिने दत्तवान्। इस्रायेलो विश्वासभूमिरीश्वरो मृषावाक्यं २९
न वक्ति नानुतपति च यतः सोऽनुतापी मनुष्यो न हि। ततः स जगाद ३०
अहं पापमकरवम् अधुना विनये मदीयलोकमुख्यानाम् इस्रायेल्वंशस्य
च समक्षं माम् आद्रियस्व तव प्रभोः परमेश्वरस्य भजनं कर्त्तुं मया सह
परावृत्यागच्छ। ततः शिमूयेलः शौलस्य पश्चात् जगाम, अपरं शौलः ३१
परमेश्वरम् अभजत।

अनन्तरं शिमूयेलो व्याजहार, यूयं स्थानेऽस्मिन् मम समीपम् अमाले- ३२
कीयानां राजानम् अगागं आनयत, तस्माद् अगागः स्वच्छन्दं तस्य
समीपम् आगमत् यतो मृत्युयातना निश्चयं गतेत्यगागेनाबुध्यत। अपरं ३३
तव खड्गेन योषितो यादृग् अपत्यहीना जातास्तादृग् योषितां मध्ये
तव प्रसूरपि सन्तानहीना भविष्यतीत्युक्ता शिमूयेलो गिल्गले परमे-
श्वरस्य साक्षाद् अगागं खण्डखण्डीचकार।

अनन्तरं शिमूयेलो रामतनगरं जगाम, शौलोऽपि शौलीयगिबियां ३४
स्वीयनिवेशनं जगाम। तदारभ्य शिमूयेलो मरणदिनं यावत् शौलं ३५
पुन र्न साक्षात् चकार, तथापि शिमूयेलः शौलम् अनुशुशोच, अपरम्
इस्रायेल्वंशोपरि शौलस्य राजत्वकरणात् परमेश्वरोऽनुतताप।

# १६ षोडशोऽध्यायः ।

१ यिशयस्य समीपं शिमूयेलस्य प्रेरणं ६ यिशयस्य सर्व्वान् पुत्त्रान् दृष्ट्वा तेन दायूदो ऽभिषिक्तत्वं १४ शौलस्य दुष्टात्मनो दमनार्थं [illegible]कद्वारा दायूद आह्वानं १९ राज्ञः साक्षात् तस्योपस्थितिः।

१ अनन्तरं परमेश्वरः शिमूयेलं बभाषे इस्रायेलो राजत्वात् मया
च्यावितः शौलः कतिकालं त्वयानुशोचिष्यते? अधुना त्वं स्वीयशृङ्गं तैलेन
पूरयित्वा गच्छ त्वामहं वैतलेहमीययिशयस्य समीपं प्रेषयामि यतोऽहं
२ तस्य पुत्त्राणां मध्याद् एकं राजानं कर्त्तुं रोचितवान्। ततः शिमूयेलो
ऽवदत्, अहं केन प्रकारेण यास्यामि? वार्त्ताम् इमां श्रुत्वैव शौलो मां
हनिष्यति। परमेश्वरः कथयामास त्वं गोवत्सामेकां करेण गृहीत्वा
३ परमेश्वरमुद्दिश्य यज्ञं कर्त्तुम् आगतोऽहम् इति वाचं वद। अनन्तरं
यज्ञेन यिशयं निमन्त्रय ततः परं त्वया यत् कर्त्तव्यं तदहं त्वां ज्ञापयि-
४ ष्यामि, अहं यमधि त्वाम् आदेक्ष्यामि स एव त्वयाभिषेक्तव्यः। अनन्तरं
शिमूयेलः परमेश्वरस्य वाक्यानुसारेण सर्व्वं कर्म्म कृतवान्। वैतलेहमे
तस्यागमनकाले नगरस्य प्राचीनाः कम्पमानास्तं साक्षात् कृत्वा पप्रच्छुः
५ भवत आगमनस्य कुशलं? सोऽवदत् कुशलम् अहं परमेश्वरमुद्दिश्य यज्ञं
कर्त्तुम् आगमं। यूयं स्वान् पवित्रीकृत्य मया समं यज्ञम् आगच्छतेति
कथयित्वा स यिशयं तस्य सुतांश्च पवित्रीकृत्य यज्ञेन निमन्त्रयामास।
६ अनन्तरं तेष्वागतेषु शिमूयेल इलीयाबं निरीक्ष्य मनसा कथयामास,
७ परमेश्वरेणाभिषेक्तव्यस्तस्य गोचरोऽभवत्। किन्तु परमेश्वरः शिमू-
येलं बभाषे त्वम् अस्य रूपं दीर्घताञ्च मावलोकय, अहं तम् अग्राह्यं
कृतवान्, यतो मनुष्येण यद् दृश्यते तद् असारं, मनुष्येण बाह्यं रूपमेव
८ दृश्यते किन्तु परमेश्वरेणान्तःकरणञ्च दृश्यते। अनन्तरं यिशयोऽबीनादबम्
आहूय शिमूयेलस्य सम्मुखेन गमयाञ्चकार, ततः शिमूयेलो जगाद,
९ एष परमेश्वरेण नाभिरुचितः। अनन्तरं यिशयः शम्मं तस्य सम्मुखेन
गमयाञ्चकार ततः स बभाषे, एषोऽपि परमेश्वरेण नाभिरुचितः।
१० इत्थं यिशयः स्वस्य सप्तपुत्त्रान् शिमूयेलस्य सम्मुखेन गमयाञ्चकार ततः
शिमूयेलो यिशयं व्याहरत्, एतेषां कोऽपि परमेश्वरेण नाभिरुचितः।
११ शिमूयेलो यिशयं बभाषे, युवलोकानां किं शेषो जातः? स कथयामास
केवलं कनिष्ठोऽवशिष्ट आस्ते स मेषान् चारयति। ततः शिमूयेलो
यिशयम् अवदत्, त्वं दूतं प्रहित्य तमानय तस्मिन् अनागते वयं भोक्तुं

नोपवेक्ष्यामः। अनन्तरं स दूतेनानिन्ये स ईषद्रक्तवर्णः सुनयनः सुदृ- १२
श्यश्चासीत्; तदानीं परमेश्वरः कथयाञ्चकार, उत्तिष्ठ सोऽयम् एनम्
अभिषिञ्च। ततः शिमूयेलस्तैलाधारशृङ्गम् आदाय भ्रातॄणां मध्ये तम् १३
अभिसिषेच। अपरं तद्दिनमारभ्य परमेश्वरस्यात्मा दायूदम् अधितस्थौ।
अनन्तरं शिमूयेल उत्थाय रामतं जगाम।

किन्तु परमेश्वरस्यात्मा शौलं परितत्याज परमेश्वरस्यानुमत्या दुष्ट १४
आत्मा तम् उदवेजयत्। अनन्तरं शौलस्य दासास्तं जगदुः परमेश्वरस्या- १५
नुमत्या दुष्ट आत्मा त्वाम् उद्वेजयति, तस्माद् अस्मत्प्रभुरेकं निपुणं १६
वीणावादकं मृगयितुं भवतः समीपस्थदासान् आज्ञापयतु ततो यदे-
श्वरस्यानुमत्या दुष्टात्मा त्वाम् अधितिष्ठति तदा तेन कराभ्यां वादिते
भवान् उपशमं लप्स्यते। अनन्तरं शौलः स्वदासान् आज्ञापयत् यूयं १७
निपुणमेकं वीणावादकं गवेषयित्वा मम समीपमानयत। ततो दासा- १८
नाम् एकोऽवदत् पश्याहं बैतलेहमीययिशयस्य सुतमेकं दृष्टवान् स
वीणां वादयितुं निपुणो महावीरो योद्धा कार्य्ये तत्परो रूपवान्
परमेश्वरोऽपि तेन समं तिष्ठति।

अनन्तरं शौलो यिशयस्य समीपं दूतान् प्रहित्य बभाषे दायूद्नामा १९
तव यः सुतो मेषान् चारयति तं मम समीपं प्रहिणु। ततो यिशयो २०
निजपुत्रं दायूदं तेन सह गर्द्दभमेकं तेन वहनीयान् पूपान् द्राक्षारसकुतूं
छागवत्समेकञ्च शौलस्य समीपं प्रेषयामास। अनन्तरं दायूद् शौलस्य २१
समीपमागत्य तस्य परिचर्य्यां चकार शौलस्य तस्मिन् अतीवा[illegible]
तेन स तस्यास्त्रवाहको बभूव। अनन्तरं शौलो दूतेन यिशयं जगाद २२
त्वामहं विनये दायूदं मम सम्मुखे स्थातुम् अनुजानीहि, स मम प्रिय-
पात्रमभवत्। यत ईश्वरस्यानुमत्या दुष्टात्मना शौले क्लिष्टे दायूद् २३
कराभ्यां वीणां वादयति तेन शौल आप्यायितः सन् उपशाम्यति दुष्टात्मा
च तस्माद् अपसरति।

---

## १७ सप्तदशोऽध्यायः।

१ पिलेष्टीयैः समम् इस्रायेल्लोकानां योद्धुं सज्जीभवनं ४ आहूताश्वीरस्येस्रायेल्-सैन्यानां तुच्छीकरणं १२ सैन्यस्य मध्यं भ्रातॄणां समीपे दायूदो गमनं २० राज्ञः पारितोषिककथाश्रवणं २८ सकुद्भ्रातुः कथाश्रवणं ३० राज्ञः समीप आनीतस्य योद्धुं स्वीकरणञ्च ३९ राज्ञः साधान् कथाकथनं ४८ वीरेण समं युद्धं तस्य वधनं ५२ पिलेष्टीयलोकानां गमनं ५५ शौलस्य समीपे पुनरानीतत्वं।

१ अनन्तरं पिलेष्टीया योद्धुं स्वेषां सैन्यानि सङ्गृह्य यिहूदाप्रदेशस्थ-
सोखो मिलित्वा सोखसेकयोर्मध्य एफसदम्मीमे शिविरं स्थापयामासुः।
२ अपरं शौल इस्रायेल्लोकाश्च मिलित्वा पिलेष्टीयानाम् अग्रत एलाख्यो-
३ पत्यकायां शिविरं स्थापयामासुः। ततः पिलेष्टीया एकस्यां दिशि
गिराविस्रायेल्वंशीयाश्चान्यस्यां दिशि गिरौ तस्थुस्तेषां मध्ये चोपत्यकै-
वासीत्।

४ अनन्तरं पिलेष्टीयानां शिविराद् एको मध्यस्थो वहिर्बभूव, गातीयो
५ जाल्यत इति तस्य नाम, स सार्द्धषड्हस्तदीर्घ आसीत्। तस्य शिरसि
पित्तलमयं शिरस्त्रमासीत्, अपरं स पञ्चसहस्रशेकलपरिमितेन पित्त-
६ लवर्म्मणा सज्जित आसीत्। अपरं तस्य पादौ पित्तलपत्रैराच्छतावास्तां
७ तस्य स्कन्धे पित्तलमयं क्षुद्रशल्यमासीत्। तस्य महाशूलस्य दण्डस्तन्तु-
वायस्य तन्तुदण्डतुल्य आसीत् तच्छूलस्याग्रं षट्शतशेकल्लौहस्यासीत्।
८ अपरं तस्याग्रेऽग्र एकः फलकपाणिश्चलितवान्। अनन्तरं सोऽवतिष्ठमान
इस्रायेल्वंशस्य सैन्यश्रेणीः सम्बोध्य प्रोच्चै र्जगाद यूयं योद्धुं सैन्यं रचयितुं
कुतो वहिरागच्छत? अहं किम् एकः पिलेष्टीयो नहि? अपरं यूयं किं
शौलस्य दासा न भवत? यूयं स्वेषां मध्यात् जनमेकं वृणुध्वं स ममा-
९ न्तिकम् आगच्छतु। स यदि मया सह युद्धा मां पराजित्य हन्ति तर्हि
वयं युष्माकं दासा भविष्यामः, किन्तु यद्यहं तं पराजित्य हन्मि तर्हि
१० यूयम् अस्माकं दासा भूत्वा अस्मान् परिचरिष्यथ। स पिलेष्टीयो
ऽपरमपि जगाद, अद्याहम् इस्रायेल्वंशान् स्पर्द्धये, यूयं नरमेकं दत्त
११ सोऽहञ्च परस्परं युद्धं कुर्व्वः। तदा शौलः सर्व्व इस्रायेल्वंशाश्च पिले-
ष्टीयस्य तानि वाक्यानि श्रुत्वा निराशा अतीव भीताश्च बभूवुः।

१२ वैतलेहमयिहूदानिवासी य इफ्राथीययिशयनामको दायूदस्तात
आसीत्, तस्याष्टौ सुता आसन् अपरं स शौलस्य समये लोकै-
१३ र्वृद्धगणमध्येऽगण्यत। अपरं यिशयस्य ज्येष्ठपुत्रत्रयं शौलस्य पश्चाद्
योद्धुम् अगमत, तस्य तत्संग्रामगामिनां त्रयाणां पुत्राणां ज्येष्ठस्य नामे-
लीयावो द्वितीयस्य नामावीनादवस्तृतीयस्य नाम च शम्म आसीत्
१४ अपरं दायूद् कनिष्ठ आसीत् ज्येष्ठास्त्रयो जनाः शौलस्यानुगामिनो
१५ बभूवुः। किन्तु दायूद् स्वतातस्य मेषान् चारयितुं शौलस्य समीपाद्
१६ वैतलेहमं गमनागमने कृतवान्। अपरं स पिलेष्टीयो नरश्चत्वारिंशद्
दिनानि यावत् प्रातःकाले सन्ध्याकाले च तेषां समीपे स्वं दर्शयामास।

तदानीं यिशयो निजपुत्रं दायूदं जगाद त्वम् अधुना निजभ्रातृगणार्थम् १७
इदम् एकैफाम्भृष्टशस्यं दशपूपांश्च गृहीत्वा युद्धस्थाने भ्रातृणां समीपं
तूर्णं गच्छ। एतान् दश दधिभवपूपांश्च गृहीत्वा तेषां सहस्रपतये १८
देहि, अपरं तव भ्रातॄन् मङ्गलं पृष्ट्वा तेषां चिह्नमेकं गृहाण।

तदानीं शौलो यिशयस्य पुत्राः सर्व्वे इस्रायेल्वंशाश्च एलाख्योपत्य-
कायां तिष्ठन्तः पिलेष्टीयैः सह योद्धुम् उद्यता आसन्। अनन्तरं दायूद्
प्रत्यूष उत्थाय मेषगणम् अन्यरक्षकस्य करे समर्प्य यिशयस्याज्ञानु- १९
सारेण तद् भारं गृहीत्वा जगाम। अपरं यस्मिन् काले सैन्यानि
श्रेणीभूय वहि र्यान्ति संग्रामाय सिंहनादं कुर्व्वन्ति च तदानीं दायूद् २०
परिखायाः समीप उपतस्थौ। इस्रायेल्वंशाः पिलेष्टीयाश्च परस्परं सम्मु- २१
खासम्मुखीभूय सैन्यश्रेण्यौ रचयाञ्चक्रुः। अनन्तरं दायूद् भाररक्षकस्य २२
करे निजभारं निधाय सैन्यश्रेण्या मध्यं धावन् निजभ्रातॄणां समीपम्
आगत्य तेषां मङ्गलं पप्रच्छ। अपरं तैः सार्द्धं तस्य संलपनसमये २३
पिलेष्टीयानां श्रेणीमध्यात् स गातीयजालूताख्यः पिलेष्टीयो नरो मध्यस्थ-
रूपेणागत्य पूर्व्ववद् वाचं वक्ति स्म ताश्च दायूद् शुश्राव। तं पुरुषं
वीक्ष्य इस्रायेल्वंशस्य सर्व्वे लोका अतीव भीत्वा तस्य सम्मुखात् २४
पलायाञ्चक्रिरे। अनन्तरम् इस्रायेल्वंशस्य मनुजाः परस्परम् ऊचिरे २५
योऽयं मनुज आयाति एनं किं यूयं पश्यथ? एष इस्रायेल्वंशं स्पर्द्ध-
यितुम् आगमत्। एनं यो जनो हनिष्यति राजा तं विपुलधनै र्ध[illegible]न्तं
करिष्यति निजदुहितरञ्च विवाहयिष्यति तस्य पितृवंशमपीस्[illegible]ल्वंश-
मध्ये निष्करं करिष्यति। अनन्तरं दायूद् स्वसमीपे तिष्ठतो मनुजान् २६
पप्रच्छ, अस्य पिलष्टीयस्य हननेन यो जन इस्रायेल्वंशम् अपमानात्
मोचयिष्यति तं प्रति किं कारिष्यते? कोऽयम् अच्छिन्नत्वक् पिलेष्टीय- २७
लोको यद् अमरेश्वरस्य सैन्यश्रेणी र्निन्देत्? ततो मनुजाः पूर्व्ववद्
ऊचुः, तस्य हन्त्रे तत् फलं दास्यते।

अपरं तै र्लोकैः समं तस्य संलपनं निशम्य तस्य ज्येष्ठो भ्रातेलीयावो २८
दायूदो विरुद्धं क्रोधेन प्रज्वल्य बभाषे, त्वं कुतोऽत्रागतोऽसि? तेऽल्पमेषाः
प्रान्तरमध्ये कस्य समीपे त्वया समर्पिताः? अहं तव प्रगल्भतां मनोदुष्ट-
ताञ्च जानामि त्वं युद्धं द्रष्टुमागतोऽसि। दायूद् अवदत्, मया किम् २९
अपराद्धं? एतत् किं वाङ्मात्रं नहि?

अनन्तरं स तस्माद् अन्यस्य कस्यचित् समीपं परावृत्य तथैव पप्रच्छ, ३०

३१ अतस्ते लोका अपि तस्मै पूर्व्ववद् उत्तरं ददुः। तदानीं दायूदा यद्यद् उक्तं
तस्य किंवदन्त्यां शौलेन श्रुतायां शौलस्तं स्वसमीपम् आगन्तुम् अनुजज्ञौ।
३२ अपरं दायूद् शौलम् अवदत्, तस्य कृते कस्यापि मानसं निराशं
३३ न भवतु। भवत एष दासो गत्वा तेन पिलेष्टीयेन समं योत्स्यति। ततः
शौलो दायूदम् अवदत्, त्वं तं पिलेष्टीयम् आक्रम्य तेन समं योद्धुं
३४ न शक्नोषि यतस्त्वं बालः स च बाल्यकालमारभ्य योद्धा। दायूद्
३५ शौलं बभाषे, भवत एष दासोऽहं मत्तातस्य मेषान् अचारयं, तन्मध्ये
सिंहभल्लूकावागम्य तुतयोरेकेन व्रजमध्यात् मेषवत्से हृतेऽहं तस्य
पश्चाद् गत्वा तं मारयित्वा तस्य मुखात् तं वत्सम् उदधारयं, अनन्तरम्
अन्यस्मिन् मम विरुद्ध उत्थितेऽहं तस्य श्मश्रु धृत्वा तं ताडयन् व्यापा-
३६ दितवान्। इत्थं भवतो दासेन सिंहभल्लूकौ व्यापादितौ, अमरेश्वरस्य
सैन्यश्रेणीनां निन्दको योऽयम् अच्छिन्नत्वक् पिलेष्टीयः सोऽपि तयोरे-
३७ कस्य तुल्यो भविष्यति। दायूद् अपरमपि व्याजहार, सिंहभल्लूकयोः
करतो ममोद्धर्त्ता परमेश्वरोऽस्य पिलेष्टीयस्य करतोऽपि माम् उद्धारयि-
ष्यति। ततः शौलो दायूदम् अवदत् याहि परमेश्वरस्तव सङ्गी भवतु।
३८ अनन्तरं शौलो निजसज्जया दायूदं सज्जयन् तस्य शिरसि पित्तल-
३९ मयं शिरस्त्रं निदधे तस्य गात्रे वर्म्म च ददौ। अपरं दायूद् तत्सज्जो-
परि खड्गं बद्ध्वा गन्तुमुद्यतः, किन्तु दायूद् पूर्व्वं तस्याः परीक्षाया
अकरणात् शौलमवदत्, अनया सज्जया नाहं गन्तुं शक्नोमि यतो
४० मया तस्याः परीक्षा नाकारि तस्माद् दायूद् तां विमुमुचे। अपरं
स निजयष्टिं करेण जग्राह स्रोतसश्च पञ्च मार्ज्जितपाषाणान् कृत्वा
मेषपालकयोग्ये स्वीयपात्रे ऽर्थतः सम्पुटे निदधे, अपरम् आक्षेपक-
४१ गुणं करेणादाय तस्य पिलेष्टीयस्याग्रं जगाम। ततः पिलेष्टीयोऽग्रं गच्छन्
दायूदः समीपवर्त्ती बभूव, तस्य फलकवाही च तस्याग्रेऽग्रे चलितवान्।
४२ अपरं पिलेष्टीयेन चतुर्दिशं निरीक्ष्य दायूदे सन्दृष्टे स तं तुच्छं बुबुधे
४३ यतः सोऽल्पवयस्क ईषद्रक्तवर्णः सुन्दरवदनश्चासीत्। अनन्तरं स पिले-
ष्टीयो दायूदं जगाद, किमहं कुक्कुरो यत् त्वं दण्डं गृहीत्वा मम
समीपम् आगच्छसि? अपरं स पिलेष्टीयः स्वदेवानां नामानि वदन्
४४ दायूदं शशाप। पिलेष्टीयो दायूदम् अपरमपि जगाद, त्वं मम समी-
पम् आगच्छाहं तव मांसं खगेभ्यः प्रान्तरस्य पशुभ्यश्च ददामि।
४५ ततो दायूद् तं पिलेष्टीयं जगाद, त्वं खड्गं शूलं शल्यञ्च गृहीत्वा मम

समीपम् आगच्छसि किन्त्वहं त्वया निन्दितस्य सैन्याधिपस्य प्रभोः पर-
मेश्वरस्यार्थत इस्रायेलः सैन्यश्रेणीनाम् ईश्वरस्य नाम्ना तव समीपम्
आगच्छामि। अद्य परमेश्वरस्त्वां मम हस्तगतं करिष्यति तेनाहं त्वामा- ४६
हत्य तव शिरश्छेदं करिष्यामि पिलेष्टीयानां सैन्यानां शवांश्चाद्य
खगेभ्यो वनपशुभ्यश्च दास्यामि, तेनेस्रायेलः सहाय एक ईश्वर आस्त
इति पृथिवीनिवासिनः सर्व्वे ज्ञास्यन्ति। अपरं परमेश्वरो न खड्गशूलै ४७
र्जेतेत्यपि समागता इमे लोका ज्ञास्यन्ति यतो युद्धं परमेश्वरस्यैव तेन
च यूयम् अस्माकं करेषु समर्पयिष्यध्वे। अनन्तरं तस्मिन् पिलेष्टीय ४८
उत्थाय दायूदा सह मेलितुं समुपस्थिते दायूद् शीघ्रं पिलेष्टीयेन समं
मेलितुं सैन्यश्रेण्याः सम्मुखेन दधाव। अनन्तरं दायूद् स्वसम्पुटके करं ४९
दत्त्वा पाषाणमेकं वहिष्कृत्याश्मक्षेपकगुणेन परिक्षिप्य तस्य पिलेष्टीयस्य
भाले तादृग् आजघान येन स पाषाणस्तस्य भालं प्रविवेश तेन स भूमा-
वधोमुखीभूय निपपात। इत्थं दायूद् गुणपाषाणाभ्यां तं पिलेष्टीयं ५०
जित्वाहत्य मारयामास किन्तु दायूदः करे खड्गो नासीत्। अनन्तरं ५१
दायूद् धावन् तस्य पिलेष्टीयस्य पार्श्वे तिष्ठन् तस्य खड्गं गृहीत्वा कोषाद्
वहिष्कृत्य तं हत्वा तस्य शिरश्चिच्छेद। अनन्तरं पिलेष्टीयाः स्वेषां
वीरस्य मरणं वीक्ष्य पलायाञ्चक्रिरे।

तत इस्रायेलो यिहूदायाश्च लोका उत्थाय जयनादं कृत्वा समभूमेः ५२
प्रान्तम् इक्रोणस्य गोपुराणि च यावद् पिलेष्टीयानां पश्चाद् दधावुः ततः
पिलेष्टीयानां हतलोकाः शारयिमस्य वर्त्मनि गातस्येक्रोणस्य च स[illegible] नि-
पेतुः। अनन्तरम् इस्रायेलवंशीयाः पिलेष्टीयानां पश्चाद् गमनात् परावृ- ५३
त्यागत्य तेषां शिविरं लोठयामासुः। अनन्तरं दायूद् तस्य पिलेष्टीयस्य ५४
शिरो गृहीत्वा यिरूशालमम् आनिनाय तस्य सज्जाश्च निजदूष्ये निदधे।

तस्य पिलेष्टीयस्य विरुद्धं दायूदो निर्गमनकाले शौलस्तं विलोक्य ५५
निजसेनापतिम् अब्नेरं पप्रच्छ, हे अब्नेर, एष युवा कस्य सुतः?
अब्नेरोऽवदत्, हे राजन् अहं तव जीवनस्य शपथं कृत्वा वदामि,
तदहं न जानामि। ततो राजा जगाद, अयं युवा कस्य सुत इति ५६
त्वं पृच्छ। अनन्तरं पिलेष्टीयस्य हननाद् दायूदः प्रत्यागमनकाले अब्- ५७
नेरः पिलेष्टीयस्य शिरः करेण वहन्तं दायूदं शौलस्य समीपम् आनि-
नाय। तदा शौलस्तं पृष्टवान्, हे युवन् त्वं कस्य सुतोऽसि? दायूद् ५८
प्रत्यवदद् अहं भवतो दासस्य बैतलेहमीययिशयस्य सुतोऽस्मि।

# १८ अष्टादशोऽध्यायः ।

१ दायूदं प्रति योनाथनस्य प्रीतिः ५ शौलस्येर्ष्या १० दायूदं हन्तुं चेष्टा १२ भीतत्वं १७ ज्येष्ठकन्यां दातुं स्वीकारः २० कनिष्ठकन्याञ्च दातुं स्वीकरणं २८ दायूदः कृत-कार्य्यताकारणात् भीतिवृद्धिश्च ।

१ अपरं शौलेन सह तस्य कथायां समाप्तायां योनाथनस्य प्राणानां
दायूदः प्राणैः सह मिलितत्वाद् योनाथनः स्वीयप्राणतुल्ये तस्मिन् प्रेम
२ कर्त्तुमारेभे । अपरं शौलस्तस्मिन् दिवसे तं गृहीत्वा तस्य तातस्य निवे-
३ शनं गन्तुं न ददौ । अपरं योनाथनो दायूदि स्वप्राणतुल्यं प्रेम कुर्व्वन्
४ तेन समं नियममेकं चकार । अपरं योनाथनो निजगात्रस्थं वसनं
सज्जां खड्गं धनुः कटिबन्धनञ्चापि स्वस्माद् विमोच्य दायूदे दत्तवान् ।
५ अनन्तरं शौलो दायूदं यद्यत् कर्म्म कर्त्तुं प्रहितवान् दायूद् गत्वा
तदेव सफलं चकार, ततः शौलो योद्धृणाम् अधिपतित्वपदे तं न्ययुङ्क्त,
६ अपरं सर्व्वलोकाः शौलस्य भृत्याश्च तस्मिन् अतुष्यन् । अनन्तरं पिल-
ष्टीयं वीरं हत्वा दायूदः प्रत्यागमनकाले लोकेषूपतिष्ठमानेषु योषितो
मुरजध्वनिना हर्षनादेन त्रितन्त्रीवाद्येन च नृत्यं गानञ्च कुर्व्वत्यः शौल-
७ राजं प्रत्युद्यातुम् इस्रायेलवंशस्य सकलनगरेभ्यो वहिर्भूयाजग्मुः । अपरं
वाद्यवादनकाले योषितः परस्परम् ऊचिरे,

शौलेनारिसहस्राणि हतानि समराङ्गने ।
दायूदापि विपक्षाणामयुतानि हतानि च ॥

८ तद्वाक्येनासन्तुष्टः शौलो भृशं क्रुद्धो जगाद ता दायूदम् अयुतानां मां
केवलं सहस्राणाम् जेतारमवदन्, एतेन राजत्वं विना तस्यापरं किम्
९ अलब्धं? तं दिवसमारभ्य शौलो दायूदं प्रति कुदृष्टिं चकार ।
१० परदिवसे ईश्वरस्यानुमत्या दुष्ट आत्मनि शौलमाश्रिते स गेहमध्ये
प्रलापवाक्यानि वक्तुमारेभे, अपरं दायूद् प्रतिदिनं यथाकरोत् तथा
११ कराभ्यां वादयामास ; तदानीं शौलस्य करे शूलकम् आसीत् शौल-
स्तच्छूलं लक्ष्ये निक्षिप्य जगाद, अहं दायूदं भित्त्या समं व्यत्स्यामि किन्तु
दायूद् वारद्वयं तस्य समीपाद् अपससार ।
१२ अपरं परमेश्वरः शौलं विहाय दायूदा सार्द्धं तस्थौ तेन शौलो
१३ दायूदो बिभयाञ्चकार । ततः शौलः स्वसमीपात् तं दूरयित्वा सहस्रसे-
नापतिपदे नियुक्तवान् ततः स लोकानाम् अग्रसरो भूत्वा गमनागमने
१४ चकार । अनन्तरं दायूद् स्वीयसकलयात्रासु कृतकार्य्यो बभूव परमे-

श्वरस्तु तेन समं तस्थौ। ततो दायूद् कृतकार्य्य एवेति दृष्ट्वा शौलस्तस्माद् १५
विभयाञ्चकार। किन्त्विस्रायेलो यिहूदायाश्च सर्व्वे वंशा दायूदि १६
पिप्रियिरे यतः स तेषाम् अग्रसरो भूत्वा गमनागमने कृतवान्।

अनन्तरं शौलो दायूदं जगाद, मेरवानामिकां मम ज्येष्ठां दुहितरं १७
पश्य, अहं तां भार्य्यार्थं तुभ्यं दास्यामि, त्वं मम पक्षे वीर्य्यवान् भूत्वा
परमेश्वरस्य कृते संग्रामं कुरु। यत एष मम करेण न हन्तव्यः पिले-
ष्टीयानां हस्ते हन्यतामिति वाचं शौलो मनसा बभाषे। दायूद् शौलम् १८
उक्तवान् अहं कः, मम प्राणाश्च के, इस्रायेल्वंशमध्ये मम पितृवंशश्च कः
यदहं नृपस्य जामाता भवेयं? अपरं शौलस्य दुहितु र्मेरवाया दायूदं १९
प्रति दानसमय उपस्थिते सा मिहोलातीयाद्रीयेलाय भार्य्यार्थम् अदायि।

अनन्तरं शौलस्य कन्या मीखला दायूदि प्रेमाकरोत्, ततः शौल- २०
स्तद्वार्त्तां श्रुत्वा समतुष्यत्। अनन्तरं शौलः कथयामास, अहम् एनां २१
दुहितरं तस्मै दास्यामि सा तस्योन्माथो भवतु पिलेष्टीयैः स हन्यतां।
अतः शौलो द्वितीयवारं दायूदम् अवदत् तमद्य मम जामाता भव।
अनन्तरं शौलो निजभृत्यान् आदिदेश, यूयं गुप्तं दायूदा समम् २२
आलप्येदं वदत, पश्य राजा त्वयि तुष्यति तस्य सर्व्वे भृत्या अपि त्वयि
प्रीयन्ते अतस्त्वं नृपस्य जामाता भवितुम् अर्हसि। ततो दायूदः कर्ण- २३
गोचरं शौलस्य भृत्यैस्तादृशेषु वाक्येषूक्तेषु दायूद् अवदत् राजजामातृत्वं
किं युष्माभि र्लघु बुध्यते? अहं दरिद्रोऽल्पमान्योऽस्मि। अनन्तरं २४
शौलस्य भृत्यास्तं तद्वृत्तान्तं ज्ञापयामासुः, दायूद् तानि वाक्यानि वक्ति।
ततः शौलः कथयामास, युष्माभि र्दायूदे कथैषा कथ्यतां, राजा त्वत्तः २५
किञ्चन पणं न याचते केवलं नृपस्य शत्रुप्रतीकारार्थं पिलेष्टीयानां शतं
लिङ्गाग्रत्वचो याचते. यतः शौलः पिलेष्टीयानां करै र्दायूदं निपातयितुं
मतिञ्चकार। अनन्तरं राजभृत्यैस्तानि वाक्यानि ज्ञापितो दायूद् २६
राजजामाता भवितुं भद्रं मेने। तदानीं विवाहस्य समयेऽनुपस्थिते २७
दायूद् तस्य मनुजाश्च गत्वा पिलेष्टीयानां द्वे शते लोकान् जघ्नुः स च
तेषां लिङ्गाग्रत्वच आनिनाय तासु राजजामातृत्वस्य पणरूपं राज्ञे
दत्तासु शौलः स्वदुहितरं मीखलां तस्मै ददौ।

अनन्तरं परमेश्वरो दायूदा सममास्त इति शौलेन चाक्षुषं दृष्टं, २८
शौलस्य दुहिता मीखला च तस्मिन् अप्रीयत। अतो हेतोः शौलो दायूद- २९
मधि पूर्व्वस्मादधिकं बिभयाञ्चकार ततः शौलो यावज्जीवनं दायूदः शत्रु-

३० तस्थौ। अनन्तरं पिलेष्टीयानाम् अधिपतयो वहिरगच्छन् अपरं यति वारान् वहिरगच्छन् तति वारान् शौलस्य सकलभृत्यानां मध्ये दायूद् कृतकार्य्यो बभूव तेन तस्य नामातीव मान्यं बभूव।

## १९ ऊनविंशोऽध्यायः।

१ दायूदा सार्द्धं योनाथनस्य संलपनं ४ दायूदमधि पितुः समीपे निवेदनं ८ दायूदं प्रति शौलस्य कुपत्तं कम्पं तस्य गेहं लोकप्रेषणं १९ दायूदः पलायनं १८ रामत शिमूयेलस्य समीपे गमनं।

१ अनन्तरं शौलो दायूदं हन्तुं निजपुत्रेण योनाथनेन सकलभृत्यैश्च
२ समं मन्त्रणां चकार। किन्तु शौलस्य पुत्रो योनाथनो दायूदि भृशम्
अप्रीयत। अतो योनाथनो दायूदं जगाद, मम तातः शौलस्त्वां हन्तुं
चेष्टते तस्मादहं विनये त्वं प्रातःकाले सावधानो भूत्वा गुप्तस्थानम्
३ आश्रित्य कम्रस्तिष्ठ। अपरं त्वं यत्र क्षेत्रे स्थास्यसि तत्र स्थाने वहि-
र्भूयाहं गत्वा निजतातस्य पार्श्वे तिष्ठन् त्वामधि निजतातं सम्भाषिष्ये,
यच्च द्रक्ष्यामि तत् त्वां ज्ञापयिष्यामि।
४ अनन्तरं योनाथनः स्वतातस्य शौलस्य समीपे दायूदमधीति सद्वा-
क्यानि व्याजहार, राजा निजदासस्य दायूदः प्रतिकूलं पातकं न
करोतु, यतस्तेन भवतः किमपि नापराद्धं तस्य कर्म्मभिश्च भवान् अती-
५ वोपकृतः। स स्वप्राणान् निक्षिप्य तं पिलेष्टीयम् अवधीत् ततः पर-
मेश्वरेणेस्रायेलवंशस्य महोद्धारे कृते भवान् तद् दृष्ट्वानन्दितवान्।
अत इदानीं भवान् कुतो दायूदं हत्वा निर्दोषस्य शोणितपातेन पातकी
६ भविष्यति? ततः शौलो योनाथनस्य वचसि मनो निधाय शपथं कृत्वा
७ व्याहरत् परमेश्वरो यद्यमरोऽस्ति तर्हि स न घानिष्यते। अनन्तरं
योनाथनो दायूदम् आहूय तद्वृत्तान्तं तं ज्ञापयामास। अपरं शौलस्य
समीपं योनाथनेनानीतो दायूद् पूर्व्वकालवत् तस्य साक्षात् तस्थौ।
अनन्तरं पुनश्च रणे उपस्थिते दायूद् वहिर्गत्य पिलेष्टीयैः समं
युद्ध्वा तेषां महानिहननं कृतवान् ते च तस्य सम्मुखात् पलायाञ्चक्रिरे।
९ अनन्तरं दुष्ट आत्मा परमेश्वरस्यानुमत्या शौलम् आश्रितवान् तदा
शूलहस्तः शौलो निजगेहे उपाविशत् दायूद् अपि कराभ्यां वाद्यम्
१० अवादयत्। एतस्मिन् काले शौलः शूलेन दायूदं भित्त्या समं वेद्धुम्

अयतत, किन्तु स शौलस्य सम्मुखाद् अपासरत् तेन शूलेन भित्ति-
र्विद्धा ततो दायूद् तस्यां रजन्यां पलाय्य रक्षां प्राप। अनन्तरं ११
शौलो दायूदं निरीक्षितुं प्रातःकाले हन्तुञ्च तद्गेहसमीपं दूतान् प्रेष-
यामास, तदानीं दायूदो जाया मीखला तद्वार्त्तां तं श्रावयित्वा जगाद,
यदि त्वम् अस्यां रजन्यां प्राणान् न रक्षसि तर्हि श्वो घानिष्यसे।
अनन्तरं मीखला वातायनेन दायूदम् अवरोहयामास, ततः स गत्वा १२
पलायनं कृत्वा रक्षां प्राप। अपरं मीखला पुत्तलिकामेकां गृहीत्वा १३
शय्यायां शाययामास तस्याः शिरसि च छागलोमनिर्म्मितम् एकं कन्दुकं
निधाय वसनेन तामाच्छादयामास। अनन्तरं शौलेन दायूदं धर्त्तुं १४
दूतगणे प्रहिते मीखला कथयामास स पीडित आस्ते। ततः शौलो १५
दायूदं वीक्षितुं दूतान् प्रहित्य जगाद तं खट्वया समं मम समीपम्
आनयत तमहं हनिष्यामि। अनन्तरं दूता अभ्यन्तरम् आगत्य खट्वायां १६
पुत्तलिकामेकां तस्याः शिरसि छागलोम्नां गेण्डुकञ्च ददृशुः। अतः १७
शौलो मीखलां जगाद त्वं मां कुत इत्थं प्रावञ्चयः? मम रिपुः कुतस्त्वया
विसृष्टो रक्षितश्च? मीखला शौलम् अवोचत् स कथितवान् त्वं मां
विसर्ज, कस्मादहं त्वां हनिष्यामि?
अपरं दायूद् पलायनेन रक्षां प्राप्य रामतनगरे शिमूयेलस्य समीपं १८
गत्वा स्वं प्रति शौलेन यद्यत् कृतं तत् सर्व्वं तं ज्ञापयामास, अनन्तरं स
शिमूयेलश्च गत्वा मठेषु न्यवसतां। अनन्तरं पश्य दायूद् रामतस्थमठेषु १९
विद्यत इति वार्त्तां श्रुत्वा शौलो दायूदं धर्त्तुं दूतान् प्रेषयामास, तैर्दूतै २०
र्भविष्यद्वाक्यानि कथयतां भविष्यद्वादिनां गणे तान् अधितिष्ठति शिमू-
येले च सन्दृष्टे ईश्वरस्यात्मा शौलस्य तान् दूतान् अधितष्ठौ, ततस्तेऽपि
भविष्यद्वाक्यानि कथयितुम् आरेभिरे। तद्वार्त्तां श्रुत्वा शौल इतर- २१
दूतान् प्रेषयामास ततस्तेऽपि भविष्यद्वाक्यं कथयितुमारेभिरे। अनन्तरं
शौलस्तृतीयवारं दूतान् प्रेषयामास, तेऽपि भविष्यद्वाक्यं कथयितुमारे-
भिरे। अतः शौलः स्वयं रामतं गत्वा सेखुस्थं वृहत्कूपं प्राप्य शिमू- २२
येलदायूदौ कुत्र विद्येते इति पप्रच्छ। ततः पश्य तौ रामतस्थेषु मठेषु २३
विद्येते इति लोकैरुक्ते शौलो रामतस्थमठान् जगाम ततः परमेश्वर-
स्यात्मा तमप्यधितस्थौ ततो रामतस्थमठेषु तस्योपस्थितिं यावत् सोऽपि
गच्छन् भविष्यद्वाक्यानि कथयामास। तथा वस्त्रं मोचयित्वा शिमू- २४
येलस्य सम्मुखे भविष्यद्वाक्यानि जगाद कृतस्नादिवारात्रञ्च वस्त्रहीनः

सन् शयित्वा तस्थौ। तस्मात् लोका वदन्ति शौलोऽपि किं भविष्यद्वादिनाम् एको जनः?

## २० विंशोऽध्यायः।

१ योनाथनदायूदोः कथोपकथनं ११ तयोः वनगमनं शपथेन नियमकरणं २४ प्रतिपदि दायूदोऽनुपस्थिते योनाथनं प्रति शौलस्य क्रोधकरणं ३५ दायूदं प्रति योनाथनस्य वार्त्तादानं ४१ दायूदो विसर्जनं।

१ अनन्तरं दायूद् रामतस्थमठेभ्यः पलाय्य योनाथनस्य समीपमागत्य
जगाद, मया किं कृतं किं वापराद्धं तव पितुः समीपे वा मम पापं किं
२ यत् स मम प्राणान् हन्तुं चेष्टते? ततः स तं बभाषे नैवं भवतु त्वं न मरि-
ष्यसि। पश्य माम् अज्ञापयित्वा मम पिता बृहत् क्षुद्रं वा किमपि कर्म्म
न कुरुते तर्हि मम तात एतत् कर्म्म मत्तोऽपह्नुत्य कुतः करिष्यति? तद्
३ भवितुं न शक्नोति। ततो दायूद् शपथं कृत्वा पुनरब्रवीत्, अहं त्वया-
नुगृहीत इति तव पिता सम्यक् जानाति, अतः कारणात् स कथयति
योनाथनो यन्न दुःखितो भवेत् तदर्थम् एतन्न ज्ञाप्यतां। अहम् अम-
रस्य परमेश्वरस्य तव प्राणानाञ्च शपथं करोमि, मम मृत्योश्चैकपद-
४ मात्रं विच्छेद आस्ते। योनाथनो दायूदं बभाषे तव मनो यद् अभिल-
५ षति तदेवाहं करिष्यामि। दायूद् योनाथनं जगाद पश्य श्वः प्रतिपदि
नृपेण समं भोजनाय मयोपवेष्टव्यं, त्वं मां विसर्ज तेनाहं तृतीयदिनस्य
६ सायंकालं यावत् क्षेत्रे छन्नस्तिष्ठामि। ततस्तव तातो यदि ममानुपस्थितेः
कारणं पृच्छति तदा त्वं वदिष्यसि दायूद् निजनगराय बैतलेहमाय
तूर्णं गमनार्थं ममानुमतिं याचितवान् यतस्तत्र स्थाने सकलपरिज-
७ नार्थं वार्षिको यज्ञो भविष्यति। ततस्तेन यदि भद्रमित्युच्यते तर्हि तवै-
तस्य दासस्य मङ्गलं भविष्यति, नो चेत् स यदि चोकुप्यते तर्हि ममामङ्गलं
८ निश्चितमिति त्वया ज्ञास्यते। अतस्त्वं निजमेतं दासं प्रति प्रीतिम् आच-
रिष्यसि यतस्त्वं स्वेन समं स्वीयमेनं दासं परमेश्वरस्य नियमेनैकेन बद्धम्
अकरोः। यदि वा मया किञ्चनापराद्धं तर्हि त्वमेव मां जहि, तव
९ तातस्य समीपं मां कुतो नेष्यसि? ततो योनाथनो जगाद, एवं मा
चिन्तय, मम पिता तवामङ्गलं निश्चितवान् इति मया ज्ञाते त्वं किं
१० तद्वार्त्तां न श्रावयिष्यसे? दायूद् योनाथनं बभाषे, केन श्रावयिष्ये? तव
तातस्त्वां कीदृग् निष्ठुरं कुभाषिष्यते?

अनन्तरं योनाथनो दायूदं व्याहरत्, आगच्छावां क्षेत्रं यावः। ११
ततस्तौ वहिर्भूय क्षेत्रं जग्मतुः। अनन्तरं योनाथनो दायूदं व्याहृतवान् १२
इस्रायेलः प्रभुं परमेश्वरं साक्षिणं कृत्वा वदाम्यहं श्व एतस्मिन् समये
वा परश्वो मया यतित्वा तातस्य मनसि विज्ञाते तव मङ्गलम् अस्ति इति
बोध्याहं तव समीपं दूतं प्रहित्य तद्वार्त्तां त्वां श्रावयिष्यामि। यदि १३
च तवामङ्गलं कर्त्तुं मम पितु र्मतिस्तिष्ठति, तर्ह्यप्यहं तद्वार्त्तां त्वां श्राव-
यिष्यामि, नो चेत् परमेश्वरोऽमुकं ततोऽधिकञ्च दण्डं योनाथनाय ददातु।
अहं त्वां विस्रक्ष्यामि त्वं कुशलेन यास्यसि, अपरं परमेश्वरो यथा मम
तातस्य सहाय आसीत् तथा तवापि सहायो भवतु। यद्यहं न म्रिये १४
तदर्थं मम यावज्जीवनं त्वया परमेश्वरम् उद्दिश्य मां प्रति किं प्रीतिरेव
नाचरितव्या? मम वंशादपि प्रीतिः कदापि त्वया न छेदनीया, दायूदो १५
रिपुगणे परमेश्वरेण भूमण्डलमध्याद् उच्छिन्नेऽपि सा प्रीति र्न छेद-
नीया। इत्थं योनाथनो दायूदो वंशेन समं नियमं विधाय जगाद, पर- १६
मेश्वरो दायूदो रिपुभ्यः समुचितं ददातु। अनन्तरं योनाथनो दायूदि १७
प्रेमकरणकारणात् पुनरपि दायूदं शपथं कारयाञ्चकार यतः स निज-
प्राणेष्विव तस्मिन् प्रेमाकरोत्। अनन्तरं योनाथनस्तमवदत् श्वः प्रति- १८
पद् भविष्यति तत्र त्वदीयासने शून्यीभूते तवानुपस्थिति र्वेदिष्यते। त्वं १९
परश्वः शीघ्रमुत्तीर्य्य पूर्व्वकार्य्यस्य समये यत्र स्थाने छन्न आसीस्तत्र
स्थाने एषलाख्यस्य पाषाणस्य समीप उपविशन् स्थास्यसि। लक्ष्यवेधनच्छले- २०
नाहं त्रीन् शरान् तस्य पार्श्वे क्षेप्स्यामि। ततः परं पश्य बालकमेकं प्रहित्य २१
तं वदिष्यामि, त्वं गत्वा शरान् गवेषय। अपरं पश्य शरास्तवेतत्पार्श्वे
विद्यन्ते तान् संगृहाणेति यदि स बालको मयादिश्यते तर्हि त्वमागच्छ,
अमरस्य परमेश्वरस्य शपथं करोमि तव मङ्गलं, कापि कुमन्त्रणा नास्ति।
पुनः पश्य शरास्तवान्यपार्श्वे विद्यन्त इति मयादिष्टे त्वं स्थानान्तरं याहि २२
यतः परमेश्वरस्त्वां व्यसर्जत्। पश्यावयोरेतत्कथाकथनमधि परमेश्वरः २३
सर्व्वदावयो र्द्वयोः साक्षी भवतु।

अपरं दायूद् क्षेत्रम् आश्रितवान्। अनन्तरं प्रतिपद्दिवस उपस्थिते २४
राजा भोक्तुम् उपविवेश। राजि स्वधारानुसारेण भित्तिसमीपस्थे स्वकी- २५
यासन उपविष्टे योनाथनेऽवतिष्ठमानेऽब्नेरे च शौलस्य पार्श्वे उपविष्टे
दायूदः स्थानं शून्यं तस्थौ। तथापि शौलस्तस्मिन् दिने किमपि न जगाद, २६
यतो दैवघटितमिदं सोऽशुचिः, तस्याशौचं भविष्यतीति मनसि चिन्त-

२७ यामास। परदिवसेऽर्थात् मासस्य द्वितीयदिवसे दायूदः आसनस्य
शून्यस्थितिकारणात् शौलो निजसुतं योनाथनं पप्रच्छ यिशयस्य पुत्रो
२८ ह्योऽद्य च भोक्तुं कुतो नागच्छति? योनाथनः शौलं जगाद, दायूद् बैत-
२९ लेहमाय गमनार्थं ममानुज्ञां याचितवान्। स माम् अवदत् अहं विनये
मां विसर्जतु नगरेऽस्माकं परिजनानां क्रते यज्ञ एको भविष्यति तत्-
कारणात् मम भ्राता मां गन्तुम् आज्ञापयत्, अतोऽहं विनये यदि भवान्
मय्यनुग्रहं करोति तर्हि क्षमोऽहं गत्वा निजभ्रात्रादीन् पश्यामि। तस्मात्
३० स नृपस्य भोजनासनं नागच्छति। ततो योनाथनं प्रति शौलस्य क्रोधे
प्रज्वलिते स तं जगाद, अरे विपथगामिन् आज्ञालङ्घनकारिन् त्वं
निजलज्जां मातुरावरणीयलज्जाञ्च प्रकाशयितुं यिशयस्य सुतं वृतवान्
३१ तदहं किं न जानामि? यिशयस्य तनयो भूमौ यति कालं जीविष्यति
तति कालं त्वं तव राज्यं वा स्थिरं न भविष्यति, अत इदानीं दूतान्
३२ प्रहित्य तं मम समीपम् आनय यतस्तेन मर्त्तव्यमेव। ततो योनाथनः
३३ स्वजनकं शौलं बभाषे स कुतो घानिष्यते? तेन किं कृतं? तदा शौलस्तं
हन्तुं शूलमेकं निचिक्षेप, ततो निजपिता शौलो दायूदं हन्तुं निश्चि-
३४ तवान् इति योनाथनो बुबुधे। तदानीं योनाथनो महाक्रुद्धो भोज-
नासनाद् उदतिष्ठत्, मासस्य द्वितीयदिवसे स किञ्चन न बुभुजे यत-
स्तस्य पित्रा दायूदोऽपमानितत्वात् तस्य मनःपीडा जाता।
३५ अनन्तरं योनाथनो दायूदा समं यं समयं कृतवान् तदनुसारात्
३६ क्षुद्रमेकं बालकं सङ्गिनं कृत्वा वहिः क्षेत्रं जगाम। ततः स्वबालकं
गदितवान् अहं यान् शरान् निक्षिपामि त्वं धावन् तान् गवेषय। तत-
३७ स्तस्मिन् बालके धावति स तस्यान्यपार्श्वे शरं निचिक्षेप। अपरं
योनाथनेन निक्षिप्तस्य शरस्य समीपं बालक उपस्थिते योनाथनो बाल-
३८ कम् आहूय जगाद तवान्यपार्श्वे किं बाणो नास्ति? योनाथनः पुनश्च
बालकमाहूय बभाषे तूर्णं धावन् गच्छ विलम्बं मा कुरु। तेन योनाथ-
३९ नस्य स बालकः शरान् संगृह्य निजाधिपस्य समीपम् आजगाम। किन्तु
स बालकः किमपि न ज्ञातवान्, केवलं योनाथनदायूदौ तत्कार्य्यं
४० ज्ञातवन्तौ। अनन्तरं योनाथनो निजधनुर्बाणान् तस्मै स्वसङ्गिने बाल-
काय दत्त्वा तम् उक्तवान् एतानि गृहीत्वा नगरं याहि।
४१ अनन्तरं तस्मिन् बालके गते सति दायूद् दक्षिणदिक्स्थात् स्थानेक-
स्माद् उत्थाय न्युब्जः सन् पतित्वा वारत्रयं प्रणनाम। अपरं तौ परस्परं

मुन्दनं रोदनञ्च चक्रतुः किन्तु दायूद् अधिकं ररोद। अनन्तरं योना- ४२
थनो दायूदं व्याजहार, त्वं कुशलं याहि, आवाभ्यां द्वाभ्यां परमेश्वरस्य
नाम्ना शपथोऽकारि, परमेश्वरो मम तव च मम वंशस्य तव वंशस्य च
नित्यं सहवर्त्ती भवतु। अनन्तरं स उत्थाय प्रतस्थे योनाथनञ्च नगरं
गतवान्।

---

## २१ एकविंशोऽध्यायः।

१ अहीमेलकाद् दायूदः पवित्रपूपप्राप्तिः ७ तत्र स्थाने दोयेगस्योपस्थितिः ८ दायूदा शिलेष्टीयजालूतस्य खड्गप्राप्तिः १० गातोयस्थपस्य साक्षात् उन्मत्तवद् व्यवहरणं।

अनन्तरं दायूद् नोव्यां याजकस्याहीमेलकस्य समीपम् उपतस्थौ ततो १
ऽहीमेलकः कम्पमानो दायूदं साक्षात् कृत्वा पप्रच्छ त्वमेकः कुतः?
तव सङ्गी कोपि नास्ति कुतः? ततो दायूद् अहीमेलकं याजकं व्याहरत् २
राजा मां कार्य्यमेकं कर्त्तुम् आदिश्य गदितवान, यत् कर्म्म कर्त्तुम्
अहं त्वाम् आदिश्य प्रहिणोमि तस्य किञ्चिदपि कोपि न ज्ञाप्यतां।
अपरम् अमुकस्थानम् आगन्तुं दासनिवहो मया न्ययोजि।
इदानीं तव समीपे किमास्ते? पूपपञ्चकं यदि भवेत् यदेव वा भवेत् ३
तदेव मह्यं देहि। ततो याजको दायूदं प्रत्यवदत्, मम करे सामान्यः ४
पूपो नास्ति किन्तु तवलोका यदि योषितः पृथग् अभवत्, तर्हि
पवित्रपूपान् दातुं शक्नोमि। ततो दायूद् याजकं प्रत्यवदत् मम निर्ग-
मनमारभ्य द्वौ त्रीन् वा दिवसान् अस्मत्तो योषितो विच्छेद आस्ते तदा
च तवलोकानां वस्त्रादीनि पवित्राण्यासन्, यात्रैषा च यद्यप्यपवित्रा
भवेत् तथाप्यद्यापि वस्त्रादिभिः पूता भवितुं शक्नोति। ततो याजकः ६
पवित्रपूपान् तस्मै ददौ, यतस्तत्र स्थाने इतरपूपा नाविद्यन्त, केवलम्
उत्तप्तपूपानां स्थापनसमये ये दर्शनीयपूपाः परमेश्वरस्य साक्षाद् अप-
सारितास्त एवाविद्यन्त।

तस्मिन् काले शौलस्य भृत्यानाम् एकः कयाचिद् बाधया तत्र परमे- ७
श्वरस्य साक्षाद् आसीत्, इदोमीयदोयेग इति तस्य नाम, स शौलस्य
पालकानां मुख्य आसीत्।

अनन्तरं दायूद् अहीमेलकं जगाद, स्थानेऽत्र तव करे शूलं खड्गो वा ८
किमपि किं नास्ति? राज्ञः कार्य्यं तूर्णं करणीयम् इति हेतो मया
खड्गाद्यस्त्राणि नानीतानि। ततो याजको गदितवान् पश्य, एलास्यो- ९

पत्यकायां त्वया हतस्य पिलेष्टीयगोलियातो नाम्नः खड्गो वसनेन वेष्टित एफोदस्य पश्चाद् विद्यते, यदि तं जिघृक्षसि, तर्हि गृहाण, तं विना स्थानेऽत्रान्यद् अस्त्रं नास्ति। ततो दायूद् गदितवान् सोऽनुपम एव, तं मह्यं देहि।

१० अनन्तरं दायूद् उत्थाय तद्दिवसे शौलस्य समीपात् पलाय्य गातीय-
११ नृपस्याखीशस्य समीपं जगाम। तत आखीशस्य भृत्यास्तम् अवदन् अयं जनः किं देशस्य राजा दायूद् न हि? अपरं,

शौलेनारिसहस्राणि हतानि समराङ्गने।
दायूदापि विपक्षाणामयुतानि हतानि च॥

१२ इति वाचं घोषिता नृत्यं कुर्व्वत्यः किमेतमधि न जगुः? दायूद् तां कथां स्वमनसि न्यधित, अपरम् आखीशाख्यस्य गातीयराजस्य कारणात् सोऽतीव भीत्वा तेषां साक्षाद् आचारान्तरं कृत्वा तेषां समीप उन्मत्त इव व्यवहारं कुर्व्वन् द्वारकपाटानि व्यलिखत् निजश्मश्रूपरि च लालाम्
१४ अक्षारयत्। तत आखीशः स्वीयभृत्यान् जगाद, पश्यतायं मानुष उन्मत्त
१५ एव, स युष्माभिर्मम समीपं कुत आनायि? मम किम् उन्मत्तानाम् अभाव आस्ते यद् यूयं मम समीपे निजोन्मत्ततां दर्शयितुम् एनम् आनयत? किमेष मम गृहम् आगच्छेत्?

---

# २२ द्वाविंशोऽध्यायः।

१ अदुल्लमगुहायां दायूदो रक्षाप्रापणं ३ मोयाबीयराजस्य समीपे पितृमात्रोः स्थापनं ५ गादाख्यभविष्यद्वक्तुः मन्त्रणया यिहूदादेशाय दायूदो गमनं ६ दायूदमधि शौलेन स्वदासानां तिरस्करणं ९ शौलं प्रति दोयेगस्य कथनं ११ याजकान् हन्तुं शौलस्य निदेशः १७ तेषां तदीयनगरस्य च नाशनं २० अवियाथरस्य पलायनं।

१ अनन्तरं दायूद् तस्मात् स्थानात् प्रस्थाय अदुल्लमाख्यां गुहाम् आश्रितवान् ततस्तस्य भ्रातरः पितृपरिवाराश्च तन्निशम्य तस्य समीपं गतवन्तः।
२ अपरम् ऋणिदुःखिविरक्तमानसलोकेषु सर्व्वेषु तस्य सन्निधौ मिलितेषु स तेषां सेनापतिर्बभूव। इत्थं प्रायेण चत्वारि शतानि लोकास्तस्य सङ्गिनो बभूवुः।
३ अनन्तरं दायूद् तस्मात् मोयाबीयमिस्पीं नगरीं गत्वा मोयाबीयमहीपतिं व्याहरत्, अहं विनये, ईश्वरो मां प्रति किं करिष्यति तद् यावन्न वेद्मि तावद् भवतः समीपमागत्य प्रवस्तुं मम पितरं मातरञ्चा-

नुजानातु । ततस्तौ मोयाबीयमहीपतेः साक्षात् तेनानीतौ, यावच्च ४
दायूद् दुर्गमस्थाने तस्थौ तावत् तौ तेन नृपेण सार्द्धं न्यवसतां ।

अनन्तरं गाद्नामा भविष्यद्वादी दायूदं जगाद, त्वं पुनर्दुर्गमस्थाने ५
न तिष्ठ, यात्रां विधाय यिहूदादेशं याहि । ततो दायूद् प्रस्थाय हेरे-
तारण्यवनम् आश्रितवान् ।

तदानीं दायूदस्तस्य सङ्गिनामप्युद्देशः प्राप्त इति निशम्य शौलो ६
गिबियाया रामतस्थझाउकस्याधः शल्यहस्तः सन् उपाविशत् तस्य
भृत्याश्च सर्व्वेऽवतिष्ठमानास्तम् अवेष्टन्त । अपरं शौलो निजचतुर्दिक्ष्व- ७
वतिष्ठमानान् भृत्यान् जगाद, हे विन्यामीनवंशीया नराः, यूयम् आक-
र्णयत, यिशयस्य सुतः किं युष्माकम् एकैकस्मै शस्यक्षेत्राणि द्राक्षा-
क्षेत्राणि च दास्यति? स किं युष्माकम् एकैकं सहस्रसेनापतिं शतसेना-
पतिं वा करिष्यति, यद् यूयं सर्व्वे मम प्रातिकूल्येन कुमन्त्रणाम् अकु- ८
रुत? यिशयस्य पुत्रेण सार्द्धं मम पुत्रो नियमं कृतवान् इति युष्माकं
कोपि मम कर्णगोचरं नाकरोत् । अपरम् अद्य छद्मना मां हिंसितुं मम
किङ्करो मत्सुतेन प्रवर्त्तित इति वार्त्तां मां ज्ञापयितुं युष्माकं कोपि
मां नानुकम्पते ।

अनन्तरं शौलस्य भृत्यगणमध्ये ऽवतिष्ठमान इदोमीयदोयेगः प्रत्य- ९
वदत् अहं नोब्नाम् अहीटूबस्य पुत्रस्याहीमेलकस्य समीपं गच्छन्तं
यिशयस्य पुत्रं दृष्टवान् । स तस्य कृते परमेश्वरं पृष्टवान् तस्मै पाथेय- १०
द्रव्याणि दत्तवान् तथा पिलेष्टीयजाल्तस्य खड्गमपि तस्मै दत्तवान् ।

ततो ऽहीटूबस्य पुत्रम् अहीमेलकं याजकं तस्य सकलं पितृवंशम् ११
अर्थतो नोबवासिनो याजकान् आह्वातुं राज्ञा दूतेषु प्रहितेषु ते सर्व्वे
नृपस्य समीपम् आगताः । अनन्तरं शौलोऽवदत् हे अहीटूबस्य पुत्र, १२
अधुना शृणु । स प्रत्यवदत् हे मम प्रभो, अहम् उपस्थित आसे । अनन्तरं १३
शौलस्तं जगाद त्वं यिशयस्य पुत्रश्च मम विरुद्धं कुतो राजद्रोहं कृत-
वन्तौ? अपरम् अद्य स यत् मां हिंसेत् तदर्थं त्वं तस्मै कुतो भक्ष्यं खड्गञ्च
दत्त्वा तस्य कृते ईश्वरम् अपृच्छः? ततो ऽहीमेलको राजानं प्रत्यवदत्, १४
भवतो भृत्यगणमध्ये दायूदिव विश्वास्यो राजजामाता राजमन्त्रणावगतो
भवतो गेहे सम्मानितश्च को भवेत्? तस्य कृते ईश्वरं प्रष्टुम् अहं किम् १५
अद्यारब्धवान्? तत् मत्तो दूरीभवतु, राजा निजदासं दासस्य परि-
वारांश्च प्रति मेमं दोषम् अर्पयतु । भवतो दास एतदर्थस्य न्यूनाधिकं

१६ किमपि नावगच्छत्। किन्तु राजा जगाद, हे अहीमेलक त्वयी तव
कृत्स्नेन पितृवंशेन च मर्त्तव्यमेव।
१७ अनन्तरं राजा स्वचतुर्दिक्ष्ववतिष्ठमानान् पदातिकान् अवदत् यूयं
परावृत्य परमेश्वरस्य याजकान् हत यतस्तेऽपि दायूदस्य सहाया अभ-
वन् अपरं तस्य पलायनं ज्ञात्वापि मम कर्णगोचरं नाकुर्व्वन्। किन्तु
परमेश्वरस्य याजकान् हन्तुं नृपस्य दासाः करान् विस्तारयितुं नाङ्गी-
१८ कृतवन्तः। अनन्तरं राजा दोयेगम् अवदत् त्वमेव परावृत्य याजकान्
जहि। तत इदोमीयदोयेगः परावृत्य याजकान् आक्रम्य तस्मिन् दिवसे
१९ कार्पासमयनिर्म्मितैफोदपरिधायिनः पञ्चाशीति जनान् जघान। अपरं
स नोवनामकं याजकानां नगरं खड्गेन व्यनाशयद् अर्थाद् योषित्पुरुष-
बालकस्तनपायिशिशून् गोगर्द्दभमेषांश्च खड्गेन जघान।
२० तस्मिन् काले अवियाथरनामा अहीटूबस्य पौत्रोऽहीमेलकस्य पुत्रो
२१ रक्षां प्राप्य दायूदः पश्चात् पलायाञ्चक्रे। शौलः परमेश्वरस्य याज-
२२ कान् अबधीदिति वार्त्तां सोऽवियाथरो दायूदं जगाद। ततो दायूद्
अवियाथरं बभाषे, इदोमीयदोयेगस्तत्र स्थान आसीत् तस्मात् स
शौलं मम वार्त्तां वदिष्यतीति मया तस्मिन्नेव दिने बुद्धं। तव पितृवंशी-
२३ यानां बधस्य कारणमहमेवाभवं। त्वं मया सार्कं तिष्ठ मा भैषीः, मम
प्राणनाशम् अचेष्टित्वा कोऽपि तव प्राणनाशं न चेष्टिष्यते, तव रक्षार्थम्
अहमेव तवाश्रयो भविष्यामि।

---

## २३ त्रयोविंशोऽध्यायः।

१ कियीलाया आक्रमणं ७ अथिदायूदं शौलस्य कथनं ९ दायूदं परमेश्वरस्य प्रति-
वदनं १३ दायूदः सीफारण्ये पलायनं योनाथनेन समं भावाम करणं १९ शौलं
प्रति सीफीयलोकानां वार्त्तावदनं दायूदः पश्चाद्गमनात् शौलस्य निवृत्तिः।

१ अनन्तरं पिलेष्टीयाः कियीलया समं रणं कुर्व्वन्ति शस्यमर्द्दनस्थानानां
२ शस्यानि हरन्ति चेति वार्त्तां श्रुत्वा दायूद् परमेश्वरं पप्रच्छ तान् पिले-
ष्टीयान् आहन्तुं मया किं गन्तव्यं? ततः परमेश्वरो दायूदं बभाषे याहि
३ पिलेष्टीयान् आहत्य कियीलां रक्ष। ततो दायूदो लोकास्तं जगदुः
पश्यात्र यिहूदादेशे तिष्ठद्भिरस्माभि र्भेतव्यं, तर्हि कियीलायां पिले-
४ ष्टीयसैन्यश्रेणीनां प्रतिकूलं गत्वास्माभिः किं ततोऽधिकं न भेतव्यं? अनन्तरं
दायूद् पुनरपि परमेश्वरं पप्रच्छ, ततः परमेश्वरः प्रत्यवदत्, त्वमुत्थाय

कियीलां याहि, अहं पिलेष्टीयान् तव करे समर्पयिष्यामि। अतो ५
दायूद् तस्य लोकाश्च कियीलां गत्वा पिलेष्टीयैः समं रणं कृत्वा महा-
हननेन तान् हत्वा तेषां पशून् गृहीत्वा जग्मुः। इत्थं दायूद् कियीला-
निवासिनो ररक्ष। कियीलायां दायूदः समीपं पलायनसमयेऽही- ६
मेलकस्य पुत्रोऽवियाथर एकम् एफोदं करेणादायाजगाम। अनन्तरं ७
दायूद् कियीलां प्राविशदिति वार्त्तां श्रुत्वा शौलो जगाद, तर्हीश्वरो
मम करे तं समार्पयत् यतो द्वारार्गलयुक्तनगरे प्रवेशनात् सोऽवरुद्धो
जातः। अनन्तरं शौलो दायूदं तस्य लोकांश्च रोधयितुं कियीलां ८
गमनार्थं निजान् सकललोकान् रणायाह्वयत्।

अनन्तरं शौलो गुप्तं मम हिंसां चिकीर्षतीति दायूद् ज्ञात्वाविया- ९
थरं याजकम् अवदत्, एफोदम् अत्रानय। अनन्तरं दायूद् जगाद, १०
हे इस्रायेलः प्रभो परमेश्वर विनयेऽहं निजदासस्य प्रार्थनां शृणोतु
यतो मत्कारणात् कियीलानगरं विनाशयितुं शौलोऽत्रागन्तुं यतते।
कियीलाया गृहस्थाः किं मां तस्य हस्ते समर्पयिष्यन्ति? भवतो दासेन ११
यथा श्रुतं तथा शौलः किम् आगमिष्यति? हे इस्रायेल ईश्वर तत्
स्वदासं ज्ञापयतु। ततः परमेश्वरोऽवदत् स आगमिष्यति। ततो दायूद् १२
पप्रच्छ, कियीलाया गृहस्थाः किं मां मम नरांश्च शौलस्य हस्ते समर्पयि-
ष्यन्ति? ततः परमेश्वरः कथयामास ते समर्पयिष्यन्ति।

ततो दायूद् तस्य प्रायेण षट्शतानि सङ्गिनो मनुजाश्चोत्थाय कियी- १३
लायाः प्रस्थाय यत्र तत्र गताः। अनन्तरं दायूद् कियीलातः पला-
याञ्चक्र इति वार्त्तां श्रुत्वा शौलो यातुं निववृते। अपरं दायूद् निर्जन- १४
देशस्य दूराक्रमाणि स्थानान्याश्रित्य सीफाख्यस्य निर्जनदेशस्य पर्व्वते
वासं चकार। अनन्तरं शौलेन प्रतिदिनं तस्मिन् गवेषितेऽपीश्वरस्तस्य
करे तं न समर्पयामास। तथापि शौलो दायूदः प्राणनाशार्थं बहि- १५
र्भूयागच्छतीति दायूद् ददर्श। अपरं सीफप्रदेशस्यारण्ये दायूदि तिष्ठति
शौलस्य पुत्रो योनाथन उत्थाय दायूदः समीपं तद्वनं गत्वा ईश्वरेण तस्य १६
मानसस्थिरत्वं जनयामास। अपरं तं बभाषे मा भैषीः, मम तातः १७
शौलस्त्वां स्वहस्तगतं कर्त्तुं न शक्ष्यति। त्वमिस्रायेलवंशस्य राजा
भविष्यसि, अहन्तु तव द्वितीयो भविष्याम्येतत् मम पिता शौलोऽपि
वेत्ति। अनन्तरं ताभ्यां परमेश्वरस्य साक्षात् नियमे कृते दायूद् वने १८
तस्थौ योनाथनश्च निजगृहं जगाम।

१९ अपरं सीफीयमनुजा गिबियायां शौलस्य समीपं गत्वा कथयामासुः,
दायूद् किम् अस्माकं सन्निधौ काननस्थेषु दुर्गमस्थानेष्वर्थतो यिशीमो-
२० नस्य दक्षिणदिक्स्थहखीलापर्व्वते छन्नो न तिष्ठति? अतो हे राजन्
भवान् स्वमनोऽभिलाषानुसारादेवागच्छतु भवतो हस्ते तस्य समर्पणम्
२१ अस्माभिः साधयिष्यते । शौलस्तान् अवदत्, यूयं परमेश्वरे धन्या
२२ यतो माम् अनुकम्पध्वे । अहं विनये यूयं गत्वा तस्य रहःस्थानं कुत्र
तत्र स्थाने च तं को दृष्टवान् इति पुन र्विविच्य निरीक्ष्य निश्चिनुत,
२३ यतः सोऽतीव चतुरताचारीति मयाश्रावि । अतो रहःस्थानानां मध्ये
कस्मिन् रहःस्थाने स तिष्ठति तद्दृष्ट्वा निश्चिनुत, ततः परं मम समीपं
निश्चितवृत्तान्तं गृहीत्वागच्छत, ततोऽहं युष्माभिः समं यास्यामि । स
यदि देशमध्ये तिष्ठेत् तर्ह्यहं यिहूदायाः सहस्रागां मध्ये तस्योद्देशं
२४ प्राप्स्यामि । ततस्त उत्थाय शौलस्याग्रे सीफं जग्मुः, किन्तु दायूद्
तस्य लोकाश्च यिशीमोनस्य दक्षिणदिशि मायोनाख्यस्य निर्जनप्रदेशस्य
२५ प्रान्तरे तस्थुः । अनन्तरं शौलस्तस्य लोकाश्च तं मृगयितुं जग्मुः किन्तु
लोकै र्दायूदे तस्यां वार्त्तायां कथितायां स शैलम् आश्रित्य मायोनाख्य
निर्जनप्रदेशे स्थितवान् । तत् श्रुत्वा शौलो दायूदं मृगयितुं मायोनप्रदेशं
२६ जगाम । अपरं शौले पर्व्वतस्यैकपार्श्वं गते दायूद् तस्य लोकाश्च तत्प-
र्व्वतस्यान्यपार्श्वं जग्मुः, अपरं दायूद् भयात् स्थानान्तरं यातुं त्वरां
चकार किन्तु शौलस्तं तस्य लोकांश्च धर्त्तुं स्वलोकैः सह वेष्टयन् तस्थौ ।
२७ तदानीं दूत एकः शौलस्य समीपमागत्य भवान् शीघ्रमागच्छतु यतः
२८ पिलेष्टीया देशमाक्रामन् इति वार्त्तां तं जगाद । ततः शौलो दायूदः
पश्चाद् गमनात् परावृत्य पिलेष्टीयानां विरुद्धं जगाम, तत्कारणात्
तस्य स्थानस्य नाम सेलाहम्महलिकोतं (चलाचलपर्व्वत) इति बभूव ।
२९ ततो दायूद् तस्मात् प्रस्थाय ऐनगिदीस्थेषु दुराक्रमगम्यस्थानेषु न्युवास ।

## २४ चतुर्विंशोऽध्याय ।

१ ऐनगिदीस्थगह्वरायां दायूदा शौलस्य वस्त्रप्रान्तच्छेदनं ८ तेन कथया शौलस्य समीपे निजनिर्दोषत्वप्रकाशनं १६ निजदोषं स्वीकृत्य दायूदं शपथयित्वा शौलस्य स्वगृहगमनं ।

१ अनन्तरं पिलेष्टीयानां पश्चाद्गमनात् प्रत्यागतेन शौलेन दायूदश्च ऐन

गिदींनाम्नि निर्जनस्थाने विद्यत इति वार्त्तां शुश्रुवे। ततः शौलः सर्व्वेभ्य २
इस्रायेल्वंशेभ्यः सहस्रत्रयलोकान् धृत्वा गृह्णन् वनच्छागानां शैलेषु
दायूदं तस्य लोकांश्च गवेषयितुं जगाम। तस्मिन् वर्त्मनि स्थितानि ३
मेषस्थानानि प्राप्य शौलः स्वचरणावाच्छादयितुं तत्रत्यां गुहामेकां
प्रविवेश। तदानीं दायूद् तस्य लोकाश्च तस्या एव गुहायाः प्रान्तःस्थान
उपविष्टा आसन्। अपरं दायूदो मनुजास्तं जगदुः पश्य मया तव ४
रिपुस्तव हस्ते समर्पयिष्यते तदा त्वं यद् इच्छसि तदेव तं प्रति करि-
ष्यसीति वाचं परमेश्वरो यं दिवसमधि त्वाम् अवदत्, स दिवस एष
एव। ततो दायूद् उत्थाय रहः शौलस्य वसनाग्रं चिच्छेद। किन्तु ततः ५
परं शौलस्य वसनाग्रच्छेदनात् दायूदो ऽन्तःकरणं विद्धं बभूव। ततः ६
स स्वलोकान् जगाद, परमेश्वरेणाभिषिक्तं मत्प्रभुं प्रत्येतत्कर्म्मकरणाद्
अर्थतस्तस्य विरुद्धं करविस्तारणात् परमेश्वरो मां रक्षतु यतः स
परमेश्वरेणाभिषिक्तः पुमान्। अपरं दायूद् वाक्यै र्निजदासान् ७
तर्जयन् शौलम् आक्रमितुं प्रतिषिद्धवान्। अनन्तरं शौलो गुहातो
निर्गत्य मार्गेण जगाम।

तदा दायूद् उत्थाय गुहातो निर्गत्य हे मम प्रभो राजन् इत्युक्त्वा ८
शौलमाजुहाव ततः शौलेन पश्चात् परावृत्य दृष्टे दायूद् भूमौ पतन्
प्रणनाम। अपरं दायूद् शौलं जगाद, दायूद् तव हिंसां चेष्टत इति ९
लौकिकीं वाचं त्वं कुतः शृणोषि? पश्याद्य परमेश्वरो गुहाया मध्ये त्वां १०
मम करे समार्पयत् तदा केनचित् त्वां हन्तुम् आदिष्टोऽप्यहं त्वाम्
अनुकम्प्य कथितवान् निजप्रभोः प्रतिकूलं नाहं करं विस्तारयिष्यामीति
यतः स परमेश्वरेणाभिषिक्तः पुमान्। हे मम तात पश्य, मम करे ११
स्थितं तवैतदुत्तरीयवसनाग्रं निरीक्षस्व। मया तवोत्तरीयवसनाग्रस्य
छेदनसमये त्वं न हत एतेनाहं हिंसां द्रोहं वा न समाचरामि तव
विरुद्धं पापं वा न करोमीति त्वया विविच्य दृश्यतां तथापि त्वं मम
प्राणनाशाय मां मृगयसे। परमेश्वरो मां त्वाञ्चाधि विचारयिष्यति १२
मम कृते तुभ्यं समुचितं दास्यति, किन्त्वहं त्वयि करं नार्पयिष्यामि।

क्रिया तु या भवेत् दुष्टा सा दुष्टेन विधीयतां। १३

इति प्राचीनकस्था नीतिकथा, अतोऽहं स्वकरेण त्वां न स्प्रक्ष्यामि।
इस्रायेलो राजा कस्य पश्चाद् वहि र्गतः? भवान् कं धर्त्तुं धावति? १४
किं मृतं कुक्कुरं वा मशकमेकं? परमेश्वरो विचारयिता भवन् १५

मां त्वाञ्चाधि विचारयिष्यति, स मां प्रति दृष्टिं विधाय मम पक्षपाती
भवन् तव करात् मामुद्धारयिष्यति ।
१६ शौलेन समं दायूदस्तदालापे समाप्ते शौलः पप्रच्छ हे मम पुत्र
१७ दायूद्, किमयं तव स्वरः? इत्युक्ता शौल उच्चै रोद दायूदञ्च जगाद,
मत्तोपि त्वं धार्म्मिकोऽसि यतो मयापकृतोऽपि त्वं माम् उपकृतवान् ।
१८ परमेश्वरेण मयि तव करे समर्पितेऽपि त्वं मां नावधीरनेनाद्य मां
१९ प्रति तव हिताचरणं त्वया प्रकाशितं । यतो मनुष्यः स्वरिपुं प्राप्य
किं तं कुशलेन विसर्जति? अद्य मां प्रति यत् कृतं तत्कारणात् परमे-
२० श्वरस्तव समुचितं मङ्गलं करोतु । पश्य त्वं राजा भविष्यसि तव हस्ते
२१ इस्रायेलवंशस्य राज्यं स्थिरं स्थास्यति च तदहं जानामि । अतस्त्वं
मम पश्चात् मम वंशं न लोपयिष्यसि मम पितृवंशादपि मम नाम
२२ नोच्छेत्स्यसि परमेश्वरस्य नाम गृह्णन् इमं शपथं कुरु । ततो दायूद्
शौलस्य समीपे शपथं चकार । अनन्तरं शौलः स्वगृहं जगाम,
किन्तु दायूद् तस्य लोकाश्च दुराक्रमस्थानम् आश्रितवन्तः ।

---

## २५ पञ्चविंशोऽध्यायः ।

१ शिमूयेलस्य मरणं २ नावलस्य तस्य भार्य्याया अवीगयिलायाश्च कथनं ४ नावलं प्रति दायूदो दूतप्रेषणं १० तस्य निन्दाकारणात् नावलं हन्तुं दायूदः सज्जीभवनं १४ अवीगयिलायै दासस्य वार्त्तादानं १८ द्रव्यादि समासाद्य दायूदः समीपम् अवीगयिलाया गमनं २३ दायूदो तस्या अनुनयनं ३८ नावलस्य मरणं ३९ दायूदा समम् अवीगयिलाया विवाहो दायूदो भार्य्याया मीखलाया अन्यपुरुषाय दानं ।

१ तदानीं शिमूयेलो ममार तत इस्रायेलः सर्व्वे वंशा मिलित्वा तमध्यनुशुशुचुः रामतस्थे तस्य निवेशने तस्य श्मशानं चक्रुश्च । अनन्तरं दायूद् उत्थाय पारणाख्यं निर्जनप्रदेशं जगाम ।
२ मायोनप्रदेशनिवासी कर्म्मिलाधिकारी महान् एको मनुष्य आसीत्,
३ तस्य त्रीणि सहस्राणि मेषाः सहस्रमेकं छागाश्चासन् । तस्य नाम
नावल इति तस्य जायाया नाम चावीगयिलेति सा नारी सुबुद्धिमती
सुवदना चासीत् किन्तु स पुमान् निष्ठुरो दुर्वृत्तश्च स कालेववंशज
आसीत् स कर्म्मिले निजमेषाणां लोमानि कर्त्तयितुं प्रावर्त्तत ।
४ अपरं नावलो निजमेषाणां लोमानि कर्त्तयिष्यतीति वार्त्तां प्रान्तरमध्ये

दायूद् श्रुत्वा निजदशयूनः प्रेषयामास तान् जगाद च, यूयं कर्म्मिले ५
नावलस्य समीपं गत्वा मम नाम्ना तस्य कल्याणं पृच्छत, तस्मै वाच-
मिमाञ्च कथयत, भवान् चिरञ्जीवी भवतु भवतो भवत्परिवारस्य ६
भवत्सर्व्वस्वस्य च सर्व्वदा मङ्गलं भूयात्। भवतो लोमच्छेदका आ- ७
गता इति मयाश्रावि, परन्तु भवतो मेषपालका यावत्कालं कर्म्मिले
आसन् तावद् अस्माभिः सार्द्धम् आसन् ते चास्माभि र्न क्लेपिता-
स्तेषां किञ्चन वा न चोरितं। भवान् स्वयूनः पृच्छतु ते तदेव वदिष्यन्ति। ८
तस्मात् तरुणा इमे भवतानुगृह्यन्तां यतो वयं शुभदिवस आगच्छाम,
अतो भवतः करे यदस्ति तस्य किञ्चित् निजदासेभ्यो निजसुताय दायूदे
च दीयतां। ततो दायूदो युवानो गत्वा दायूदो नाम्ना नावलसमीपे ९
तानि वाक्यानि निवेदयित्वा नीरवा बभूवुः।

अनन्तरं नावलो दायूदो दासान् अवदत दायूद् कः? यिशयस्य १०
पुत्रो वा कः? समयेऽस्मिन् बहवः किङ्कराः स्वं स्वं स्वामिनं विहाय
पलायन्ते। इदानीम् अहं किं मम पूपान् तोयानि मदीयलोमकर्त्त- ११
कानां कृते हतानां पशूनां मांसानि च गृहीत्वा अज्ञातस्थानाद् आगन्तुक-
लोकेभ्यो दास्यामि? ततो दायूदो युवानो निजपथेन परावृत्य तत्समी- १२
पमागत्य तं वृत्तान्तं तस्मै कथयामासुः। ततो दायूद् निजलोकान् १३
अवदत, ययं सर्व्वे स्वखड्गान् बध्नीत, ततस्ते सर्व्वे स्वं स्वं खड्गं बबन्धु दायू-
दपि निजं खड्गं बबन्ध। अनन्तरं प्रायेण चतुःशतं लोका दायूदम्
अनुजग्मुः द्रव्यादिरक्षार्थञ्च द्वे शते लोकास्तस्थुः।

तस्मिन् काले एकस्तरुणो दासो नावलस्य भार्य्यायै अबीगयिलाय १४
कथयामास, पश्य दायूद् अस्माकं प्रभुं नमस्कर्त्तुं प्रान्तराद् दूतान्
प्रेषितवान् ततोऽस्माकं प्रभुस्तान् अभिगर्जितवान्। ते मनुजा अस्माकं १५
महोपकारिण आसन् प्रान्तरेऽस्माकम् अवस्थितिकाले यावत् तैः साकम्
अतिष्ठाम तावद् वयं तै र्न क्लेपिता अस्माकं किमपि वा न चोरितं।
वयं मेषान् चारयन्तस्तैः समं यावत्कालं न्यवसाम तावत् ते दिवानि- १६
शम् अस्माकं चतुर्दिक्षु प्राचीरस्वरूपा आसन्। अत इदानीं तव किं १७
कर्त्तव्यं तद् आलोच्य बुध्यतां यतोऽस्माकं प्रभोस्तस्य सकलपरिजनाना-
ञ्चामङ्गलं निश्चितमेव स चैतादृशो दुश्चरित्रो यत् केनापि तं सम्भाषितुं
न शक्यते।

तदनन्तरम् अबीगयिला तूर्णं द्वे शते पूपान् द्राक्षारसपूर्णौ द्वे कुतौ १८

पञ्च दग्धा मेषाः पञ्चद्रोणा भ्रष्टकलाया एकं शतं शुष्कद्राक्षाफलगुच्छा
द्वे शते शुष्कोडुम्बरगुच्छा एतानि सर्व्वाण्यादाय गर्द्दभानामुपरि निदधे।
१९ अपरं निजदासान् अवदत्, यूयं मदग्रेऽग्रे चलत पश्यताहं युष्माकं
पश्चात् पश्चाद् यामि किन्त्वेतत् सा निजस्वामिनं नावलं नाज्ञापयत्।
२० अनन्तरं सा गर्द्दभमारुह्य पर्व्वतस्य रहोवर्त्मना यातवती तदन्तरे
दायूद् तस्य लोकाश्च ममाभिमुखम् आगच्छन्ति तस्मात् ते मया साक्षात्
२१ कर्त्तव्या इति ददर्श। पूर्व्वं दायूद् कथयामास, एतस्य जनस्य प्रान्तर-
स्थितं सकलं वस्तु रक्षितवानहं तस्य सर्व्वेषां द्रव्याणां किञ्चिदपि न
हारितमभूत् कर्म्मेदं मम वृथा जातं स उपकारस्य विनिमयेन ममा-
२२ पकारं चकार। यद्यहं सूर्य्योदयपर्य्यन्तं तस्य कृत्स्नपरिवारस्यैकमपि
पुमांसम् अवशेषयेयं तर्हीश्वरो दायूदः शत्रुभ्योऽमुकं तदधिकञ्च फलं
२३ ददातु। अनन्तरम् अबीगयिला दायूदं वीक्ष्य गर्द्दभात् तूर्णमवरुह्य
२४ दायूदः सम्मुखे भूमौ पतित्वा प्रणनाम। अपरं तस्य चरणयोः पतित्वा
कथयामास हे मम प्रभो, अयमपराधो मम जातः, निजदासीं स्वकर्ण-
२५ गोचरे कथां कथयितुम् अनुजानातु निजदास्या वाचं शृणोतु। भवान्
तं दुर्वृत्तपुरुषं नावलं दृष्णाय न मन्यतां, यादृशं तस्य नाम तादृशस्तस्य
स्वभावः। नावलो (मूर्ख) इति तस्य नाम मूर्खता च तस्यान्तरे विद्यते।
२६ किन्तु भवत इयं दासी मत्प्रभुणा प्रेरितान् यूनो नापश्यत्। तथापि
हे मम प्रभो, परमेश्वरस्यामरताया भवतः प्राणानाञ्च शपथं कृत्वाऽहं
वदामि शोणितपातार्थम् आगमनात् निजकरेणापमानस्य प्रतिकर-
णाच्च परमेश्वरो भवन्तं निवर्त्तयति, किन्तु भवतो रिपूणां मत्प्रभो-
२७ रहितैषिणाञ्च दशा नावलस्य दशेव भवतु। मत्प्रभोः समीपे भवतो
दास्या आनीतम् इदम् उपायनं भवतोऽनुगामिभ्यो युवभ्यो दीयतां
२८ भवतो दास्या अपराधः क्षम्यताञ्च। परमेश्वरो मत्प्रभो वंशं चिरस्थायिनं
करिष्यति यतो मत्प्रभुः परमेश्वरस्य रिपुभिः सह योत्स्यति यावज्जीवम्
२९ निर्दोषो भविष्यति च। मनुजेनोत्थाय भवतस्ताडने प्राणनाशार्थंयत्ने
च कृते मत्प्रभोः प्राणा भवतः प्रभुणा परमेश्वरेण स्वसमीपे जीवन-
सम्पुटके बद्धा गोपिष्यन्ते, किन्तु भवतो रिपूणां प्राणा अश्मक्षेपकगुणेन
३० परिक्षिप्तप्रस्तरा इव भविष्यन्ति। परमेश्वरेण मत्प्रभुमधि यद्यत् प्रतिश्रुतं
तस्मिन् मङ्गले साधिते सति यदा भवान् इस्रायेल्वंशानां राज्ये तेन
३१ नियोक्ष्यते, तदानीम् अकारणशोणितपातस्य स्वकरेण समुचितदानस्य

च पापस्वरूपौ शोकमनस्तापौ मत्प्रभुणा न भोक्तव्यौ । किन्तु यदा
परमेश्वरो मम प्रभो र्मङ्गलं करिष्यति तदानीं भवत एतां दासीं
स्मरिष्यति भवान् ।

अनन्तरं दायूद् अबीगयिलां जगाद त्वमद्य मां साक्षात् कर्त्तुं येन ३२
प्रेषिता स इस्रायेलः प्रभुः परमेश्वरो धन्यः । अपरं तव विवेचना ३३
धन्या त्वमपि धन्या यतः शोणितपातार्थम् आगमनात् निजकरेण समु-
चितफलदानाच्चाहम् अद्य त्वयैव रक्षितः । तव हिंसनात् मन्निवर्त्तको ३४
य इस्रायेलः प्रभुः परमेश्वरस्तस्यामरतायाः शपथं कृत्वा कथयामि यदि
त्वं मां साक्षात् कर्त्तुं तूर्णं नागमिष्यस्तर्हि नाबलस्य गेहे एकोपि पुमान्
प्रभातं यावद् नावाशेक्ष्यत । अनन्तरं दायूद् तयानीतान्युपायन- ३५
द्रव्याणि तस्याः करात् गृहीत्वा तां जगाद त्वं कुशलेन स्वनिवेशनं याहि
पश्य तव कथायां मनो निधायाहं त्वाम् अनुगृहीतवान् ।

अनन्तरम् अबीगयिला यदा नाबलस्य समीपम् आगच्छत् तदा ३६
राजभोज्यवत् तस्य भोज्ये सति स हृष्टमना अतीवमत्तश्चासीत् तस्मात्
सा सूर्य्योदयात् पूर्व्वं तस्या घटनायाः काञ्चनापि वार्त्तां तं न जगाद ।
प्रातःकाले नाबलस्य मत्ततायां निवृत्तायां तस्य जाया तं तत्सर्व्ववृत्तान्तं ३७
ज्ञापयामास, ततस्तस्यान्तरस्थं हृदयं मृतकल्पं देहश्च पाषाणवद्
बभूव । इतो दशदिनेभ्यः परं परमेश्वरेणाहतो नाबलो ममार । ३८

अनन्तरं नाबलो मृत इति वार्त्तां निशम्य दायूद् कथयामास परमे- ३९
श्वरो धन्यो यतः स नाबलेन कृतस्य ममापमानस्य समुचितं फलं ददौ
निजदासञ्च कुकर्म्मणो ररक्ष । नाबलस्य दुष्टतायाः समुचितं फलं तेनैव
नाबलाय दत्तं । अनन्तरं दायूद् अबीगयिलां विवोढुम् इच्छन् तां
सम्भाषितुं दूतान् प्रेषयामास । ततो दायूदो दासाः कर्म्मिलेऽबीगयि- ४०
लायाः समीपं गत्वा तां जगदुः, दायूद् त्वां विवोढुम् इच्छन् तव
समीपम् अस्मान् प्रेषितवान् । ततः सा प्रोत्थाय भूमिष्ठा सती व्याज- ४१
हार पश्यत भवतो दासी मम प्रभो र्दासानां पादप्रक्षालिका दास्येव
भवतु । अनन्तरम् अबीगयिला त्वरितमुत्थाय गर्द्दभमारुह्य निज- ४२
पश्चानुचारिणीभिः समं दायूदो दूतानां पश्चाद् गत्वा तस्य जाया बभूव ।
तां विना दायूद् यिष्रियेलीयाम् अहिनोयमाञ्च व्यूढवान् ततो द्वे इमे ४३
तस्य जाये बभूवतुः । किन्तु शौलो मीखलानामिकां निजसुतां दायूदो ४४
जायां गृहीत्वा गल्लीमनिवासिनो लयिशस्य पुत्राय पल्टये दत्तवान् ।

# २६ षड्विंशोऽध्यायः।

१ दायूदः पश्चात् शौलस्य हखीलापर्व्वताय गमनं ५ शौलात् शूलं पानपात्रञ्चापहृत्य तस्य वधाकरणं १३ अब्नेरं प्रति दायूदस्तिरस्कारः २१ दायूदं प्रति शौलस्य कथनं।

१ अनन्तरं सीफीयलोका गिबियायां शौलस्य समीपं गत्वा कथयामासुः
२ दायूद् किं यिशीमोनस्य सम्मुखे हखीलापर्व्वते छन्नो न तिष्ठति? ततः
शौल उत्थायेस्रायेल्वंशस्य त्रीणि सहस्राण्यभिरुचितलोकान् सङ्गिनः
३ कृत्वा दायूदं गवेषयितुं सीफाख्यं निर्जनप्रदेशं जगाम। शौलः पथ-
पार्श्वीये यिशीमोनसम्मुखस्थे हखीलापर्व्वते शिविरं स्थापयामास।
तस्मिन् काले दायूद् निर्जनप्रदेशे न्यवसत्। अपरं शौलो मम पश्चात्
४ निर्जनप्रदेशम् आगच्छतीत्यनुमाय दायूद् चारान् प्रेषयित्वा शौलो
निश्चितमागतवान् इति ज्ञातवान्।
५ अनन्तरं दायूद् उत्थाय शौलस्य शिविरस्थानम् आगत्य शौलस्य
तस्य सेनापतेर्नेरसुतस्याब्नेरस्य च शयनस्थानं निरीक्षितवान्। तदानीं
शौलो रथप्राकारमध्येऽशेत मनुजाश्च तस्य चतुर्दिक्षु समावृता आसन्।
६ अनन्तरं दायूद् हित्तीयाहीमेलकं सिरूयायाः सुतं योयाबस्य भ्रातरम्
अबीशयञ्चोक्तवान् शिविरे शौलस्य समीपं मया साकं को यास्यति?
७ ततोऽबीशयः प्रत्युवाच, अहं त्वया सह यास्यामि। अनन्तरं रजन्यां
दायूद् अबीशयश्च लोकनिवहस्य समीपम् आगमतां। तदानीं शौलो
रथप्राकारस्य मध्ये शयानो निद्रितश्चास्ते तस्य शिरसः समीपे तस्य शूलं
भूमिं विद्धा विद्यते, अपरम् अब्नेरः सर्व्वे लोकाश्च चतुर्दिक्षु शयानाः
८ सन्तीति ताभ्याम् अदर्शि। तदानीम् अबीशयो दायूदं बभाषे, ईश्व-
रोऽद्य भवतो रिपुं भवतो हस्ते समार्पयत्। अत इदानीं निवेदयामि,
एकेन शूलाघातेन भूम्या साकं तं वेद्धुम् आदिशतु, नाहमेनं वारद्वयम्
९ आहनिष्यामि। ततो दायूद् अबीशयं जगाद एनं मा विनाशय पर-
मेश्वरेणाभिषिक्तस्य प्रतिकूलं हस्तं प्रसार्य्य को निरपराधो भविष्यति?
१० परमेश्वरस्यामरतायाः शपथं कृत्वाऽहं वदामि परमेश्वरस्तम् आहनि-
ष्यति, यदा तस्य चरमदिन उपस्थिते स मरिष्यति यद्वा स संग्रामं गतो
११ घानिष्यते। किन्तु परमेश्वरेणाभिषिक्तस्य विरुद्धं मत्करप्रसारणात्
परमेश्वरो मां रक्षतु। त्वं तस्य शिरःसमीपस्थे शूलजलपात्रे गृही-
१२ त्वागच्छ, आवां यावः। अनन्तरं शौलस्य शिरःसमीपात् तस्य शूलजल-

पात्रयो दायूदा गृहीतयोस्तौ प्रतस्थाते, तत्कर्म्म केनापि न दृष्टं न वा ज्ञातं कोपि न जागरितवान् सर्व्वे निद्रायास्तस्थु यतस्ते परमेश्वरेण घोरं निद्रापिताः ।

अनन्तरं दायूद् पारं गत्वा तदन्यपर्व्वतस्य शृङ्गे दूरे तस्थौ तयोर्मध्ये १३
बहुस्थानं व्यवहितमासीत् । तदानीं दायूद् जनतां नेरस्य सुतम् १४
अब्नेरञ्चाहूय कथितवान् हे अब्नेर त्वं कुत उत्तरं न ददासि ? ततो
ऽब्नेरः प्रत्यवदत् कस्त्वं यद् राजानम् आह्वयसि ? अनन्तरं दायूद् १५
अब्नेरं जगाद त्वं किं वीरो न भवसि ? इस्रायेल्वंशे कस्तव सदृशः ?
तर्हि त्वं निजप्रभुं राजानं कुतो न रक्षसि ? तव प्रभुं राजानं विना-
शयितुमेको जन आगमत् । तवेदं कर्म्म न भद्रं । परमेश्वरस्यामरतायाः १६
शपथं कृत्वाऽहं वदामि, यूयं वधदण्डार्हा यतो यूयं परमेश्वरेणाभिषिक्तं
निजप्रभुं नारक्षत । नृपस्य शिरोनिकटस्थे शूलजलपात्रे कुत्र तत्
पश्य । तदा शौलो दायूदः स्वरं विज्ञाय जगाद, हे मम पुत्र दायूद् १७
किमयं तव स्वरः ? ततो दायूद् कथयामास सत्यं प्रभो राजन् ममैव
स्वरोऽयं । सोऽपरमपि जगाद मत्प्रभुः निजदासस्य पश्चात् पश्चात् १८
कुतो धावति ? किमहं कृतवान् ? मम को दोषः ? इदानीं विनयेऽहं १९
हे मम प्रभो राजन् निजदासस्य वचांसि शृणोतु, भवान् मां क्लेष्टुं
यदि परमेश्वरेण प्रवर्त्तितस्तर्हि स एकं नैवेद्यं गृह्णातु । अपरं यदि
भवान् मनुष्यैः प्रवर्त्तितस्तर्हि ते परमेश्वरस्य साक्षाद् अभिशप्यन्तां
यतस्त्वं गच्छन् इतरदेवान् सेवस्वेति वदन्तस्तेऽद्य परमेश्वरेणाधिकृताना
लोकानां सङ्गात् मां दवयन्ति । यद्यपि पर्व्वते धावन्तं तित्तिरपक्षिण- २०
मिव मशकैकस्वरूपकं मां मृगयितुम् इस्रायेलो राजा वहिरागच्छत्,
तथापि मम शोणितं परमेश्वरस्य दृष्टेर्दूरस्थभूम्यां न पततु ।

ततः शौलोऽवदत् हे मम पुत्र दायूद्, अहं पापं कृतवान्, त्वं २१
परावर्त्तस्व । तवाहितं पुन र्न करिष्यामि, यतस्त्वमद्य मम प्राणान्
बहुमूल्यान् अमन्यथाः । अहं वातुल इव कर्म्माकार्षं महाभ्रान्तिमांश्चा-
भवं । दायूद् प्रत्यवदत् इदं पश्य नृपस्य शूलं तरुणानाम् एकः पारमा- २२
गत्य शूलमिदं गृहीत्वा यातु । परमेश्वर एकैकस्मै जनाय तद्धर्म्मविश्व- २३
स्ततयोः फलं ददातु । सोऽद्य त्वां मम करे समर्पितवान् किन्त्वहं परमे-
श्वरेणाभिषिक्तस्य विरुद्धं करं प्रसारयितुं नाङ्गीकृतवान् । पश्चाद्यथाहं २४
यथा भवतः प्राणान् बहुमूल्यान् अमन्ये तथा परमेश्वरो मम प्राणान्

२५ बहुमूल्यान् मत्वा समस्तक्लेशात् माम् उद्धारयिष्यति। अनन्तरं शौलो दायूदं बभाषे, हे मम पुत्र दायूद् त्वं धन्यः, त्वं कर्म्मशूरः कृतकार्य्यश्च भविष्यसि। अनन्तरं दायूद् निजपथेन जगाम शौलोऽपि पुनः स्वस्थानं जगाम।

---

## २७ सप्तविंशोऽध्यायः।

१ पिलेष्टीयानां देशाय दायूदो गमनं ५ सिक्लगनगरे दायूदो वसनं ७ अन्यदेशोपरि दायूद आक्रमणं।

१ अनन्तरं दायूद् मनसा चिन्तितवान् इत्थं कस्मिंश्चिद् दिनेऽहं शौलस्य करतो विनंक्ष्यामि पिलेष्टीयानां देशाय पलायनं विना ममापरः कश्चिदुपायो नास्ति। तथा कृते शौल इस्रायेलः प्रदेशे मम गवेषणां वृथा ज्ञात्वा निराशो भविष्यति, अपरं तस्य हस्तादहं रक्षां प्राप्स्यामि।
२ अनन्तरं दायूद् तस्य षट्शतानि सङ्गिनश्चोत्थाय मायोकस्य पुत्रस्या-
३ खीशाख्यस्य गातीयन्टपस्य समीपं जग्मुः। अपरं दायूद् तस्य सर्व्वे लोकाश्च सपरिवारा गात आखीशेन साकम् उषितवन्तः, विशेषतो दायूद् यिष्रियेलीयाहीनोयमा मृतस्य नावलस्य जाया कर्म्मिलीया-
४ वीगयिला चैताभ्यां जायाभ्यां समं न्यवसत्। अनन्तरं दायूद् पलाय्य गातं गतवानिति वार्त्तां शौलो निशम्य पुनस्तं न गवेषयामास।
५ अनन्तरं दायूद् आखीशं जगाद, यद्यहं भवतो दृष्ट्यानुग्रहीतोऽस्मि तर्हि जनपदस्यैकस्मिन् नगरे मम वासार्थं स्थानं ददातु यतो भवतो
६ दासो भवता समं राजधान्यां कुतो निवत्स्यति? तत आखीशस्तस्मिन् दिने सिक्लगनगरं तस्मै दत्तवान् अतः कारणात् तन्नगरेऽद्यापि यिहूदीय-राजवर्गस्याधिकारोऽस्ति।
७ तस्मिन् पिलेष्टीयानां देशे दायूद् चतुर्मासाधिकवत्सरैकप्रमाणं
८ कालम् उवास। तस्मिन् समये दायूद् तदीयलोकाश्च गत्वा गिश्रू-रीयगेषरीयामालेकीयान् लोकान् आचक्रमिरे यतः पूर्व्वं त एव शूरं
९ मिसरञ्च यावत् तत्र देशे न्यूषुः। दायूद् यं जनपदम् आक्राम्यत् तन्मध्ये जीवन्तं कमपि पुरुषं स्त्रियं वा नावाशेषयत्, अपरं मेष-गोगर्द्दभोष्ट्रान् वस्त्राणि चापहृत्याखीशस्य समीपं परावृत्यागच्छत्।
१० अनन्तरं युष्माभिरद्य को देश आक्रान्त इत्याखीशेन पृष्टे दायूद्

कथयामास, दाक्षिणात्या यिहूदीयानां यिरह्मेलीयानां केनीयानाञ्च
देशाः। किन्तु दायूद् एतादृशं कर्म्म कृतत इति वार्त्तास्मान् अधि ११
केनापि न प्रकाश्यताम् इति चिन्तयन् दायूद् गाते वार्त्तानेतारं
कञ्चन पुरुषं स्त्रियं वा जीवन्तं नावाशेषयत्; स यावत् पिलेष्टीयानां
देशे प्रावसत् तावद् एतादृशं व्यवहृतवान्। अनन्तरम् आखीशो १२
दायूदि व्यश्वसत्, यतः सोऽचिन्तयत् दायूद् निजलोकस्येस्रायेल्वंशस्य
समीपे स्वं घृणास्पदं कृतवान् अतो हेतोः सर्व्वदा मम दासः स्थास्यति।

## २८ अष्टाविंशोऽध्यायः।

१ आखीशस्य दायूदि विश्वसनं ३ शिमूयेलस्य मरणं गुणिभूतज्ञानां दूरीकरणं ४ पिलेष्टीयेभ्यः शौलस्य भीतत्वं ७ भूतज्ञायाः स्त्रियाः समीपे शौलस्य गमनं शिमूयेलस्य उत्थापयितुम् आज्ञादानं १५ शौलं प्रति शिमूयेलस्य कथनं तेन कथनेन शौलस्य त्रासः।

अनन्तरं पिलेष्टीया इस्रायेल्वंशेन समं योद्धुं सैन्यानि संजगृहुः। १
आखीशस्तदा दायूदं जगाद त्वया तव मनुजैश्च युद्धाय मया समं
गन्तव्यमिति ज्ञायतां। ततो दायूद् आखीशं बभाषे निजदासेन यद्यत् २
कर्म्म साधयिष्यते तद् भवता ज्ञास्यते। आखीशो दायूदम् उक्तवान्
अहं त्वां नित्यं मच्छिरोरक्षणपदे नियोक्ष्ये।

तत्कालात् पूर्व्वं शिमूयेले मृते इस्रायेलीयलोकास्तदर्थं शोकं कृत्वा ३
रामतनाम्नि तस्य नगरे तस्य श्मशानं चक्रुः। अपरं शौलो भूतज्ञान्
देवज्ञांश्च लोकान् देशाद् दूरीकृतवान्।

अनन्तरं पिलेष्टीया एकत्र मिलित्वागत्य शूनेमे शिविरं स्थापयाञ्चक्रुः ४
शौलोऽपि सर्व्वान् इस्रायेल्लोकान् संगृह्य गिल्बोये शिविरं स्थापया-
मास। किन्तु शौलः पिलेष्टीयानां सैन्यानि निरीक्ष्य विभयाञ्चकार ५
तस्य हृद् अतीव चकम्पे च। ततः स परमेश्वरं पप्रच्छ, किन्तु परमेश्वरः ६
स्वप्नेन वा ऊरीमेन वा भविष्यद्वादिभिः किञ्चनोत्तरं तस्मै न ददौ।

ततः शौलो निजभृत्यान् आज्ञापयामास यूयं भूतज्ञां स्त्रियमेकां ७
गवेषयत तस्याः समीपं गत्वाहं तया भावि विविदिषिष्यामि। अनन्तरं
तस्य भृत्या ऊचुः पश्य ऐन्दोरे भूतज्ञा योषिदेका विद्यते। ततः शौल- ८
श्छद्मवेशार्थम् इतरवसनानि परिधायापरौ द्वौ जनौ सङ्गिनावादाय

यात्राञ्चकार। अपरं रजन्यां तस्या योषितः समीप उपस्थाय बभाषे
अहं विनये त्वं मत्कृते भौतिकं मन्त्रं पठ यस्य नाम मया कथ्यते
९ तम् उत्थाप्यानय च। ततः सा नारी तमुक्तवती पश्य शौलो भूतज्ञान्
दैवज्ञांश्च देशमध्याद् उच्छिन्नवान् तेषां प्रातिकूल्येन यदिदं व्यवहृत-
वान् तत् त्वं जानासि। त्वम् इदानीं मां घातयितुं मम प्राणानां विरुद्धं
१० कुत उन्माथं योजयसि? ततः शौलः परमेश्वरस्य नाम गृहीत्वा
तस्याः समीपे शपथं कुर्व्वन् जगाद, परमेश्वरो यद्यमरो भवेत् तर्हि
११ कार्य्येऽस्मिन् तव काचिदपि विपद् न घटिष्यते। तदानीं सा योषित्
पप्रच्छ अहं तव समीपं कमुत्थाप्यानयामि? ततः स उक्तवान् शिमू-
१२ येलमुत्थाप्यानय। अनन्तरं तया योषिता शिमूयेले दृष्टे उच्चैः शब्दं कृत्वा
१३ शौल उक्तः, त्वं शौलः, कुतो मां प्रतारितवान्? राजा जगाद मा
भैषीः, त्वया किं दृष्टं? सावदत्, अहं विचारयितारं भूमित उत्तिष्ठ-
१४ न्तम् अदर्शं। शौलः पप्रच्छ, तस्याकारः कीदृशः? सावदत्, एकः स्थविरो
मानुष उत्तिष्ठति स आप्रपदीनेनाच्छादित आस्ते। ततः स शिमूयेल
एव इति विज्ञाय शौलो भूमिष्ठः सन् प्रणनाम।
१५ अपरं शिमूयेलः शौलं पृष्टवान् त्वं कुतो माम् उत्थापयन् क्लिश्नासि?
ततः शौलोऽवदत् अहम् अतीवोद्विग्नोऽस्मि, यतः पिलेष्टीया मया
सह युध्यन्ति, ईश्वरोऽपि मामत्यजद् भविष्यद्वादिभिः स्वप्नै र्वा मह्यं
किञ्चनोत्तरं न ददाति, अतो हेतो र्मया किं कर्त्तव्यं तद् भवान् यन्मां
१६ वदेत् तदर्थमहं भवन्तम् आहूतवान्। शिमूयेलोऽवदत् परमेश्वरस्त्वां
१७ परित्यज्य यदि तव रिपु र्जातस्तर्हि मां कुतः पृच्छसि? परमेश्वरो
मया यदवदत् तदेव कृतवान् स तव कराद् राज्यम् अपहृत्य तव समी-
१८ पवासिने दायूदे दत्तवान्। यतस्त्वं परमेश्वरस्य वचनम् अवमत्यामा-
लेकीयलोकान् प्रति तस्य प्रचण्डकोपं सफलं न कृतवान् एतत्कारणाद्
१९ अद्य परमेश्वरस्त्वां प्रति कर्म्मैतत् कृतवान्। अपरं त्वया समम्
इस्रायेल्वंशोऽपि परमेश्वरेण पिलेष्टीयानां करे समर्पयिष्यते। श्वस्त्वया
तव पुत्रैश्च मम सङ्गिभि र्भवितव्यम् इस्रायेलः सैन्यान्यपि परमेश्वरेण
पिलेष्टीयानां करेषु समर्पयिष्यन्ते।
२० ततः शौलस्तत्क्षणाद् भूमौ दण्डवत् निपपात, अपरं शिमूयेलस्य वाचः
श्रुत्वातीव भीतो बलहीनश्च बभूव, यतः स गतं कृत्स्नं दिवारात्रं
२१ किमपि न भुक्तवान्। अनन्तरं सा नारी शौलस्य समीपमागत्य तम-

तीव्र व्याकुलं वीक्ष्य बभाषे, पश्य भवतो दासीयमहं भवत आज्ञां
गृहीत्वा प्राणपणेन भवदुक्ते वचसि मनो न्यदधे। अतो विनयेऽहम् २२
अधुना भवतो दास्या वचो भवतापि गृह्यतां। भवतः सम्मुखे किञ्चिद्
भक्ष्यम् आनयेऽहं ततो यात्राकरणार्थं भवतः शक्ति र्यद् भवेत् तदक्ते
तद् भुङ्क्तां। किन्तु सोऽनङ्गीकुर्व्वन् जगाद, नाहं भोक्ष्ये। अनन्तरं २३
सा नारी तस्य भृत्याश्च बहु विनीतवन्तस्ततः स तेषां वाक्यानि गृहीत्वा
भूमित उत्थाय खट्वायाम् उपविवेश तदानीं तस्या गृहे यः पुष्ट- २४
गोवत्स आसीत् सा तं तूर्णं मारयित्वा गोधूमचूर्णानि गृहीत्वा
मर्द्दयित्वा किण्वशून्यपूपान् आसाद्य शौलस्य तस्य भृत्यानाञ्च सम्मुखम् २५
आनिनाय ते च भुक्तवन्तः। ततस्ते तस्यां रजन्यामुत्थाय यात्रां चक्रिरे।

## २९ ऊनत्रिंशोऽध्यायः।

१ दायूदो युद्धाय गमनं पिलेष्टीयपतिगणस्यासम्मतिः ६ दायूदं प्रत्याखीशस्य विसर्जनं।

तस्मिन् काले पिलेष्टीयाः स्वेषां कृत्स्नं सेनागणम् अफेके संजगृहुः। १
अपरम् इस्रायेलीयमनुजा यिष्रियेलस्थस्य प्रस्रवणस्य समीपे शिविरं
स्थापयामासुः। अनन्तरं पिलेष्टीयानाम् अधिपतयः शतं शतं सहस्रं २
सहस्रं सैन्यान्यानीयागमंस्ततः सेनानां पश्चाद् आखीशेन साकं दायूद्
तस्य लोकाश्चागताः। ततः पिलेष्टीयानाम् अधिपतयः पप्रच्छुः, इमे ३
इब्रीयमनुजा अत्र किं कुर्व्वन्ति? आखीशः पिलेष्टीयानाम् अधि
पतीन् प्रत्यवदत्, इस्रायेलीयभूपस्य शौलस्य दासो दायूद् किमेष
नहि? स वर्षैकं वर्षद्वयं वा मम सन्निधौ प्रवसति, अपरं यद्दिने मम
पक्षोऽभवत् तदारभ्याद्य यावत् तस्य कोपि दोषो नादर्शि मया।
तेन पिलेष्टीयानाम् अधिपतयस्तस्मै चुक्रुधुः। अपरं पिलेष्टीयानाम् ४
अधिपतयस्तमूचुः, त्वं तं परावर्त्य प्रेषय स परावृत्य त्वया निरूपितं
निजस्थानं यातु नास्माभिः साकं युद्धायागच्छतु रणे चास्माकं रिपु र्न
भवतु, यतः स एतेषां मनुजानां शिरांसि विनापरेण केन पारितो-
षिकेन निजप्रभुणा समं सन्धिं करिष्यति? अपरं, ५

शौलेनारिसहस्राणि हतानि समराङ्गने।
दायूदापि विपक्षाणामयुतानि हतानि च॥

इदं गीतं योषितो यमधि समगायन् स दायूद् किमयं नहि?

६ तदानीम् आखीशो दायूदम् आहूय जगाद, परमेश्वरस्यामरत्वेन शपथं कुर्व्वन् अहं वदामि त्वं सरलताम् आचरसि, अपरं सैन्यमध्ये
मया सह तव गमनागमनेऽहं भद्रं मन्ये यतो मम समीपे तवागमनदि-
नमारभ्याद्य यावत् तव कोपि दोषो मया न प्रापि, तथापि भूपवर्गा-
७ स्त्वयि न तुष्यति। अतस्त्वं पिलेष्टीयभूपानाम् असन्तुष्टिम् अजनित्वा
८ कुशलेन परावृत्य याहि। दायूद् आखीशं प्रतिजगाद, किम् अपराद्धं
मया? यद्दिने भवतः समक्षम् आगच्छं तदारभ्याद्य यावद् भवतो
दासस्य को दोषो भवता प्रापि यन्मत्प्रभो र्भूपस्य शत्रुभिः समं योद्धुं मया
९ न गन्तव्यं? तत आखीशो दायूदं प्रत्यवदत्, त्वम् ईश्वरस्य दूतैकइव मम
साक्षात् तुष्टिजनक आसे ममायम् आशयः, किन्तु पिलेष्टीयभूपा वदन्ति,
१० अस्माभिः समं तेन रणाय न गन्तव्यं। अतस्त्वं त्वया सहागतास्तव
११ प्रभो र्दासाश्च प्रत्यूष उत्थायालोके जाते यात्रां कुरुध्वं। ततो दायूद्
तस्य लोकाश्च प्रत्यूष उत्थाय प्रातःकाले पिलेष्टीयानां देशं परावृत्य गताः
पिलेष्टीयाश्च यिष्रियेलं जग्मुः।

## ३० त्रिंशोऽध्यायः।

१ अमालेकीयैः सिक्लगनगरस्य लोठनं ९ तदर्थं दायूदस्तल्लोकानाञ्च दुःखं ९ अमालेकीयानां पश्चाद्गमनं वार्त्ताप्रापणं १९ रिपूणां वधो लोठितद्रव्याणां पुनर्ग्रहणं २१ लोठितद्रव्याणां विभजने व्यवस्थास्थिरीकरणं २६ बन्धुसमीपं दायूदो लोठितद्रव्याणां प्रेषणं।

१ अनन्तरं दायूद् तस्य लोकाश्च तृतीयदिवसे सिक्लगनगरमुपतस्थुः
किन्तु तदन्तरम् अमालेकीयलोका दक्षिणां दिशं सिक्लगञ्चाक्रम्य सिक्लगं
२ निहत्य वह्निना दाहयामासुः। अपरम् आबालवृद्धवनितमनुजान् न
हत्वा वन्दीकृत्य नीतवन्तः स्वमार्गेण गतवन्तश्च।
३ अनन्तरं दायूद् तदीयलोकाश्च नगरमुपस्थाय नगरं भस्मराशिं स्वेषां
४ नारीसुतदुहितरश्च वन्दीकृत्य दूरं नीता इति ददृशुः। तदानीं दायूद्
५ तस्य लोकाश्च रोदितुं यावच्छक्तास्तावद् उच्चै रुरुदुः। तस्मिन् काले
यिष्रियेलीयाहीनोयमा कर्म्मिलीयाबीगयिला च मृतस्य नावलस्य जाया
६ दायूद इमे द्वे भार्य्येऽपि वन्दीत्वं गते। अपरं सर्व्वलोकानां मनांसि
स्वपुत्रकन्यानां कृते शोके मग्नानि ततस्ते दायूदं पाषाणाघातेन हन्तुं
कथितवन्तः, तेन दायूद् अतीव व्याकुलो बभूव, किन्तु निजप्रभौ पर-

मेश्वर आत्मानम् आश्वासितवान्। अनन्तरं दायूद् अहीमेलकस्य सुतम् ७
अवियाथरम् अवदत्, विनयेऽहं त्वम् एफोदम् अत्रानय। ततोऽविया-
थरो दायूदः समीपम् एफोदम् आनिनाय। तदानीं दायूद् परमेश्वरं ८
पप्रच्छ, एतस्य सेनानिवहस्य पश्चात् मया किं धावितव्यं? तं प्राप्तुं मया
किं शक्ष्यते? ततः स उक्तास्त्वं तस्य पश्चाद् याहि तं प्राप्तुं शक्ष्यसि सर्व्वा-
ण्युद्धारयिष्यसि च।

अनन्तरं दायूद् तस्य सङ्गिनः षट्शतलोकाश्च गत्वा बियोराख्य- ९
स्रोतस्वतीतीरं प्रापुः केचिच्च तत्रावशिष्टास्तस्थुः। अपरं दायूद् तस्य १०
सङ्गिनश्चत्वारि शतानि मनुजा रिपूणां पश्चात् जग्मुः किन्तु द्वे शते
लोकाः क्लान्तिकारणाद् बियोरस्रोतस्वत्याः पारं गन्तुम् अशक्नुवन्तस्त-
स्मिन् स्थानेऽवतस्थिरे। अपरं क्षेत्रमध्ये लोकैरेकस्मिन् मिस्रीयमनुजे ११
प्राप्ते ते तं दायूदः समीपम् आनीय पूपान् खादयामासुः पानीयञ्च पाय-
यामासुः। अपरं स तै र्दत्तम् उडुम्बरगुच्छस्य खण्डमेकं शुष्कद्राक्षाद्वयञ्च १२
भुक्त्वा चेतनां प्राप यतः स त्रीणि दिवारात्राण्यन्नं न भुक्तवान् तोयञ्च
न पीतवान्। अनन्तरं दायूद् तं पृष्टवान् त्वं कस्य मानुषः? कस्माद् १३
आगतोऽसि? स कथितवान् अमालेकीयस्यैकस्य दासो मिस्रीयतरुणो-
ऽहं दिनत्रयं यातं मम प्रभुः पीडितं मां परित्यज्य गतवान्। वयं १४
किरेथीयानां दक्षिणप्रदेशं यिहूदाधीनं कालेवाधीनञ्च दक्षिणप्रदेशम्
आक्रान्तवन्तः सिक्लगनगरं वह्निना दाहितवन्तश्च। अनन्तरं दायूद् १५
तं पप्रच्छ त्वं तस्य निवहस्य समीपं मां नेतुं शक्नोषि? स उक्तवान्
मां न हनिष्यसि मम प्रभो र्हस्तगतञ्च न करिष्यसि एतद् यदि परमेश्व-
रस्य नाम्ना शपसे तर्हि तस्य संघस्य समीपं त्वां नेष्यामि।

अनन्तरं तेन दायूदि तेषां समीपम् आनीते ते पिलेष्टीयानां यिहू- १६
दीयानाञ्च देशाद् बहुलोठितस्यानयनकारणाद् बहुभूमौ विस्तीर्णाः
सन्तो भुञ्जते पिबन्ति नृत्यन्ति चेति दृष्टं। ततो दायूद् सूर्य्योदयमारभ्य १७
परदिनस्य सन्ध्याकालं यावत् तान् आजघान ततस्तेषां केवलं चत्वारि
शतानि तरुणा उष्ट्रारोहणेन पलायमाना रक्षां प्रापुः, अपरेषाम्
एकोऽपि रक्षां न प्राप। अनन्तरम् अमालेकीया यानि यानि गृहीत्वा १८
गतास्तानि सर्व्वाणि दायूदा पुनः प्राप्तानि विशेषतो दायूदो द्वे भार्य्ये
ऽपि मोचिते। तैरपहृतानां क्षुद्रमहतीनां लोठितद्रव्याणाञ्च क्षुद्रं महद् १९
वा किञ्चिदपि न्यूनं नाभूत् सर्व्वाण्येव दायूदा पुनर्लब्धानि। अपरं २०

दायूदा गोमिषेषु गृहीतेषु लोकास्तं पशूनां गणम् अग्रे कृत्वा गच्छन्तः
कथयामासुः, एतानि दायूदो लोठितद्रव्याणि।
२१ अनन्तरं क्लान्तिकारणाद् दायूदः पश्चाद् गन्तुम् अक्षमा ये द्वे शते
लोका बियोरखोतस्त्रोतस्तटे स्थातुं तैः समादिष्टास्तेषां समीपं दायूदि
समुपस्थिते ते दायूदं तस्य सङ्गिनो लोकांश्च साक्षात्कर्तुं बहिरागत-
२२ वन्तः; ततो दायूद् तेषां समीपमुपस्थाय तान् कुशलं पप्रच्छ। किन्तु
दायूदः सङ्गिनां मध्ये ये दुश्चरित्रा दुष्टाश्च मनुजास्त ऊचिरे, इमेऽ-
स्माभिः समं न गतवन्तस्ततो हेतो र्वयम् एतेभ्यो लब्धलोठितद्रव्याणां
किञ्चिदपि न दास्यामः केवलम् एकैकस्मिन् जायां बालकांश्च दास्यामः,
२३ तान् नीत्वा ते गमिष्यन्ति। ततो दायूद् प्रत्यवदत् हे मम भ्रातरः, यः
परमेश्वरोऽस्मान् रक्षित्वास्माकं प्रतिकूलगामिनीः सेना अस्माकं करेषु
समर्पितवान् सोऽस्मभ्यं यानि वस्तूनि दत्तवान् तान्यधि यूयम् अविहितम्
२४ आचरथ। युष्माकं वचः को ग्रहीष्यति? योद्धुं गमनकारिणो याद्द-
शोंशो भाराणां समीपस्थायिनोऽपि तादृशोंऽशो भविष्यति तौ समा-
२५ नांशिनो भविष्यतः; अपरं दायूद् इस्रायेल्वंशस्य कृते यमेतं विधिं
व्यवस्थाञ्च स्थापयामास स तं दिवसमारभ्य यावदद्य चलति।
२६ अनन्तरं दायूद् शिक्लगम् उपस्थाय बैथेलं दक्षिणरामतं यत्तीरम्
२७ अरोयेरं सिफ्मोतम् इष्टिमोयं राखलं यिरह्मेलीयनगराणि केनीय-
२८ नगराणि हर्म्मां कोराशनम् अथाकं हिब्रोणञ्चेत्यादीनि यानि यानि
३० स्थानानि दायूद् तस्य लोकाश्च पर्य्यटवन्तस्तत्रत्यानां यिहूदाप्रदेशस्य
३१ प्राचीनानां निजबन्धूनां समीपं लोठितद्रव्यमध्याद् दातव्यानि प्रहित्य
कथयामास, परमेश्वरस्य रिपुभ्यो लोठितद्रव्यमध्याद् एतानि पारितो-
षिकानि भवद्भि र्गृह्यन्तां।

---

## ३१ एकत्रिंशोऽध्यायः।

१ शौलस्य तस्य पुत्राणाञ्च मरणं ७ इस्रायेला त्यक्तेषु नगरेषु पिलेष्टीयानां निवसनं ८
शौलस्य तस्य पुत्राणाञ्च शवानाम् अपमानितत्वं ११ याबेशीयलोकैस्तेषां शवानां
हरणं श्मशाने स्थापनञ्च।

१ अनन्तरम् इस्रायेल्वंशेन समं पिलेष्टीयेषु युध्यत्सु इस्रायेल्वंशाः
पिलेष्टीयानां सम्मुखात् पलायाञ्चक्रे गिल्बोयपर्व्वते च लोकास्ते-

राहताः सन्तो निपेतुः। अपरं पिलेष्टीयाः शौलं तस्य पुत्रांश्च प्राप्य २
योनाथनो ऽवीनादवो मल्किशूयश्चेतिनामकान् शौलस्य पुत्रान् जघ्नुः।
अपरं शौलमधि घोरतरे संग्रामे जाते धनुर्धारिषु च तं प्रति शरान् ३
निक्षिपत्सु स धनुर्धारिभिरतीव क्षताङ्गश्चतः। ततः शौलो निजास्त्र- ४
वाहिनं जगाद, त्वं स्वखड्गं निष्कोषं कृत्वा मां छिन्धि नो चेद् अच्छिन्न-
त्वच एत आगत्य मां विद्धा ममापमानं करिष्यन्ति। किन्तु तस्यास्त्रवाही
अतीव भीतत्वकारणात् तत् कर्त्तुम् ऊररी न चकार, तस्मात् शौलः
खड्गं गृहीत्वा स्वयं तदुपरि निपपात। ततः शौलो ममारेति वीक्ष्य ५
तस्यास्त्रवाहकोऽपि निजखड्गोपरि निपतन् तेन समं ममार। अनेन ६
प्रकारेण तस्मिन् दिने शौलस्तस्य त्रयः पुत्रा अस्त्रवाही चेमे सर्व्वे
युगपद् अम्रियन्त।

अनन्तरं समभूमेः पारस्था यर्द्दनस्यान्यपारस्थाश्च य इस्रायेल्वंशा- ७
स्त इस्रायेलीयानां पलायनं शौलस्य तस्य पुत्राणाञ्च मरणमपि वीक्ष्य
सर्व्वनगराणि परित्यज्य पलायाञ्चक्रिरे, ततः पिलेष्टीया आगत्य तेषां
मध्ये न्यवसन्।

परदिवसे पिलेष्टीया हतमनुष्याणां वस्त्रादीन्यपहर्त्तुम् आगत्य ८
गिल्बोयपर्व्वते शौलस्य तस्य त्रयाणां पुत्राणाञ्च देहान् प्राप्य तस्य ९
मस्तकं छित्त्वा तस्य सज्जादि मोचयित्वा स्वेषां देवालयेषु लोकानां समीपे
च वार्त्तां घोषयितुं पिलेष्टीयानां देशस्य चतुर्दिशं दूतान् प्रेषयामासुः।
अपरं ते तस्य सज्जाम् अस्तारोतदेव्या मन्दिरे निदधिरे तस्य दे[illegible] १०
वतशानस्य भित्तावुल्लम्बयामासुः।

अनन्तरं शौलं प्रति पिलेष्टीयानां तस्यापकारस्य वार्त्तायां यावेशगि- ११
लियदनिवासिभि र्लोकैः श्रुतायां सर्व्वे बलवन्तो लोका उत्थाय तां कृत्स्नां १२
रजनीं व्रजित्वा शौलस्य तस्य पुत्राणाञ्च शरीराणि वैतशानस्य भित्तितो
यावेशम् आनीय दाहयामासुस्तेषाम् अस्थीनि च गृहीत्वा यावेशस्थस्य
कस्यचित् तरोर्मूले भूमौ पोथयामासुः। अनन्तरं ते सप्तदिनानि यावद् १३
उपवासं चक्रिरे।

---

# शिमूयेलस्य द्वितीयं पुस्तकं।

## १ प्रथमोऽध्यायः।

१ शौलस्य योनाथनस्य च मरणवार्त्तायां कथितायां कश्चिद् अमालेकीयस्य मरणं
१७ शौलस्य योनाथनस्य च मरणमधि गीतगानं।

१ शौलस्य मरणकाले दायूद् अमालेकीयानां निहननात् प्रत्यागत्य
२ शिक्लगनगरे दिनद्वयम् उषितवान्। ततः परं तृतीयदिवसे छिन्नवस्त्रो
धूलीलिप्तमस्तकश्चैको जनः शौलस्य शिविराद् दायूदः समीपम् आगत्य
३ भूमिष्ठः सन् तं प्रणनाम। ततो दायूद् तं पप्रच्छ, त्वं कुत आगतो-
४ ऽसि? स कथितवान् इस्रायेलः शिविरात् पलाय्याहम् आगच्छं। दायूद्
पप्रच्छ, त्वां विनयेऽहं तत्र किं जातं? तत् मह्यं कथय। ततः स कथित-
वान् मनुष्या रणात् पलायाञ्चक्रिरे बहवो निपत्य पञ्चत्वं प्राप्ताश्च
५ विशेषतः शौलस्तस्य पुत्रो योनाथनोऽपि मृतवन्तौ। दायूद् तं वार्त्ता-
वाहारं तरुणं पप्रच्छ शौलस्तस्य पुत्रो योनाथनश्चाम्रियेताम् इति
६ त्वं केन प्रकारेण ज्ञातवान्? ततः स वार्त्तावादी तरुणस्तं जगाद,
घटनाक्रमेण गिल्बोयपर्व्वतमुपस्थितोऽहं शूलावलम्बदेहं शौलं तस्य
७ पश्चाद् बहून् रथान् हयारोहिणश्च तुमूलीभूतान् अपश्यं। तदा स
पश्चाद् अवलोक्य मां वीक्ष्याहूतवान् ततोऽत्र स्थानेऽहम् इति मया
८ निगदिते स मां पृष्टवान् कस्त्वं? अहमुक्तवान् अमालेकीयोऽहम्।
९ अनन्तरं स माम् अवदत्, विनयेऽहं त्वं मम सन्निधिमागत्य मां जहि
१० यतोऽहं मूर्च्छापन्नोऽस्मि तथापि मम प्राणा न यान्ति। ततोऽहं तस्य
समीपे तिष्ठन् तं हतवान्, अतस्तत्पतनात्परं स पुन र्जीवितुं न शक्नो-
तीत्यहं निश्चितं वेद्मि। अनन्तरम् अहं तस्य शिरसः किरीटं हस्ताद्
११ वलयञ्च गृहीत्वा निजप्रभोः समीपम् एतत् स्थानम् आनैषं। ततो
दायूद् निजवस्त्राणि धृत्वा छिन्नवान् अपरं तस्य सङ्गिनः सर्व्वेऽपि
१२ तथैव कृतवन्तः। अपरं शौलस्तस्य पुत्रो योनाथनश्च परमेश्वरस्य
लोकाश्चेस्रायेलवंशाश्च खड्गे निहतास्तत्कारणात् ते सन्ध्यां यावत् शोक-
१३ विलापोपवासै र्दिनं यापयामासुः। अनन्तरं दायूद् तं वार्त्तावादिनं

तदैवं पप्रच्छ, त्वं कुत्रत्यो मनुजः? स व्याहरत्, अहं प्रवासिनोऽमा-
लेकीयस्य कस्यचित् सुतः। तं दायूद् ऊचे त्वं परमेश्वरेणाभिषिक्तस्य १४
हननाय निजं करं प्रसारयितुं किं नाभैषीः? ततो दायूद् तरुणमेकम् १५
आज्ञयादिदेश, त्वम् एनम् आक्रम्य जहि। ततस्तेनाहतः स ममार।
अपरं दायूद् तं बभाषे तव शोणितपातापराधम् त्वय्येव तिष्ठतु, यतो- १६
ऽहं परमेश्वरेणाभिषिक्तम् अवधिषम् इति प्रमाणं त्वदीयवदनेन तव
विरुद्धम् अभिहितम्।

अनन्तरं दायूद् शौलं तस्य पुत्रं योनाथनञ्चाधि कोदण्डगीतनामकं १७
विलापगीतमिदं रचयित्वा यिहूदावंशं शिक्षयामास। तद् याशेरपुस्तके १८
लिखितमास्ते।

इस्रायेल्वंश ते व्याघ्रा उच्चस्थानेषु जघ्निरे। १९
हा हा त्वदीयशूरास्तु कीदृङ्निधनतां गताः॥
वार्त्ता माख्यायतां गातेऽस्किलोन्रथ्यासु नोच्यतां। २०
नो चेन्नन्दिष्यते नूनं पिलेष्टीयाबलाजनैः।
तथाच्छिन्नत्वचां स्त्रीभि गर्व्ववाक्यं वदिष्यते॥
गिल्बोयपर्व्वताः सर्व्वे युष्माम् प्रति पुन र्नहि। २१
तुषारपतनं वर्षं भूयात् क्षेत्रञ्च शस्यकृत्।
यतो युष्मासु वीराणां निपेतुः फलकास्तदा।
तैलेनानभिषिक्तस्य फलको निपतेद् यथा।
तथैव चर्म्म शौलस्य तत्र न्यक्षिप्यताशुभं॥
अलक्ष्येऽपराजि योद्धृणाम् अप्राप्ते शूरमेदसि। २२
योनाथनस्य कोदण्डं न कदापि न्यवर्त्तत।
न च शौलस्य खड्गोऽपि परावर्त्तत निष्फलं॥
प्रियौ मनोहरावास्तां जीवत्काले परस्परं।
शौलयोनाथनावेतौ विभिन्नौ न मृतावपि। २३
कुररात् वेगिनौ तौ तु सबलौ च मृगेन्द्रतः॥
इस्रायेल्कन्याः शौलो युष्माभिरेव शुच्यतां। २४
यतो लोहितवासांसि रम्याण्याभरणानि च।
तेन दत्तानि युष्मभ्यं तेनैव वः सुचेलकाः।
भूषिताः स्वर्णजातैश्च नानाविधविभूषणैः॥
हा हा रणस्थले शूराः कीदृङ्निधनतां गताः। २५

हा हा योनाथनश्चैव निहतस्तव पर्व्वते ।
२६ हे योनाथन मद्भ्रातुस्त्वत्कृते पीडितोऽस्म्यहं ।
मदीयमनसो रत्नं त्वमेवैकः समस्थियाः ।
श्रेयः प्रेम तवामन्ये प्रेमतो योषितामपि ।
२७ हा हा शूराः कथं पेतु र्नेशु र्युद्धवस्त्राणि च ॥

## २ द्वितीयोऽध्यायः ।

१ ईश्वरस्य निदेशाद् हिब्रोणं गत्वा दायूदो राजत्वकरणं ५ याबेशगिलियदीयमनुजान् प्रति दायूदः प्रशंसनं ८ ईश्बोशतस्य इस्रायेलो नृपतीकरणं १२ योयाबाबनेरयो-स्तत्लोकानां योधनं १८ असाहेलस्य मरणं २५ अब्नेरस्य वचनाद् योयाबस्य परावर्त्तनं ३२ असाहेलस्य श्मशाने स्थापनं ।

१ अनन्तरं दायूद् परमेश्वरं पृष्टवान् किमहं यिहूदायाः कास्वन नगरीं
यास्यामि ? परमेश्वरः कथयामास, याहि । अनन्तरं दायूद् पप्रच्छ,
२ मया किं स्थानं गन्तव्यं ? स कथयामास हिब्रोणं व्रज । ततो दायूद्
यिष्रियेलीयाहीनोयमा मृतस्य कर्म्मिलीयनाबलस्य जायाबीगयिल
३ चेतिनामिके तस्य भार्य्ये च तन्नगरं जग्मुः । अपरं दायूद् सपरिवारान्
निजसङ्गिनो जनानप्यानीतवान् ते च हिब्रोणप्रदेशस्य नगरेषु न्यवसन् ।
४ अनन्तरं यिहूदीयमनुजा आगत्य तत्र स्थाने दायूदं यिहूदावंशोपरि
राज्यपदेऽभिषिषिचुः ।

५ अनन्तरं याबेशगिलियदीयमनुजाः शौलं श्मशाने निहितवन्त इति
वार्त्तायां दायूदा श्रुतायां दायूद् याबेशगिलियदीयलोकानां समीपं
दूतान् प्रहित्य तान् जगाद, यूयं परमेश्वरे धन्या यतो यूयं निजप्रभुं
६ शौलं प्रति करुणामिमां कृत्वा तस्य देहं श्मशानेऽस्थापयत । अतो हेतोः
परमेश्वरो युष्मान् प्रति सत्यताम् अनुग्रहञ्चाचरिष्यति ; अपरं
युष्माभिरेतत्कर्म्माकारि तत्कारणाद् अहमपि युष्मान् सत् करिष्यामि ।
७ इदानीं युष्माकं हस्ता बलिनो भवन्तु यूयञ्च शूरा भवत यस्माद् युष्माकं
प्रभौ शौले पञ्चत्वं गते यिहूदावंशीयाः स्वेषां राजत्वपदे मामभि-
षिषिचुः ।

८ अनन्तरं शौलस्य सेनापति र्नेरस्य तनयोऽब्नेरः शौलस्य सुतम् ईश्-
९ बोशतं गृहीत्वा मह्नयिमम् आनीय गिलियदाशूरियिष्रियेलेफ्रयिम-
१० बिन्यामीनादीनाम् इस्रायेल्वंशानां राजानं चकार । शौलस्य सुतः

स ईश्‌बोशतश्चत्वारिंशद्वत्सरवयसीस्रायेलो राजत्वं लेभे स द्वौ वत्सरौ
राजत्वं चकार केवलं यिहूदावंशो दायूदः पक्षीयो बभूव। ततो दायूद् ११
हिब्रोणे षण्मासाधिकान् सप्तवत्सरान् यिहूदावंशस्य राजत्वं चकार।

अनन्तरं नेरस्य सुतोऽवनेरः शौलसुतस्येश्‌बोशतस्य दासाश्च मह्न- १२
यिमाद् गिवियोनं जग्मुः। तथा सिरूयायाः सुते योयावे दायूदो १३
दासेषु च बहिर्भूतेषु गिवियोनस्थपुष्करिण्याः समीप उभये लोकाः
सम्मिलिताः पश्चात् संघ एकः पुष्करिण्याः प्रतीरे तदन्यः संघश्च
पुष्करिण्याः पारे तस्थौ। अपरम् अवनेरो योयावम् ऊचे, इदानीं १४
तरुणा उत्थायास्माकं सम्मुखे क्रीडन्तु ततो योयावोऽभिदधे त
उत्तिष्ठन्तु। अनन्तरं शौलस्य सुनेरीश्‌बोशतस्य पक्षीया बिन्या- १५
मीनीया द्वादशजनास्तथा दायूदो दासानां द्वादशजना उत्थाय सङ्ख्या-
नुसारतः पारं गतवन्तः। अपरं तेषाम् एकैकेन जनेन स्वप्रति- १६
योद्धुः शिरो धृत्वा कक्षः खड्गेन विद्धस्तत उभयपक्षीया मनुजा युग-
पन्निपेतुः, अतो हेतो र्गिवियोनस्थं तत्स्थानं हिल्कत्-हस्सुरिम् खड्ग-
क्षेत्रमिति नाम्ना प्रसिद्धं बभूव। अनन्तरं तस्मिन् दिने महति १७
घोरतरे संग्रामे जाते ऽवनेर इस्रायेलो मनुजाश्च दायूदः सेनानिवहस्य
सम्मुखे पराजिग्यिरे।

तस्मिन् स्थाने योयावावीशयासाहेलश्चेतिनामकाः सिरूयायाः सुता- १८
स्त्रय आसन्। असावसाहेलो वन्यमृग इव चरणाभ्यां द्रुतगन्तासीत्।
असाहेलोऽवनेरस्य पश्चाद् अधावद् अवनेरस्य पश्चाद्गमनाद् दक्षिणं १९
वामं वा न परावर्त्तत। अनन्तरम् अवनेरः पश्चाद् वीक्ष्य पप्रच्छ २०
त्वं किम् असाहेलः? स प्रत्यवदत्, अहं स एव। ततोऽवनेरस्तं २१
बभाषे, त्वं दक्षिणं वामं वा परावृत्य तरुणानामेकं धृत्वा तस्य सज्जां
लाठय। किन्त्वसाहेलस्तस्य पश्चाद्गमनात् निवर्त्तितुं नैच्छत्। अनन्तरम् २२
अवनेरोऽसाहेलं पुनरपि जगाद, त्वं मम पश्चाद्गमनात् निवर्त्तस्व
नोचेद् यद्यहं त्वाम् आहत्य भूमौ निपातयामि तर्हि केन प्रकारेण तव
भ्रातरं योयावं मद्वदनं दर्शयिष्यामि? तथापि स निवर्त्तितुं नैच्छत्। २३
तस्माद् अवनेरो निजशूलाग्रेण तस्य कुक्षिम् इत्थं विद्धवान् यत् शूलं
तस्य पृष्ठमपि विद्ध्वा निरक्रामत् तेन स तस्मिन् स्थाने पतन् तत्रैव
ममार। अपरं यावन्तो मनुजा असाहेलस्य पतनमरणयोः स्थानम् उपत-
स्थिरे ते सर्व्वएव तत्रावतस्थिरे। अनन्तरम् अवनेरस्य पश्चाद् धावन्तौ २४

योयाबाबीशयौ सूर्य्यास्तसमये गिवियोनसमीपस्थनिर्जनप्रदेशगामिनो
मार्गस्य पार्श्ववर्त्तिनो गीहस्य सम्मुखस्थम् अम्माख्यपर्व्वतं प्रापतुः।
२५ अनन्तरं बिन्यामीनवंशीयलोका अब्नेरस्य समीपे मिलित्वा एकसंघी-
२६ भूय कस्यचित् पर्व्वतस्य शिखरे तस्थुः। तदानीम् अबनेरो योयाबम्
आहूय व्याजहार खड्गः किं निरन्तरं हनिष्यति? शेषे तिक्ततां गमिष्यति
किमेतत् त्वं न जानासि? त्वं निजभ्रातृणां पश्चाद्गमनात् निवर्त्तितुं निज-
२७ मनुजान् कतिकालं न निदेक्ष्यसि? ततो योयाबः कथयामास, त्वया यदि
किमपि नावदिष्यत, तर्हि मनुजाः प्रातःकाल एव निजभ्रातृणां पश्चाद्गम-
२८ नात् न्यवर्त्तिष्यन्त। अनन्तरं योयाबस्तूरीं वादयामास, तेन सर्व्वे मनुजाः
२९ स्थगिता बभूवुः पुनरिस्रायेलः पश्चान्न दधावुः रणञ्च न चक्रुः। ततोऽब्नेर-
स्तस्य मनुजाश्च तां कृत्स्नां रजनीं प्रान्तरस्थवर्त्मना व्रजित्वा यर्दन-
३० तटिन्याः पारं गत्वा कृत्स्नबित्रोणेन महनयिमम् उपतस्थिरे। अपरं
योयाबेनाब्नेरस्य पश्चाद्गमनात् परावृत्य सर्व्वमनुजेषु संगृहीतेषु
दायूदो दासानां मध्य ऊनविंशति जनानाम् असाहेलस्य चाभावो
३१ बभूव। किन्तु दायूदो मानुषै र्बिन्यामीनीयानाम् अब्नेरस्यानुचराणाञ्च
मध्ये षष्ट्यधिकशतत्रयं मनुजा मारिताः।
३२ अनन्तरं मनुजा असाहेलस्य देहं गृहीत्वा बैत्लेहमस्थे पैतृकश्मशाने
निहितवन्तः। अपरं योयाबस्तस्य मनुजाश्च तां कृत्स्नां रजनीं व्रजन्तः
प्रत्यूषे हिब्रोणम् उपतस्थिरे।

---

## ३ तृतीयोऽध्यायः।

१ दायूदो बलवृद्धिः २ तस्य पुत्राणां नामानि ६ ईश्बोशतं प्रति विरक्तस्याब्नेरस्य दायूदं प्रति गमनं १२ अब्नेरेण साकं नियमकरणं निजभार्य्यायाः मीखलाया याचनं १७ अब्नेरेण समं भोज्यभोजनं तस्य विसर्जनं २२ क्रुद्धेन योयाबेनाब्नेरस्य हननं २९ दायूदा योयाबस्य शपनं ३१ अब्नेरं प्रति दायूदो विलापनं।

१ अनन्तरं शौलस्य दायूदश्च वंशयोर्मध्ये बहुतिथकालं रणमभवत्।
ततो दायूद् उत्तरोत्तरं बलवृद्धिं जगाम शौलवंशश्चोत्तरोत्तरं क्षीण-
तां जगाम।
२ अपरं हिब्रोणे दायूदः पुत्राः प्रसुषुविरे। यिष्रियेलीयाहीनोय-
३ माया गर्भजातोऽम्नोननामा तस्य ज्येष्ठः पुत्रो बभूव। अपरं मृतस्य

कर्म्मिलीयनाबलस्य जायाया अबीगयिलाया गर्भजातः किलाबनामा
द्वितीयः पुत्रो बभूव; अपरं गिशूरीयन्टपस्य तल्मयस्य दुहितुर्माखायाः
गर्भजातोऽबशालोमनामा तृतीयः पुत्रो बभूव। अपरं हग्गीताया गर्भ- ४
जातोऽदोनियनामा चतुर्थः पुत्रो बभूव। अपरम् अबीटलाया गर्भजातः
शिफटियनामा पञ्चमः पुत्रो बभूव। अपरं दायूदो जायाया इग्लाया ५
गर्भजातो यित्रियमनामा षष्ठः पुत्रो बभूव। इमे सर्व्वे एव दायूद
औरसपुत्रा हिब्रोणे ऽजायन्त।

यतिकालं शौलवंशस्य दायूदवंशेन समं योधनमासीत् ततिकालम् ६
अब्नेरः शौलवंशे ममासक्त आसीत्। अनन्तरम् अयाया दुहिता रिस्पे- ७
ति नाम्ना शौलस्योपपत्न्येकासीत् तामधीश्बोशतोऽब्नेरं जगाद त्वं मम
पितुरुपपत्नीं कुत उपगतवान्? ततोऽब्नेर ईश्बोशतस्य कथातोऽतीव ८
कुपितो भवन् कथितवान्, सारमेयकपालः किम् अहं? तव पितुः
शौलस्य वंशे भ्रातृगणे बन्धुगणे च प्रत्यद्यापि सद्भावम् आचरन् दायूदः
करे त्वां न समार्पयं योऽहम् अहं किं यिहूदापक्षीयोऽस्मि? तत्कृते
त्वम् एतां सीमन्तिनीमधि मय्यद्य दोषमारोपयसि? परमेश्वरो दायूद- ९
मधि यथा शपथं कृतवान्, तदनुसारेण यद्यहं शौलवंशात् राजत्वं १०
गृहीत्वा दानमारभ्य बेर्शेबां यावत् सर्व्वेषाम् इस्रायेलीयानां यिहूदी-
यानाञ्चोपरि दायूदः सिंहासनं न स्थापयामि तर्हीश्वरोऽब्नेराया-
मुकं ततोऽधिकञ्च फलं ददातु। ततः सोऽब्नेराय पुनरेकामपि कथां
कथयितुं न शशाक यतो हेतोः स तस्माद् बिभयाञ्चकार।

अनन्तरम् अब्नेरोऽविलम्बं दायूदः समीपं दूतान् प्रहित्य जगाद, १२
अयं देशः कस्य? यदि भवान् मया सह नियमं करोति, तर्हि पश्ये-
स्रायेलवंशं भवतः पक्षम् आनेतुं भवतः साहाय्यकारी भविष्याम्यहं।

ततो दायूद् अवदत्, भद्रं मया त्वया सार्कं नियमः करिष्यते किन्तु १३
मया त्वत्त एकं कार्यं याचितव्यं तद् ब्रवीमि, यदा त्वं मां साक्षात् कर्त्तुम्
आगमिष्यसि तदा शौलस्य कन्यायां मीखलायां प्रथमं नानीतायां मां
साक्षात् कर्त्तुं त्वया न शक्यते। अनन्तरं दायूद् शौलस्य पुत्रस्येश्बोश- १४
तस्य समीपं दूतान् प्रहित्य जगाद, अहं पिलेष्टीयानां शतं छिन्नत्वचो
दत्त्वा यां व्यूढवान् त्वं मम तां जायां मीखलां देहि। तत ईश्बोशतो १५
लोकं प्रहित्य तस्याः स्वामिनो लयिशस्य पुत्रात् पल्टियेलात् मीखलां
अग्राह। ततस्तस्याः स पतिः क्रन्दन् क्रन्दन् बहूरीमं यावत् तस्याः १६

पश्चात् जगाम। अनन्तरम् अव्नेरस्तं जगाद याहि परावृत्य याहि,
ततः स परावृत्य गतवान्।

१७ अनन्तरम् अव्नेर इस्रायेल्वंशस्य प्राचीनैः समम् इत्थं मन्त्रणां
१८ चकार, पूर्व्वं यूयं दायूदं स्वेषां राजानं कर्त्तुं चेष्टितवन्तः। इदानीं
तदेव कुरुत यतोऽहं स्वदासस्य दायूदः कराभ्यां निजलोकम् इस्रायेल्-
वंशं पिलेष्टीयानां करेभ्यः सकलरिपूणां करेभ्यश्च मोचयिष्यामीति
१९ परमेश्वरो दायूदमधि प्रतिश्रुतवान्। अपरम् अव्नेरो बिन्यामीन्-
वंशीयानां कर्णगोचरेऽपि तदेव बभाषे। अनन्तरम् अव्नेर इस्रा-
येल्वंशस्य कृत्स्नविन्यामीन्वंशस्य च मनोऽभिलाषं दायूदः कर्णगोचरे
२० कथयितुं हिब्रोणं जगाम। अतोऽव्नेरो विंशतिं लोकान् सङ्गिनः
कृत्वा हिब्रोणे दायूदः समीपम् उपस्थितवान्, ततो दायूद् अव्नेरस्य
२१ तत्सङ्गिनाञ्च कृते भोज्यम् आसादयामास। अनन्तरम् अव्नेरो दायूदं
बभाषे, अहमुत्थायेस्रायेलः सकलवंशान् मम प्रभो राज्ञः समीपे सङ्ग्रहीतुं
गच्छामि, ततस्ते भवता समं नियमे स्थिरीकृते भवान् निजमनोवाञ्छान्-
सारेण तेषां राजत्वं करोतु। अनन्तरं दायूदा विसृष्टोऽव्नेरः कुशलेन
प्रस्थानं चकार।

२२ अनन्तरं दायूदो दासा योयावश्च युद्धयात्रायाः परावृत्य बहूनि
लोठितद्रव्याणि समानयन्त आजग्मुः। तदानीम् अव्नेरो हिब्रोणे
दायूदः समीपे नाविद्यत यतो हेतो दायूदा विसृष्टः स कुशलेन गमन-
२३ मकरोत्। अपरं योयावे तस्य सङ्गिषु सैन्येषु चागतेषु मनुजा योया-
वम् अज्ञापयन् नेरस्य पुत्रोऽव्नेरो नृपतेः समीपम् आगच्छत् नृपेण
२४ च विसृष्टः स कुशलेन गतवान्। तदानीं योयावो नृपतेः समीपं गत्वा
न्यवेदयत् भवता किं कर्म्माकारि? पश्यावनेरो भवतः समीपमागत-
२५ वान्, स भवता विसृष्टः कुतः कुशलेन गतवान्? नेरस्य पुत्रोऽव्नेरः
कीदृशस्तत्किं न जानासि? त्वां वञ्चयितुं तव गमनागमने ऽनुसन्धातुं
२६ त्वया यद्यत् क्रियते तत्सर्व्वं ज्ञातुञ्च स आगतवान्। अनन्तरं योयावेन
दायूदः समीपाद् बहिर्गत्वाव्नेरस्य पश्चाद् दूताः प्रेरितास्ते सिरा-
ख्यकूपस्य समीपात् तं परावर्त्यानयन्, किन्तु दायूद् एतत् न ज्ञात-
२७ वान्। अपरम् अव्नेरे हिब्रोणं परावृत्यागते योयावस्तेन सार्कं रह
आलापं कर्त्तुं गोपुरस्य मध्ये तं नीत्वा गतवान् अपरं निजभ्रातुरसा-
हेलस्य बधकारणात् तस्योदरं विव्याध तेन स मृतवान्।

अनन्तरं दायूद् तां वार्त्तां निशम्य गदितवान् नेरपुत्रस्याव्नेरस्य २८
बधमिममधि परमेश्वरस्य साक्षात् मम मदीयराज्यस्य च निर्दोषता
सदा स्थास्यति। अयमपराधो योयावस्य तस्य समस्तपितृवंशानाञ्च २९
शिरःसु फलतु। अपरं योयावस्य वंशे प्रमेही वा कुष्ठी वा दण्डे समव-
लम्बी वा खड्गविद्धो वा भक्ष्यहीन एतादृशां मनुजानाम् अभावो कदाच
न भूयात्। इत्थं गिवियोनीयरणे तयो र्भ्रातुरसाहेलस्य बधकारणाद् ३०
योयावस्तस्य भ्राताबीशयश्चाव्नेरं जघ्नतुः।

अनन्तरं दायूद् योयावं तस्य सङ्गिनः सर्व्वलोकांश्च जगाद, यूयं ३१
स्वेषां वस्त्राणि छित्त्वा शणजं वसनं परिधद्ध्वम् अव्नेरमधि शोचत च;
अपरं दायूद् नृपतिश्च शवस्य खट्वायाः पश्चात् पश्चात् चलितवान्।
अनन्तरं ते हिव्रोणेऽव्नेरस्य देहं श्मशाने निदधिरे राजा चाव्नेरस्य ३२
श्मशानसमीप उच्चैः स्वरं रुदितवान् तथान्ये सर्व्वे मनुजाश्च रुरुदुः।
अपरम् अव्नेरमधि राजा विलापम् अगायत्। ३३

आव्नेरो वत किं मूढनरवत् निधनं गतः।
बद्धौ नास्तां करौ द्वौ ते न बद्धौ निगडे पदौ। ३४
नरघातकलोकस्य समक्षं यादृशं जनः।
कश्चित् पतति तादृक् त्वं पतनं समुपेयिवान्॥

ततः सर्व्वे मनुजाः सूर्य्यास्तगमनात् किञ्चित् पूर्व्वं दायूदं भोजयितुम् ३५
आगताः। तदा दायूद् इमं शपथं चकार, सूर्य्ये नास्तं गते यद्यहं
पूपम् अन्यत् किमपि वास्वादामि तर्हीश्वरो मह्यम् अमुकं ततोऽधिकञ्
फलं ददातु। ततः सर्व्वे लोकास्तस्यां वाचि मनो निदधिरे तुष्टु- ३६
वुश्च, राजा यद्यत् कृतवान् तत्रैव सर्व्वे लोकाः सन्तुष्टा बभूवुः। अनन्तरं ३७
नेरस्य पुत्रोऽव्नेरोऽहन्यत तद् राज्ञ आदेशात् न जातमिति सर्व्वे
मनुजाः सर्व्वे इस्रायेल्वंशाश्च तस्मिन्नेव दिने बुबुधिरे। अनन्तरं ३८
राजा निजभृत्याम् अवदत्, अद्य इस्रायेल अधिपतिरेको महापुरुषः
पतितवान् एतत् किं यूयं न जानीथ? अपरम् अद्याहं राज्याभि- ३९
षिक्तोऽपि सन् दुर्ब्बलो जातोऽस्मि, सिरूयायाः सन्तानाविमौ पुरुषौ
ममावाध्यौ, किन्तु परमेश्वरः कुकर्म्मकारिणे तत्कुकर्म्मानुरूपं फलं
दास्यति।

# ४ चतुर्थोऽध्यायः।

१ अब्नेरस्य मरणाद् ईश्बोशतस्य दुःखं २ बानाहरेखबयोः मिफीबोशतस्य च कथन
४ बानाहरेखबाभ्याम् ईश्बोशतस्य वधः ९ दायूदा तयोः हननं।

१ अनन्तरम् अब्नेरो हिब्रोणनगरे मृत इति वार्त्ता यदा शौलस्य
पुत्रेण श्रुता तदा तस्य हस्तौ दुर्बलौ बभूवतुः सर्व्वे इस्रायेल्वंशाश्च
व्याकुला बभूवुः।
२ एतस्य शौलपुत्रस्य द्वौ संघपती आस्तां प्रथमस्य नाम बानाह इति
द्वितीयस्य नाम रेखब इति चासीत् तौ विन्यामीनवंशजातस्य बेरोतीय-
३ रिम्मोणस्य पुत्रौ। तद् बेरोतं विन्यामीन्प्रदेशमध्येऽगण्यत, किन्तु बेरो-
४ तीया गित्तयिमं पलाय्याद्ययावत् तत्र स्थाने प्रवसन्ति। अपरं शौल-
पुत्रस्य योनाथनस्य मिफीबोशतनामा द्वाभ्यां चरणाभ्यां खञ्ज एकः पुत्र
आसीत्। यदा यिष्रियेलात् शौलयोनाथनयोः मरणवार्त्ता समागच्छत्
तदानीं तं पञ्चमवर्षीयं बालकम् आदाय तस्य धात्री पलायाञ्चक्रे तदा
पलायनस्य शीघ्रतरत्वात् असौ बालकः पतन् खञ्जो बभूव।
५ अनन्तरं बेरोतीयरिम्मोणस्य पुत्रौ रेखबबानाहौ गत्वा मध्याह्नकाले
ईश्बोशतस्य निकेतनं प्रविविशतुः। तदानीं मध्याह्नग्रीष्मात् स खट्वायां
६ शयितवान्। ततस्तौ गोधूमग्रहणच्छलेन निकेतनस्य मध्यस्थानं यावद्
गत्वा तस्योदरम् आजघ्नतुः; अनन्तरं रेखबस्तस्य भ्राता बानाहश्च
७ पलायाञ्चक्राते। तयो र्गृहप्रवेशनसमये स गर्भागारे खट्वायाम् अशेत
तदा तौ तम् आहत्यावधिष्टां तस्य शिरश्छित्त्वा तच्छिर आदाय सर्व्वां
८ रात्रिं प्रान्तरेण जग्मतुः। अनन्तरं तावीश्बोशतस्य शिरो हिब्रोणं
दायूदः समीपम् आनीय राजानं न्यवेदयतां भवतः प्राणनाशेच्छुको यो
रिपुस्तस्य शौलसुतस्येश्बोशतस्य शिर एतत् पश्य। परमेश्वरः प्रभो-
रस्माकं भूपतेः कृते शौलाय तस्य वंशाय चाद्य समुचितं फलं दत्तवान्।
९ अनन्तरं दायूद् बेरोतीयरिम्मोणस्य पुत्रं रेखबं तस्य भ्रातरं बाना-
हञ्चैतत् प्रत्यवदत् सर्व्वविपत्तितो मत्प्राणानां मोचयितुः परमेश्वरस्या-
१० मरतायाः शपथं कृत्वा कथयामि। यो जनः शौलस्य मृत्युवार्त्तां मह्यं
कथितवान् स मङ्गलवार्त्तावाद्यहमित्यमन्यत किन्तु स सिक्लगे मया
११ धृतो हतश्च। तस्मै यद्यहम् एतादृशं पुरस्कारम् अददां तर्हि निजगेहे
खट्वायां शयानो धार्म्मिकः पुरुषो यै मारितस्तादृशान् पातकिनः प्रति

मया किं कर्त्तव्यं? तस्य शोणितस्य परिशोधः किं युवाभ्यां न ग्रहीतव्यः?
युवां किं पृथिवीतोऽपि मया नापसारयितव्यौ? अतो दायूदा समादिष्टे- १२
स्तस्य तरुणैस्तौ हतौ तयोः कराः पादाश्च छित्त्वा हिब्रोणस्थपुष्करिण्या-
स्तीर उद्बबन्धिरे किन्त्वीश्बोशतस्य शिरस्ते गृहीत्वा हिब्रोणस्थाब्नेरस्य
श्मशाने स्थापितं।

## ५ पञ्चमोऽध्यायः।

१ सर्व्वैरिस्रायेल्लोकै दायूदोऽभिषेचनं ६ यिबूषीयेभ्यः सियोनदुर्गस्य वशीकरणं ११ हीरमेण दायूदः समीपं दूतप्रेषणं १३ यिरूशालमे जातानां दायूदः पुत्राणां नामानि १७ बाल्पराशीमस्थाने पिलेष्टीयानां दायूदा जयकरणं २२ रिफायिमोपत्यकायां तेषां पुनः पराजयः।

अनन्तरम् इस्रायेलः सर्व्वे वंशा हिब्रोणे दायूदः समीपम् आगत्य १
निवेदयामासुः पश्य वयं तव कीकशमांसानि। अपरं पूर्व्वं यदा शौलो- २
ऽस्माकं राजासीत् तदापि त्वमेवेस्रायेलं वहिरभ्यन्तरे च गमनागमने
ऽकारयः। अपरं ममेस्रायेल्लोकानां पालकेनाग्रगण्येन च त्वया भवि-
तव्यमिति त्वं परमेश्वरेणोक्तः। इत्थम् इस्रायेलः सकलप्राचीनलोकेषु ३
हिब्रोणे राज्ञः समीपम् आगतेषु दायूदा नृपेण हिब्रोणे परमेश्वरस्य
साक्षात् तैः सार्कं नियमोऽकारि ते च दायूदम् इस्रायेलो राज्येऽभि-
सिषिचुः। दायूद् त्रिंशद्वत्सरवयसि राजत्वं लब्ध्वा चत्वारिंशद्वत्सरं ४
यावद् राजत्वं चकार। स हिब्रोणे यिहूदावंशस्योपरि षण्मासाधिकान् ५
सप्तवत्सरान् राजत्वं चकार ततः परं यिरूशालमे समस्तस्येस्रायेलो
यिहूदायाश्चोपरि त्रयस्त्रिंशद्वत्सरान् यावद् राजत्वं चकार।

अनन्तरं राजा तस्य मनुजैश्च देशोत्पन्नयिबूषीयानां विरुद्धं यिरू- ६
शालमं प्रति यात्रायां कृतायां ते दायूदम् ऊचुः, एतत् स्थानं प्रवेष्टुं
त्वया न शक्यते यतः स्थानम् एतद् दायूदा न प्रवेष्टव्यमिति वाचं
वदन्तोऽन्धाः खञ्जाश्चैव त्वां दवयिष्यन्ति। किन्तु दायूद् सियोनाख्यं ७
दुर्गं वशीचकार तस्य दुर्गस्य दायूद्नगरमिति नामान्तरमास्ते। तस्मिन् ८
दिने दायूद् कथयामास यो जनः यिबूषीयान् निहत्य प्रणालीं दायूदा
घृणितं खञ्जान्धजनश्चाक्रमिष्यति, स प्रधानसेनापति र्भविष्यति। तत्का-
रणाद् अन्धेन खञ्जेन वा राजनिकेतनं न प्रवेष्टव्यमिति लोकैरुच्यते।
अतो दायूद् दुर्गं उषितवान् तस्य दायूद्नगरमिति नाम कृतवान्। ९

अपरं दायूद् प्राचीरेण मिल्लमारभ्याभ्यन्तरस्थानं यावत् तद् वेष्टयामास।
१० अनन्तरं दायूद् क्रमशो वर्द्धमानो महान् बभूव सेनाध्यक्षः परमेश्वरश्च
तस्य सहायस्तस्थौ।
११ अनन्तरं सोरीयराजो हीरमो दायूदः समीपम् एरसकाष्ठानि
सूत्रधरान् स्थपतीन् लोकांश्च दूतैः प्रेषयामास ततस्ते दायूदः कृते
१२ प्रासादं निर्म्ममिरे। ततः परमेश्वर इस्रायेलो राजत्वपदे मां संस्थापि-
तवान् तथा निजेस्रायेल्वंशस्यानुरोधात् मम राज्यस्योन्नतिं कृतवान्
इति दायूद् बुबुधे।
१३ अपरं दायूद् हिब्रोणाद् आगत्य यिरूशालमेऽन्यजाया उपपत्नीश्च
१४ जग्राह, ततो दायूदोऽपरे पुत्राः दुहितरश्चाजायन्त। यिरूशालमे
१५ शम्मूयः शोबवो नाथनः सुलेमान् यिभर इलीशूयो नेफगो याफिय
१६ इलीशामा इलियादा इलीफेलटश्चेतिनामानस्तस्य पुत्रा अजायन्त।
१७ अनन्तरं सर्व्वैरिस्रायेलवंशीयै र्दायूद् इस्रायेलो राज्येऽभिषिक्त इति
१८ वार्त्तां श्रुत्वा सर्व्वे पिलेष्टीयाः दायूदं गवेषयितुम् आजग्मुः। अपरं
दायूदि तत् श्रुत्वा दुर्गं गतवति पिलेष्टीया आगत्य रिफायिमसमभूमौ
१९ विस्तीर्णा बभूवुः। अनन्तरं दायूद् परमेश्वरं पृष्टवान् पिलेष्टीयानां
विरुद्धं मया किं गन्तव्यं? त्वं किं मम करे तान् समर्पयिष्यसि? ततः
परमेश्वरो दायूदं जगाद, याहि मयावश्यं पिलेष्टीयास्तव करे सम-
२० र्पयिष्यन्ते। अपरं दायूद् बाल्पिरासीमम् आगत्य तान् पराजित्य
जगाद परमेश्वरो मम सम्मुखे मम रिपून् स्रोतोभङ्गवद् बभञ्ज। तस्मात्
तस्य स्थानस्य नाम बाल्पिरासीमं देवताभङ्गस्थानमिति कृतवान्।
२१ अनन्तरं ते स्वेषां प्रतिमास्तत्र परित्यज्य गता दायूद् तस्य सङ्गिनश्च
ता गृहीत्वा जग्मुः।
२२ अनन्तरं पिलेष्टीयाः पुनरागत्य रिफायिमसमभूमौ विस्तीर्णा बभूवुः।
२३ ततो दायूदा परिपृष्टः परमेश्वरः कथितवान् त्वम् इदानीं मा गच्छ,
तेषां पश्चाद् व्याघुट्यागत्य वाकास्थानस्य सम्मुखे तान् आक्रमिष्यसि।
२४ वाकाया उच्चस्थानेषु गमनशब्दे त्वया श्रुते त्वम् उद्यमं करिष्यसि यत-
स्तदा परमेश्वरः पिलेष्टीयानां सैन्यं विनाशयितुं तवाग्रसरो भविष्यति।
२५ अनन्तरं दायूद् परमेश्वरस्याज्ञानुसारेण कर्म्म कुर्व्वन् गेबातो गेषरमुप-
स्थितिं यावत् पिलेष्टीयान् अवधीत्।

# ६ षष्ठोऽध्यायः।

१ दायूदः परमेश्वरस्य मञ्जूषानयनं ६ उषस्याघातो मञ्जूषाया ओवेदेदोमस्य गेहे स्थापनं १२ बलिदानं नृत्यञ्च विधाय दायूदः परमेश्वरस्य मञ्जूषाया आनयनं १७ आवासे तस्याः स्थापनं २० दायूदं प्रति मीखलाया निन्दावचनं।

अनन्तरं दायूद् इस्रायेल्वंशस्य त्रिंशत्सहस्राणि हृतमनुजान् संज- १
याह। अपरं दायूद् निजसङ्गिनः सकललोकान् गृह्णन् उत्थाय किरू- २
बयोर्मध्ये निवासिनः सैन्याधिपपरमेश्वरस्य नाम्ना विख्यातां मञ्जूषां
बालीयिहूदात आनेतुं यात्रां चकार। अनन्तरं त ईश्वरस्य नियम- ३
मञ्जूषां नूतनं शकटम् आरोह्य पर्व्वतस्थाद् अबीनादबस्य वेश्मनस्तां
बहिश्चक्रुः। अपरम् अबीनादबस्य पुत्रावुषोऽहियश्च तत् नूतनं शकटं
चालयामासतुः। अपरं ताभ्यां पर्व्वतस्थाद् अबीनादबस्य भवनाद् ४
ईश्वरस्य मञ्जूषया साकं तस्मिन् आनीते ऽहियो मञ्जूषाया अग्रेऽग्रे
चलितवान्। अपरं दायूद् इस्रायेलः सकलवंशाश्च परमेश्वरस्य ५
सम्मुखे देवदारुकाष्ठनिर्म्मितान् वल्लकीसुषिरमुरजान् जयढक्काणि
भेरीश्च वादयन्तो जयध्वनिम् अकुर्व्वन्।

अनन्तरं तेषु नाखोनस्य शस्यमर्दनस्थान उपस्थितेषु गावावबाधे ६
जाते तत उषो हस्तौ विस्तार्थेश्वरस्य मञ्जूषां दधार। तत उषं प्रति ७
परमेश्वरस्य क्रोधे प्रज्वलिते तस्य भ्रमकारणाद् ईश्वरस्तस्मिन् स्थाने तम्
आहतवान्, ततः स ईश्वरस्य मञ्जूषायाः समीपे ममार। परमेश्वर ८
उषम् आहतवान् इति कारणाद् दायूद् असन्तुष्टो बभूव, अपरं
तस्य स्थानस्य नाम पेरसुषम् उषाघातस्थानमिति कृतवान् अद्यापि तस्य
तन्नाम विद्यते। अपरं दायूद् तस्मिन् दिने परमेश्वराद् भीतो कथया- ९
मास तर्हि परमेश्वरस्य मञ्जूषा केन प्रकारेण मम समीपम् आगमि-
ष्यति? अनन्तरं दायूद्नगरं निजसमीपं परमेश्वरस्य मञ्जूषाम् आनेतुम् १०
अनिच्छन् दायूद् पथपार्श्वस्थं गातीयस्यौवेदेदोमस्य निवेशनं तां नीत्वा
स्थापयामास। ततः परमेश्वरस्य मञ्जूषायां गातीयस्यौवेदेदोमस्य निवे- ११
शने त्रीन् मासान् स्थितायां परमेश्वर ओवेदेदोमस्य तस्य सकलपरिज-
नस्य च क्षेमं चकार।

अनन्तरं परमेश्वरो निजमञ्जूषायाः कारणाद् ओवेदेदोमस्य तस्य १२
सर्व्वस्य च क्षेमम् अकुर्व्वदिति वार्त्तां श्रुत्वा दायूद् गच्छन् ओवेदेदोमस्य
निवेशनाद् आनन्देन परमेश्वरस्य मञ्जूषां दायूद्नगरम् आनिनाय।

१३ अपरं परमेश्वरस्य मञ्जूषावाहिषु षट्पदानि प्रगतेषु स गावं पुष्टपशुमे-
१४ कञ्च जुहाव । अपरं दायूद् कार्पाससूत्रनिर्म्मितम् एफोदं परिधाय
१५ परमेश्वरस्य सम्मुखे यथाशक्ति ननर्त्त । इत्थं दायूद् इस्रायेलः सर्व्वे
वंशाश्चानन्दध्वनिना तूरीध्वनिना च परमेश्वरस्य मञ्जूषाम् आनिन्युः ।
१६ अनन्तरं परमेश्वरस्य मञ्जूषाया दायूद्नगरप्रवेशकाले शौलस्य दुहिता
मीखला वातायनेन निरीक्षमाणा परमेश्वरस्य साक्षाद् उल्लम्फयन्तं
नृत्यन्तञ्च राजानं दायूदं वीक्ष्य मनसा तं तुच्छीचकार ।
१७ अनन्तरं मनुजाः परमेश्वरस्य मञ्जूषाम् अभ्यन्तरम् आनीय स्वस्थाने
ऽर्थाद् दायूद् तस्या निमित्तं यद् दूष्यम् आसादितवान् तस्य मध्ये स्थाप-
यामासुः, अपरं दायूद् परमेश्वरस्य साक्षात् होमबलीन् मङ्गलार्थक-
१८ बलींश्च प्रोत्ससर्ज । अपरं होमबलीनां मङ्गलार्थकबलीनाञ्चोत्सर्गं
समाप्य दायूद् सैन्याधिपपरमेश्वरस्य नाम्ना लोकेभ्य आशिषं ददौ ।
१९ अपरं सकलप्रजानां मध्ये ऽर्थाद् इस्रायेलवंशसमूहमध्ये प्रतिपुरुषं प्रति-
नारि चैकं पूपम् एकं पात्रं द्राक्षारसम् एकम् उडुम्बरखण्डञ्च परिवे-
षितवान् । अनन्तरं सर्व्वे लोका निजं निजं स्थानं प्रतस्थिरे ।
२० अनन्तरं दायूदि निजपरिजनेभ्य आशिषं दातुं परावृत्यागते शौलस्य
दुहिता मीखला दायूदं साक्षात् कर्त्तुं वहिरागत्य बभाषे, इस्रायेलो
राजाद्य सम्यक् महिमान्वितो ऽभूत् यतः कश्चित् कापुरुषो यादृग्
विवस्त्रो भवति, तादृक् सोऽपि स्वभृत्यानां दासीनां साक्षाद् विवस्त्रो-
२१ ऽभूत् । तदानीं दायूद् मीखलां जगाद, परमेश्वरस्य लोकस्येस्रायेलो
राजत्वपदे मां नियोजयितुं य एव तातात् सकलपितृवंशाच्च मां वृत-
वान् तस्य परमेश्वरस्य साक्षात् तत् कृतवानहं परमेश्वरस्य साक्षात्
२२ नृत्तवानहं, एतस्मादपि लघिष्ठो निजदृष्टौ न्यक् च भविष्यामि, तथापि
२३ त्वया यासां दासीनां वाक्यम् उक्तं ताभिरादरणीयो भविष्यामि । अतः
शौलस्य दुहिता मीखला मरणं यावत् निरपत्या तस्थौ ।

---

## ७ सप्तमोऽध्यायः ।

१ मन्दिरं निर्म्मातुं दायूदोऽभिलाषः नाथनस्य सम्मतिः ४ परमेश्वरस्यादेशात् नाथनस्य तस्य वारणं १२ दायूदवंशं प्रतीश्वरस्य प्रतिज्ञानं १८ दायूदः प्रार्थनप्रशंसने ।

१ अनन्तरं परमेश्वरेण राज्ञश्चतुर्दिक्स्थेषु रिपुषु दमितेषु स यदा
२ निजगेहे न्यवसत् तदा राजा भविष्यद्वादिनं नाथनं जगाद, पश्य

मवेरसकाष्ठे निर्म्मिते प्रासाद उष्यते किन्तु परमेश्वरस्य मञ्जूषा यव-
निकानां मध्ये वसति। ततो नाथनो राज्ञे कथयामास भद्रं त्वं ३
निजमनोगतं साधय परमेश्वरस्तव सहाय आस्ते।

अपरं तस्यां रजन्यां परमेश्वरस्य वाक्यमिदं नाथनस्य निकटं समा- ४
गच्छत्, त्वं गत्वा मम दासं दायूदं वद परमेश्वर इति वाचं वक्ति त्वं किं ५
मम वासार्थं मन्दिरमेकं निर्म्मास्यसि? इस्रायेल्वंशस्य मिसरदेशात् ६
ममानयनदिवसमारभ्याद्य यावत् मन्दिरे मया न न्युष्यते, केवलं दूष्य
आवासे च भ्रम्यते। तथापीस्रायेल्वंशानां मध्ये मम भ्रमणकाले मम ७
पालस्येस्रायेल्लोकस्य पालकत्वपदे नियुक्त इस्रायेलीयानां कश्चिद् वंशः
कदापि किं मया पृष्ट इदं, युष्माभि र्मत्कृते कुत एरसकाष्ठमयं गृहं न
निर्म्मीयते? इदानीं त्वं मम दासं दायूदं वद, सेनाधिपः परमेश्वर ८
एतां वाचं वक्ति मम लोकानाम् इस्रायेल्वंशीयानां राजानं कर्त्तुमहं
त्वां मेषस्थानकात् मेषाणाम् अनुचरणाच्च गृहीतवान्। अपरं त्वं यद्यद् ९
उपक्रमितवान् तत्सर्व्वस्मिन् अहं तव सहायो भवन् तव सम्मुखे तव
सकलशत्रून् उच्छिन्नवान् अपरं चक्रवर्त्तिनां महतां लोकानां नामवत्
तव महानाम च कृतवान्। तदन्यत् मया निजलोकानाम् इस्रायेल्वंशी- १०
यानां कृते स्थानमेकं निश्चित्य ते तस्मिन् स्थाने समस्थाप्यन्त, ते तत्र स्वस्थाने
निवसन्ति पुनश्चालिता न भविष्यन्ति। पूर्व्वकाले यदाहं मदीयेस्रायेल्- ११
वंशान् शासितुं विचारयितृन् न्ययोजयं तदा च यादृशं ते दुष्टै र्मान-
वैरक्लिश्यन्त तादृशं पुन र्न क्लेक्ष्यन्ते। सकलरिपुभ्यश्चाहं तुभ्यं विश्रा-
दत्तवान्। परमेश्वरस्त्वत्कृते वंशमेकं स्थापयिष्यतीति वाचमपि परमे-
श्वरस्त्वां ज्ञापयति।

अपरं त्वयि सम्पूर्णायुषि सति निजपितृलोकैः समं महानिद्रां गत- १२
वति चाहं तव पश्चात् तवौरसवंशं स्थापयिष्यामि तस्य राज्यं स्थिरी-
करिष्यामि च। स मम नामार्थं मन्दिरमेकं निर्म्मास्यति, अहञ्च तस्य १३
राजसिंहासनम् अनन्तकालं यावत् स्थिरीकरिष्यामि। अहं तस्य पिता १४
भविष्यामि स च मम पुत्रो भविष्यति; यदि सोऽपराधी भवति तर्ह्यहं
मनुष्याणां दण्डै र्मानवसन्तानानाञ्च प्रहारैस्तं दण्डयिष्यामि। किन्तु १५
मया तव साक्षात् दूरीकृतो यः शौलस्तस्माद् यादृशोऽनुग्रहो ऽपसारि-
तस्तादृक् तस्मात् ममानुग्रहो नापसारिष्यते। तव सम्मुखे तव वंशस्तव १६
राज्यञ्चानन्तकालं यावत् स्थिरो भविष्यति तव सिंहासनमप्यनन्तकालं

१७ यावत् स्थिरं भविष्यति। अनन्तरं तानि सकलवाक्यानि तच्च दर्शनं
यथातथ्यं नाथनेन दायूदे कथयाञ्चक्रिरे।
१८ ततो राजा दायूद् अभ्यन्तरं गत्वा परमेश्वरस्य सम्मुख उपविश्य कथ-
यामास हे प्रभो परमेश्वर कोऽहं मम वंशश्च कः, यत् त्वं माम् एतत्-
१९ पर्य्यन्तम् उन्नामितवान्? तथापि हे प्रभो परमेश्वर त्वम् एतदपि स्वदृष्टौ
क्षुद्रं कार्य्यं मत्वा निजदासस्य सुदीर्घाय भाविवंशायापि मङ्गलं प्रति-
२० श्रुतवान्। हे मम प्रभो परमेश्वर किमयं मानुषस्य धर्म्मः? एतदन्यत्
दायूद् किमपरं निवेदयितुं शक्नोति? हे मम प्रभो परमेश्वर त्वं निज-
२१ दासं वेत्सि। त्वं निजवाक्यकारणात् निजमनोभिलाषाच्चैतादृशं माहात्म्यं
२२ विदधत् स्वदासं सर्व्वमेतत् ज्ञापितवान्। अतो हे प्रभो परमेश्वर त्वं
महान् अस्माभिः स्वकर्णैः यद्यत् श्रुतं तत्सर्व्वस्मिन् तव सदृशः कश्चिदपि
२३ नास्ति त्वां विना परः कश्चिद् ईश्वरो नास्ति। अपरं तवेस्रायेल्लोकस्य
तुल्या का जातिरास्ते? एवम्भूतैकापि जाति र्भूमण्डले किं विद्यते
यस्या मोचनेन स्वकीयजातिं लब्धुं महायशो ग्रहीतुञ्च स्वयम् ईश्वर
उपागतवान्? मिसरदेशाद् भिन्नजातीयेभ्यो लोकेभ्यो देवेभ्यश्च भवतैव
मुक्ताया जात्याः समीपे भवदर्थं महायशः प्रकाशितं स्वदेशे च भयङ्क-
२४ राणि कर्म्माणि कृतानि। यतस्तवेस्रायेल्वंशो यद् अनन्तकालं यावत्
तव जाति र्भवेत् तदर्थं त्वं स्वार्थं तं समस्थापयस्तथा हे परमेश्वर त्वमेव
२५ तेषाम् ईश्वरोऽभवः। इदानीं हे प्रभो परमेश्वर स्वदासमधि तस्य
वंशमधि च त्वया प्रतिश्रुतं वाक्यम् अनन्तकालं यावत् स्थिरीक्रियतां,
२६ त्वया यदुक्तं तदेव क्रियतां। सेनाधिपः परमेश्वर इस्रायेल्वंशस्येश्वर
इति तव यन्नामास्ते तद् अनन्तकालं यावद् महद् भवतु तव दासस्य
२७ दायूदो वंशश्च तव साक्षात् स्थिरो भवतु। हे इस्रायेलः प्रभो सेनाधिप
परमेश्वर तव वंशमहं वर्द्धयिष्यामीति वाक्यं त्वयैव तव दासस्य
कर्णगोचरीकृतं ततो हेतोस्तव समीपे प्रार्थनामिमां निवेदयितुं तव
२८ दासस्य मनस्युत्साहो जायते। हे मम प्रभो परमेश्वर त्वमेव सत्य
ईश्वरस्तव वचनानि च सत्यानि त्वं निजदासाय शुभमिदं प्रतिश्रुत-
२९ वान्। अतो हे प्रभो परमेश्वर तव दासस्य वंशो यथानन्तकालं यावत्
तव समक्षं स्थिरो भवेत् तथा तमध्याशिषं वक्तुं त्वमेवार्हसि, यतस्त्वमेव
तत् प्रतिश्रुतवान् तवाशीर्व्वादेन च तव दासस्य वंशोऽनन्तकालं यावद्
आशीःप्राप्तो भविष्यति।

# ८ अष्टमोऽध्यायः।

१ पिलेष्टीयमोयाबीयसोबाकानां दायूदा दमनं ३ हददेषरस्यारामीयलोकानाञ्च पराजयः ९ दायूदः समीपं तोयिन्नृपस्य पुत्रप्रेषणं १४ इदोमदेशे दुर्गस्थापनं १६ दायूदः पारिषद्यानां नामानि।

अनन्तरं दायूद् पिलेष्टीयान् पराजित्य नम्रौ चकार तेषां करेभ्यः १
प्रधाननगरस्य नायकत्वम् अपजहार च। अपरं स मोयाबीयान् परा- २
जित्य भूमौ पातयित्वा रज्जुभिः परिममे ऽर्थाद् रज्जुद्वयप्रमाणान् बधार्थं
सम्पूर्णरज्जुप्रमाणांश्च जीवनार्थं परिममे ततो मोयाबीया दायूदो वशी-
भूय करदायिनो बभूवुः।

अनन्तरं फरातनदीस्थानां समीपस्थदेशे निजकर्तृत्वं पुनः संस्थापयितुं ३
सोबाया राज्ञि रिहोबस्य पुत्रे हददेषरे गते दायूद् तं पराजित्य
तस्य सप्तशताधिकं सहस्रं अश्वारोहिणो विंशति सहस्राणि पदातिकान् ४
निजग्राह अश्वानां पादशिराश्चिच्छेद च किन्तु तेषां मध्ये शतं रथान्
अवशेषयामास। अनन्तरं दम्मेशकस्थारामीयेषु सोबान्नृपस्य हद- ५
देषरस्य साहाय्यं कर्त्तुमागतेषु दायूद् अरामीयानां द्वाविंशतिसह-
स्राणि लोकान् अवधीत्। अपरं दायूद् अरामीयदम्मेशकप्रदेशे ६
सैनिकान् स्थापयामास, ततोऽरामीया दायूदो वशीभूय करदायिनो
बभूवुः। अनेन प्रकारेण दायूद् यद्यद् उपाक्रामत् तत्सर्व्वस्मिन्
परमेश्वरस्तं जयिनं चकार। अपरं दायूद् हददेषरस्य दासानां गात्र- ७
स्थानि स्वर्णफलकानि गृहीत्वा यिरूशालमम् आनिनाय। अपरं ८
दायूद् राजा हददेषरस्याधीनाभ्यां वेटह्वेरोथाख्येतिनामकाभ्यां नग-
राभ्यां भूयिष्ठानि पित्तलान्यानिनाय।

अनन्तरं दायूदा हददेषरस्य सर्व्वाणि सैन्यानि पराजितानीति ९
वार्त्तां निशम्य तोयिनामा हमातीयनृपतिर् दायूदः कल्याणं प्रष्टुं १०
युध्यता तेन हददेषरस्य पराजितत्वकारणात् दायूदो धन्यवादं
कर्त्तुञ्च स्वपुत्रं योरामं राज्ञो दायूदः समीपं प्रेषयामास, यतो हद-
देषरेण सार्द्धं तोयिनाम्नोऽपि युद्धम् आसीत्, अनन्तरं स दुर्वर्णस्य
सुवर्णस्य पित्तलस्य च पात्राणि गृहीत्वाजगाम। ततो ऽरामनोयाबा- ११
म्मोनपिलेष्टीयामालेकप्रभृतयो याः सर्व्वा जातयो दायूदा पराजिता-
स्ताभ्यः सोबान्नृपात् रिहोबस्य पुत्राद् हददेषराच्च लोठितानि यानि १२

दुर्व्वर्णसुवर्णानि दायूदा समुत्सृष्टानि तैः सह तानि सर्व्वाण्यपि परमे-
१२ श्वरमुद्दिश्य समुत्ससर्जिरे। अपरं दायूद् लवणाख्यायाम् उपत्यका-
याम् अष्टादशसहस्राण्यरामीयलोकान् हत्वा प्रत्यागमनकाले महतीं
ख्यातिं लेभे।

१४ अपरं दायूद् इदोमे सैनिकाः स्थापयामास, स इदोमदेशस्य सर्व्वत्रैव
सैनिकाः स्थापयाञ्चकार, इदोमीयाश्च सर्व्वे दायूदो दासा बभूवुः;
अपरं दायूद् यत्र यत् स्थानं जगाम तत्सर्व्वस्थाने परमेश्वरस्तं जयिनं
१५ चकार। इत्थं दायूद् इस्रायेलः सकलवंशोपरि राजत्वं कुर्व्वन् निज-
सकललोकान् प्रति सुविचारं न्यायव्यवहारञ्चाचचार।

१६ तस्मिन् काले सिरूयायाः पुत्रो योयावः प्रधानसेनापतिरासीत्।
१७ अहीलूदस्य पुत्रो यिहोशाफटश्चेतिहासलेखक आसीत्। अहीटूबस्य
सुतः सादोकोऽबियाथरस्य सुतोऽहीमेलकश्च याजकावास्तां सिरायश्च
१८ लेखक आसीत्। यिहोयादस्य सुतो बिनायः किरेथीयानां पिलेथी-
यानाञ्चाध्यक्ष आसीत् तथा दायूदः पुत्रा राजसभासद आसन्।

---

## ९ नवमोऽध्यायः।

१ शौलवंश्यमधि दायूदो जिज्ञासा ४ दायूदः समीपे मिफीबोशतस्यानयनं ७ मिफीबोशताय निजभोजनासने स्थानदानं शौलस्य सकलभूमिदानं ९ मिफीबोशतस्य भृत्यस्य सीवस्य कथा।

१ अनन्तरं दायूद् पृष्टवान् अहं योनाथनस्य कृते यं प्रति प्रेमाचरितुं
२ शक्नोमि शौलवंशमध्ये तादृशः कोऽपि किम् अवशिष्ट आस्ते? ततः सीव
इतिनामा शौलस्य परिजनानां य एको दास आसीत् तस्मिन्
दायूदः समीप आनीते राजा तं पप्रच्छ त्वं किं सीवः? सोऽवदत् अहं
३ भवतः स दास एव। अनन्तरं राजा पृष्टवान् अहं यं प्रतीश्वरस्य
मासि प्रेमाचरितुं शक्नोमि शौलस्य वंशे तादृशः कश्चित् किम् अवशिष्ट
आस्ते? ततः सीवो नृपतिं ज्ञापयामास, उभयचरणाभ्यां खञ्जो योना-
४ थनस्यैकः सुतोऽवशिष्ट आस्ते। तदा राजा तं पप्रच्छ स कुत्र? सीवो
राजानं व्यज्ञापयत्, पश्यतु स लोदिबारे ऽम्मीयेलसुतस्य माखीरस्य
निवेशन आस्ते।

५ अपरं राजा दायूद् लोदिबारं दूतं प्रहित्याम्मीयेलसुतस्य माखीरस्य
६ निवेशनात् तम् आनाययामास। तदानीं शौलस्य पौत्रो योनाथनस्य

पुत्रो मिफीबोशतो दायूदः समीपम् आगत्य न्युब्जः सन् तं प्रणनाम।
ततो दायूद् अवदत् हे मिफीबोशत। स प्रत्यवदत् भवतो दास उप-
स्थित आस्ते।

अनन्तरं दायूद् तं जगाद, भयं माकार्षीः, अहं तव पितुर्योनाथनस्य ७
कृते त्वां प्रति सद्भावम् आचरिष्यामि तव पितामहस्य शौलस्य सर्व्वा
भूमीश्च तुभ्यं परावर्त्त्य दास्यामि, अपरं त्वं नित्यं मम भोजनासने
भोक्ष्यसे। ततः स दण्डवद् भवन् बभाषे भवतो दासोऽहं को व्रत् ८
मृतकुक्कुरतुल्यं मां प्रति भवता सुदृष्टिः क्रियते?

अनन्तरं राजा शौलस्य दासं सीवम् आहूय जगाद शौलस्य तस्य ९
वंशस्य च यद्यद् आसीत् तत्सर्व्वम् अहं तवाधिपतेः पुत्राय दत्तवान्।
अतस्त्वया तव सुतैश्च तव दासैश्च तस्या भूमेः कृषिकर्म्म कृत्वा तवाधि- १०
पते र्भोज्यार्थं तदुत्पन्नं द्रव्यमानीय दास्यते, किन्तु तवाधिपतेः पुत्रो
मिफीबोशतो मम भोजनासने भोजनं करिष्यति। तस्य सीवस्य
पञ्चदशपुत्रा विंशति दासाश्चासन्। अनन्तरं सीवो महीपतिं जगाद ११
मम प्रभुणा नृपेण यद्यद् आज्ञापितं तत्सर्व्वं भवतो दासेन कारि-
ष्यते। राजा व्याजहार मिफीबोशतो राजपुत्र इव मम भोजनासने
भोजनं करिष्यति। मिफीबोशतस्य मीखानामक एकः शिशुपुत्र १२
आसीत्। अपरं सीवस्य गृहवासिनः सर्व्वे लोका मिफीबोशतस्य दा[illegible]
बभूवुः। किन्तु मिफीबोशतो यिरूशालमे न्यवसत् यतो भूपते [illegible]ज- १३
नासने स नित्यं समश्नात्, स उभाभ्यां पादाभ्यां खञ्ज आसीत्।

---

## १० दशमोऽध्यायः।

१ हानूनं प्रति दायूदा प्रेषितानां दूतानाम् अपमानितत्वं ६ अम्मोनीयानाम् अरा-
मीयानाञ्च पराजितत्वं १५ अन्यारामीयैः समं शोबकस्य हतत्वं।

ततः परम् अम्मोनवंशस्य राज्ञि मृते तस्य पुत्रो हानूनो राज्यपदं १
प्राप। ततो दायूद् अवदत् हानूनस्य पिता नाहशो मां प्रति यादृशं २
सद्भावम् आचरद् अहमपीदानीं हानूनं प्रति तादृशं सद्भावम् आच-
रिष्यामि। अतो दायूद् तस्य पितरमधि तं सान्त्वयितुं स्वदासान् प्रेषया-
मास। दायूदस्तेषु दासेष्वम्मोनवंशीयानां देशमुपस्थितेष्वम्मोनवंशीयानां ३
मुख्याः स्वप्रभुं हानूनं जगदुः, दायूदा तव समीपं सान्त्वयितारो
जनाः प्रहिता इति कर्म्म तव पितुः सम्मानार्थं तेन कृतं त्वं किमित्थं

बुध्यसे? दायूद् नगरं निरीक्ष्यानुसन्धाय च नाशयितुम् इच्छतीति
४ हेतोः स निजदासान् प्रहितवान् इति किं नहि? ततो हानूनो
दायूदो दासान् धृत्वा तेषां श्मश्रूणामर्द्धमर्द्धं क्षौरयित्वा नितम्बपर्य्यन्तं
५ तेषां वस्त्राणि छित्त्वा च तान् विसृष्टवान्। अनन्तरं ते दायूदम् एत-
द्वार्त्तायां ज्ञापितायां तेषाम् अतीव अपाकारणाद् राजा तान् साक्षात्
कर्त्तुं लोकान् प्रहित्येदम् आदिदेश, यावद् युष्माकं श्मश्रूणि न वर्द्धन्ते
तावद् यूयं यिरीहो तिष्ठत पश्चात् परावृत्यागच्छत।
६ अनन्तरं वयं दायूदः सम्मुखे घृणार्हा अभवामेति वीक्ष्याम्मोन-
वंशीया दूतान् प्रहित्य वेतनम् अङ्गीकृत्य वैतरिहोबस्थानां सोबा-
स्थितानाञ्चारामीयाणां विंशतिः सहस्राणि पदातिकान् माखाया राज्ञ
एकसहस्रं लोकान् टोवदेशीयान् द्वादशसहस्राणि लोकांश्चानिन्युः।
७ तां वार्त्तां निशम्य दायूद् योयावं बलवन्ति सर्व्वसैन्यानि च तत्र
८ प्रेषयामास। ततो ऽम्मोनवंशीया बहिरागत्य गोपुरप्रवेशस्थाने सैन्यानि
रचयाञ्चक्रिरे तद्भिन्नाः सोबातो रिहोबाञ्चागता अरामीयाः टोवात्
९ माखातश्चागता लोका अपि क्षेत्रे व्यूहं रचयाञ्चक्रिरे। इत्थम् अग्र-
दिशि पश्चाद्दिशि च द्वयो र्दिशो र्मद्विरुद्धं युद्धं जायत इति दृष्ट्वा
योयाब इस्रायेलः सर्व्वेभ्यः परीक्षितलोकेभ्यो लोकान् वृत्वा स्वयम्
१० अरामीयाणां विरुद्धं व्यूहं रचयामास। अवशिष्टलोकेषु च निजभ्रातर्य्य
बीशये तेन समर्पितेषु सोऽम्मोनीयानां विरुद्धं व्यूहं रचयाञ्चकार।
११ अपरं योयावस्तं जगाद, अरामीयाश्चेत् मत्तो बलवन्तो भवन्ति
तर्हि त्वं मामुपकरिष्यसि, अम्मोनीयाश्च चेत् त्वत्तो बलवन्तो भवन्ति
१२ तर्ह्यहं गत्वा त्वामुपकरिष्यामि। त्वं प्रबलो भव वयं स्वलोका-
नाम् अस्मदीश्वरस्य नगराणाञ्च कृते पुरुषत्वं प्रकाशयिष्यामहे परमे-
१३ श्वरो यत् क्षेमं मन्यते तदेव करिष्यति। अनन्तरं योयावे तस्य सङ्गि-
लोकेषु चारामीयैः समं योद्धुं प्रगतेषु ते तस्याग्रेऽग्रे पलायाञ्चक्रिरे।
१४ अपरम् अरामीयाः पलायन्त इति दृष्ट्वा अम्मोनवंशीया अबीशयस्याग्रे
ऽग्रे पलाय्य नगरं प्रविविशुः। ततो योयावोऽम्मोनवंशीयानां समीपात्
परावृत्य यिरूशालमम् आगमत्।
१५ अनन्तरं वयम् इस्रायेलवंशीयैः पराजिता इति वीक्ष्यारामीया
१६ अमिलन्। अपरं फरातनद्याः पारस्था अरामीया हददेषरेण
दूतान् प्रहित्य वहिष्कृताः सन्तो हेलमम् आगच्छन् तस्य हददेष-

रस्य सेनापतिः शोबकश्च तेषाम् अग्रगामी बभूव। अनन्तरं दायूद् १७
तां वार्त्तां निशम्येस्रायेलः सकलवंशान् संगृह्य यर्दनतटिन्याः पारं
गत्वा हेलमम् उपतस्थे। ततोऽरामीयलोका दायूदो विरुद्धं व्यूहं रच-
यित्वा तेन साकं युयुधुः। अपरम् अरामीया इस्रायेलवंशस्य सम्मुखात् १८
पलायाञ्चक्रिरे ततो दायूद् अरामीयानां सप्तशतानि रथान् चत्वारिंशत्
सहस्राणि अश्वारोहिणश्च नाशयामास अपरं तेषां सेनापतिः शोब-
कोऽपि तत्राहतः सन् ममार। अनन्तरं वयम् इस्रायेलवंशीयैः परा- १९
जिता इति वीक्ष्य हददेषरस्याधीनाः सर्व्वे नृपतय इस्रायेलवंशैः समं
सन्धिं कृत्वा तेषां वशा बभूवुः। अतोऽरामीया अम्मोनवंशीयान्
पुनरुपकर्त्तुं बिभयाञ्चक्रुः।

## ११ एकादशोऽध्यायः।

१ रब्बाया अवरोधनं २ बतशेबया समं दायूदो व्यभिचरणं ६ ऊरियेण समं दायूदो व्यवहरणं १४ ऊरियस्य वधार्थं योयाबस्य समीपे पत्रप्रेषणं १८ ऊरियस्य हतत्ववार्त्ताया दायूदं प्रति प्रेषणं २५ योयाबं प्रति दायूद उत्तरं २६ बतशेबाया दायूदा विवहनं।

अनन्तरं तस्मिन् वत्सरे गते सति राज्ञां युद्धगमनसमये दायूद् १
योयाबं तेन समं निजदासान् सर्व्वान् इस्रायेल्लोकांश्च प्रेषयामास
ततस्ते अम्मोनवंशीयदेशं नाशयित्वा रब्बानगरीम् अवरुरुधुः। किन्तु
दायूद् यिरूशालमि तस्थौ।

अपरम् एकस्मिन् दिवसे सन्ध्याकाले दायूद् खट्वात उत्थाय राज- २
प्रासादस्य पृष्ठे विहरतीत्यन्तरे प्रासादपृष्ठात् परमसुन्दरीं योषि-
देकां स्नान्तीं वीक्ष्य दायूद् तस्यास्तत्त्वं ज्ञातुं लोकं प्रेषयामास। ततः स ३
जगाद सा इलियामस्य दुहिता हित्तीयस्योरीयस्य जाया बतशेबा
किं नहि? तदानीं दायूद् दूतान् प्रहित्य ताम् आनाययत् अपरम् ४
तस्याम् आगतायां दायूद् तया समं शयितवान् तदानीं सा ऋतुस्ना-
तासीत्, अनन्तरं सा निजनिवेशनं परावृत्य जगाम। तदानीं सा ५
नारी गर्भधारणाद् दूतेन दायूदं वार्त्तामवदत् अहं गर्भवती जातेति।

अनन्तरं दायूद् दूतेन योयाबम् आज्ञापयामास त्वं हित्तीयम् ६
ऊरियं मत्समीपं प्रेषयेति। ततो योयाबो दायूदः समीपम् ऊरियं
प्रेषयामास। अपरम् ऊरिये दायूदः समीपम् आगते दायूद् तं ७

८ योयावस्य मङ्गलं लोकानां मङ्गलं युद्धस्य मङ्गलञ्च पप्रच्छ। अपरं दायूद्
ऊरियं जगाद त्वं स्वगेहं गत्वा निजपादौ प्रक्षालय। ततो राज-
निवेशनाद् वहिर्गतस्योरियस्य पश्चाद् राज्ञो निकटात् कतिपयानि
९ भक्ष्यद्रव्याणि प्रेषितानि। तथाप्यूरियो राजप्रासादस्य द्वारप्रवेशस्थाने
स्वप्रभो र्दासगणेन सह शिश्ये स्वगेहं न जगाम। अत ऊरिय निजनिवे-
१० शनं नागमद् इति वार्त्तां लोका दायूदं श्रावयन्। ततो दायूद् ऊरियं
बभाषे त्वं किं यात्रात आगतो नासि? तर्हि कुतः स्वगेहं न गच्छसि?
११ ऊरियो दायूदं प्रतिजगाद, परमेश्वरस्य मञ्जूषयेस्रायेल्वंशीयै र्यिहूदा-
वंशीयै र्लोकैश्च दूष्येषु उष्यते मम प्रभु र्योयावोऽपि मम प्रभो र्दासाश्च
प्रान्तरे शिविरे वसन्ति, तथा सति भोजनपानार्थं जायया सह
शयनार्थञ्च मया किं स्वगेहं गमिष्यते? भवतो भवज्जीवनस्य च शपथं
१२ कृत्वाहं वदामि, एतादृशं कर्म्म मया न करिष्यते। ततो दायूद्
ऊरियं बभाषे त्वम् अद्यापि स्थानेऽस्मिन् तिष्ठ श्वस्त्वां विस्रक्ष्यामि।
१३ तत ऊरियस्तद्दिनं परदिनञ्च यिरूशालमे तस्थौ। अपरं दायूदा निम-
न्त्रितः स तस्य साक्षाद् भोजनपाने कृतवान् तेन च मत्तीकृतोऽपि।
सन्ध्याकाले स वहिर्गत्य निजप्रभो र्दासैः साकं निजशय्यायां शयितवान्
किन्तु निजगृहं न जगाम।

१४ अपरं प्रातःकाले दायूद् पत्रमेकं लिखित्वोरियेण योयावस्य समीपं
१५ प्रेषयामास। तस्मिन् पत्रे लिखितमेतदासीत् एष ऊरियो युष्माभि-
स्तुमुलयुद्धस्य सम्मुखे नियुज्यतां ततः परं तस्य पश्चाद् अपसर्त्तव्यं
१६ ततः स आहतो मरिष्यति। अनन्तरं योयावो यदा नगरम् अवे-
क्षयत् तदा यत्र स्थाने बलवन्तो लोकाः सन्ति तद् वीक्ष्य तत्रैवोरियं
१७ नियुक्तवान्। अनन्तरं नगरस्था लोका वहिर्भूय योयावेन साकं युद्ध-
वन्तः, ततो दायूदो दासानां मध्ये कतिपया जना हतास्तेषां मध्ये स
हित्तीयोरियोऽप्यहन्यत।

१८ अपरं योयावो दूतेन युद्धस्य वार्त्तां दायूदं श्रावयामास। स तं
१९ दूतम् इदम् आदिदेश, राज्ञः समीपे युद्धवार्त्तानिवेदने त्वया समा-
२० पिते राजा कोपं गत्वा, यूयं कुतो योद्धुं नगरसन्निधिं गतवन्तः? प्राची-
२१ रात् पौरै र्वाणा निक्षेप्स्यन्त इति यूयं नाजानीत? यिरुब्बेशतस्य सुतो-
ऽवीमेलकः केन हतः? एकया स्त्रिया प्राचीरात् पेषणीखण्डं निक्षिप्ते
स तेवेषे ममारेति किं सत्यं नहि? तर्हि यूयं कुतो नगरसन्निधिं

मृतवन्त इति चेद् वदेत्, तर्हि भवतो दासो यो हित्तीयोरियः सोऽपि
हत इति त्वया वक्तव्यं।

ततः स दूतो गत्वा दायूदं प्राप्य योयाबेणादिष्टां वार्त्तां जगाद। २२
स दूतो दायूदं व्यज्ञापयत् ते लोकाः प्रबला भूत्वा प्रान्तरेऽस्माकं २३
समीपं बहिरागच्छन् तदानीं वयं द्वारप्रवेशस्थानं यावत् तैः साकं
रणम् अकुर्म्म। ततो धनुर्द्धराः प्राचीराद् भवतो दासान् प्रति २४
शरान् अक्षिपन् ततो भूपतेः कतिपया दासा अहन्यन्त तेषां मध्ये
भवतो दासो हित्तीय ऊरियोऽप्यहन्यत। तदानीं दायूद् तं दूतं २५
जगाद त्वं योयाबायेदं कथय त्वमेतेन मासन्तुष्टो भव यतः खड्ग एकं
यद्वत् तादृग् अन्यमपि विनाशयति, त्वं नगरस्य प्रतिकूलं पुन र्दृढं युद्धा
तद् वशीकुरु, इत्थं तम् आश्वासय।

अनन्तरम् ऊरियस्य जाया स्वपतेरूरियस्य मरणवार्त्तां निशम्य २६
स्वामिनं सुशोच। अपरं शोकदिवसेषु व्यतीतेषु दायूद् दूतं प्रहित्य तां २७
निजनिवेशनम् आनाययत्, ततः सा तस्य जाया भूत्वा तस्य पुत्रमेकं
प्रसुषुवे किन्तु दायूदा कृतं कर्म्मेदं परमेश्वरस्यातुष्टिकरं बभूव।

---

## १२ द्वादशोऽध्यायः।

१ नाथनेन मेषस्य दृष्टान्तकथनं दायूदं प्रति भर्त्सनञ्च १५ दायूदः शिशो र्मरणकथनं २४ सुलेमनो जन्म २६ रब्बानगरस्य वशी रणं।

अनन्तरं परमेश्वरो दायूदः समीपं नाथनं प्रेषयामास स आगत्य १
तस्मै कथयामास, एकस्मिन्नगरे धनवानेको दरिद्रश्चैको द्वावास्तां।
तस्य धनिनोऽतीव बहवो गोमेषव्रजा आसन्। अपरं तस्य दरिद्रस्यैकां २
क्षुद्रां मेषवत्सां विनान्यत् किमपि नासीत्, स तां क्रीत्वापालयत् ३
सा च तेन तद्बालकैश्च सह वसती क्रमेणावर्द्धत सा तस्य स्वभक्ष्यद्रव्यम्
अभुङ्क्त तस्य पात्रेऽपिबच्च तस्य वक्षःस्थले ऽशेत तस्य कन्येव चासीत्।
अपरम् एकस्मिन् पथिके तस्य धनवतो गृहेऽतिथौ भूते सोऽतिथये ४
तस्मै पक्तुं निजगोमेषादीनां व्रजेभ्यः किञ्चिद् ग्रहीतुम् अनिच्छन्
तस्य दरिद्रस्य मेषवत्सां गृहीत्वा तामेव तदतिथये पक्ववान्। ततो ५
दायूद् तं धनवन्तं प्रति महाक्रोधेन प्रज्वलन् नाथनं जगाद, परमे-
श्वरस्यामरतायाः शपथं कृत्वा वदाम्यहं तत्कर्म्मकारी लोकोऽवश्यं

६ घातिष्यते। तस्या मेषवत्साया-श्चतुर्गुणं तेन परावर्त्य दातव्यं यतः स दयाम् अकृत्वा तादृशं कर्म्म चकार।
७ तदा नाथनो दायूदं जगाद त्वमेव स मनुष्यः। इस्रायेलः प्रभुः परमेश्वर इति वाचं वक्ति, त्वम् इस्रायेल्‌वंशस्य राजा भवितुं मयाभिषिक्तः
८ शौलस्य हस्ताद् उद्धृतश्च ; अपरं तव प्रभोः परिजनगणो मया तुभ्यं दत्तस्तस्य जायागणस्तव वक्षःस्थले समर्पितश्च तथेस्रायेल्‌वंशो यिहूदावंशश्च मया तव वशीकृतः। अपरं सर्व्वमेतत् कार्य्यं यद्यल्पम् अभविष्यत्
९ तर्ह्यहं तुभ्यं पुनरमुकम् अमुकं वस्त्वप्यदास्यं। इदानीं त्वं परमेश्वरस्य साक्षात् पापं कृत्वा कुतस्तस्याज्ञां तुच्छामकरोः ? त्वं हित्तीयम् ऊरियं खड्गेनावधीस्तस्य जायां निजजायामकरोस्तस्याम्मोनवंशीयानां खड्गे-
१० नाघातयः। अतः खड्गस्तव निवेशनात् कदापि नापसरिष्यति यतस्त्वं
११ माम् अवज्ञायोरियस्य जायां निजजायाम् अकार्षीः। परमेश्वर एनां वाचं वदति, पश्याहं तव परिवारत एव तवामङ्गलम् उत्पादयिष्यामि तव साक्षात् तव भार्य्यागणं गृहीत्वा तव सहवासिने दास्यामि च ततः स एतस्य सूर्य्यस्य साक्षात् तव जायाभिः सह शयिष्यते।
१२ एतत् त्वया गोपने कृतं किन्तु तत्कार्य्यं सर्व्वेषाम् इस्रायेलीयानां सूर्य्यस्य
१३ च साक्षादेव मया कारिष्यते। ततो दायूद् नाथनं बभाषे परमेश्वरस्य विरुद्धं मया पापमकारि। ततो नाथनो दायूदम् अवदत्, परमेश्वरस्तव
१४ पापं दूरीकृतवान् एतेन त्वं न मरिष्यसि। किन्तु त्वम् एतेन कर्म्मणा परमेश्वरस्य रिपून् अतीवानिन्दय इति कारणात् तवौरसोऽयं पुत्रो मरिष्यति। अनन्तरं नाथनो निजगृहं प्रतस्थे।
१५ अनन्तरम् ऊरियस्य जायाया गर्भजाते दायूदः पुत्रे परमेश्वरेणा-
१६ हते सोऽतीव पीडितो बभूव। ततो दायूद् बालकस्य कृत ईश्वरस्य समीपे प्रार्थयाञ्चक्र उपोवास च गेहं प्रविश्य कृत्स्नां रजनीं भूमौ निपत्य
१७ तस्थौ च। ततस्तस्य गृहस्य प्राचीनास्तं परित्यज्य भूमित उत्थापयितुं प्रयेतिरे, किन्तु स नाङ्गीचकार तैः समं भोजनमपि न चकार।
१८ अपरं सप्तमे दिवसे बालको ममार, ततो बालकोऽम्रियतेति वार्त्तां दायूदं वक्तुं तस्य दासा बिभयाञ्चक्रुः, यतस्ते गदितवन्तः पश्यत बालके सजीवे सति सोऽस्माभिर्बहु गदितोपि नास्माकं वाक्यान्यशृणोत् तर्हि बालकोऽम्रियतेति वार्त्तां तं गदितुं कथं शक्नुमः ? तेन सोऽहितं कर्म्म
१९ करिष्यति। किन्तु दासाः परस्परं प्रति वाचं प्रजजल्पुरिति दायूद् ददर्श

ततो बालको मृत इति बुद्धा दायूद् दासगणं पप्रच्छ, बालकः किं मृतः?
त ऊचुः स मृत इति। तदानीं दायूद् भूमित उत्थाय स्नात्वा गात्र- २०
मार्ज्जनं कृत्वा वस्त्राणि परिवर्त्त्य परमेश्वरस्यावासं प्रविश्य भजनं चकार,
अनन्तरं स्वगृहम् आगतेन तेन समाज्ञापितास्ते तत्सम्मुखे भक्ष्यद्रव्याणि
परिवेषयाञ्चक्रिरे ततः स बुभुजे। एतेन तस्य दासास्तं बभाषिरे भवता २१
किमिदं क्रियते? बालके जीवति भवान् तस्य कृत उपोषितवान् रोदि-
तवांश्च, बालके मृते भवान् समुत्थाय खाद्यं भुङ्क्ते। ततः स कथयामास २२
बालके जीवति सति को जानाति परमेश्वरश्चेत् मां प्रति प्रसन्नो भवेत्
तर्हि बालको जीविष्यतीति विज्ञायाहम् उपावसम् अरोदञ्च। इदानीं स २३
मृत एव किमर्थम् उपवत्स्यामि? तं पुनरानेतुं किं मया शक्यं? अहं
तस्य समीपं यास्यामि किन्तु स मम समीपं पुन र्नागमिष्यति।

अनन्तरं दायूद् निजजायां वतशेवां सान्त्वयित्वा तस्याः समीपं २४
गत्वा तया साकम् अशेत ततः सा पुत्त्रमेकं प्रसूय तस्य नाम सुलेमानं
शान्तिदायकं चकार। अपरं परमेश्वरस्तस्मिन् अप्रीयत। अनन्तरं २५
तेन प्रेषितो नाथनो भविष्यद्वादी परमेश्वरस्य प्रेमकारणात् तस्य नाम
यिदीदियः परमेश्वरस्य प्रिय इति चकार।

अनन्तरं योयाबोऽम्मोनदेशस्थरब्बायाः प्रतिकूलं युध्यन् राजपुरीं २६
वशीकृत्य दायूदः समीपं दूतान् प्रहित्य ज्ञापयामास, अहं रब्बया समं २७
रणं कृत्वा जलपुरीं वशीकृतवान्। इदानीं मया नगरे वशीकृते मम २८
नाम यद् विख्यातं न जायते, तदर्थं त्वम् अवशिष्टसैन्यानि संगृह्य
नगरस्य समीपे शिबिरं स्थापयित्वा तद् वशीकुरु। ततो दायूद् २९
सर्व्वाणि सैन्यानि संगृह्य रब्बां गत्वा तस्या विरुद्धं रणं कुर्व्वन् तां वशी-
चकार। अपरं रत्नसुवर्णानां किक्कारैकपरिमाणं तद्देशीयराजमुकुटं ३०
राज्ञो मस्तकाद् आददात् तच्च दायूदो मस्तकेऽदीयत अपरं स तस्मात्
नगराद् बहूनि लोठितद्रव्याणि बहिष्कृत्यानिनाय। अनन्तरं दायूद् ३१
तन्मध्यवर्त्तिनो लोकान् बहिष्कृत्यानीय करपत्राणां लौहमयानां लोष्ट-
घ्नानां कुठाराणाञ्च कर्म्मसु न्ययुङ्क्त, इष्टकापाकस्थानेषु च गमनागमने
कारयामास। सोऽम्मोनवंशस्य सकलनगराणि प्रति तादृशं चकार।
अनन्तरं दायूद् तस्य सर्व्वे लोकाश्च यिरूशालमं परावृत्य जग्मुः।

# १३ त्रयोदशोऽध्यायः।

१ अम्नोनस्य निजभगिन्यां तामरायाम् अनुरक्तिः ६ छलं कृत्वा तस्य पीडितत्वदर्शनं भगिन्या बलात्करणं १५ अनन्तरं तां ऋतीयित्वा दूरीकरणं २१ अवशालोमस्य कथनं २३ अवशालोमस्य मेषलोमच्छेदनकथनं २८ अम्नोनस्य हननं ३० दायूदः समीपे वार्त्ताकथनं ३७ अवशालोमस्य पलायनं।

१ दायूदः पुत्रस्यावशालोमस्य तामरानामिका परमसुन्दरी सहोदर्य्य-
२ आसीत् तां प्रति दायूदः पुत्रो ऽम्नोनः कामासक्त आसीत्। निजभगि-
न्यास्तामरायाः कृते व्याकुलत्वात् सोऽस्वस्थो बभूव यतः सानूढासीत्
३ तथाप्यम्नोनस्तां प्रति किञ्चित् कर्त्तुं दुष्करं बुबुधे। अनन्तरं दायूदो
भ्रातुः शिमियस्य पुत्रो योनादबनामकोऽम्नोनस्यैको बन्धुरासीत् स
४ योनादबोऽतीव चतुरः। सोऽम्नोनं पप्रच्छ त्वं राजपुत्रोऽपि सन् दिनं
दिनम् एतादृशः कृशः कुतो भवसि तन्मां किं न ज्ञापयिष्यसे? ततो
ऽम्नोनस्तं बभाषे निजभ्रातुरवशालोमस्य भगिनीं तामरां प्रति कामा-
५ तुरोऽहमासे। ततो योनादबस्तम् उवाच त्वं निजखट्वायां शयित्वा
पीडितत्वं छलं कुरु, ततस्तव पितरि त्वां वीक्षितुम् आगते त्वं तस्मै
कथामिमां कथय, विनयेऽहं मम भगिनी तामरा मम समीपम् आगत्य
मह्यं खाद्यं ददातु वीक्ष्याहं यत् तस्याः करात् तद् भुञ्जे तदर्थं सा मम
साक्षादेव तत् खाद्यं पचतु।
६ अनन्तरम् अम्नोनः पीडितत्वस्य छलं कृत्वा शयितवान् ततो राज्ञि तं
वीक्षितुम् आगतेऽम्नोनो राजानम् उक्तवान् अहं विनये मम भगिनी
तामरागत्य मम साक्षाद् द्वे पिष्टके पचतु ततोऽहं तस्या हस्ताद्
७ भोक्ष्ये। तदा दायूद् तामरायाः समीपे गर्भागारं लोकं प्रहित्य तां
जगाद, विनयेऽहं निजभ्रातुरम्नोनस्य गृहं गत्वा तस्मै किञ्चित् पथ्यं
८ पक्का देहि। अतस्तामरा निजभ्रातुरम्नोनस्य गृहं जगाम तदानीं सो-
ऽशेत। सा तु सिक्तानि गोधूमचूर्णानि गृहीत्वा तस्य साक्षात् मर्द्दयित्वा
९ पिष्टकान् पपाच, पात्रमेकं गृहीत्वा तस्य सम्मुखे तान् तत्र निदधे च किन्तु
स भोक्तुं नैच्छत्। अनन्तरम् अम्नोन उक्तवान् मम समीपात् पुरुषाः
१० सर्व्वे बहिर्यान्तु ततः सर्व्वे पुरुषास्तस्माद् बहिर्जग्मुः। तदानीम् अम्नोन-
स्तामराम् उक्तवान् त्वं भक्ष्यद्रव्यम् एतत् शयनागारम् आनय ततोऽहं
तव हस्ताद् भोक्ष्ये। ततस्तामरा निजकृताम् तान् पिष्टकान् गृहीत्वा
११ निजभ्रातुरम्नोनस्य समीपं शयनागारं जगाम। अपरं तया तं भोज-

यितुं तस्य समीपं तेष्वानीतेष्वम्नोनस्तां धृत्वा जगाद हे मम भगिनि
एहि मया समं शेष्व। ततः सा प्रत्यवदत् हे मम भ्रात नहि नहि मां १२
बलात् मा कुरु यत इस्रायेल्वंशस्य मध्य एतादृशं कर्त्तव्यं नहि, त्वमे-
तद् दुष्कर्म्म मा कार्षीः। अहं निजलज्जां कुत्र निधास्ये? त्वमपीस्रा- १३
येल्वंशे दुष्टलोकानां मध्ये गणयिष्यसे। विनयेऽहं त्वं राजानं सम्भा-
षस्व स तुभ्यं मां दातुम् अनिच्छुको न भविष्यति। किन्तु स तस्या १४
वाचं नागृह्णात् किन्तु तस्या बलवान् सन् बलात्कारेण तया साकं शिश्ये।

अनन्तरम् अम्नोनस्ताम् भृशम् ऋतीयितवान् पुरा तां प्रति १५
तस्य यः काम आसीत् ततोऽप्यधिका घृणा बभूव तस्माद् अम्नोनस्ताम्
उक्तवान् त्वम् उत्थाय याहि। सा तं जगाद त्वया पूर्व्वं मम यद् १६
अपराद्धं ततोऽधिकं मां वहिष्कुर्व्वता त्वयापराध्यते। किन्तु स तस्या १७
वचनम् अगृहीत्वा स्वपरिचारकं तरुणम् आहूय गदितवान् एषा
मम समीपाद् वहिष्क्रियतां द्वारे चार्गलं दीयतां। तस्याः कन्याया १८
गात्रे नानावर्णीयं वसनमासीत् यतोऽनूढा राजकुमार्य्यस्तादृशानि वस-
नानि पर्य्यदधत। अनन्तरं तस्य दासस्तां वहिष्कृत्य द्वारेऽर्गलं ददौ।
तदानीं तामरा निजशिरसि भस्म ददौ स्वगात्रस्थं नानावर्णवसनं १९
छित्त्वा शिरसि हस्तं दत्त्वा रुदती वव्राज च। ततस्तस्याः सहोदरोऽव- २०
शालोमस्तां पप्रच्छ तव भ्राताम्नोनः किं त्वाम् उपागमत्? हे मम
भगिनि मौनी भव स तव भ्राता त्वम् एतत् मनसि न निधत्स्व। तत
स्तामरा निजसहोदरस्यावशालोमस्य गेहे ऽनाथा सती तस्थौ।

अनन्तरं नृपो दायूद् एतानि सर्व्वाणि श्रुत्वा भृशं चुक्रोध। अपरम् २१
अवशालोमो निजभ्रातरम् अम्नोनं भद्रम् अभद्रं वा किमपि नाभा- २२
षत, यतो निजसहोदराया तामराया बलात्करणाद् अवशालोमस्तम्
ऋतीयितवान्।

सम्पूर्णवत्सरद्वयात् परम् इफ्रयिमसीमास्थे बाल्हात्सोरे ऽवशा- २३
लोमस्य मेषलोमच्छेदनं बभूव ततोऽवशालोमः सकलान् राजपुत्रान्
निमन्त्रयामास। अवशालोमो राज्ञः समीपमागत्य निवेदितवान् २४
पश्यतु भवतो दासस्य मेषलोमच्छेदनं भविष्यति, अतो राजा भवतो
भृत्याश्च भवतो दासेन समम् आगच्छन्तु। ततो नृपोऽवशालोमं बभाषे २५
हे मम पुत्र तन्नहि, सर्व्वेषाम् अस्माकं गमनात् तवाधिकव्ययो
भविष्यति। तथापि स बहुप्रार्थयाञ्चक्रे किन्तु राजा गन्तुमनिच्छन्

२६ तमाशिषं बभाषे। अनन्तरम् अवशालोम उक्तवान् यद्यपि तथा न
भवेत् तर्हि मम भ्रातरम् अम्नोनं मया सह गन्तुम् आज्ञापयतु। ततो
२७ राजा तं जगाद स कुतस्त्वया समं यास्यति? किन्त्ववशालोमेन बहु
प्रार्थिते नृपोऽम्नोनं सकलराजपुत्रांश्च तेन सार्कं गन्तुं विससर्ज।

२८ अपरम् अवशालोमो निजदासान् इत्याज्ञापयामास यूयं निरीक्ष-
ध्वम् अम्नोनस्य चित्ते द्राक्षारसेन प्रफुल्लिते यूयम् अम्नोनं मारयतेति
मयादिष्टे युष्माभिः स हन्यतां भीतिं न क्रियतां यतोऽहमेव तद्
२९ आज्ञापये तस्माद् युष्माभि र्भयवर्जितै र्वीरै र्भवितव्यं। अनन्तरम्
अवशालोमस्य दासा अवशालोमस्याज्ञानुसारेणाम्नोनं प्रति तदकुर्व्वन्
ततो राजपुत्राः सर्व्वे उत्थाय स्वं स्वं खचरम् आरुह्य पलायाञ्चक्रिरे।

३० अपरं तेषां मार्गेणागमनकाले राजकुमाराः सर्व्वेऽवशालोमेन हतास्ते-
षाम् एकोऽप्यवशिष्टो नास्तीति किंवदन्ति दायूदः समीप उपागच्छत्।
३१ ततो नृप उत्थाय निजवसनानि छित्त्वा भूमौ पपात तस्य सर्व्वे दासाश्च
३२ छिन्नवसनाः सन्तस्तस्य समीपेऽतिष्ठन्। तदानीं दायूदो भ्रातुः शिमि-
यस्य पुत्रो योनादवो जगाद, राजकुमाराः सर्व्वे हता इति मत्प्रभु
र्नानुमन्यतां, केवलम् अम्नोनो जघ्ने यतोऽवशालोमस्य सहोदराया-
स्तामराया अम्नोनेन बलात्कारणदिवसमारभ्यावशालोम एतत् निर-
३३ चिनोत्। अतः सर्व्वे राजपुत्रा मृता इति चिन्तयन् मम प्रभू राजा
३४ न शोचतु केवलम् अम्नोनो हतः। अनन्तरम् अवशालोमः पलायाञ्चक्रे।
ततः परम् एकस्तस्याः प्रहरी निजनेत्रे उन्मील्य स्वपश्चात् पर्व्वतपार्श्व-
३५ वर्त्मना बहवो लोका आगच्छन्तीति ददर्श। ततो योनादवो राजानम्
उक्तवान् अमी राजपुत्रा आगच्छन्ति पश्य भवतो दासेन यद् उक्तं
३६ तदेवाजायत। इति तेन गदित एव राजपुत्रा उपस्थाय प्रोच्चैरुदुः
राजापि तस्य सकलदासाश्च भृशं रुरुदुः।

३७ अनन्तरम् अवशालोमः पलाय्य गिशूरीयनृपस्याम्मीहूदसुतस्य तल्म-
यस्य समीपं जगाम, अपरं दायूद् निजपुत्रमधि बहुदिनानि शुशोच।
३८ किन्त्ववशालोमः पलाय्य गिशूरं प्राप्य तत्र स्थाने त्रीन् वत्सरान् प्रोवास।
३९ अनन्तरं दायूद् राजा मृतम् अम्नोनं प्रति शान्तो भूत्वावशालोमस्य
समीपं गन्तुं ववाञ्छ।

---

# १४ चतुर्दशोऽध्यायः।

१ तिकोयीययोषितो योयाबेनानयनं ४ अवशालोमम् आनाययितुं तस्या योषितो दृष्टान्तकथनं २१ योयाबेनावशालोमस्य यिरूशालम आनयनं २५ अवशालोमस्य सौन्दर्य्यस्य वंशस्य च कथनं २८ द्विभ्यो वत्सरेभ्यः परं दायूदो नृपस्य समीपम् अवशालोमस्य गमनं।

अनन्तरम् अवशालोमं प्रति नृपते र्मन आकृष्टमिति सिरूयायाः १
सुतेन योयाबेन बुबुधे। ततः स योयाबस्तिकोयं दूतं प्रहित्य तत्स्थानात् २
ज्ञानवतीं स्त्रियमेकाम् आनाय्य ताम् अवदत्, विनयेऽहं त्वं छलेन
शोकान्विता भूत्वा शोकसूचकं वेशं परिधेहि गात्रे तैलं न मर्दय किन्तु
मृतस्य कृते बहुकालं शोककारिणी काचित् योषिदिव भव। अपरं ३
नृपतेः समीपं गत्वा तस्मै कथामेतादृशीं कथय, ततस्तद् वक्तव्यं वचो
योयाबस्ताम् आदिदेश।

अनन्तरं सा तिकोयीया योषित् नृपतिं सम्बभाषे। सा न्युब्जीभूय ४
भूमौ पतित्वा प्रणम्य निवेदयामास, हे भूपते मामुपकरोतु। भूपतिः ५
पृष्टवान् तव किम् अभूत्? ततः सा बभाषे, अहमेका विधवा मम पति
र्मृतः। अपरं भवतो दास्या द्वौ सुतावास्तां क्षेत्रे तयोः परस्परं युद्धे जाते ६
निवारकस्याभावाद् एको जनोऽन्यजनम् आहत्य मारितवान्। इदानीं ७
सर्व्वे परिजना भवतो दास्या विरुद्धम् उत्थाय वदन्ति स भ्रातृघातक-
स्त्वया प्रदीयतां वयं तेन हतस्य भ्रातुः प्राणानां परिवर्त्तेन तस्य प्राणान्
ग्रहीष्याम उत्तराधिकारिणमपि विनाशयिष्यामहे। अनेन प्रकारेण
मम स्वामिनो नाम किमपि वा शेषं यत्र तिष्ठेत् तदर्थं ते ममावशिष्टम्
अङ्गारं निर्व्वापयितुं चेष्टन्ते। तदानीं राजा तां योषितं जगाद ८
त्वं निजनिवेशनं याहि त्वामध्यहमाज्ञापयिष्यामि। अनन्तरं सा ९
तिकोयीया योषिद् राजानं व्याजहार हे मम प्रभो राजन् सोऽप-
राधो मम मत्पितृवंशस्य च भवतु किन्तु राजा भवतः सिंहासनञ्च
निरपराधो भवतु। ततो राजा जगाद यः कश्चित् त्वां किञ्चिद् वदति १०
तं मम समीपम् आनय, स त्वां पुन र्न स्प्रक्ष्यति। अनन्तरं सा बभाषे ११
निवेदयाम्यहं महाराजेन स्वं प्रभुं परमेश्वरं स्मृत्वा पुन र्मानवं हन्तुं
शोणितपातप्रतिहन्त्रा वार्य्यतां नोचेत् मम पुत्रो विनाशयिष्यते।
राजा जगाद परमेश्वरस्यामरतायाः शपथं कृत्वा वदामि तव पुत्रस्य
केश एकोऽपि मृत्तिकायां न पतिष्यति। सा योषिद् अवदद् विनयेऽहं १२

भवतो दासीं मम प्रभो राज्ञः समीपे वाक्यम् एकं वदितुम् अनुजा-
१३ नातु; ततो नृपतिरवदत् कथय। अनन्तरं सा योषित् जगाद
ईश्वरस्य लोकानधि भवान् कुत एतादृशं विचारयति? एतादृश्या
आज्ञायाः कथनाद् देशवहिष्कृतस्यात्मीयलोकस्य पुनरानयनेन नृपतिः
१४ स्वयं दोषीव भवति। अस्माभि र्मर्त्तव्यमेव भूमौ पतितानि यानि
तोयानि पुनः सञ्चेतुं केनापि न शक्यते तत्तुल्यैरस्माभि र्भवितव्यं तथा
चेश्वरेणापि ममता प्रकाश्य दूरीकृतो नरो यद् दूरे न तिष्ठेत् तदर्थम्
१५ उपाया निश्चीयन्त इति किं सत्यं नहि? अहम् एतद् वचनं मम
प्रभो राज्ञः समीपे निवेदयितुम् आगमं यतो लोकैर्मम साध्वस उत्पा-
दिते भवतो दास्या गदितम्, अहं नृपतेः समीपे मदीयवाचं निवेदयि-
ष्यामि तेन भवितुं शक्नोति राजा निजदास्याः प्रार्थितं साधयिष्यति।
१६ मम पुत्रेण सह मामीश्वरस्याधिकृतदेशाद् उच्छेत्तुं चेष्टकस्य मनुजस्य
१७ करात् निजदासीम् उद्धारयितुं नृपतिश्चेद् अङ्गीकुर्य्यात्, तर्हि
मम प्रभो राज्ञो वाक्यम् अवश्यं सान्त्वनादायकं भविष्यतीति भवतो
दास्या बुद्धं यतो भद्राभद्रविवेचनामधि मम प्रभु र्नृप ईश्वरीयदूत-
तुल्यो भवति, अतो भवतः प्रभुः परमेश्वरो भवतः सहायो भवतु।
१८ अनन्तरं राजा तां योषितं जगाद, विनयेऽहं त्वां यत् प्रक्ष्यामि
तत् मत्तो मापह्नुष्व। ततः सा व्याजहार, मम प्रभु र्नृपतिः कथ-
१९ यतु। नृपतिरवदत् कार्य्येऽस्मिन् त्वया समं किं योयावस्य मन्त्रणा
नास्ति? ततः सा व्याहरत्, हे मम प्रभो राजन्, भवतः प्राणानां
शपथेन वदामि, मम प्रभु र्भूपति र्यत् कथयति तत्तो दक्षिणं वामं वा
परावर्त्तितुं केनापि न शक्यते। भवतो दासो योयाव एव माम् आदिश्य
२० सर्व्वा एताः कथा भवतो दासीमशिक्षयत्। तद्विषयं रूपान्तरीकर्त्तुं
भवतो दासो योयाव एतत्कर्म्म कृतवान्। पृथिवीस्थेषु सर्व्वकर्म्मसु
मम प्रभुरीश्वरस्य दूत इव ज्ञानवान् आस्ते।

२१ अनन्तरं राजा योयावं जगाद त्वया कार्य्यमिदं साधितम् अतस्त्वं
२२ गत्वा तं युवानम् अवशालोमं पुनरानय। ततो योयावो न्युब्जीभूय
भूमौ पतित्वा प्रणम्य राजानं धन्यं वदन् व्याजहार हे मम प्रभो राजन्
भवताहम् अनुगृहीत इत्यद्य भवता स्वदासस्य निवेदनग्रहणाद् भवतो
२३ दासेन मया बुद्धं। अनन्तरं योयाव उत्थाय गिशूरं गत्वावशालोमं
२४ यिरूशालमम् आनिनाय। अनन्तरं राजा व्याहरत्, स पराङ्गृत

निजनिवेशनं यातु मम वदनं तेन न द्रष्टव्यं। ततोऽवशालोमो निज-
निवेशनं परावृत्य जगाम राज्ञो मुखं न ददर्श।

इस्रायेल्वंशमध्ये सोऽवशालोम इव रूपेण श्लाघ्यः कोपि नासीत् २५
तस्यापादमस्तकं निर्दोषम् आसीत्। स संवत्सरान्ते केशभारात् स्वशिरो- २६
ऽमुण्डयत् ततः शिरोमुण्डनकाले कचेषु तुलितेषु राजकीयपरिमाणा-
नुसारेण ते शेकलशतद्वयपरिमिता अभवन्। तस्यावशालोमस्य त्रयः २७
पुत्रास्तामरानामिका परमसुन्दरी दुहितैका चासन्।

अनन्तरम् अवशालोमः सम्पूर्णवत्सरद्वयं यिरूशालमे वसन् राज्ञो २८
वदनं न दृष्टवान्। अनन्तरं स राज्ञः समीपं प्रेषयितुं योयावं दूते- २९
नाजुहुवे, किन्तु स तस्य समीपम् आगन्तुं नैच्छत् द्वितीयवारं दूते
प्रहितेऽपि स आगन्तुं नैच्छत्। अतः स निजदासान् व्याहरत्, पश्यत ३०
मम स्थानस्य समीपे योयावस्य क्षेत्रम् एकमास्ते तत्र स्थाने तस्य ये
यवा आसते यूयं गत्वा तत्र वह्निं दत्त। ततोऽवशालोमस्य दासाः क्षेत्रे
वह्निं ज्वालयामासुः। अनन्तरं योयाव उत्थायावशालोमस्य गृहे ३१
तत्समीपम् आगत्य तं पप्रच्छ तव दासैः मम क्षेत्रे कुतो वह्निः ज्वालितः?
ततोऽवशालोमो योयावं जगाद पश्याहं तव समीपं दूतं प्रहित्य ३२
त्वाम् अवदं मम समीपम् एहि, गिशूरात् मया कुत आगतं? अद्यापि
तत्र स्थाने चेदहम् अस्थास्यं तर्हि मम क्षेमम् अभविष्यत्। इदानीं
राज्ञो वदनं मया दृश्यतां यदि वा ममापराधो विद्यते तर्हि स मां
हन्तु वाचम् एतां राज्ञः समीपे निवेदयितुम् अहं त्वां प्रेषयिष्यामि।
अनन्तरं योयावेन राज्ञः समीपं गत्वा तद्वाक्ये निवेदिते राजावशा- ३३
लोमम् आगन्तुम् आज्ञापयामास ततः स राज्ञः समीपं गत्वा नृपतेः
सम्मुखे भूमौ पतित्वा प्रणनाम भूपतिश्चावशालोमं चुचुम्बे।

---

## १५ पञ्चदशोऽध्यायः।

१ अवशालोमस्येस्रायेलोकानां मनोहरणं ७ सतक्लेन हिब्रोणे तस्य गमनं १० तस्य राजद्रोहः १३ दायूदस्य पलायनं १९ इत्तयस्य दायूदो न त्यजनं २४ सादोकाबीयाथरयोः प्रत्यावर्त्तनं ३० दायूदो रोदनं ३१ अहीथोफलस्य मति कथनं ३२ हूशयस्य प्रत्यावर्त्तनं।

ततः परम् अवशालोम आत्मकृते रथं हयान् अग्रे गामिनः पञ्चाशत्- १
लोकांश्च न्ययुङ्क्त। अपरम् अवशालोमः प्रत्यूष उत्थाय नगरद्वारस्य पथ- २

पार्श्वे तिष्ठति, अपरं यः कश्चिद् विवादस्य विचारार्थं राज्ञः समीपं
जिगमिषत्यवशालोमस्तमाहूय त्वं कस्मान्नगराद् आगतोसीति पृच्छति।
ततो भवतो दासोऽहम् इस्रायेलोऽमुकवंशाद् आगच्छम् इति तेन
३ प्रतिगदितेऽवशालोमस्तं वदति पश्य तव विवादस्य कथा भद्रा
४ यथार्थाश्च किन्तु तव वाचं श्रोतुं राज्ञा नियुक्तः कोऽपि नास्ति। अव-
शालोमोऽपरमपि व्याहरति, यद्यहं देशे विचारयितृपदे न्ययोक्ष्ये तर्हि
यस्य कस्यचिद् विवादो निवेदनं वास्ति तस्मिन् मम समीपम् आगते
५ ऽहं तमधि न्याय्यं विचारम् अकरिष्यं। अपरं तं नमस्कर्त्तुं कस्मिंश्चित्
६ तस्य समीपम् आगते स करं प्रसार्य्य तमालिङ्ग्य चुम्बते। इस्रायेलो यः
कश्चिद् विचारनिष्पत्त्यर्थे राज्ञः समीपं जिगमिषति तं प्रत्यवशालोम इत्थं
करोति। अनेन प्रकारेणावशालोम इस्रायेल्लोकानां मनांसि जहार।
७ अपरं चत्वारिंशद् वत्सरेषु व्यतीतेष्ववशालोमो राजानं व्याहरत्
परमेश्वरमुद्दिश्य मयैकं व्रतं प्रत्यश्रावि तत् साधयितुं हिब्रोणं मां गन्तुम्
८ अनुजानातु। अरामदेशस्थे गिशूरे भवतो दासस्य प्रवासकाले मया
व्रतेनैतत् प्रतिश्रुतं यदि परमेश्वरो मां यिरूशालमं पुनरानयेत् तर्ह्यहं
९ परमेश्वरं सेविष्ये। ततो राजा जगाद कुशलेन गच्छ। तस्मात् स
उत्थाय हिब्रोणं प्रतस्थे।
१० सर्व्वेषाम् इस्रायेल्वंशीयानां समीपेऽवशालोमेन चरान् प्रहित्य
वार्त्तैषा ज्ञापयाञ्चक्रे तूरीध्वनिं श्रुत्वैव युष्माभिरवशालोमो हिब्रोणे
११ राजाभवदिति वक्तव्यं। अपरं यिरूशालमाद् द्वे शते निमन्त्रिता लोका
अवशालोमेन सहागच्छन् ते किमपि नावगत्य मनःसारल्येन जग्मुः।
१२ अनन्तरम् अवशालोमो बलिदानसमये दायूदो मन्त्रिणं गीलनीयम्
अहीथोफलं दूतेन तदीयनगराद् गीलत आनिनाय तेन महाराज-
द्रोहे जातेऽवशालोमस्य पक्षीयलोकाः क्रमशोऽवर्द्धन्त।
१३ अनन्तरम् एको जनो दायूदः समीपम् आगत्य वार्त्तामिमाम् अव-
१४ दत्, इस्रायेल्लोकानाम् अन्तःकरणान्यवशालोमस्य पक्षे भवन्ति। ततो
दायूद् यिरूशालमस्थान् निजनिकटवर्त्तिनो भृत्यान् जगाद वयमुत्थाय
पलायामहै नोचेद् अवशालोमस्य कराद् अस्माकं रक्षा न भविष्यति,
शीघ्रं गच्छत नोचेत् स तूर्णम् अस्मान् प्राप्य विपदम् करिष्यति खड्गधा-
१५ रेण च नगरं विनाशयिष्यति। ततो राज्ञो भृत्या राजानम् अवदन्
पश्यत्वस्माकं प्रभो भूपतेरभिलषितं कर्म्म कर्त्तुं भवतो दासा उद्यताः।

अनन्तरं राजा तत्पश्चात् तस्य सकलपरिजनाश्च पद्भिः प्रवव्रजुः। गृह- १६
रक्षार्थं दशोपपत्न्यो राज्ञास्थाप्यन्त। अनन्तरं राजा सर्व्वलोकाश्च पद्भि १७
र्गच्छन्तो वहिर्गत्य बैतमर्हके तस्थुः। तस्य सर्व्वभृत्याः किरेथीयाः १८
पिलेथीयाश्च सर्व्वे लोका अपि च गातीया लोका अर्थाद् गातनग-
राद् दायूदा समम् आगताः षट्शतानि लोका राज्ञः सम्मुखेऽव्रजन्।

अनन्तरं राजा गातीयम् इत्तयं जगाद, अस्माभिः सह त्वमपि कुतो १९
यासि? त्वं परावृत्य गत्वा राज्ञा समं तिष्ठ यतस्त्वं विदेशी स्वदेश-
च्युतश्च लोकः। ह्यो मात्रम् आगतोऽसि, अद्यास्माभिः सह किं २०
मया भ्रामयिष्यसे? अहं यत्स्थानं गन्तुं शक्नोमि तत्स्थानं गमि-
ष्यामि त्वं परावृत्य याहि निजभ्रातॄनपि गृहीत्वा गच्छ, अनुग्रहः
सत्यता च तव सहवर्त्तिनी भवतां। तत इत्तयो राजानं प्रत्यवदत्, २१
परमेश्वरस्यामरताया निजप्रभो राज्ञः प्राणानाञ्च शपथं कृत्वा वदाम्यहं
जीवने मरणे वा मम प्रभू राजा यत्र स्थाने स्थास्यति भवतो दासोऽपि
तत्रैव स्थास्यति। अनन्तरं दायूद् इत्तयं जगाद, त्वम् अग्रसरो भव। २२
ततो गातीय इत्तयस्तस्य सर्व्वे लोकाश्च तस्य सङ्गिनः सर्व्वे बालका-
श्चाग्रसरा बभूवुः। सर्व्वलोकानाम् अग्रगमनकाले देशीयाः सर्व्वे प्रोच्चै २३
रुरुदुः। अपरं प्रान्तरगामिनं मार्गं प्राप्तं नृपतिः किद्रोणस्रोतस्वत्याः
पारं जगाम तस्य सकललोकाश्च पारं जग्मुः।

सादोकस्तेन सह सर्व्वे लेवीयलोकाश्चेश्वरीयनियममञ्जूषां वहन्त २४
स्तत्रासन् अपरं नगराद् आगच्छतां सकललोकानां पारगमनं यावद्
ईश्वरस्य मञ्जूषा तैरवारोप्यत ततोऽवीयाथर आरुरोह। अनन्तरं २५
राजा सादोकं जगाद त्वम् ईश्वरस्य मञ्जूषां नगरं परावृत्य नय,
यदि परमेश्वरो माम् अनुगृह्णीयात् तर्हि स मां पुनरानीय तां निज-
निवासञ्च दर्शयिष्यति। किन्तु त्वयि मम तुष्टिर्नास्तीति यदि स वदेत् २६
तर्हि पश्याहम् उपस्थित आसे स यत् क्षेमं मन्यते तदेव मां प्रति
करोतु। अनन्तरं राजा सादोकं याजकं जगाद पश्य त्वं कुशलेन नगरं २७
प्रति परावृत्य याहि तव पुत्रोऽहीमासोऽवीयाथरस्य पुत्रो योनाथनश्च
युवयोरिमौ द्वौ पुत्रावपि युवाभ्यां सार्द्धं गच्छतां। पश्य युवयोः समी- २८
पाद् यावत् लिखिता वार्त्ता नागच्छति तावदहं प्रान्तरस्य निर्जनस्थानेषु
विलम्बिष्ये। ततः सादोकावीयाथरावीश्वरस्य मञ्जूषां परावर्त्य यिरू- २९
शालमं नीत्वा तत्र स्थाने तस्थतुः।

३० अनन्तरं दायूद् जितवृक्षाणां मार्गेणारोह, ऊर्द्धगमनसमये सो-
ऽक्रन्दद् आच्छन्नमस्तकोऽनावृतपदश्च सन् अव्रजत् तस्य सङ्गिनो लोका
अपि सर्व्वे स्वं स्वं शिर आच्छाद्योर्द्धगमनसमये रुदन्तोऽव्रजन्।
३१ अपरम् अवशालोमस्य सङ्गिनां राजद्रोहिणां मध्येऽहीथोफलोऽपि
विद्यत इति वार्त्तायां दायूदा श्रुतायां स जगाद हे परमेश्वर विनयेऽहं
त्वम् अहीथोफलस्य मन्त्रणां मूढीकुरु।
३२ यत्र स्थाने लोकैरीश्वरः प्राणम्यत तत् पर्व्वतशृङ्गं दायूद् यदोपा-
तिष्ठत् तदार्कीयो हूशयश्छिन्नवस्त्रो धूलीम्रक्षितमस्तकश्च सन् दायूदं
३३ साक्षात्कर्त्तुम् आजगाम। ततो दायूद् तं बभाषे यदि त्वं मया समं गच्छसि
३४ तर्हि मम भारइव भविष्यसि। किन्तु त्वं नगरं परावृत्य गत्वा हे राजन्
अहं भवतो दासो भविष्यामि पूर्व्वं यथा तव पितु दास आसं तथा
भवतो दासो भविष्यामीति वाक्यम् अवशालोमं यदि वदेस्तर्हि मम कृते
३५ ऽहीथोफलस्य मन्त्रणां व्यर्थां कर्त्तुं शक्ष्यसि। तत्र स्थाने सादोकाबीया-
थरौ याजकौ किं त्वया समं न स्थास्यतः? तस्मात् त्वं राजगृहे यां
काञ्चित् वार्त्तां श्रोष्यसि तां सादोकाबीयाथरौ याजकौ वदिष्यसि।
३६ अपरं पश्य तत्र स्थाने ताभ्यां सह सादोकस्य पुत्रोऽहीमासोऽबीयाथ-
रस्य पुत्रो योनाथनश्च तयोरेतौ पुत्रावासाते युष्माभि र्या काचिद्
३७ वार्त्ता श्रोष्यते सा ताभ्यां मम समीपं प्रेषयिष्यते। ततोऽवशालोमस्य
यिरूशालमप्रवेशकाले दायूदो बन्धु र्हूशयोऽपि नगरम् आगच्छत्।

## १६ षोडशोऽध्यायः।

१ उपढौकनेन मिथ्यापवादेन च सीवस्य निजप्रभोः सम्पत्तिप्राप्तिः ५ दायूदः शिमि-
यिना शपनं ९ दायूदः सहिष्णुत्वं १५ अवशालोमेन समं हूशयस्य कथाकथनं २०
अहीथोफलस्य मन्त्रणा।

१ अनन्तरं पर्व्वतशृङ्गे दायूदातिक्रान्ते मिफीबोशतस्य दासः सीवः
सज्जितगर्द्दभद्वयोपरि द्वे शते पूपान् शतं शुष्कद्राक्षाफलानि शतम्
उडुम्बरपिण्डकान् एकां कुतुं द्राक्षारसञ्चारोप्य तेन समं मिलित-
२ वान्। अनन्तरं राजा सीवम् अवदत्, एतानि किमर्थं? ततः सीवः
कथयामास, गर्द्दभौ राजपरिजनानां वहनार्थम् अपरं भक्ष्याणि
युवां भोजनार्थं द्राक्षारसाश्च निर्जनस्थाने क्लान्तलोकानां पानार्थं भवि-
३ ष्यन्ति। अनन्तरं नृपति र्जगाद तव प्रभोः पुत्रः कुत्र? सीवो राजानम्

अवदत् स यिरूशालमेऽवातिष्ठत् यत इस्रायेल्वंशो ऽद्य मम पैतृकं
राज्यं मह्यं परावर्त्य दास्यतीति स बुध्यते। ततो राजा सीवम् अवदत्, ४
मिफीबोशतस्य सर्व्वस्वं तव भवतु। सीबोऽवदत् हे मम प्रभो राजन्,
प्रणम्य निवेदयामि भवान् माम् अनुगृह्णातु।
अनन्तरं दायूदि बहूरीमं ग्रामे शौलवंशसम्भवो गेराः पुत्रः ५
शिमियिनामा कश्चित् पुरुषो वहिर्भूयागच्छन् आगच्छन् शेपे। स ६
दायूदं प्रति दायूद्राजस्य समस्तदासांश्च प्रति तस्य दक्षिणे वामे च
व्रजतो लोकान् वीरांश्च प्रति पाषाणान् निचिक्षेप। शिमियिः शपमान ७
इदं व्याजहार, हे शोणितपातिन् हे नारकिन् त्वं दूरीभव दूरीभव।
त्वं यस्य विनिमयेन राजत्वम् अकार्षीस्तस्य शौलवंशस्य सकलशोणित- ८
पातस्य फलं परमेश्वरस्तुभ्यम् अददात्, स च परमेश्वरस्तव पुत्रस्याबशा-
लोमस्य हस्ते राज्यं समार्पयत्, शोणितपातित्वात् त्वं विपन्नोऽभवः।
ततः सिरूयायाः पुत्रोऽबीशयो राजानं जगाद, अयं मृतः श्वा कुतो ९
मम प्रभुं राजानं शपते? विनयेऽहं तस्य शिरश्छेदनार्थं पारं गन्तुं
माम् अनुजानीहि। राजा जगाद हे सिरूयायाः पुत्रौ युवाभ्यां १०
समं मम कः सम्बन्धः? स मां शपतां यतो दायूदं शपस्वेति स
परमेश्वरेण प्रोक्तः, अतस्त्वं कुत एतादृशं कर्म्म करोषीति तं प्रष्टुं केन
शक्यते? अपरं दायूद् अबीशयं निजसकलदासांश्च जगाद पश्यत मम ११
शरीरान्निर्गतः पुत्रो मम प्राणान् गवेषयति तर्हि विन्यामिनीयो
लोकोऽयं किं न करिष्यति? यूयं तं त्यजत स शपतां यतः परमेश्वर-
स्तमाज्ञापयत्। भवितुं शक्नोति ममाश्रुपातम् आलोक्य परमेश्वरो १२
ऽद्य तद्दत्तशापस्य विनिमयेन मम मङ्गलं करिष्यति। अनन्तरं दायूद् १३
तस्य लोकाश्च वर्त्मना व्रजन्। स शिमियिरपि तदभिमुखस्थेन पर्व्वतपार्श्वेन
व्रजितवान् अपरं व्रजन् व्रजन् अशपत पाषाणान् निरक्षिपत् धूली-
भिस्तान् आच्छादयच्च। अनन्तरं राजा तस्य सङ्गिनो मनुजाश्च क्लान्ता १४
भूत्वा तत् स्थानं प्राप्य तत्र विशश्रमुः।
अनन्तरम् अबशालोमस्तेन सार्द्धम् अहीथोफल इस्रायेल्वंशीय- १५
लोकाश्च सर्व्वे यिरूशालमं प्रविविशुः। अनन्तरं दायूदो बन्धुरर्कीयो १६
हूशयोऽबशालोमस्य समीपम् आजगाम। स हूशयोऽबशालोमं जगाद,
राजा चिरं जीवतु चिरं जीवतु। ततोऽबशालोमो हूशयं जगाद तव १७
मित्रं प्रति तव किमीयं प्रीतिः? त्वं स्वमित्रेण समं कुतो न गतोऽसि?

१८ हूशयोऽवशालोमं जगाद नहि परमेश्वर एते लोका इस्रायेलः सर्व्वे
१९ वंशाश्च यं वृणते तस्यैवाहं भवामि तेनैव समं तिष्ठामि च । अपरम्
अहं तदन्यं कं परिचरिष्यामि ? तस्य पुत्रं किं नहि ? यादृगहं तव
तातं पर्य्यचरं तादृग् भवन्तमपि परिचरिष्यामि ।
२० अनन्तरम् अवशालोमोऽहीथोफलं पृष्टवान् इदानीम् अस्माभिः किं
२१ कर्त्तव्यं ? तदर्थं युष्माभि र्मन्त्रणा प्रोच्यतां । ततोऽहीथोफलोऽवशालोमं
जगाद, तव तातो गृहरक्षार्थं या उपपत्नी र्विहाय गतवान् त्वं ता
उपगच्छ तस्मात् सर्व्वैरिस्रायेल्लोकैस्तत् श्रुत्वा त्वं स्वतातेन घृणितोऽभव
२२ इति भोत्स्यते तव सङ्गिनां सर्व्वेषाञ्च बलं वर्द्धिष्यते । अनन्तरं प्रासा-
दपृष्ठे लोकैरवशालोमस्य कृते दूष्ये संस्थापितेऽवशालोमः सर्व्वेषाम्
२३ इस्रायेल्लोकानां साक्षात् निजपितुरुपपत्नीरुपजगाम । तत्कालेऽही-
थोफलेन या मन्त्रणा प्रोच्यत सा ईश्वरीयवचनमिवामन्यत, दायूदा यथा
तथावशालोमेनाप्यहीथोफलस्य सर्व्वा मन्त्रणा तादृगमन्यत ।

## १७ सप्तदशोऽध्यायः ।

१ अहीथोफलस्य मन्त्रणाया विरुद्धं हूशयस्य मन्त्रणा १५ मन्त्रणामधि दायूदे वार्त्ता-
कथनं २३ अहीथोफलस्य स्वोद्बन्धनं २४ दायूदः पारगमनम् अवशालोमेना-
माशायस्य सेनापतिकरणं २७ महनयिमनगरे दायूदो भक्ष्यप्राप्तिः ।

१ अनन्तरम् अहीथोफलोऽवशालोमम् अपरमपि जगाद इदानीं
द्वादशसहस्राणि लोकान् कृत्वाहमद्य निशायामुत्थाय दायूदः पश्चाद्
२ धाविष्यामि । ततो मया श्रान्तो दुर्ब्बलश्च प्राप्तः स त्रासयिष्यते तस्य
सङ्गिनः सर्व्वे लोकाश्च पलाययिष्यन्ते तेनाहं केवलं राजानम् आहनि-
३ ष्यामि । इत्थमहं सकललोकान् तव समीपम् आनेष्यामि यतस्त्वं यं
गवेषयसि तस्यानयनं सर्व्वेषामानयनस्य समानं तेन सर्व्वे लोकाः
४ शान्ता भविष्यन्ति । सा तु मन्त्रणावशालोमस्येस्रायेलः सकलप्राचीना-
५ नाञ्च तुष्टिकारिणी बभूव । तथाप्यवशालोमो बभाषे, इदानीम् अर्कीयो
६ हूशयोऽप्याहूयतां स किं वदिष्यति तद् अस्माभिः श्रूयतां । ततो हूशये-
ऽवशालोमस्य समीपमागतेऽवशालोमस्तं पप्रच्छ, अहीथोफल एतादृशीं
मन्त्रणाम् अददात् इदानीं तस्य मन्त्रणानुसारेणास्माभिः कर्त्तव्यं नवेति
७ त्वं वद । ततो हूशयोऽवशालोमं गदितवान् अहीथोफलेनादिष्टैषा

मन्त्रणा न भद्रा। हूशयोऽपरमपि जगाद त्वं निजपितरं तस्य लोकांश्च ८
जानासि ते वीराः क्षेत्रे हृतवत्सा भल्लूकीव निष्ठुरमनसश्च तव पिता
च महान् योद्धा स लोकैः सार्द्धं रात्रौ न विलम्बिष्यते। पश्येदानीमेव ९
स कस्मिंश्चिद् गर्त्ते रहःस्थाने वा कुत्रचित्तिष्ठति। प्रथमे यदि तव लो-
कानां कश्चिद् हन्येत तर्हि केनचित् तन्निशम्यावशालोमस्य पश्चाद्गामि-
लोकानां निहननं जातमिति गदिते सिंहवदभयहृदयो यो वीरः १०
सोऽपि नितान्तं गलितबलो भविष्यति, यतस्तव पिता वीरस्तस्य
सङ्गिनो मनुजाश्च वीर्य्यवन्त इति सर्व्वं इस्रायेलवंशा जानन्ति। अतो ११
ममैषा मन्त्रणा, दानमारभ्य बेर्शेवां यावत् सर्व्वं इस्रायेल्लोकाः सामु-
द्रसिकतावद् बहुसंख्या भूत्वा तव समीपे मिलन्तु ततः परं त्वं स्वयं
रणं गच्छ। ततो यत्र कुत्रापि स्थाने स विद्यते वयं तत्रैव तम् आक्रम्य १२
भूमौ शिशिरपतनवत् तस्य विरुद्धं सम्पतिष्यामस्तेन स तत्सहाय-
लोकानाम् एकोऽपि नावशेक्ष्यते। यदि वा स किमपि नगरम् आश्रयेत, १३
तर्हि सर्व्वैरिस्रायेल्लोकैस्तस्य नगरस्य समीपे रज्जव आनेष्यन्ते तच्चा-
स्माभिराकृष्य सरिति निक्षेप्स्यते यावत्खण्डम् एकमपि तत्र नावशे-
क्ष्यते। अनन्तरम् अवशालोम इस्रायेलः सर्व्वे लोकाश्चावदन्, अहीथो- १४
फलस्य मन्त्रणात अर्कीयहूशयस्य मन्त्रणा सूत्तमा, यतः परमेश्वरोऽवशा-
लोमं प्रत्यमङ्गलं घटयितुम् अहीथोफलस्योत्तमां मन्त्रणां निरर्थकां कर्त्तुं
निश्चितवान्।

अनन्तरं हूशयः सादोकावीयाथरौ याजकाववदत्, अहीथोफलो- १५
ऽवशालोमायेस्रायेलः प्राचीनगणाय च मन्त्रणामिमां ददौ किन्त्वहं
मन्त्रणामेतां दत्तवान्। अतो युवां तूर्णं दूतं प्रहित्य दायूदं वदतं, १६
त्वमद्य प्रान्तरस्थेषु निर्जनस्थानेषु यामिन्यां न विलम्बस्व, तूर्णं पारं याहि,
नो चेद् राजा तस्य सङ्गिनां निवहेन च ग्रसिष्यसे। तदानीं योनाथ- १७
नाहीमासावैनरोगेले स्थितवन्तौ तत एकया बालिकया गत्वा वार्त्तां
ज्ञापितौ तौ वार्त्तागदनार्थं राज्ञो दायूदः समीपं गन्तुम् उद्यतौ, यतस्तौ
केनापि यन्न दृश्येयाथां तदर्थं ताभ्यां नगरं न प्रवेष्टितव्यं। तथापि बालक १८
एकस्तौ वीक्ष्यावशालोमं वार्त्तां जगाद, किन्तु तौ तूर्णं व्रजित्वा बहूरी-
मनिवासिनः कस्यचित् मनुष्यस्य निवेशनं प्रापतुस्तस्य प्राङ्गणे कूप एक
आसीत् तौ तु तत्कूपमध्यमवरुरुहतुः। अनन्तरं गृहिणी कूपस्य १९
मुखम् आवरणेनाच्छाद्य तस्योपरि मर्द्दितशस्यानि विस्तारयामास तेन

२० केनापि किमपि ज्ञातुं नाशक्यत। अनन्तरम् अवशालोमस्य दासास्तस्या
योषितः समीपे निवेशनमध्यम् आगत्य पप्रच्छुः, अहीमासयोनाथनौ
कुत्र? सा नारी तानवदत् तौ जलस्रोतःपारं गतौ। अनन्तरं ते मृग-
२१ यित्वा तयोरुद्देशं न प्राप्य यिरूशालमं प्रत्यावृत्य गताः। अपरं राज-
दासेषु गतेषु तौ कूपमध्यादुत्थाय गत्वा दायूदं राजानं वार्त्तामिमां
जगदुः, अहीथोफलो भवतां विरुद्धम् एतां मन्त्रणां दत्तवान् अतो
२२ यूयम् उत्तिष्ठत शीघ्रं नदीपारं गच्छत। ततो दायूद् तस्य सङ्गिनो
लोकाश्चोत्थाय यर्द्दननद्याः पारं गताः प्रभाते यर्द्दननद्याः पारम्
अगतस्तेषाम् एकोऽपि जनो नावशिष्यत।

२३ अपरं निजमन्त्रणा नागृह्यतेति दृष्ट्वाहीथोफलो निजगर्द्दभं सज्ज-
यित्वा प्रस्थाय निजनगरस्थं स्वगेहं जगाम, अपरं गृहस्य सर्व्वसमधि
समाज्ञाप्य स्वयम् उद्बन्धनेन मृत्वा पैतृकश्मशाने निदधे।

२४ अनन्तरं दायूदि महनयिमम् आगते सर्व्वैरिस्रायेल्लोकैः समम् अव-
२५ शालोमो यर्द्दनसरितः पारं जगाम। अपरम् अवशालोमो योयाबस्य पदे
अमासायं प्रधानसेनापतिं चक्रे सोऽमासायो यिथ्रनाम्न इस्रायेलीयलोकस्य
पुत्र आसीत् स यिथ्रो योयाबस्य मातुः सिरूयाया भगिनीं नाहशस्य
२६ दुहितरम् अबीगयिलाम् उपगतवान्। अनन्तरम् अवशालोम इस्रा-
येल्वंशाश्च गिलियददेशे शिबिरं स्थापयामासुः।

२७ अपरं दायूदि महनयिमम् उपस्थिते लोकाः प्रान्तरे बुभुक्षिताः
पिपासिताः श्रान्ताश्च विद्यन्त इति चिन्तयित्वाम्मोनवंशीयदेशस्थरब्बा-
नगरनिवासी नाहशस्य पुत्रः शोबि र्लोदिवारनिवास्यम्मीयेलस्य पुत्रो
२८ माखीरो रोगिलीमनिवासी गिलियदीयो बर्षिल्लयश्चैम आगत्य दायू-
दस्तस्य सङ्गिनां लोकानाञ्च कृते शय्याः पाकपात्राणि मृत्पात्राणि तेषां
२९ भोजनार्थं गोधूमयवानि चूर्णानि भृष्टानि च शस्यानि शिम्बीर्मसूरान्
भृष्टकलायान् मधूनि नवनीतानि मेषान् गोः शुष्कक्षीराणि चानिन्युः।

---

## १८ अष्टादशोऽध्यायः।

१ दायूदः सैन्यानां प्रेषणं ६ इस्रायेल्लोकानां पराजयश्च ९ अवशालोमस्य वधः १८ अवशालोमस्य स्तम्भस्य कथनं १९ दायूदं ऽवशालोमस्य मरणवार्त्ताख्यानं दायूदो विलपनं।

१ अनन्तरं दायूद् निजसङ्गिनो लोकान् गणयित्वा तेषामुपरि सहस्र-

पतीन् शतपतींश्च न्ययुङ्क्त । अपरं दायूद् योयाबस्य हस्ते लोकानां २
तृतीयांशमेकं योयाबस्य भ्रातुः सिरूयायाः पुत्रस्याबीशयस्य हस्ते तृती-
यांशमेकं गातीयेत्तयस्य हस्ते च तृतीयांशमेकं समर्प्य प्रेषयामास ।
अपरं राजा लोकान् अवदत् अहमपि युष्माभिः समं बहिर्यास्यामि ।
ततो जना अवदन् त्वं बहि र्मा गच्छ यतो यदि वयं पलायेमहि तर्हि तै ३
र्लोभः प्राप्त इति न गणयिष्यते, अस्माकम् अर्द्धलोकानां मृत्युरपि तै
र्लोभमध्ये न गणयिष्यते किन्तु त्वमस्माकं दशसहस्राणीव तैः गण्यसे, अतो
ऽस्माकम् उपकारार्थं तव नगरे स्थितिः श्रेयसी । ततो राजा जगाद ४
युष्माभि र्यत् क्षेमं बुध्यते तदेवाहं करिष्यामि । अतो नरपति र्द्वारपार्श्वे
तस्थौ लोकाश्च सर्व्वे शतं शतं सहस्रं सहस्रञ्च सङ्घीभूय बहि र्निर्जग्मुः ।
तदानीं राजा योयाबम् अबीशयम् इत्तयञ्च जगाद यूयं ममानुरोधेन ५
तं तरुणम् अबशालोमं प्रति कोमलं व्यवहरत । अबशालोममधि सर्व्वान्
सेनापतीन् प्रति राज्ञः स आदेशः सर्व्वैरेव मनुजैरश्रूयत ।

अनन्तरम् इस्रायेल्वंशस्य प्रतिकूलं लोकेषु बहिर्भूय समरस्थलं ६
गतेष्विफ्रयिमारण्ये समरो बभूव । तत्र स्थान इस्रायेल्लोका दायूदो ७
दासानां सम्मुखे पराजिग्यिरे तस्मिन् दिने च महानिहनने जाते तेषां
विंशतिसहस्राणि लोका जघ्निरे । यतस्तत्स्थलप्रदेशे युद्धेन व्याप्ते तस्मिन् ८
दिने खड्गै र्ये लोका विनष्टास्ततोऽपि बहुतरा वनवृक्षै र्व्यनश्यन् ।

अपरम् अबशालोमो दायूदो दासैः प्राप्तः । अबशालोमः खचरमेकं ९
आरूढवान्, तत एकस्य महत एलातरोः शाखाधस्तस्य खचरस्य
गमनसमयेऽबशालोमस्य मस्तकं तस्य तरोः शाखासु बबन्धे ततस्तस्या-
धःस्थखचरस्य प्रस्थानात् स आकाशपृथिव्यो र्मध्य उल्लम्बितस्तस्थौ ।
अनन्तरम् एको मनुजस्तं निरीक्ष्य योयाबं जगाद, अबशालोमम् एक- १०
स्मिन् एलावृक्ष उल्लम्बितं दृष्टवानहं । योयाबस्तं वार्त्तावादिनं जगाद ११
तं दृष्ट्वैव त्वं कुतस्तं तत्र भूमौ निपातयन् न हतवान्? तथाकृतेऽहं
तुभ्यं दशशेकलपरिमाणं रूप्यं कटिबन्धनमेकञ्चादास्यं । अनन्तरं स १२
पुरुषो योयाबं प्रतिजगाद यद्यहं सहस्रशेकलमानानि रूप्याणि
स्वकरे ऽतुलयिष्यं तथापि तस्य राजपुत्रस्य प्रतिकूलं हस्तं न प्रसा-
रयिष्यं, यतोऽस्माकं कर्णगोचरे नृपतिस्त्वाम् अबीशयम् इत्तयञ्चेदम्
आज्ञापयत् मत्कृते युष्माभिरबशालोममधि सावधानै र्भवितव्यं । यद्यहं १३
तद् अकरिष्यं तर्हि निजप्राणान् अनाशयिष्यं यतो राजतः किञ्चन कर्म्म

१४ इत्थं न तिष्ठति अपरं त्वमपि मम प्रतिकूलोऽभविष्यः। ततो योयाबो
जगाद तव सम्मुखे मया न विलम्बितव्यं ततः स हस्ते शल्यत्रयं गृहीत्वा
१५ निक्षिप्याबशालोमस्य हृदयं विद्धवान्। किन्त्वेलाद्रुमस्य मध्येऽबशालोमे
जीवति तिष्ठति योयाबस्यास्त्रवाहका दशतरुणा अबशालोमं वेष्टयन्त
१६ आहत्य मारयामासुः। अनन्तरं योयाबेन तूर्य्यां वादितायां लोका
इस्रायेल्वंशस्य पश्चाद्गमनात् प्रत्यावर्त्तिरे यतस्ते योयाबेन नियताः।
१७ अपरं तेऽबशालोमं गृहीत्वा काननस्थे वृहति खाते निक्षिप्य तदुपरि
महान्तं पाषाणराशिं चक्रुः किन्त्विस्रायेलीयमनुजाः सर्व्वे स्वं स्वं वासस्थानं
पलायाञ्चक्रिरे।
१८ अबशालोमो जीवत्काले निजार्थं राज उपत्यकायां स्तम्भमेकम्
अस्थापयत् यतः स जगाद मम नाम रक्षितुं मम पुत्रो नास्ति, तत्-
कारणात् तस्य नामानुसारेण तस्य स्तम्भस्याबशालोमस्तम्भ इति नाम
बभूव तस्य तन्नामाद्यापि विद्यते।
१९ अपरं सादोकस्य पुत्रोऽहीमासो जगाद, परमेश्वरः केन प्रकारेण
नृपते रिपून् दण्डितवान् एतस्य शुभवार्त्तां राजानं वेदयितुं मां
२० धावितुम् अनुजानीहि। ततो योयाबस्तमवदत् अद्य त्वं शुभवार्त्तावादी
न भविष्यसि, अन्यस्मिन् दिवसे शुभवार्त्तां वदिष्यसि किन्त्वद्य त्वया
२१ वार्त्ता न गदितव्या यतो राजपुत्रो ममार। अनन्तरं योयाबः कूशिम्
उक्तवान् त्वया यद् दृष्टं तद् गत्वा राजानं ज्ञाप्यतां। ततः कूशि
२२ योयाबं प्रणम्य दधाव। अनन्तरं सादोकस्य पुत्रो अहीमासः पुनर्व्वारं
योयाबं जगाद, यद्भवेत् कूशेः पश्चाद् धावितुं मामप्यनुजानीहि। ततो
योयाबः कथयामास, हे वत्स तव वक्तव्या काचित् वार्त्ता न विद्यते त्वं
२३ कुतो धाविष्यसि? स उक्तवान् यद्भवेत् मां धावितुं अनुजानीहीति तेन
प्रतिगदिते स उक्तवान् धाव। ततोऽहीमासः समभूमेर्मार्गेण
२४ धावन् कूशेरग्रे जगाम। तदानीं दायूद् द्वयो द्वारयोर्मध्यवर्त्तिनि स्थाने
उपाविशद् एतस्मिन् समये रक्षी गोपुरस्य पृष्ठे प्राचीरोपरि गमना-
गमनं कुर्व्वन् चक्षुरुन्मील्य जनएक एकाकी धावन् आयातीति ददर्श।
२५ ततः स रक्षक उच्चैःस्वरेण राजानं तत् ज्ञापयामास, ततो राजा
जगाद स यदि एकक आयाति तर्हि शुभवार्त्तां वदिष्यति। इत्थंसर
२६ आगच्छति तस्मिन् निकटवर्त्तिनि भूते रक्षी द्वितीयं जनं धावन्तं दृष्ट्वा
दौवारिकम् उच्चैःस्वरेण ज्ञापयामास पश्यापर कश्चित् मनुज एकाकी

धावन् आगच्छति। ततो राजा जगाद, सोऽपि शुभवार्त्तामानयति।
अनन्तरं रक्षी व्याहरत्, अग्रगामिनः पुरुषस्य धावनं सादोकपुत्रस्या- २७
हीमासस्य धावनं बुध्यते। राजा कथितवान् स सज्जनो मङ्गलवार्त्तां
गदितुम् आगच्छति। तदानीम् अहीमासो राजानम् उच्चैर्व्याहरत् २८
भवतो मङ्गलं भवतु, अपरं स भूमौ न्युब्जीभूय पतन् राजानं व्यज्ञापयत्
तव प्रभुः परमेश्वरो धन्यो भवतु यतो मम प्रभो नरपतेः प्रातिकूल्येन
ये नराः स्वहस्तान् प्रसारितवन्तस्ते तेन दमिताः। अनन्तरं राजा २९
पप्रच्छ तरुणोऽवशालोमः किं कुशली विद्यते? ततोऽहीमास उक्तवान्
योयाबो यदा महाराजस्य दासं माञ्च व्यसर्जत् तदा महान् कलहो
जात इति दृष्टवानहं किन्तु किं जातं तन्न ज्ञातवान्। अनन्तरं राजा ३०
समादिशत् त्वं पार्श्वं गत्वा स्थानेऽस्मिन् तिष्ठ ततः स पार्श्वं गत्वातिष्ठत्।
ततः कूशिरागत्य व्यज्ञापयत्, हे मम प्रभो राजन् मङ्गलवार्त्ता, ३१
परमेश्वरोऽद्य भवतः प्रतिकूलं समुत्थितान् सकलान् दण्डितवान्। राजा ३२
कूशिं पप्रच्छ तरुणोऽवशालोमः किं कुशली विद्यते? ततः कूशिरव-
दत् मम प्रभो नृपतेः सर्व्वे रिपवो यावन्तो नराश्च भवतोऽमङ्गलार्थं
भवतः प्रातिकूल्येनोत्तिष्ठन्ति ते सर्व्वे तस्य तरुणस्य सदृशा भवन्तु।
ततो नरपतिरतीव व्याकुलो भवन् गोपुरोपरि स्थितं सौमं गत्वा ३३
ररोद, अपरम् इतस्ततो गच्छन् गच्छन् व्याहरत् हा हा मम पुत्र
अवशालोम, हा हा मम स्वकीयपुत्र अवशालोम, यदि तव विनिमये-
नाहम् अमरिष्यं। हा हा अवशालोम, हा हा मम पुत्र मम पुत्र।

## १९ ऊनविंशोऽध्यायः।

१ दायूदः शोकस्य योयाबेन निवारणं ९ राज्ञः पुनरानेतुं इस्रायेलीयलोकानां यतनं ११ यिहूदावंशस्य मनः प्रवर्त्तयितुं याजकानां प्रेषणं १६ शिमियै दोषक्षमणं २४ मिफीबोशतस्य कथनं ३१ बर्सिल्लयस्य विसर्जनं तस्य पुत्रस्य किम्हमस्य समभीपे स्थापनं ४१ राजानम् अधि यिहूदीयानाम् इस्रायेलीयानाञ्च विवदनं।

अनन्तरं पश्य, अवशालोमस्य कृते राजा रोदिति शोचति चेति १
वार्त्ता योयाबेन शुश्रुवे। राजा निजपुत्रमधि व्यथत इति लोकैस्तस्मिन् २
दिवसे श्रुते तस्य दिवसस्य जयः सर्व्वलोकानां शोकदो बभूव। अपरं ३
रणस्थानात् पलायमाना लोका यादृक् लज्जमानाश्चौरवद् व्रजन्ति
तादृक् लोकास्तस्मिन् दिवसे नगरप्रवेशकाले चौरवद् ववजुः। राजा ४

निजवदनम् आच्छाद्य हा हा मम पुत्र अवशालोम, हा हा मम पुत्र
४ अवशालोम, हा हा मम पुत्र इत्युच्चैःस्वरेण व्याहरत्। अनन्तरं योयाबो
निवेशनमध्ये राज्ञः समीपं गत्वा जगाद त्वं निजरिपुषु प्रीयसे निजा-
त्मीयलोकान् ऋतीयसे च तस्मात् तव प्राणास्तव पुत्राणां कन्यानाञ्च
प्राणास्तव जायानां प्राणास्तवोपपत्नीनां प्राणाश्चाद्य येऽरक्षन् तव ते
६ दासा अद्य त्वया लज्जायुक्ता बभूवुः, यतस्त्वं सैन्यपतीन् दासांश्च तृणाय
न मन्यस इत्यद्य प्रकाशितवान् यतोऽद्य यद्यवशालोमोऽजीविष्यत् वयं
७ सर्व्वे चामरिष्याम तर्हि त्वम् अतोष्य इति मयाद्य बुद्धं। त्वमिदानीम्
उत्तिष्ठ बहि र्गत्वा निजदासान् मधुरवचोभिरालप। परमेश्वरस्य
नाम्नाहं शपथं कृत्वा वदामि यदि त्वं बहि र्न गच्छेस्तर्हि रजन्यामस्यां
त्वया सार्कं जन एकोपि न स्थास्यति, अपरं तव बाल्यावस्थामारभ्य
यावदेतत्कालं यावन्त्यशुभानि त्वाम् आक्रामन् तेभ्यः सकलेभ्योपि तवे-
८ दम् अमङ्गलम् गुरुतरं भविष्यति। ततो नरपतावुत्थाय गोपुर उप-
विष्टे सकललोकै र्वार्त्तेयम् अश्रावि, पश्यत राजा गोपुर उपविष्ट
आस्ते तेन सर्व्वे लोका राज्ञः सम्मुखम् आजग्मुः किन्त्विस्रायेलीयलोकाः
सर्व्वे स्वं स्वं वासस्थानं पलायाञ्चक्रिरे।
९ अनन्तरम् इस्रायेलः सकलवंशानां लोकाः विवादयन्तो जगदुः,रिपूणां
हस्तेभ्योऽस्माकम् उद्धारयिता पिलेष्टीयानां करेभ्यश्चास्माकं मोचयि-
तासौ यो राजा स इदानीम् अवशालोमस्य भयाद् देशात् पलायित-
१० वान्। अपरम् अस्माभी राज्याभिषिक्तो योऽवशालोमः स रणेऽहन्यत।
तस्माद् यूयं राजानं परावर्त्तयितुं कुतो मौनिनो भवत?
११ अपरं दायूद् नरपति र्याजकयोः सादोकावीयाथरयोः समीपं दूतं
प्रहित्यावदत्, युवां यिहूदावंशस्य प्राचीनान् वाचमिमां वदतं सर्व्व-
स्येस्रायेलवंशस्य निवेदनं राज्ञः साक्षाद् गृह उपातिष्ठत, अतो यूयं
१२ राजानं निजगृहं परावर्त्तयितुं कुतोऽन्त्यलोका भवथ? यूयं मम
भ्रातरो ममास्थिमांसस्वरूपा अतो राजानं परावर्त्तयितुं यूयं कुतोऽन्त्य-
१३ लोका भविष्यथ? युवाम् अमासायेदं वदतं त्वं किं ममास्थिमांसरूपो
नासि? यदि त्वं नित्यं मम साक्षाद् योयाबस्य विनिमयेन प्रधान-
सेनापति र्न भवसि तर्हीश्वरो मह्यम् अमुकं दण्डं ततोऽधिकञ्च ददातु।
१४ अनन्तरम् एकजनस्येव यिहूदावंशस्य समस्तलोकानां हृदयेषु तेनानतेषु
ते लोकं प्रहित्य राजानम् अवदन् भवान् भवतो दासाश्च सर्व्वे पुनरा-

गच्छन्तु। ततो राज्ञि परावृत्य यर्दनस्य सन्निधिम् आगते यिहूदीयलोका १५
राजानं साक्षात् कर्त्तुं तं यर्दनस्य पारं नेतुञ्च गिल्गलम् आगच्छन्।
अपरं बिन्यामीनवंशीयो बहूरीमनिवासी गेराः पुत्रः शिमियिस्तूर्णं १६
दायूदं नरपतिं साक्षात् कर्त्तुं यिहूदीयलोकैः सार्द्धम् आजगाम।
अपरं बिन्यामीनवंशस्य सहस्रं लोकाः तेन सार्द्धमासन् शौल- १७
वंशस्य दासः सीवस्तेन सैमं तस्य पञ्चदशपुत्रा विंशतिर्दासा अपि
राजानं साक्षात् कर्त्तुं यर्दनस्य पारं गताः। अपरं नृपतेः परिजनान् १८
पारं कर्त्तुं तेनाज्ञापितं कर्म्म कर्त्तुञ्च नौ गमनागमनेऽकरोत्।
अनन्तरं राजनि यर्दनस्य तीरमागते गेराः पुत्रः शिमियि र्नरपतेः
सम्मुखे न्यङ्भीभूय पतन् राजानमवदत् मम प्रभु र्ममापराधं क्षमतां, १९
यस्मिन् दिने मम प्रभु र्यिरूशालमाद् बहिरागच्छत् तस्मिन् दिने
भवतो दासोऽहं यं विरुद्धाचारम् अकरवं तं भवान् स्मरणाद् दूरी-
कृत्य मनसि न दधातु। भवतो दासोऽहं पापमकरवं तत् जानामि, २०
तत्कारणात् मम प्रभुं नरपतिं साक्षात् कर्त्तुम् अद्याहं यूषफवंशी-
यानां सर्व्वेषाम् अग्रे समागमं। ततः सिरूयायाः पुत्रोऽबीशयः प्रत्य- २१
वदत् योऽसौ शिमियिः परमेश्वरस्याभिषिक्तम् अभिशप्तवान् स तत्-
कारणात् किं न हन्तव्यः? ततो दायूद् जगाद हे सिरूयायाः पुत्रौ २२
युवयोः समं मम कः सम्बन्धः? युवाभ्याम् अद्य कुतो मां प्रति विपक्षता
क्रियते? इस्रायेलवंशीयः कोपि जनः किमद्य हन्तव्यः? अद्याहम
इस्रायेलीयानां नृपतिरभवं तत्किं न जानामि? अनन्तरं नरपतिः २३
शिमियिं बभाषे त्वं न घानिष्यसे। ततो भूपतिः शपथं कृत्वा तदवोचत्।
अपरं शौलस्य पौत्रो मिफीबोशतो राजानं साक्षात् कर्त्तुम् आज- २४
गाम। स नृपते र्निर्गमनदिनमारभ्य कुशलेन प्रत्यागमनदिवसं यावत
पादसेवनं श्मश्रूणां क्षौरञ्च न चकार वस्त्राणि च धौतानि न चकार।
राजानं साक्षात् कर्त्तुं यिरूशालमनिवासिलोकेष्वागतेषु राजा तं २५
जगाद हे मिफीबोशत त्वं कुतो मया समं न गतवान्? स प्रत्यवदत् २६
हे मम प्रभो नरपते मम दासो मां वञ्चयाञ्चक्रे भवतो दासोऽहं खञ्जो-
ऽस्मि ततो हेतोरहं गर्दभं सज्जयित्वा तमारुह्य नरपतेः समीपं यास्या-
मीति मम वाञ्छासीत्। किन्तु स मम प्रभो र्नरपतेः साक्षात् माम् २७
अपावदत् किन्तु मम प्रभु र्नरपतिरीश्वरीयदूतस्य सदृशोऽस्ति भवता
यत् क्षेमं बुध्यते तदेव क्रियतां। मम प्रभो र्नरपतेः साक्षात् मम कुटुम्बः २८

पितृवंशो यथार्थं आसीत्, तथापि भवतो भोजनासने भोक्तृभिः
समम् उपवेष्टुं मह्यं स्थानं भवान् दत्तवान्, अतो नृपतये पुनरावेदनं
२९ कर्त्तुं मम कोऽधिकारः? ततो नृपतिस्तं बभाषे त्वं पुन मंह्यं निज-
वाक्यानि निवेदयसि कुतः? त्वं सीवश्चोभौ तां भूमिं विभज्य गृह्णीत
३० मित्यहमवोचं। अनन्तरं मिफीवोशतो राजानम् उक्तवान् तेन सर्व्वमेव
गृह्यतां यत इदानीं मम प्रभु र्नरपतिः कुशलेन स्वगृहं प्रत्यावृत्त्या-
गतवान्।
३१ अपरं गिलियदीयो वर्षिल्लयो रोगिलीमाद् आगम्य यर्दनस्य पारं
३२ यावद् राजानम् अनुव्रजितुं तेन समं यर्दनस्य पारं जगाम। स वर्षि-
ल्लयो ऽशीतिवत्सरवयस्कोऽतीव वृद्ध आसीत् राजा च यावत् मह-
नयिमेऽतिष्ठत् तावत् तेनेवापुष्यत यस्मात् सोऽतीव धनवान् आसीत्।
३३ अनन्तरं नरपतिर्वर्षिल्लयं व्याहरत् त्वं मया समं पारं गच्छ त्वामहं
३४ यिरूशालमे मम सन्निधौ सम्पोक्ष्यामि। ततो वर्षिल्लयो नरपतिं व्याज-
हार, ममापरं कत्यायुरास्ते यदहं नरपतिना समं यिरूशालमं
३५ यास्यामि? अद्याहमशीतिवत्सरवयस्कोऽभवं भद्राभद्रयो विशेषं
बोद्धुं किं मया शक्यते? यद्भुञ्जे यच्च पिबामि तव दासोऽहं किं तयो
रास्वादं बोद्धुं शक्नोमि? गायकगायिकानां स्वरं किं श्रोतुं शक्नोमि?
३६ भवतो दासोऽहं कुतो मम प्रभो नरपते भार इव भविष्यामि? भवतो
दासो यर्दनस्य पारं गत्वा नरपतिना समं स्तोकं वर्त्म यास्यति, किन्तु
३७ नरपतिः कुतस्त्वेतादृक् पुरस्कारिष्यति? विनयेऽहं भवतो दासं
प्रत्यावृत्त्य गन्तुम् अनुजानातु। अहं निजनगरे मम पित्रोः श्मशान-
समीपे मुमूर्षे। किन्तु भवान् स्वदासं किम्हमं प्रति दृष्टिं करोतु स
मम प्रभुना नरपतिना समं पारं गच्छतु भवता च यद् भद्रं बुध्यते तं
३८ प्रति तदेव क्रियतां। ततो नरपतिः प्रत्यवाच, किम्हमः पारं गत्वा मया
समं यास्यति त्वया यद् भद्रं बुध्यते मया तदेव तं प्रति कारिष्यते मत्तः
३९ प्राप्तुं त्वं यद् अभिलषसि त्वतकृते तदेव मया कारिष्यते। अनन्तरं
सर्व्वे मनुजा यर्दनसरितः पारं गताः। अपरं नृपतिः पारं प्राप्य वर्षि-
ल्लयं चुम्बितवान् स च तस्मै आशिषं दत्त्वा निजस्थानं प्रत्यावृत्त्य जगाम।
४० अपरं नरपतिः पारं गत्वा गिल्गलम् इयाय, तेन समं किम्हमोऽपि
वव्राज। अपरं यिहूदावंशीयाः सर्व्वे मनुजा इस्रायेल्वंशानाम् अर्द्ध-
मनुजाश्च नरपतिम् अनुव्रज्य नीतवन्तः।

अनन्तरम् इस्रायेलवंशानां सर्व्वे लोका भूपतिमुपजिगमिषवो भूत्वा ४१
राजानं व्याहरन्, अस्माकं भ्रातरो यिहूदावंशीया मनुजा भवन्तमप-
हृत्य भवन्तं भवतः परिजनांश्च यर्दनसरितः पारं कुत आनिषुः? तदानीं
दायूदः सर्व्वे लोकास्तेन समम् आसन्। ततो यिहूदावंशीयलोका ४२
इस्रायेल्वंशीयलोकान् प्रत्यवदन् राजास्माकं निकटकुटुम्बः, यूयम् एतत्-
कार्य्याय कुतः क्रुध्यथ? वयं किं राज्ञः किञ्चन द्रव्यमभुञ्जामहि? स
वा किमस्मभ्यं किञ्चन दानमदत्त? अनन्तरम् इस्रायेल्वंशा यिहूदा- ४३
वंशं व्याहरन् राजन्यस्माकं दशमांशाः सन्ति दायूदि युष्माकं योधिकार-
स्तस्माद् अस्माकम् अधिकोऽप्यास्ते यूयम् अस्मान् तुच्छीकृत्यास्माकं
भूपतिं परावर्त्तयितुं प्रथमं कुतोऽस्माकं मन्त्रणां नागृह्णीत? तत इस्रा-
येल्वंशानां वाक्यतो यिहूदावंशस्य वाक्यम् अधिकनिष्ठुरं बभूव।

## २० विंशतितमोऽध्यायः।

१ इस्रायेलः कलहे शेबस्य कथनं ३ दायूदः पुनर्गेहागमनं ४ अमासायस्य सेनापत
योयाबेन हतत्वं १४ आवेलनगरस्यावरोधनं १६ स्त्रीद्वारा योयाबाय शेबस्य मस्तक-
दानं २३ राज्ञः विशेषाणाम् अध्यक्षाणां नामानि।

तस्मिन् समये बिन्यामीनवंशीयो विख्रेः पुत्त्रः शेबनामक एको दुष्ट- १
लोकस्तत्र स्थान आसीत् स तूरीं वादयन् अवदत् दायूदि कश्चनां-
शोऽस्माकं नास्ति यिशयस्य पुत्त्रे वा नास्माकमधिकारोऽस्ति, हे इस्रा-
येल्वंशा यूयं सर्व्वे स्वं स्वं वासस्थानं गच्छत। तत इस्रायेलीयाः सर्व्वे २
लोका दायूदोऽनुगमनात् परावृत्य विख्रेः पुत्त्रस्य शेबस्यानुगामिनो
बभूवुः किन्तु यिहूदावंशीया लोका यर्द्दनमारभ्य यिरूशालमं यावत्
स्वेषां राजन्यासक्तास्तस्थुः।

अनन्तरं दायूद् यिरूशालमे निजगृहम् आजगाम ततः परं राजा ३
स्वीया या दशोपपत्नी र्गृहरक्षार्थं विहाय गतवान् ता गर्भागारे बद्धा-
पोषयत् तासां समीपं पुन र्न जगाम ततस्ता मरणदिवसं यावद् बद्धा
विधवा इव तस्थुः।

अनन्तरं नरपतिरमासायम् अवदत् त्वं दिनत्रयमध्ये यिहूदावंशी- ४
यान् सकललोकान् मम सन्निधौ संगृहाण त्वमपि स्थानेऽत्र समुपतिष्ठ।
ततोऽमासाये यिहूदीयान् सकललोकान् संग्रहीतुं गते निरूपितसम- ५
यात् तस्याधिको विलम्बो बभूव। ततो दायूद् अबीशयं व्याहरत्, ६

इदानीं विख्रेः पुत्त्रः शेवोऽवशालमतोऽस्माकम् अधिकक्षतिं करिष्यति,
त्वमेव निजप्रभो र्दासान् गृहीत्वा तस्य पश्चाद् धाव नो चेत् स
७ प्राचीरवेष्टितानि नगराण्याश्रित्यास्माकं करेभ्यो रक्षां प्रापयति। ततो
योयावस्य लोकाः किरेथीयलोकाः पिलेथीयलोकाः सर्व्वे बलवन्तो
मनुजाश्च तस्य पश्चाद् वहिर्भूय विख्रेः पुत्त्रस्य शेवस्य पश्चाद् धावितुं
८ यिरूशालमात् प्रतस्थिरे। अनन्तरं तेषु गिबियोनस्थस्य महाप्रस्तरस्य
समीपमुपस्थितेषु अमासायस्तान् साक्षात् कर्त्तुम् आजगाम, तदानीं
योयावस्य वसनं तस्य परिधानमासीत् तच्च येन कटिबन्धेन बद्धम्
आसीत् तन्मध्ये कटिदेशे कोषेण छन्नः खड्ग एक आसीत्, किन्तु
९ गमनात् स निष्पपात। ततो योयावोऽमासायम् अवदत् हे मम भ्रात-
स्तव किं मङ्गलम् आस्ते? अनन्तरं योयावस्तं चुम्बितुं दक्षिणकरेण
१० तस्य श्मश्रूणि दधार। किन्तु योयावस्य करस्थितात् चन्द्रहासाद् अमा-
सायस्य सावधानताभावात् स तेन तस्य कुक्षिं विदीर्णवान् तेन तस्य
नाडीगणे वहिर्भूय पतिते पुनराघातं विनैव स ममार। अनन्तरं
योयावस्तस्य भ्राताबीशयश्च विख्रेः पुत्त्रस्य शेवस्य पश्चाद् दधावतुः।
११ अनन्तरं योयावस्य दासानाम् एकः कुणपस्य समीपे तिष्ठन् व्याजहार
यो जनो योयावे प्रीयते दायूदः पक्षश्च भवति स योयावस्य पश्चात्
१२ यातु। तथापि राजवर्त्ममध्ये शोणिते लुठितस्यामासायस्य समीपे
सर्व्वे लोकास्तिष्ठन्तीति वीक्ष्य स जनोऽमासायं मार्गात् क्षेत्रं नीत्वा
तस्य गात्रं वसनेनाच्छादयामास यतो यावन्तो मनुजास्तस्य समीपेन
१३ यान्ति ते सर्व्वे तत्र स्थाने तिष्ठन्तीति स ददर्श। तदानीम् अमासाये
राजमार्गाद् वहिष्कृते लोका विख्रेः पुत्त्रस्य शेवस्य पश्चाद् धावनार्थं
योयावम् अनुजग्मुः।

१४ अनन्तरं शेव इस्रायेलः सकलवंशानां वेरीयलोकानाञ्च मध्येनाबे-
लबैतमाखां यावत् जगाम ततो मनुजा मिलित्वा तम् अनुजग्मुः।
१५ अनन्तरं लोका आबेलबैतमाखायां तं वेष्टयित्वा नगरस्य समीपे सेतुं
निर्म्ममिरे। इत्थं नगरे वेष्ठिते योयावस्य सङ्गिनो लोकाः प्राचीरं
भूमिसात् कर्त्तुं तद् भंक्तुमारेभिरे।

१६ अनन्तरं नगरस्य मध्याद् एका बुद्धिमती योषिद् उच्चैःस्वरेण व्याज-
हार शृणुत शृणुत विनयेऽहं योयावं सम्भाषिष्ये तत्कारणात् तमेतत्
१७ स्थानमागन्तुं वदत। अनन्तरं योयावे तस्याः समीपं गते सा योषिद्

अपृच्छीत् त्वं किं योयाबः? स प्रत्यवदत्, अहमेव। ततः सा योषित्
जगाद भवान् स्वदास्या वाक्यानि निशामयतु। स प्रत्यवदत्, शृणोमि।
अनन्तरं सा योषिद् व्याजहार, प्राक् सम्भाषणं क्रियताम् अथैल १८
आबेलनिवासिनः परिपृच्छ्यन्तां ततस्तत्र कार्य्यं सेत्स्यति। इस्रायेलो १९
मध्येऽहम् अविरोधिनी विश्वास्या च नगरी किन्तु त्वम् इस्रायेलो मातृ-
स्वरूपां नगरीं नाशयितुं चेष्टसे परमेश्वरस्याधिकारं कुतो ग्रसिष्यसि?
ततो योयाबः प्रतिजगाद ग्रसनं नाशनं वा मत्तो दूरे तिष्ठतु दूरे तिष्ठतु २०
तन्नहि किन्तु विख्रेः पुत्रः शेवनामको य इफ्रयिमपर्व्वतीयो जनो २१
दायूदो नरपतेः प्रतिकूलं हस्तं प्रासारयत् केवलं स एव युष्माभिः
प्रदीयतां ततोऽहं नगरात् प्रस्थास्ये। तदानीं सा योषिद् योयाबं
व्याहरत्, पश्य प्राचीरात् तस्य शिरस्तव समीपं निक्षेप्स्यते। अनन्तरं २२
सा योषित् निजबुद्ध्या सकललोकानां समीपं जगाम, ततो मनुजा
विख्रेः पुत्रस्य शेवस्योत्तमाङ्गं छित्त्वा योयाबस्य समक्षं न्यक्षिपन् ततस्तेन
तूर्य्यां वादितायां तस्य सकललोका नगरं त्यक्त्वा स्वं स्वं वासस्थानं
प्रतस्थिरे, योयाबश्च यिरूशालमे नरपतेः समीपं प्रतिजगाम।

तस्मिन् समये योयाब इस्रायेलः सकलवंशानां प्रधानसेनापति- २३
रासीत्, यिहोयादस्य पुत्रो बिनायश्च किरेथीयानां पिलेथीयानाञ्चा-
धिपतिरासीत्। अदोरामश्च कराध्यक्ष आसीत्, अहीलूदस्य पुत्रो २४
यिहोशाफटश्च पुरावृत्तरक्षक आसीत्, सिरायश्च लेखक आसीत्, २५
सादोकोऽबीयाथरश्च याजकावास्तां। यायीरीय ईरा अपि दायूदः २६
सभासद् आसीत्।

## २१ एकविंशोऽध्यायः।

१ गिबियोनीयलोकानां वधकरणाद् वत्सरत्रयं दुर्भिक्षभवनं शौलस्य पुत्रपौत्राणां वधः १० मृतलोकान् प्रति रिस्पाया अनुग्रहः शौलयोनाथनयोरस्थ्नां श्मशाने स्थापनं १५ पिलेष्टीयैः समं वारचतुष्टयरणस्य कथनं।

अनन्तरं दायूदोऽधिकारसमये क्रमेण वत्सरत्रयं दुर्भिक्षे जाते दायूद् १
तदधि परमेश्वरं पप्रच्छ ततः परमेश्वरस्तं प्रतिजगाद, शौलस्तस्य
शोणितपातको वंशश्च मूलमेतस्य यतः स गिबियोनीयलोकान् अव-
धीत्। ततो राजा गिबियोनीयान् आहूय सम्बभाषे। ते गिबि- २
योनीयलोका इस्रायेलवंशसम्भवा नहि त इमोरीयाणाम् अवशि-

ष्टानां मध्यीया इस्रायेल्वंशीयास्तान् जीवयितुं शपथं चक्रिरे किन्तु
शौल इस्रायेल्यिहूदावंशयो र्निमित्तं निजोद्योगेन तान् हन्तुम् अचे-
३ ष्टत। अतो दायूद् गिबियोनीयान् अवदत्, युष्माकं कृते मया किं
कर्त्तव्यं? यूयं यत् परमेश्वरस्याधिकारम् आशिषं प्रदेत तत्कृते मया
४ किं प्रायश्चित्तं कर्त्तव्यं? गिबियोनीयमनुजाः प्रत्यवदन् वयं शौलस्य
तस्य वंशस्य वा समीपात् किञ्च रजतं काञ्चनं वा न ग्रहीष्याम इस्रा-
येल्वंशानां मध्ये वा कमपि न हनिष्यामः। अनन्तरं स जगाद
५ युष्माभिः किम् उच्यते? मया युष्माकं कृते तदेव कारिष्यते। ततस्ते
राजानं व्याजह्रुः, यो मनुष्योऽस्माकं क्षयमकरोत् यद्वयम् इस्रायेलः
कुत्रापि प्रदेशे न तिष्ठाम एतदर्थम् अस्मान् विनाशयितुं कुमन्त्रणाम-
६ करोत्. तस्य वंशस्य सप्त पुमांसोऽस्मासु समर्प्यन्तां वयं परमेश्वरेणा-
भिषिक्तस्य शौलस्य गिबियायां परमेश्वरम् उद्दिश्य तान् उद्बन्धनेन
७ हनिष्यामः। ततो राजा कथयामास दास्यामि किन्तु शौलस्य पुत्रेण
योनाथनेन समं दायूदः परमेश्वरीयशपथ आसीत् तत्कारणात् नृपतिः
८ शौलस्य पौत्रं योनाथनस्य पुत्रं मिफीबोशतं ररक्ष। किन्त्वयाया दुहितृ
रिस्पाया गर्भे शौलाद् योवर्म्मोणिर्मिफीबोशतनामानौ द्वौ पुत्राव-
जायेतां तौ मिहोलातीयबर्सिल्लयस्य पुत्रस्याद्रीयेलस्यौरसजाता ये पञ्च
९ पुत्राः शौलस्य कन्यया मीखलया पुष्यन्त तानपि राजा गृहीत्वा गिबि-
योनीयानां करेषु समर्पयामास ततस्ते परमेश्वरस्य सम्मुखे शिलोच्चये तान्
उद्बबन्धुः ते सप्त जना युगपत् पपतुः। ते प्रथमशस्यच्छेदनसमये यवच्छे-
दनारम्भकाले ऽहन्यन्त।

१० अनन्तरम् अयाया दुहिता रिस्पा शाणवसनं गृहीत्वा शिलोच्चयो-
परि विस्तार्य्य शस्यच्छेदनारम्भकालात् तेषामुपर्य्याकाशीयजलवर्षं
यावत् तत्र तिष्ठती दिवा शून्यस्य पक्षिगणात् निशायां वन्यपशुगणाच्च
११ तान् ररक्ष। अपरम् अयाया दुहिता रिस्पा शौलस्योपपत्नी कर्म्मेदं
करोतीति वाग् दायूदे नृपतये कथिताभूत्।

१२ अपरं पिलेष्टीयै र्गिल्बोयगिरौ शौलस्य हननकाले बैत्शानस्य
सन्निवेशे तेनहृध्य स्थापितौ शौलस्य तत्पुत्रस्य योनाथनस्य च शवौ यै
र्याबेश्गिलियदीयमनुजैस्तस्मात् स्थानाद् अपहृतौ दायूद् गत्वा तेभ्य-
१३ स्तयोरस्थीनि जग्राह। स तस्मात् स्थानात् शौलस्य तत्पुत्रस्य योना-
थनस्य चास्थीन्यानिनाय; अपरं कोर्क्केषाम् उद्बद्धानाम् अस्थिषु

सङ्गृहीतेषु शौलस्य तत्पुत्त्रस्य योनाथनस्य चास्थीनि विन्यामीनदेशस्य- १४
सेलायां तस्य तातस्य कीशस्य श्मशानमध्ये स्थापयाञ्चक्रिरे। नृपतेः
सकलादेशस्तैः साधयाञ्चक्रे ततः परम् ईश्वरो लोकानां प्रार्थनां गृहीत्वा
देशं प्रत्यानुकूल्यं चकार।

अनन्तरं पिलेष्टीयैः समं पुनर्वारम् इस्रायेल्वंशस्य समरे समुपस्थिते १५
दायूद् तदीयदासाश्च तत् स्थानं जग्मुस्ततः पिलेष्टीयलोकैः समं तेषां
युद्धकाले दायूद् क्लान्तो बभूव। ततः शतत्रयशेकलपरिमितपित्तल- १६
मयशक्तिधारी यिश्बिबिनोबनामा दृहत्कायवंशीय एको मनुजो नूतन-
खड्गेन सुसज्जितो भूत्वा दायूदं हन्तुं मतिं चकार। किन्तु सिरूयायाः १७
पुत्त्रोऽबीशयस्तम् उपकुर्व्वन् आघातेन तं पिलेष्टीयं जघान। तदानीं
दायूदो मनुजास्तस्य साक्षात् शपथं कृत्वा कथयामासुः, त्वमस्माभिः समं
रणाय पुन र्न यास्यसि नो चेद् इस्रायेलः प्रदीपो निर्वास्यति। अनन्तरं १८
गोबे पिलेष्टीयैः समं पुनः संग्राम उपस्थिते हूशातीयः सिब्बिखयो
दृहत्कायवंशीयं सफम् अवधीत्। पुनर्वारं पिलेष्टीयैः समं गोबे रणा १९
आरब्धे तत्र यार्य्योरिगोमस्य पुत्त्रो वैतलेहमीय इल्हाननो तन्तुदण्डनि-
भमहाशक्तिधारिणं गातीयजालूतस्य भ्रातरम् अवधीत्। अनन्तरं गाते २०
पुन र्युद्धे जाते प्रतिहस्तं प्रतिपदञ्च षट् षट् अङ्गुल्यः साकल्येन चतुर्विं-
शत्यङ्गुल्यो यस्यासन् एवम्भूत एको दृहत्कायो नरस्तत्रासीत् सोऽपि तद्-
दृहत्कायवंशीय एको जनः। स इस्रायेलीयलोकान् स्पर्द्धयामास, ततो २१
दायूदो भ्रातुः शिमियस्य पुत्त्रो योनाथनस्तमवधीत्। गातीयदृहत्काय- २२
वंशीया एते चत्वारो जना दायूदा तस्य दासैश्च जघ्निरे।

## २२ द्वाविंशोऽध्यायः।

रक्षार्थं नानाविधानुग्रहार्थञ्च परमेश्वरं प्रति दायूदा कृतं प्रशंसागीतं।

यदा परमेश्वरः स्वदासं दायूदं सर्व्वरिपूणां शौलस्य च हस्तेभ्य उद्धृत- १
वान् तदा दायूद् परमेश्वराय यद्गीतम् अकरोत् तद्गीतमिदं।

त्वं मे गिरिश्च दुर्गञ्च रक्षकश्च परेश्वर। २
ईश्वरश्चाचलो मे त्वं त्वञ्च विश्वसितो मया। ३
फलकं बलवांस्त्राता दुर्गमुच्चं मयाश्रितं।
त्वम् उद्धारयिता मे सन् रक्षसि माम् उपद्रवात्।

४ स्तवनीयेश्वरं प्रार्थ्य प्राप्ता रक्षा रिपोर्मया ।
५ वेष्टितो मृत्युरज्जुभिस्त्रासितः प्रलयोर्म्मिभिः ।
६ बद्धो नारकपाशेन मृत्युजालेन संवृतः ।
७ अहमित्थं व्यथित्वैवाह्वतवान् परमेश्वरं ।
ईश्वरो यो मदीयस्तम् अहमाह्वतवान् तदा ।
मदीयार्त्तस्वरोऽश्रावि तेनैव निजमन्दिरे ।
तत्कर्णगोचरीभूतं तदाक्रन्दं मया कृतं ।
८ धरणी तस्य कोपेन कम्पित्वा चलिताभवत् ।
मूलानि चान्तरीक्षस्य कम्पित्वापगतानि च ।
९ तदीयनासिकारन्ध्राद् धूम उद्गतवांस्तदा ।
जग्रास सकलं वह्निस्तदीयमुखनिर्गतः ।
अङ्गारा ज्वलितास्तस्मात् निक्षिप्तास्तेन सर्व्वतः ।
१० आनामितेन चागच्छत् स स्वयं सुरवर्त्मना ।
विस्तार्य्य पदयोर्निम्ने वक्रं तिमिरनिर्म्मितं ।
११ ततः किरूवमारुह्य तूर्णमुड्डयते स्म सः ।
नभस्वत्पक्षयोर्युग्मञ्चाश्रित्य दर्शनं ददौ ।
१२ तमोमयीं चतुर्द्दिक्षु स्वां तिरस्करणीं दधे ।
वारिवाहसमूहेन पयोदमालयापि हि ।
१३ प्रजज्वलुस्तदाङ्गारास्तस्याग्रवर्त्तितेजसा ।
१४ प्रजगर्ज स आकाशे तदानीं परमेश्वरः ।
सर्व्वेषामुपरिस्थो यो घोरशब्दं चकार सः ।
१५ निक्षिप्तैर्व्यकिरद् वाणैस्तडिद्भिश्चाभ्यहन् रिपून् ।
१६ हुङ्कारेण परेशस्य निश्वासपवनेन च ।
रत्नाकरस्य पात्राणि गतानि दृश्यतां तदा ।
धरण्या अपि मूलानि प्रादुर्भूतानि सर्व्वतः ।
१७ ऊर्द्धात् प्रसार्य्य हस्तौ द्वौ सोऽरक्षत् स्वयमेव मां ।
बहुतोयालमध्यान्माम् उद्धरन् निर्गृहीतवान् ।
१८ बलवद्वैरितो मां स परिरक्षितवान् स्वयं ।
यतस्ते वैरिणः सर्व्वे मत्तोऽपि बलवत्तमाः ।
१९ यदा ते मां समाक्रामन् आपच्छाजनके दिने ।
तदानीं परमेशोऽभून्ममावलम्बनयष्टिका ।

आनीतवान् सुविस्तीर्णं स्थानमेकं स एव मां। २०
तुष्टत्वान्मयि तस्यैव मां समुद्धृतवांस्तदा।
मम धर्म्मानुसाराम्मां सत्कुर्व्वन् परमेश्वरः। २१
मेध्यत्वात् करयो र्मह्यं दत्तवान् उचितं फलं।
यतोऽहं परमेशस्य पदव्याः पथिकोऽभवं। २२
प्रतिकूलं निजेशस्य पापञ्च न कृतं मया।
आसन् तदीयराजाज्ञा मदीयेन्द्रियगोचरे। २३
न वा हि विधयस्तस्य मया त्यक्ताः कदाचन।
अहं साधुस्वभावश्चाभवं तद्दृष्टिगोचरे। २४
अहमात्मीयपापेभ्य आत्मानं परिगुप्तवान्।
गोचरे तस्य पुण्यं मे पूतत्वञ्च यथाभवत्। २५
तथैव सुफलं मह्यं दत्तवान् परमेश्वरः।
अनुग्राहिमनुष्येषु करोषि त्वमनुग्रहं। २६
सदाचारिमनुष्येषु सदाचारं करोषि च।
पूताचारिमनुष्येषु पूताचारं करोषि च। २७
विरुद्धाचारिलोकेषु त्वं विरुद्धं करोषि च।
दीनान् रक्षसि चाहंयून् पातनार्थं निरीक्षसे। २८
भवानेव प्रदीपं मे मत्प्रभो परमेश्वर। २९
मदीयमन्धकारं त्वं ज्योतीरूपं करोषि च।
त्वत्साहाय्येन शक्नोमि सैन्यमध्येन धावितुं। ३०
मदीश्वरस्य साहाय्यात् प्राचीरस्योन्नतं प्लवे।
स ईशो निर्म्मलाचारो वाक्यं तस्य परीक्षितं। ३१
तदाश्रितमनुष्याणां स स्वयं फलकं भवेत्।
ईश्वरो विद्यते को हि तस्मादन्यः परेश्वरात्। ३२
अस्माकमीश्वरादन्यः कोऽचलो परिविद्यते।
एवम्भूतो य ईशः सोऽभवद् दुर्गं दृढं मम। ३३
पदवीं मामकीनाञ्च निर्व्विघ्नामकरोत् स तु।
पादौ मदीयौ तेनैव मृगपादसमौ कृतौ। ३४
तथा संस्थापयामास प्रोच्चस्थाने स एव मां।
स मदीयौ करौ सम्यग् युद्धं कर्त्तुमशिक्षयत्। ३५
तेनैव मम बाहुभ्यां भग्नं ताम्रमयं धनुः।

३६ परित्राणस्वरूपं त्वं फलकं मे प्रदत्तवान्।
तव नम्रतयाहञ्च प्रोन्नतः परिजातवान्।
३७ मत्पादन्यसनार्थाय प्रशस्तं स्थानं कृतं त्वया।
ततो हेतो र्न कुत्रापि स्खलनं जायते मम।
३८ परिधावन् द्विषां पश्चादहं तांस्तु व्यनाशयं।
असंहार्य्य समूलञ्च न परावर्त्तवांस्तदा।
३९ आहतास्ते मया लोका न्यपतन् पादयोरधः।
पतित्वा पुनरुत्थातुं न शक्तास्ते कदाचन।
४० योधनार्थं त्वया बद्धा विक्रमेण कटि र्मम।
इत्थं रिपुगणाः सर्व्वस्त्वया मम वशीकृताः।
४१ शत्रवो मे त्वया सर्व्वे कृता मत्तः पराङ्मुखाः।
ये ये मां समृतीयन्ते ते जनाः संहृता मया।
४२ परितस्ते व्यलोकन्त न कोऽपि तानुपाकरोत्।
लोकितस्तैः परेशोऽपि न प्रादात् किञ्चनोत्तरं।
४३ अचूर्णयं तदाहं तान् भूम्याच्छादकधूलिवत्।
रथ्यास्थकर्द्दमं यद्वत् मर्द्दित्वा तान् अवाकिरं।
४४ स्वजातीयरिपुभ्यो मां त्वमेवोद्धृतवानसि।
अन्यजातीयलोकानाम् अकरो मां शिरोमणिं।
लोकाश्च मदविज्ञाता जाता मे परिचारकाः।
४५ परवंशा विदेशीया मानवा मां स्तुवन्ति च।
पालयन्ति मदीयाज्ञां श्रुत्वैव वचनं मम।
४६ मया परिचिता नो ये क्षीणतां प्राप्नुवन्ति ते।
वेपमानाः स्वकीयेभ्यो दुर्गेभ्यो निःसरन्ति च।
४७ धन्यः पर्व्वतरूपो मे सोऽमरः परमेश्वरः।
मत्तारकाचलो भूयात् स ईशः सर्व्वदोन्नतः।
४८ ईश त्वं मम शत्रुभ्यः प्रादाः समुचितं फलं।
मन्निमित्तं त्वया नाना मनुजा मद्वशीकृताः।
४९ मम वैरिसमूहात्त्वं मां समुद्धृतवानसि।
अकार्षीरुन्नतिं त्वं मे मद्विपक्षगणादपि।
दुर्वृत्तेभ्यो मनुष्येभ्यस्त्वमेव माममोचयः।
५० अतोऽहं सम्मुखे तिष्ठन् भिन्नदेशनिवासिनां।

सुवंस्त्वां परिगास्यामि तव नाम्नि परेश्वर ।
त्वायं महत्त्वेन कृतस्य राज्ञः कृत्वाभिषिक्तोऽपि च दायूदाख्ये । ५१
तदीयसन्तानगणे त्वयैव कारिष्यतेऽनुग्रह एव नित्यं ॥

---

## २३ त्रयोविंशोऽध्यायः ।

१ दायूदः शेषकथा ८ तस्य प्रधानलोकानां नामानि विवृतिश्च ।

दायूदः शेषकथा । १

यिशयस्य सुतो दायूद् इतिनाम्ना तु यो नरः ।
उन्नतिं लेभ ईशाच्च याकूबस्याभिषेचनं ।
मधुरस्वरगाता स इस्रायेलः प्रभाषते ।
मामकीनेन वक्त्रेण वक्त्यात्मा परमेशितुः । २
वचनानि तदीयानि जिह्वाग्रे मम सन्ति हि ।
इस्रायेलो य ईशोऽस्ति प्रोक्तवान् माम् इदं स हि । ३
इस्रायेलोऽचलेनैव वाक्यमेतदकथ्यत ॥
भविता नरलोकस्य राजैकोऽतीव धार्म्मिकः ।
ईशात् स साध्वसं कुर्व्वन् राजत्वं प्रकरिष्यति ।
उदेष्यति तथा यद्वत् प्रभाततेजसा रविः ।
अहर्मुखीय आकाशे मेघहीने सुनिर्म्मले ।
भूमावङ्कुरितायाश्च नवीनैर्दृष्टिजैस्तृणैः ॥
मदीयवंश ईशस्य समक्षं किं स्थिरो नहि । ५
सुनिश्चितश्च सर्व्वत्र विश्वास्यो नित्य एककः ।
अकारि नियमस्तेन सहितेन मया पुरा ।
मामकं यदिदं त्राणं सर्व्ववाञ्छाप्रसाधकं ।
विधास्यते किमेतन्नि तेनैव सफलं नहि ॥
दुर्जना दवयिष्यन्ते सर्व्वे हि कण्टकानि व । ६
यतो हेतोः करांस्तेषां कोपि धर्त्तुं न पारयेत् ।
असौ यो मनुजस्तेषां स्पर्शमेव करिष्यति । ७
स तैर्लौहेन शस्त्रेण दण्डेन धत्स्यते तदा ।
किन्तु तावत्स्थले लोकास्ते धक्ष्यन्ते हि वह्निना ।

८ दायूदो बलवतां लोकानां नामानि। वीराणां मध्ये तखमोनीयो
योशेब्वशेबतो मुख्य आसीत् सोऽष्टानां शतानां लोकानां विरुद्धं शूलं
९ धृत्वा तान् युगपद् अवधीत्। अपरम् अहोहीयस्य दोदयस्य पुत्र
इलियासरो द्वितीय आसीत्। यदा इस्रायेलीयलोका अनागता
आसन् तस्मिन् काले मिलितान् पिलेष्टीयान् अस्पर्द्धन्त ये दायूदः सङ्गि-
१० नस्त्रयो वीरास्तेषां मध्येऽयमेको जन आसीत्। स उत्थाय यावत् तस्य
हस्तः श्रान्तो नाभवत् तावद् हस्ते संहतेन खड्गेन पिलेष्टीयान्
मारयामास। तस्मिन् दिने परमेश्वरो महाजयं कारयामास, तदा
११ लोका लोठनार्थमेव तस्य पश्चाद्गामिनो बभूवुः। अपरं हरारीयस्या-
गेत्तनयः शम्मस्तृतीय आसीत्; एकस्य मसूरक्षेत्रस्य समीपे पिलेष्टीयेषु
१२ सङ्घीभूतेषु यदा लोकाः पिलेष्टीयेभ्यः पलायन्त, तदानीं शम्मस्तत्क्षेत्र-
मध्ये तिष्ठन् तद् रक्षितवान् पिलेष्टीयांश्च निहतवान् ततः परमेश्वरो
१३ महाजयं कारयामास। त्रिंशत्प्रधानलोकानां मध्ये त्रयो जना एते
१४ शस्यच्छेदनसमये ऽदुल्लमगुहायां दायूदः समीपम् आगच्छन्, तदा पिले-
ष्टीयानां निवहो रिफायीमतलभूमौ शिविरं स्थापयाञ्चकार वैतले-
१५ हमेऽपि पिलेष्टीयानां सैन्यवृन्दम् एकमासीत्। अपरं दायूद् दुराक्र-
मणस्थाने वसन् पिपासितः सन् जगाद हा हा वैतलेहमस्य गोपु-
१६ रसमीपस्थस्य प्रहेः पानीयमानीय मह्यं पातुं को दास्यति? ततस्ते
त्रयो नराः पिलेष्टीयानां शिविरमध्येन गत्वा वैतलेहमस्य गोपुरनिकट-
स्थस्य प्रहेः पानीयमुत्तोल्य गृहीत्वा दायूदः समीपम् आगच्छन्, किन्तु
१७ दायूद् तत् पातुं नैच्छद् ईश्वरमुद्दिश्य तत्तोयं निक्षिप्तवान्, वाक्यमिदं
बभाषे च, हे परमेश्वर एतादृशं कर्म्म नाहं करिष्ये, तोयमेतत्
प्राणपणेन गतवतां मानवानां शोणितमेव। अतः स तत् पातुं नैच्छत्।
१८ ते तु त्रयो बलिनो जनास्तत्कर्म्म चक्रुः। अपरं सिरूयायाः पुत्रस्य
योयावस्य सहोदरोऽबीशयोऽन्येषां त्रयाणां जनानां मध्ये मुख्य
आसीत्। स शतत्रयाणां लोकानां विरुद्धं शूलं धृत्वा तान् विनाश्य
१९ त्रयाणां मध्ये लब्धनामा बभूव। स किं तेषां त्रयाणां मध्ये मान्यो
नहि? तस्मात् स तेषां सेनापति र्बभूव, तथापि स प्रथमत्रयाणां
२० तुल्यो नहि। अपरं कव्सेलीयस्यैकस्य बलिनः पौत्रो यिहोयादस्य पुत्रो
विनायो ऽनेककार्य्यकर्त्तासीत्; स सिंहतुल्यौ द्वौ मोयाबीयलोकौ
जघान, तदन्यत् स हिमानीसमये गत्वा गर्त्तमध्ये सिंहमेकं मारया-

मास। अपरं उत्तमबलवन्तं मिस्रीयमेकम् अवधीत्, तस्य मिस्रीयस्य २१
हस्ते शूलमेकमासीत् किन्त्वस्य हस्ते दण्ड एक आसीत्, ततः स गत्वा
मिस्रीयस्य हस्तात् शूलम् आच्छिद्य तस्यैव शूलेन तं जघान। यिहोयाः- २२
दस्य पुत्रो विनाय एतानि कर्म्माणि चकार, ततः स (द्वितीयानां)
त्रयाणां पराक्रमिणां मध्ये लब्धनामा बभूव। स तेभ्यस्त्रिंशज्जनेभ्यो २३
विख्यात आसीत् किन्तु प्रथमत्रयाणां समतां न प्राप, अपरं स दायूदा
स्वरक्षकसैन्यस्य सेनापति र्नियुक्तो बभूव। अपरं त्रिंशतो मध्ये योया- २४
बस्य सहजोऽसाहेलो मुख्य आसीत्, अपरं दोदयस्य पुत्रो बैतले-
हमीय इल्हानन:, हरोदीयः शम्मः, हरोदीय इलीकाः, पल्टीयो २५
हेलसः, इक्केशस्य पुत्रस्तिकोयीय ईराः, अनाथोतीयो ऽबीयेषरः, हूशा- २७
तीयो मिबुन्नयः, अहोहीयः सल्मोनः, निटोफातीयो महरयः, २८
बानाहस्य पुत्रो निटोफातीयो हेलदः, बिन्यामीनवंशीयदेशस्थगिबिया- २९
निवासिरीवयस्य पुत्र इत्तयः, पिरियाथोनीयो विनायः, गाशीयस- ३०
रितो निकटवासी हिद्दयः, अर्ब्बतीयोऽबीयल्बोनः, बहरूमीयोऽस्मा- ३१
वतः, शालवीय इलियहवाः, याशेनस्य पुत्रो योनाथनः, हरारीयः ३२
शम्मः, साखरस्य पुत्रो हरारीयो ऽहीयमः, अपरं माखातीयस्य पौत्रो ३४
ऽहसबयस्य पुत्र इलीफेलटः, अहीथोफलस्य पुत्रो गिलोनीय इलीयामः,
कर्म्मिलीयो हिस्रयः, अर्ब्बीयः पारयः, नाथनस्य पुत्रः सोबानिवासी ३६
यिगालः, गादीयो बानिः, अम्मोनीयः सेलकः, सिरूयायाः पुत्रस्य योया- ३७
बस्यास्त्रवाहको बेरोतीयो नहरयः, यित्रीय ईराः, यित्रीयो गारेबः, ३८
हित्तीय ऊरियश्चेमे साकल्येन सप्तत्रिंशज्जना आसन्। ३९

## २४ चतुर्विंशोऽध्यायः।

१ लोकान् गणयितुं दायूद आज्ञा ५ लोकानां गणनं १० त्रिभूणां विपदाम् एकां वरीतुं परमेश्वरस्य निदेशात् दायूदो महामार्य्या वरणं १५ महामारीतो यिरूशा-लमस्य रक्षा। १८ अरौनाहस्य शस्यमर्दनस्थानं क्रीत्वा दायूदा तत्र स्थाने वेदि-निर्म्मापणं।

अनन्तरम् इस्रायेलो वंशं प्रति परमेश्वरस्य क्रोधाग्निः पुनर्वारं प्रज- १
ज्वाल तस्माद् इस्रायेलवंशस्य यिहूदावंशस्य च गणनां कुरुतेत्याज्ञा-
पयितुं तेषां विरुद्धं दायूदः प्रवृत्तिं जज्ञे। अनन्तरं राजा स्वसमीपस्थस्य २
सैन्यस्य पतिं योयाबम् आज्ञापयामास, यूयं दानमारभ्य बेर्शेबां यावद्

इस्रायेलः सर्व्ववंशानां देशान् भ्रमन्तो लोकान् गणयत, अहं लोकानां
३ सङ्ख्यां विविदिषामि। ततो योयावो भूपतिं जगाद, इदानीं यावन्तो
लोका आसते तव प्रभुः परमेश्वरस्तान् शतगुणं वर्द्धयतु मम प्रभु नर-
पतिश्च स्वनेत्राभ्यां तत् पश्यतु, किन्तु कर्म्मैतत् मम प्रभवे नरपतये
४ कुतो रोचेत? तथापि योयावस्य सेनापतीनाञ्च वचनात् नृपते र्वचनं
प्रबलं बभूव, ततो योयावः सेनापतिगणश्चेस्रायेलीयलोकान् गणयितुं
राज्ञः समक्षात् जग्मुः।

५ अनन्तरं ते यर्द्दनसरितः पारं गत्वारोयेर उपत्यकाया मध्यस्थितस्य
नगरस्य दक्षिणे शिबिरं स्थापयाञ्चक्रुरपरं यासेरीयप्रदेशं गादञ्च
६ गणयामासुः। अनन्तरं ते गिलियददेशं तह्तीमह्दशिप्रदेशञ्च जग्मुः।
७ ततः परं दानायानेन गच्छन्तः परिक्रम्य सीदोनम् उपतस्थुः। अन-
न्तरं सूरस्य दृढदुर्गेण हिव्वीयकिनानीयानां नगरैश्च गत्वा यिहूदाया
८ दक्षिणदिक्स्थबेर्शेवां यावत् जग्मुः। अनेन प्रकारेण ते देशस्य
सर्व्वत्र भ्रमन्तो विंशतिदिवसाधिकं नवमासं यिरूशालमं प्रत्याजग्मुः।
९ अनन्तरं योयाव इस्रायेलवंशस्य बलवताम् अस्त्रधारिणां मनुजानां
संख्याष्टौ लक्षाणि यिहूदावंशीयानाञ्च संख्या पञ्चलक्षाणीति राजानं
ज्ञापयामास।

१० इत्थं लोकेषु गणितेषु दायूद् निजहृदये महाघातं प्राप, ततो दायूद्
परमेश्वराय कथयामास, कार्य्येणानेन मया महापापमकारि, हे परमे-
श्वर विनयेऽहं निजदासस्य पापं क्षमस्व, मयातीव मूढस्य कर्म्माकारि।
११ अनन्तरं दायूदि प्रत्यूष उत्थिते दायूदः प्रदर्शकं भविष्यद्वादिनं गादं
१२ प्रति परमेश्वरस्येदं वाक्यम् आगच्छत, त्वं गत्वा दायूदं वद, परमेश्वर
इमां वाचं वदति, तव सम्मुखे मया त्रयो दण्डा निधीयन्ते तेषामेको
१३ व्रियतां, मया स एव त्वां प्रति कारिष्यते। ततो गादो दायूदः समीपं
गत्वा तं ज्ञापयन् जगाद तव देशे सप्त वत्सरान् व्याप्य किं दुर्भिक्षो
भविष्यति? अथवा त्रीन् मासान् यावत् तव पश्चाद् धावतां रिपूणाम्
अग्रेऽग्रे पलायनं करिष्यसि? यद्वा त्रीणि दिनानि यावद् देशे महा-
मारी भविष्यति? तद् इदानीम् आलोच्य निश्चिनु यतो मत्प्रेरयित्रे
१४ मयोत्तरं दातव्यं। ततो दायूद् गादं बभाषे, मम महती मनःपीडा
जाता, इदानीं परमेश्वरस्य हस्ते पतितुमिच्छाम्यहं यतस्तस्य कृपा
१५ प्रचुरा नाहं मनुष्याणां हस्तेषु पतितुम् इच्छामि। अनन्तरं प्रत्यूषमारभ्य

निरूपितसमयं यावत् परमेश्वर इस्रायेल्वंशं प्रति महामारीं प्रेषया-
मास, तेन दानमारभ्य बेर्शेबां यावत् सप्ततिसहस्राणि लोकाः पञ्चत्वं
गताः। अनन्तरं यिरूशालमस्य विनाशार्थं तन्नगरोपरि दूतस्य हस्त- १६
प्रसारणसमये परमेश्वरस्तस्मै विपदेऽनुतप्य तं लोकमारकं दूतं जगाद,
अलमनेन त्वं स्वकरं सम्बोधय। तदानीं परमेश्वरस्य दूतो यिबू-
षीयस्यारौणाहस्य शस्यमर्दनस्थान आसीत्। अनन्तरं दायूद् तं लोक- १७
हन्तारं दूतं वीक्ष्य परमेश्वरं बभाषे, मयैव पापमकारि ममैव सोऽप-
राधोऽस्ति मेषैरेतैः किमपराद्धं? विनयेऽहं मम मदीयपितृवंशस्य च
विरुद्धं तव हस्तः प्रसार्य्यतां।

तस्मिन् दिने गादो दायूदः समीपं गत्वा तं जगाद, त्वं गत्वा १८
यिबूषीयस्यारौणाहस्य शस्यमर्दनस्थाने परमेश्वराय यज्ञवेदिमेकां
निर्म्मापय। अनन्तरं परमेश्वरीयनिदेशानुसारेण गादस्य कथातो दायूदा १९
गमने कृतेऽरौणाहो विलोक्य राजा तस्य भृत्याश्च मम सन्निधिम् २०
आगच्छन्तीति वीक्ष्य वहिर्गत्वा भूमिष्ठः सन् राजानं प्रणनाम। अपरम् २१
अरौणाहः पप्रच्छ, मम प्रभु र्नरपति र्निजदासस्य सन्निधिं कुत आग-
मत्? दायूद् अवदत्, लोकानां मध्यात् महामारी यन्निवर्त्तेत तत्कृते
परमेश्वराय यज्ञवेदिमेकां निर्म्मापयितुम् अहं तव सकाशात् शस्य-
मर्द्दनस्थानम् इदं क्रेतुम् आगमं। ततोऽरौणाहो दायूदं बभाषे, मम प्रभु २२
र्नरपति र्यद् भद्रं बोधते तदेव गृहीत्वोत्सृजतु, पश्यतु होमबले
र्निमित्तं वृषा इन्धननिमित्तञ्च मर्द्दनयन्त्राणि वृषाणां सज्जाश्चासते।
अनन्तरम् अरौणाहो राजेव तानि सर्व्वाणि राज्ञे ददौ। अरौणाहश्च २३
इदमपि बभाषे तव प्रभुः परमेश्वरस्त्वाम् अनुगृह्णातु। किन्तु नृपति- २४
ररौणाहं जगाद, तन्न भवतु, मूल्येनाहं त्वत्त एतानि सर्व्वाणि क्रेष्यामि,
नाहं स्वप्रभवे परमेश्वराय विनामूल्यलब्धान् होमबलीन् उत्स्रक्ष्यामि।
अनन्तरं दायूद् पञ्चाशत्शेकलमानरजतैस्तत् शस्यमर्द्दनस्थानं वृषांश्च २५
क्रीत्वा जग्राह। अपरं दायूद् तत्र स्थाने परमेश्वराय यज्ञवेदिं निर्म्माप्य
होमबलीन् मङ्गलार्थकबलींश्च प्रोत्ससर्ज। ततः परमेश्वरेण प्रार्थनां
गृहीत्वा देशं प्रत्यनुकम्पायां कृतायाम् इस्रायेलो महामारी निववृते।

# राजावल्याः प्रथमं पुस्तकं।

## १ प्रथमोऽध्यायः।

१ दायूदो वार्द्धक्यमबीशगायास्तस्य परिचर्य्याकरणं ५ राजत्वं प्राप्तुम् अदोनीयस्य उद्यमः ११ बतशेवां प्रति नाथनस्य मन्त्रणा १५ दायूदं प्रति बतशेवाया निवेदनं २२ दायूदं प्रति नाथनस्य कथनं २८ बतशेवां प्रति दायूदः पुनः शपथकरणं ३२ दायूदो निदेशात् सुलेमनोऽभिषिक्तत्वं ४१ अदोनीयस्य तेन निमन्त्रितानां लोकानाञ्च पलायनं ५० अदोनीयं प्रति सुलेमनः क्षमाकरणञ्च।

१ अनन्तरं राजा दायूद् स्थविरः सम्पूर्णवयस्कश्च भूत्वा बहुभि र्वस्त्रै-
२ राच्छादितोऽपि नोष्णो बभूव। एतत्कारणात् तस्य दासास्तं बभाषिरे,
अस्माकं प्रभो र्नरपते र्निमित्तम् एकाम् अनूढां युवतीं गवेषयामहे, सा
नृपतेः सम्मुखे तिष्ठती नृपतेः परिचारिका भविष्यति, अपरम् अस्माकं
प्रभो र्नरपतेर्गात्रं यद् उष्णीभवेत् तदर्थं भवतो वक्षःस्थले शयिष्यते।
३ अनन्तरं त इस्रायेलः सर्व्वस्यां सीमायां सुन्दरीं युवतीं मृगयित्वाबी-
४ शगानामिकां शूनेमीयां प्राप्य नरपतेः समीपम् आनिन्युः। सा तरुणी
परमसुन्दरी तत्कारणात् सा राज्ञः परिचारिका भूत्वा तं सिषेवे
किन्तु राजा तां नोपजगाम।

५ तस्मिन् समये हग्गीताया गर्भजातोऽदोनीयोऽभिमानी भूत्वाहं
राजत्वं करिष्यामीति वदन् रथम् अश्वारोहिणः पञ्चाशज्जनानग्रगामिन-
६ श्चासादयामास। किन्तु त्वं कुत एतादृशं करोषीति वाचा तस्य तातः
पूर्व्वं तं कदापि नाक्लेशयत् सोऽवशालोमात् परं जातः स्वयमपि परम-
७ सुन्दरो युवा चासीत्। अनन्तरं सिरूयायाः सुतेन योयाबेन सार्द्धं
याजकेनाबीयाथरेण च सार्द्धं तेन मन्त्रणायां कृतायां तावदोनीय-
८ स्यानुगतौ भूत्वा तस्य साहाय्यं चक्रतुः। किन्तु याजकः सादोको यिहो-
यादस्य सुतो बिनायो भविष्यद्वादी नाथनः शिमियि रेयिश्च दायूदः
९ समीपस्था बलवन्तो लोकाश्चेमेऽदोनीयस्यानुगता न बभूवुः। अन-
न्तरम् अदोनीय एनरोगेलस्य पार्श्वस्थस्य सोहेलतास्यपाषाणस्य समीपे
मेषान् वृषभान् पुष्टपशूंश्च हत्वा स्वसहजान् राजपुत्रान् सर्व्वान्

यिहूदावंशीयान् राजभृत्यांश्चाहूतवान्। किन्तु भविष्यद्वादिनं नाथनं १०
विनायं बलिनो लोकांश्च निजभ्रातरं सुलेमानञ्च न निमन्त्रयामास।

अतो नाथनः सुलेमनो मातरं बतशेबां बभाषे, अस्मत्प्रभुना दायूद्- ११
नृपेणाविज्ञातं हगितायाः सुतोऽदोनीयो राजत्वं करोतीति किं त्वया
नाश्रावि? अत आगच्छाहम् इदानीं त्वां मन्त्रणां वदामि तेन त्वं निज- १२
प्राणान् स्वपुत्रस्य सुलेमनश्च प्राणान् रक्षिष्यसि। त्वं गत्वा दायूदं १३
नरपतिम् उपस्थाय वाक्यमिदं निवेदय, हे मम प्रभो राजन् भवता
शपथं कृत्वा निजदास्यै किं प्रतिश्रुतं नहि मम पश्चात् तव पुत्रः सुलेमान्
राजत्वं करिष्यति स एव मम सिंहासन उपवेक्ष्यतीति? तर्हीदानीम्
अदोनीयः कुतो राजत्वं करोति? अपरं पश्य तवैतत्कथनसमये मया १४
तव पश्चाद् गत्वा तव वाक्यं दृढयिष्यते।

अनन्तरं बतशेबा गर्भगृहमध्ये राज्ञः समीपं जगाम, तदानीं नृपति- १५
रतीव स्थविर आसीत्, अपरं शुनेमीयाबीशगा राजानम् असेवत।
ततो बतशेबा दण्डवद् भूत्वा राजानं प्रणनाम, ततो नरपतिः पप्रच्छ, १६
तवेच्छा का? ततः सा बभाषे, हे मम प्रभो भवता निजप्रभोः परमे- १७
श्वरस्य नाम गृहीत्वा निजदास्याः समीपे किं शपथो न कृतः, मम पश्चात्
तव सुतः सुलेमानेव राजत्वं करिष्यति मम सिंहासन उपवेक्ष्यति
चेति? किन्तु पश्य साम्प्रतम् अदोनीयो राजत्वं करोति, हे मम प्रभो १८
राजन् भवता तन्न ज्ञायते। स बहून् वृषभान् पुष्टपशून् मेषांश्चावधीत्, १९
समस्तराजपुत्रान् याजकम् अबीयाथरं सेनापतिं योयावम् आहूत-
वांश्च किन्तु भवतो दासं सुलेमानं नाहूतवान्। इदानीं हे मम प्रभो २०
राजन् भवतः परं मम प्रभो महीपतेः सिंहासने केनोपवेष्टव्यं तद्
भवता वयं ज्ञापयिष्यामहे इति प्रतीक्ष्य सर्व्वस्येस्रायेल्वंशस्य दृष्टिर्भवन्तं
प्रति विद्यते। भवान् यदि तन्न ज्ञापयति तर्हि मम प्रभो राजनि २१
पितृलोकानामिव महानिद्रां गते मम पुत्रः सुलेमान् अहञ्च दोषीकृतौ
भविष्यावः।

राज्ञा समं तस्या ईदृशः संलापो भवति तदन्तरे भविष्यद्वादी नाथन २२
आजगाम। ततः कश्चिद् भूपतिं व्यज्ञापयत्, भविष्यद्वादी नाथन २३
उपतिष्ठति; अनन्तरं नाथनो नरपतेः सम्मुखम् एत्य भूमिष्ठः सन्
राजानं प्रणम्य कथामिमां निवेदयामास, हे मम प्रभो राजन्, मत्तः २४
परम् अदोनीयेन राजत्वं कर्त्तव्यं मम सिंहासने चोपवेष्टव्यमिति किमा-

२५ ज्ञापितं भवता ? यतः सोऽद्यैव गत्वा बहून् गवादीन् पुष्टपशून् मेषांश्च
हत्वा सकलान् राजपुत्रान् सेनापतीन् याजकम् अवीयाथरञ्चाहूतवान्
अपरं पश्यतु ते तस्य साक्षाद् भुञ्जते पिबन्ति च तदन्यद् अदोनीयो
२६ राजा चिरञ्जीवी भवत्विति वाचं वदन्ति च। किन्तु भवतो दासो योऽहं
मां याजकं सादोकं यिहोयादस्य सुतं बिनायं भवतो दासं सुलेमानञ्च
२७ नामन्त्रितवान्। मम प्रभो र्नरपतेः परं भवतः सिंहासने केनोप-
वेष्टव्यं तन्निजदासं न ज्ञापयित्वा मम प्रभु र्नरपतिरेतत्कर्म्म कृतवानिति
किं सत्यं?

२८ ततो दायूद् नरपतिः प्रत्युवाच बत्शेबां मम सन्निधिम् आह्वयान-
२९ यत। अनन्तरं तस्यां राज्ञः समीपम् आगत्य तस्य सम्मुखे तिष्ठन्त्यां
नरपतिरिमं शपथं कृत्वा जगाद, सर्व्वविपद्भ्यो मम प्राणरक्षकः परमे-
३० श्वरो यद्यमरो भवेत् तर्हि मत्तः परं तव सुतेन सुलेमनैव राजत्वं
कर्त्तव्यं मम पदे मम सिंहासने चोपवेष्टव्यमिति तव समीप इस्रायेलः
प्रभोः परमेश्वरस्य नाम गृहीत्वा मया यः शपथो ऽकारि सोऽद्यैव
३१ सफलीकारिष्यते। तदानीं बत्शेबा भूमिष्ठा सती राजानं प्रणम्य
जगाद मम प्रभू राजा दायूद् चिरञ्जीवी भवतु।

३२ अनन्तरं राजा दायूद् जगाद याजकं सादोकं भविष्यद्वादिनं
नाथनं यिहोयादस्य सुतं बिनायञ्च मम समीपमाहूयानयत। अनन्तरं
३३ तेषु नरपतेः समीपमागतेषु नरपतिस्तान् आज्ञापयत् यूयं निजप्रभोः
सेवकान् सङ्गिनः कृत्वा मदीयपुत्रं सुलेमानं मम अश्वतरम्
३४ आरोह्य गीहोनं नयत। तत्र स्थाने याजकः सादोको भविष्यद्वादी
नाथनश्चेस्रायेल उपरि तं राज्याभिषिक्तं कुरुताम् अपरं यूयं सर्व्वे तूरीं
३५ वादयन्तो राजा सुलेमान् चिरञ्जीवी भवत्विति वाचं घोषयत। अनन्तरं
स युष्माभिरनुव्रज्यमानो मम सिंहासन उपवेष्टुम् आगच्छतु मम पदे
राजत्वं करोतु च यत इस्रायेलो यिहूदायाश्चोपरि राजत्वं कर्त्तुं स
३६ एव मया निर्णीतः। ततो यिहोयादस्य सुतो बिनायो नरपतिम्
उक्तवान् तदेव भवतु मम प्रभो र्नरपतेः प्रभुः परमेश्वरस्तदेव कथयतु।
३७ यथा परमेश्वरो मम प्रभो र्नरपतेः सहायोऽभूत् तथा सुलेमनोऽपि
सहायो भवतु, अपरं मम प्रभो राज्ञो दायूदो राजसिंहासनादपि
३८ तस्य सिंहासनम् उन्नतं करोतु। अपरं याजकः सादोको भविष्यद्वादी
नाथनो यिहोयादस्य सुतो बिनायः करेथीयाः पिलेथीयाश्च गत्वा

सुलेमानं राज्ञो दायूदोऽश्वतरम् आरोप्य गीहोनं निन्युः। याजकः ३९
सादोकश्च पवित्रावासस्य मध्यात् तैलपूर्णं शृङ्गं गृहीत्वा सुलेमानम्
अभिषिषेच, अनन्तरं तूर्य्यां वादितायां सर्व्वे लोका ऊचुः; राजा सुले-
मान् चिरं जीवतु। अपरं सर्व्वे लोकास्तम् अनुव्रजन्तो महानन्देन ४०
तादृशं वाद्यम् अवादयन् यत् तेन शब्देन पृथिवी विदध्रे।

अनन्तरं भोजने समाप्ते सत्यदोनीयस्तस्य सङ्गिन आहूता लोकाश्च ४१
तं तूरीध्वनिं शुश्रुवुस्ततो योयावस्तूरीशब्दं श्रुत्वा व्याजहार, हत्व-
नगर एतावान् कलरवः कुतो जायते? तस्मिन् इदं पृच्छति सत्य- ४२
बीयाथरस्य याजकस्य सुतो योनाथन आजगाम, तदानीम् अदोनी-
यस्तं जगाद, समीपमागच्छ त्वं भद्रो लोकोऽसि शुभवार्त्तानेतासि।
तदानीं योनाथनोऽदोनीयम् उक्तवान् सत्यम् अस्माकं प्रभु र्नरपति- ४३
र्दायूद् सुलेमानं राजत्वपदे नियुक्तवान्। राजा याजकं सादोकं ४४
भविष्यद्वादिनं नाथनं यिहोयादस्य पुत्रं बिनायं किरेथीयान् पिले-
थीयांश्च तेन समं प्रहितवान् ते च तं नृपतेरश्वतरम् आरोपितवन्तः,
अपरं याजकः सादोको भविष्यद्वादी नाथनश्च तं गीहोने राज्यम् ४५
अभिषिक्तवन्तौ ततः परं तेष्वानन्देन प्रफुल्लेषु तस्मात् स्थानाद् आग-
च्छत्सु हत्वं नगरं हर्षनादेन पर्य्यपूर्य्यत स एव निनादो युष्माभिर-
श्रावि। तदन्यत् सुलेमान् राजकीयसिंहासन उपाविशत्। अपरं ४६
नरपते र्भृत्या अस्माकं प्रभुं दायूदं नृपतिम् आशिषम् अवदन् ४७
ईश्वरस्त्वदीयनामतः सुलेमनो नाम वर्द्धयतु तव सिंहासनाच्च तस्य
सिंहासनं वर्द्धयत्विति। ततः शयनीय उपविष्टो राजा (परमेशाय)
प्रणनाम। अपरं नृपतिरपि वाक्यमिमं व्याहरत्, अद्य मम चक्षुर्गोचरे ४८
मम सिंहासन उपवेष्टुं पुत्रमेकं प्रायच्छत् य इस्रायेलः प्रभुः परमेश्वरः
स धन्यः। तत आमन्त्रिता अदोनीयस्य सङ्गिनस्त्रस्ताः सर्व्वे स्वं स्वं ४९
स्थानं जग्मुः।

अपरम् अदोनीयः सुलेमनो भीतः सन् उत्थाय गत्वा होमवेद्या- ५०
श्चूड़ा आशिश्लिषे। अनन्तरम् अदोनीयो राज्ञः सुलेमनो भयाद् होम- ५१
वेद्याश्चूड़ा आश्रितवान् कथितवांश्च राजा सुलेमान् निजदासं खड्गेन
न हनिष्यति मम समीपेऽद्यैव शपथमिमं करोत्विति वार्त्ता केनचित्
ज्ञापितो सुलेमान् जगाद स यदि स्वं भद्रपुरुषं दर्शयति तर्हि तस्य ५२
कचकोऽपि भूमौ न पतिष्यति किन्तु यदि तस्य कश्चिद् अपराधः

५३ प्रकाशते तर्हि तेन मर्त्तव्यमिति । अनन्तरं राज्ञा सुलेमना प्रेहिता
दूतास्तं वेदितोऽवरोह्यानिन्युः, ततस्तेनागत्य राज्ञि सुलेमनि प्रणते
सुलेमान् तं जगाद त्वं निजगृहं याहि ।

## २ द्वितीयोऽध्यायः ।

१ सुलेमानं प्रति दायूदः शेषकथा ५ योयाबमधि बर्षिल्लयस्य पुत्रानधि शिमियिमधि च तस्य कथनं १० दायूदो मरणं सुलेमनो राजत्वकरणकथनं १३ अदोनीयेऽबीशगां विवाहुम् इच्छति सुलेमना तस्य हतत्वं २६ राजसभायाबीयाथरस्य पदच्युतत्वं २८ योयाबस्य बधाश्रितत्वं ३५ योयाबस्य पदे बिनायस्य नियोजनम् अबीयाथरस्य पदे सादोकस्य नियोजनं ३६ राज्ञ आज्ञां विना गमनगरगमनकारणात् शिमिये-र्हतत्वं ।

१ अनन्तरं दायूदो मरणसमये सविधे सति स निजपुत्रं सुलेमानम्
२ इत्यादिदेश, पृथिवीस्थैः सर्व्वै र्येन वर्त्मना गन्तव्यं तेनाहं गच्छामि, त्वं
३ बलवान् भूत्वा पुरुषत्वं प्रकाशय । त्वं यद्यत् करिष्यसि यस्मिन् कर्म्मणि
वा प्रवर्त्तिष्यसे तत्र तत्र यत् कृतार्थो भवेस्तदर्थं निजप्रभोः परमेश्वरस्य
विधानं पालयन् तस्य मार्गेण गच्छ मूसाग्रन्थे लिखितानि तस्य विधिव्य-
४ वस्थाप्रमाणवाक्यानि पालय च । ततस्तव सन्ताना यदि सकलान्तःकरणैः
सकलमनोभिश्च मम सम्मुख आचरितुं स्वेषां मार्गे सावधाना भवेयु-
स्तर्हीस्रायेलः सिंहासन उपवेष्टुं तव वंशस्याभावो न भविष्यतीति
परमेश्वरो मामधि यदिदं वचनं प्रतिश्रुतवान् तत् सिद्धं करिष्यति ।
५ अपरं सिरूयायाः सुतो योयाबो मां प्रति यदकरोत् नेरस्य पुत्रो
ऽबनेरो येथरस्य पुत्रोऽमासाश्चेमाविस्रायेलो द्वौ सेनापती च प्रति
स यदकरोत् तत् त्वमज्ञासीः स तौ हत्वा सन्धिसमये रणसमयवत्
शोणितम् अपातयत् तच्छोणितेन च स्वकटिबन्धनं पादस्थिते पादुके
६ चालिम्पत् । अतस्त्वं निजबुद्धितस्तं प्रति कुरु पक्वकेशविशिष्टं तं निर्विघ्नं
७ परलोकं गन्तुं मा देहि । किन्तु गिलियदीयस्य बर्षिल्लयस्य तनयान्
प्रति प्रीतिं दर्शय तव भोजनासन उपविष्टानां नराणां मध्ये तेभ्यः
स्थानं देहि च यतो यस्मिन् काले तव भ्रातुरबशालोमादहं पलायित-
८ वान् तस्मिन् काले ते मम सन्निधौ स्थिरा अतिष्ठन् । अपरं बहूरीम-
निवासी बिन्यामिनीयो गेराः सुतो शिमियिरपि तव सन्निधावास्ते मह-
नयिमे मम गमनदिवसे स मां कटु शप्तवान् ततः परं मां साक्षात्
कर्त्तुं तस्मिन् यर्द्दनमागते परमेश्वरस्य नाम गृहीत्वाहं शपथमिमं

अस्तदाम् त्वां खड्गेन न हनिष्यामि। अतस्त्वं तं निरपराधं मा जानीहि, ९
त्वं बुद्धिमान् तं प्रति त्वया यत्कर्त्तव्यं तन्निश्चीयतां, पलितं तं गलच्छोणितं
परलोकं प्रेषय।

अनन्तरं दायूद् निजपितृलोका इव महानिद्रां गत्वा दायूदो नगरे १०
श्मशानं लब्धवान्। एष दायूद् हिब्रोणे सप्तवत्सरान् यिरूशालमे च ११
त्रयस्त्रिंशद् वत्सरान् साकल्येन चत्वारिंशद् वत्सरान् यावद् इस्रायेल्-
वंशोपरि राजत्वं चकार। अनन्तरं सुलेमान् निजतातस्य दायूदः १२
सिंहासन उपविवेश तस्य राज्यञ्च स्थैर्य्यं बभूव।

अनन्तरं हगीतायाः सुतोऽदोनीयः सुलेमनो मातु र्बतशेबायाः १३
समीपं जगाम तदा सा तं पप्रच्छ त्वं किं कुशलेनागमः? ततः स उक्त-
वान् कुशलेनैव। अपरमवदत् तव समीपे मम किञ्चिद् वक्तव्यम् आस्ते। १४
बतशेबा कथयामास तत् कथय। अनन्तरं स उक्तवान् राज्यं ममै- १५
वासीत् मया राजत्वं कारिष्यत इतीस्रायेलः सकलमनुजाः प्रत्यैक्षन्त
तत् त्वया ज्ञायते किन्तु राज्यं मत्तो गत्वा मम भ्रातुः करगतम् अभवत्
परमेश्वर एतद् अघटयत्। इदानीं मया तव समीपे कर्म्मैकं याच्यते १६
त्वम् अकृतार्थं मां मा विसृज। ततः सा बभाषे तद् वद। अनन्तरम् १७
अदोनीयो जगाद, विनयेऽहं शूनेमीयाम् अवीशगां मां विवाहयितुं
त्वं सुलेमानं नरपतिं कथय स त्वाम् अकृतार्थां न विस्रक्ष्यति। ततो बत- १८
शेबा प्रत्युवाच भद्रं तव कृतेऽहं नरपतिं सम्भाषिष्ये। अनन्तरं बत- १९
शेबादोनीयस्य वाक्यं निवेदयितुं नरपतेः सुलेमनः समीपं जगाम। तदा
राजा तस्याः सम्मुखम् उत्थाय तस्यै प्रणनाम। अनन्तरं स निजसिंहासन
उपविवेश राजजनन्याः कृतेऽप्यासनं स्थापयित्वा तां स्वस्य दक्षिण-
दिश्युपवेशयामास। अपरं सा जगाद क्षुद्रैको वरस्त्वत्तो मया याचि- २०
तव्यः, त्वं माम् अकृतार्थां मा विसृज। ततो राजा जगाद हे मातः
कथय, मया त्वम् अकृतार्था न विस्रक्ष्यसे। तदानीं सा कथयाञ्चकार, २१
शूनेमीयावीशगा विवाहार्थं तव भ्रात्रेऽदोनीयाय दीयतां। ततो २२
नृपतिः सुलेमान् स्वजननीं प्रतिजगाद, अदोनीयस्य कृते शूनेमीयावी-
शगा कुतस्त्वया याच्यते? स मम ज्येष्ठो भ्राता, अतस्तस्य याजकस्याबी-
याथरस्य च सिरूयायाः पुत्रस्य योयाबस्य च कृते राज्यं याच्यतामिति
वरं। अनन्तरं सुलेमान् नरपतिः परमेश्वरस्य नाम गृहीत्वा शपथं २३
कुर्व्वन् जगाद एतद्वाक्यकथनाद् अदोनीयो हनिष्यते न चेद् ईश्वरो

२४ मह्यम् अमुकं दण्डं ततोऽधिकं वा ददातु । निजप्रतिज्ञानुसारेण माम्
अस्थापयत् मम पितु र्दायूदः सिंहासने च माम् उपावेशयत् मह्यं
वंशमप्यददात् यः परमेश्वरस्तस्यामरतायाः शपथं कृत्वा वदाम्यहम्
२५ अदोनीयोऽद्यैव हनिष्यते । तदानीं राज्ञा सुलेमना प्रेषितो यिहोया-
दस्य सुतो बिनायस्तमाक्रम्य हतवान् ।
२६ 　अनन्तरं नृपति र्याजकम् अवीयाथरं जगाद, त्वमपि बधार्होऽसि,
किन्तु पूर्व्वं मम पितु र्दायूदः सम्मुखे प्रभोः परमेश्वरस्य मञ्जूषाम् अवहस्त्वं
मम पित्रा समं बहुक्लेशं भुक्तवांश्च तत्कारणादहम् अद्य त्वां न हनि-
२७ ष्यामि त्वम् अनाथोतं निजक्षेत्रं याहि । इत्थं सुलेमान् याजकम्
अवीयाथरं परमेश्वरस्य याजनकर्म्मणो दूरीचकार ततः परमेश्वरेण
शीलावेलिवंशमधि यदुक्तं तत् सिद्धिं गतं ।
२८ 　योयाबो यद्यप्यवशालोमस्य पक्षपाती नासीत् तथाप्यदोनीयस्य पक्ष-
पाती बभूव तत्कारणाद् एतस्यां वार्त्तायां तेन श्रुतायामेव स परमे-
२९ श्वरस्यावासं पलाय्य होमवेद्याः शृङ्गा आशिश्रिये । अनन्तरं योयाबः
परमेश्वरस्यावासं पलाय्य वेद्याः समीप आस्ते इति वार्त्तायां केनचिद्
राज्ञे सुलेमने कथितायां स यिहोयादस्य पुत्रं बिनायं प्रहित्यादिदेश
३० त्वं गत्वा तम् आक्रमस्व । ततो बिनायः परमेश्वरस्यावासं गत्वा तं
जगाद राजा वदति त्वं बहिरागच्छेति । ततः स प्रत्युवाच, नहि नहि
मया स्थानेऽस्मिन् मरिष्यते । तदानीं बिनायेन तस्योत्तरं राज्ञे विज्ञा-
पितं योयाब एतादृशं वचो वक्ति स एतादृशम् उत्तरं दत्तवान् ।
३१ तदानीं नृपतिरुक्तवान् तेन यद् उक्तं तदेव त्वया क्रियतां त्वं तत्रैव
स्थाने तं हत्वा श्मशाने स्थापय, तत् कुर्व्वन् योयाबेन पातितस्य निर-
३२ पराधानां शोणितस्य पापं मत्तो मत्पितृवंशाच्च दूरय । परमेश्वरस्तस्य
शोणितपातरूपमपराधं तमेव प्रति वर्त्तयतु यत इस्रायेलः सेनापति-
र्नेरस्य पुत्रोऽवनेरो यिहूदावंशस्य सेनापति र्येथरस्य पुत्रोऽमासाश्चैतौ
यौ द्वौ नरौ तस्मादपि धार्म्मिकावुत्तमौ चास्तां स मम पित्रा दायूदा-
३३ विज्ञातं तावाक्रम्य खड्गेन हतवान् । तयोः शोणितपातजनितोऽपराधो
योयाबं प्रति तस्य वंशं प्रति च सर्व्वदा वर्त्तिष्यते, किन्तु परमेश्वरात्
दायूदं तस्य वंशं परिजनान् सिंहासनञ्च प्रति शान्तिः सर्व्वदा वर्त्तिष्यते।
३४ अनन्तरं यिहोयादस्य सुतो बिनायस्तस्य समीपं गत्वा योयाबम् आक्रम्य
जघान, अपरं प्रान्तरस्थिते तस्य निवेशने तस्य श्मशानम् अकारि ।

अनन्तरं राजा तस्य पदे यिहोयादस्य पुत्रं बिनायं सेनापतिं चकार, ३५
अबीयाथरस्य पदे च सादोकं याजकं चकार।
ततः परं राजा दूतं प्रहित्य शिमियिम् आनाय्य जगाद त्वं यिरूशा- ३६
लमे स्वस्य कृते गेहमेकं निर्म्मापय तत्रैव च निवस तस्मात् स्थानात्
स्थानान्तरं मा गच्छ ; यस्मिन् दिने त्वं बहिर् गत्वा किद्रोणस्रोतःपारं ३७
गमिष्यसि तस्मिन्नेव दिने त्वया मर्त्तव्यमिति निश्चितं जानीहि तव
शोणितपातजनितो ऽपराधस्त्वामेव प्रति वर्त्तिष्यते। ततः शिमियि नर- ३८
पतिं बभाषे वच इदम् उत्तमं मम प्रभु नरपति यद् गदितवान् भवतो
दासस्तदनुसारेणैव करिष्यति। अनन्तरं शिमियि बहुदिनानि यावत्
यिरूशालम उवास। त्रिभ्यो वत्सरेभ्यः परं शिमियेर्द्वौ दासौ पलाय्य ३९
माखाहस्य पुत्र आखीश इतिनाम्नो गातीयनृपतेः समीपं जग्मतुः।
ततस्तव दासौ गात आसाते इति वार्त्ता लोकैः शिमियये कथिता ;
ततः स उत्थाय गर्द्दभं सज्जीकृत्य दासयो र्गवेषणार्थं गातम् आखीशस्य ४०
समीपं जगाम। इत्थं शिमियि गत्वा गातात् निजदासौ समानि-
नाय। अनन्तरं शिमियि यिरूशालमाद् गातमगच्छत् प्रत्यागमच्च ४१
वार्त्तामिमां कश्चित् सुलेमने निवेदयामास ततो राजा दूतं प्रेष्य ४२
शिमियिम् आनाय्य तं जगाद यस्मिन् दिने त्वं बहिर् गत्वा स्थाना-
न्तरं भ्रमिष्यसि तस्मिन्नेव दिने त्वया मर्त्तव्यमिति निश्चितं जानीहि
परमेश्वरस्य नाम्ना त्वामहं शपथं कारयित्वा किमेतां वार्त्तां दृढप्रतिज्ञां
कृत्वा नाकथयं? ततस्त्वया कथितं मया या वाक् श्रुता सैवोत्तमा।
तर्हि त्वं परमेश्वरस्य शपथं तुभ्यं दत्तां ममाज्ञाञ्च कुतो नापालयः? ४३
राजा शिमियिं पुनरवदत् यत् समूहदुष्टत्वं तव मनसि गुप्तं यच्च दुष्टत्वं ४४
मम पितरं दायूदं प्रति त्वयाकारि तत् त्वम् अज्ञासीः। अतः परमे-
श्वरात् त्वदीयदुष्टतायाः फलं त्वयि वर्त्तते। किन्तु राजा सुलेमान् ४५
आशिषं प्राप्स्यति, परमेश्वरस्य सम्मुखे दायूदः सिंहासनमपि सर्व्वदा
स्थिरं स्थास्यति। अनन्तरं नृपतिनाज्ञापितो यिहोयादस्य सुतो बिनायो ४६
गत्वा तमाक्रम्य जघान। इत्थं सुलेमनः करे राज्यं स्थैर्य्यं बभूव।

## ३ तृतीयोऽध्यायः।

१ फिरौणः कन्यायाः सुलेमना विवहनं २ उच्चस्थाने बलिदानं ५ स्वप्ने ईश्वरस्य समीपे प्रार्थनं १६ द्वयोः पुंश्चल्योः बालकार्थं विचारकं मन तस्य प्रकाशितम्।

१ अनन्तरं सुलेमान् नरपति र्मिसरदेशीयराजेन फिरौणा सम-
मैत्रं विधाय फिरौणो दुहितरम् उद्वाह्य यावच्च निजप्रासादं परमे-
श्वरस्य मन्दिरं यिरूशालमस्य चतुर्दिक्स्थं प्राचीरञ्च न निरमात् तावत्
तां दायूद्नगरम् आनिनाय।
२ अपरं तत्काले परमेश्वरस्य नाम्ने किञ्चन मन्दिरं निर्म्मितं नासीत
३ तत्कारणात् लोकै र्भजनस्थानेषु बलिदानम् अकारि। सुलेमान् निज-
तातस्य दायूदो विधीन् समाचरन् परमेश्वरे प्रेम चकारेति सत्यं
४ तथापि भजनस्थानेषु बलिदानान्यकरोत् धूपान् अज्वालयच्च। विशेषतो
नरपति र्बलिदानार्थं गिबियोनम् अगच्छत् यतस्तत्रैव श्रेष्ठं भजनस्थानम्
आसीत्। सुलेमान् तस्यां वेद्यां सहस्रं होमबलीन् उत्ससर्ज।
५ गिबियोने परमेश्वरो रजन्यां स्वप्ने सुलेमने दर्शनं ददौ। तदानीम्
६ ईश्वरस्तं जगाद मया दातव्यं वरं त्वं प्रार्थयस्व। ततः सुलेमान् जगाद
तव दासो मम तातो यो दायूद् सत्यतया धर्म्मेण च तव गोचरे सर-
लान्तःकरणेनाचरणम् अकरोत् तं प्रति त्वं महतीं दयां व्यदधा विशे-
षतस्तं प्रति महानुग्रहमिमम् अकरो यत् तस्य सिंहासनेऽध्योपवेष्टुं
७ पुत्रमेकं दत्तवान्। इदानीं हे मम प्रभो परमेश्वर त्वं मम पितु र्दायूदः
पदे निजदासं मां राज्याभिषिक्तमकरोः किन्त्वहं क्षुद्रबालको बहिर्ग-
८ न्तुम् अन्तः प्रवेष्टुञ्च न वेद्मि। तवायं दासस्त्वयाभिरुचितानां त्वदीयानां
येषां लोकानां मध्ये विद्यते तेऽतीवबाहुल्याद् अपरिमेया अगण्याश्च।
९ अतस्त्वदीयानामेतेषां लोकानां विचाराय भद्राभद्रयो र्विशेषज्ञानार्थं
तव दासाय सुबुद्ध्यन्तःकरणं देहि नो चेत् त्वदीयानाम् एतावतां
१० लोकानां विचारं कर्त्तुं केन शक्यते? तदानीं परमेश्वरः सुलेमन एता-
११ दृश्या प्रार्थनया सन्तुष्टः सन् बभाषे, त्वं केवलम् एतत् प्रार्थयथाः,
दीर्घमायु र्न प्रार्थयथाः स्वार्थं द्रविणञ्च न प्रार्थयथा निजरिपूणां
प्राणांश्च न प्रार्थयथाः किन्तु विचाराय स्वार्थं केवलं ज्ञानं प्रार्थयथाः
१२ पश्य तन्निमित्तम् अहं त्वद्वाक्यानुसारेणैवाकार्षं। पश्य तुभ्यम् एतादृशं
ज्ञानवद् बुद्धिमच्चान्तःकरणम् अदां येन तव पूर्व्वं तव तुल्यः कोऽपि
१३ नाभवत् परतोपि तव तुल्यः कोपि कदापि न भविष्यति। तदन्यत् त्वया
यद्धनं सम्मानञ्च न प्रार्थि तदपि मया तुभ्यं तादृगदायि येन राज-
१४ वृन्दानां मध्ये यावज्जीवनं तव समः कोपि न भविष्यति। तव तातेन
दायूदा यादृगाचरणं कृतं तादृक् त्वया यदि ममाज्ञा विधींश्च पाल-

यतः मम मार्गेष्वाचरणं क्रियते तर्हि मया त्वदीयायुर्वर्धयिष्यते। अन- १५
न्तरं जाग्रता सुलेमना एष स्वप्न एवेति बुबुधे। अनन्तरं स यिरूशालमं
गत्वा परमेश्वरस्य नियममञ्जूषायाः सम्मुखे तिष्ठन् होमबलीन् मङ्ग-
लार्थकबलींश्च समुत्ससर्ज स्वकीयानां सर्व्वेषां दासानां कृते भोज्यमेकं
चकार च।

तस्मिन् काले द्वे पुंश्चल्यौ नृपतेः समीपम् आगत्य तस्य सम्मुखे तस्थतुः। १६
तयोरेका नारी निवेदयामास हे मम प्रभो, अहमेषा चावां स्त्रियौ १७
द्वे एकस्मिन् निवेशने तिष्ठावः। अपरं समममेतया गेहे तिष्ठन्त्या
मया सन्तानः प्रासावि। मम प्रसवतः परं तृतीयदिवस एतयापि १८
प्रासावि तदानीम् आवां द्वे स्त्रियौ विना गृहे नान्यः कश्चिद् आसीत्।
अनन्तरं रजन्याम् एतस्याः स्वबालकोपरि शयनाद् एतस्या बालको १९
मृतः। ततः सा मध्यरात्रावुत्थाय निद्रिताया मम समीपात् मम २०
बालकं गृहीत्वा निजवक्षःस्थलेऽशाययत् निजं मृतबालकञ्च मम
वक्षःस्थलेऽशाययत्। प्रातःकाले निजबालकं दुग्धं पाययितुं समुत्थित- २१
या मया स मृत इति दृष्टं किन्तु स मया प्रसूतो बालको नहीति
प्रात र्विविच्य दृष्टं। अपरं द्वितीया नारी जगाद तन्नहि जीवत्पुत्रो २२
मम मृतपुत्रस्तव। ततः प्रथमा कथितवती नहि नहि मृतपुत्र-
स्तव जीवत्पुत्रो मम, इत्थं द्वे नार्य्यौ राज्ञः समीपे निवेदयामा-
सतुः। महीपतिरवदद् एका योषित् कथयति जीवत्पुत्रो मम मृत- २३
पुत्रस्तवेति, तथैवान्या नारी कथयति नहि नहि जीवत्पुत्रो मम मृतः
पुत्रस्तवेति। अनन्तरं नरपतिराज्ञापयत्, मम समीपं खड्गमेकम् २४
आनयत। ततो राज्ञः समीपं खड्गे समानीते राजा जगाद, इमं २५
जीवन्तं बालकं द्विखण्डीकृत्यार्द्धम् एकस्यै दत्तान्यस्यै चार्द्धं दत्त।
ततो यस्याः पुत्रो जीवन् आसीत् सा योषित् निजपुत्रमधि २६
मर्म्मभेदिनीं पीडां गत्वा राजानं विनयाञ्चक्रे हे मम प्रभो जीवन्
बालकोऽस्यै दीयतां बालको मा हन्यतां। किन्त्वन्या योषित् कथया-
मास बालक एष मम न भवतु तवापि न भवतु युष्माभिरेष
द्विखण्डीक्रियतां। तदा नरपतिराज्ञापयत् जीवन् बालकोऽस्यै २७
दीयतां स युष्माभि र्न हन्तव्यो यत एषैव तस्य माता। राजा विचारस्य २८
यम् इमं सिद्धान्तम् अकरोत्, तं निशम्य सर्व्व इस्रायेल्लोका राजानं
समाभियन्त यतो न्यायं कर्त्तुम् ईश्वरदत्तं ज्ञानं तस्यास्तीति ते बुबुधिरे।

# ४ चतुर्थोऽध्यायः।

१ सुलेमनः प्रधानाधिपतीनां नामानि ७ द्रव्यासामग्रीयोजनकानां द्वादशानाम् अधिपतीनां नामानि २० निष्कण्टकं राजत्वकरणकथनं २१ प्रात्यहिकभक्ष्याणां परिमाणकथनं २६ तस्य वाहनाश्वानां संख्या २९ तस्य ज्ञानस्य कथनञ्च।

१ इत्थं सुलेमान् सर्व्वेषाम् इस्रायेलीयानाम् उपरि राजत्वं चकार।
२ तस्य प्रधानाधिपतीनां नामानि। याजकस्य सादोकस्य तनयोऽसरियः
३ सिरायस्य तनयाविलीहोरफाहीयौ च लेखका आसन्। अहीलूदस्य
४ तनयो यिहोशाफटः पुरावृत्तलेखक आसीत्। यिहोयादस्य पुत्रो
५ बिनायः सेनापतिरासीत् सादोकाबीयाथरौ महायाजकावास्तां। नाथनस्य पुत्रोऽसरियो प्रदेशाधिपतीनाम् अध्यक्ष आसीत् नाथनस्य तनयः
६ साबूदः सभासत् नरपतेः सुहृच्चासीत्। अहीसारो राजगृहाधिपतिरासीत् अब्दस्य तनयोऽदोनीरामः कारुश्रेणीनाम् अधिपतिरासीत्।
७ अपरं सर्व्वेषाम् इस्रायेलीयानाम् उपरि सुलेमनो द्वादश प्रदेशाध्यक्षा आसन् ते राजानं राजनिवेशनस्थांश्चाभोजयन्। तेषाम् एकैको जनो
८ वत्सरस्य मास एकैकस्मिन् द्रव्यायोजनम् अकुर्व्वत्। तेषां नामानि, इफ्
९ यिमपर्व्वते हूरस्य तनयः। अपरं माकसे शालवीमे बैतशेमश एलोने
१० बैथानने च देकरस्य तनयः। अपरम् अरुब्बोते हेषदस्य तनयः सोखो
११ हेफरप्रदेशे च तस्याधिकारित्वमासीत्। अपरं दोरस्य सकलदेशेऽबीनादबस्य तनयः स सुलेमनः कन्यां टाफतां व्यवहत्। अपरं तानके मगिद्दो
१२ सर्त्तनस्य समीपे यिष्रियेलस्याधो बैतशानमारभ्याबेलमिहोलां यक्मियामस्य पारञ्च यावत् सर्व्वबैतशानेऽहीलूदीयतनयो यो बाना तस्याधिकार
१३ आसीत्। अपरं रामोतगिलियदे गेबरस्य तनयः, मिनशेः पुत्रस्य यायीरस्य गिलियदस्था ग्रामा बाशनस्थोऽर्गोबाख्यः प्रदेशश्च साकल्यतः प्राचीरवेष्टितानि पित्तलीयार्गलयुक्तानि षष्टि र्बृहन्ति नगराणि तस्याधीना-
१४ न्यासन्। अपरं महनयिम इद्दोः पुत्रोऽहीनादबः। नप्तालावहीमासः
१६ सोऽपि सुलेमनो दुहितरं बाशिमतां व्यवहत्। अपरम् आशेरे बालोते
१७ च हूशयस्य तनयो बानाः। इषाखरे पारूहस्य पुत्रो यिहोशाफटः।
१८ अपरं बिन्यामीन एलाः पुत्रः शिमियिः। गिलियददेशेऽर्थत इमोरीयसीहोनाख्यस्य नृपते र्बाशनदेशीयराजस्योगस्य च देशे ऊरेः पुत्रो गेबरश्च। एकैकस्मिन् प्रदेश एकैकोऽध्यक्षो न्यवसत्।
२० तदानीं यिहूदावंशा इस्रायेलवंशाश्च वृद्धिं प्राप्य सागरस्य तटस्थानां

सिकतानामिवागण्या भोजनपानानन्दैः प्रफुल्लाश्च बभूवुः। अपरं २१
फरातनदम् आरभ्य पिलेष्टीयानां जनपदं मिसरस्य सीमानञ्च यावत्
सकलराष्ट्रीयाणाम् उपरि सुलेमना राजत्वमक्रियत तेन तैः सुलेमनो
यावज्जीवनं तस्मायुपायनं व्यतारि तस्य परिचर्य्या चाकारि।

सुलेमनो नित्यभोजनीयानि द्रव्याणि। त्रिंशद्भारपरिमितानि सूक्ष्म- २२
गोधूमचूर्णानि षष्टिभारपरिमितानि गोधूमचूर्णानि। अपरं हरिण- २३
मृगकृष्णसारपुष्टपक्षिभिः सहिता दश पुष्टगावः प्रान्तराद् आनीता
विंशति गावः शतं मेषाश्च सर्व्वाण्येतानि तस्यैकदिनस्य भोज्यान्यासन्।
अपरं तिप्सहम् आरभ्य यावद् असां फराताख्यनदस्य पश्चिमदिशि २४
स्थितानां सर्व्वेषां नीवृतां नृपतीनाञ्चोपरि स राजत्वं चकार। अपरं
तस्य चतुर्दिक्षु निष्कण्टकत्वात् सुलेमनो यावज्जीवनं दानमारभ्य वेर्शेवां २५
यावत् सर्व्वे यिहूदावंशा इस्रायेलीयवंशाश्च निजनिजद्राक्षालतायाः
उडुम्बरतरोश्च छायासु निर्व्विघ्नं न्यूषुः।

सुलेमनः स्यन्दनार्थं चत्वारिंशद् हयशाला द्वादशसहस्राणि हया- २६
रोहिणश्चासन्। अपरं सुलेमनो राज्ञस्तदीयभोजनासने भोजनकारि- २७
णाञ्च निमित्तं देशाध्यक्षाणाम् एकैको जन एकैकस्मिन् मासे राज्ञो भक्ष्य-
द्रव्याणाम् आयोजनं कुर्व्वन् सुलेमानं राजानम् अभोजयत् कस्यापि
वस्तुनो न्यूनं नाकरोत्। तदन्यद् राजा यस्मिन् स्थाने न्यवसत् तत्र २८
स्थाने हयादीनां पशूनामपि कृते निदेशानुसारेण तेषाम् एकैकेन यवा-
स्तृणानि च समचीयन्त।

अपरम् ईश्वरः सुलेमने सागरतटस्थसिकतेवापरिमितं ज्ञानं मनोवि- २९
स्तीर्णत्वञ्च ददौ। पूर्व्वदेशीयलोकेभ्यो मिस्रीयलोकेभ्योऽपि सुलेमनोऽधिकं ३०
ज्ञानं बभूव। इस्राहीय एथनो माहोलस्य सुता हेमनः कल्कोलो ३१
दर्द्दश्चैतेभ्योऽन्येभ्यः सर्व्वनरेभ्यश्च स ज्ञानवान् बभूव ततश्चतुर्दिक्षु सकल-
देशेषु तस्य सुख्यातिर्व्यानशे। स त्रीणि सहस्राणि श्लोकान् कथयामास ३२
तत्कृतानि गीतानि च पञ्चाधिकसहस्रमासन्। स लिवानोने जातम् ३३
एरसतरुमारभ्य प्राचीरे जातम् एषोवतृणं यावत् सर्व्ववृक्षान् वर्णया-
ञ्चक्रे तद्वत् पशुपक्ष्युरोगमत्स्यानामपि वर्णनं चक्रे। अपरं पृथिवीस्थिता ३४
ये ये राजानः सुलेमनो ज्ञानस्य वार्त्ताम् अशृण्वन् तेषां राज्येभ्यो नाना-
जातीयमनुजाः सुलेमनो ज्ञानवाक्यानि श्रोतुम् आजग्मुः।

# ५ पञ्चमोऽध्यायः ।

१ काष्ठानां कृते हीरमस्य समीपं सुलेमनो लोकप्रेषणं ७ हीरमस्य काष्ठप्रेषणं १० तयोः परस्परं नियमोपकारकरणं १३ सुलेमनः कार्य्यकां संख्या च ।

१ स्वतातस्य विनिमयेन सुलेमान् लोकै राज्येऽभ्यषेचि कथामिमां निशम्य
सोरीयराजो हीरमः सुलेमनः समीपं निजदासान् प्रेषयामास यतो
२ यावज्जीवनं दायूदो हीरमस्य च प्रीतिरासीत् । ततः सुलेमान्
३ हीरमाय वाचमिमां कथयितुं लोकान् प्रेषयामास यावत् परमेश्वरो
मम तातस्य दायूदो रिपून् तस्य वशीभूतान् नाकरोत् तावत् तस्य
चतुर्दिक्षु यद् युद्धमभवत् तत्कारणात् स निजप्रभोः परमेश्वरस्य नाम्ने
४ भवनं निर्म्मातुं नाशक्नोदिति त्वं वेत्सि । किन्त्वधुना मम प्रभुः पर-
मेश्वरश्चतुर्दिग्भ्यो मह्यं विश्रामं व्यतरत् मम विपक्षः कोपि न विद्यते
५ विपद्घटना च काचन न विद्यते । अतः पश्य मया तव पदे तव यः
सुतः सिंहासन उपवेशयिष्यते स मम नाम्ने मन्दिरमेकं निर्म्माप-
यिष्यति यामिमां वाचं परमेश्वरो मम जनकाय दायूदे प्रत्यश्रृणोत्
तदनुसारेण निजप्रभोः परमेश्वरस्य नाम्ने भवनमेकं निर्म्मातुं मया
६ चिन्त्यते । इदानीं मत्कृते लिवानोनं गत्वा एरसकाष्ठानि छेत्तुं
त्वं निजमनुजान् समादिश मदीयदासाश्च त्वदीयदासानां सङ्गिनो
भविष्यन्ति [illegible]था यथा निर्णेष्यते तदनुसारेण मया त्वदीयदासेभ्यो
वेतनं वितारिष्यते, यतः काष्ठच्छेदने सीदोनीयानामिव विज्ञो-
ऽस्माकं मध्ये कश्चिदपि न विद्यत इति त्वं वेत्सि ।
७ तदानीं हीरमः सुलेमनो वचो निशम्य भृशमानन्दितः सन् व्याजहार
महत्या एतस्या जातेरुपरि राजत्वं कर्त्तुं दायूदे ज्ञानिनं तनयं दत्तवान्
८ यः परमेश्वरः सोऽद्य धन्यः । अनन्तरं हीरमः सुलेमनः समीपं दूतं
प्रहित्य जगाद त्वं यत्कृते मम समीपं लोकं प्रैषयस्तन्मया बुद्धम्
९ एरसदेवदार्व्वणां काष्ठान्यधि तव वाञ्छासिद्धिं करिष्यामि । मम दासै
र्लिवानोनात् तेषु सागरतटं समानीतेषु मयोडुपानि बद्ध्वा सागरेण
त्वया निर्द्दिष्टं स्थानं प्रेषयिष्यन्ते तत्र स्थाने विमोचयिष्यन्ते च ततस्त्वं
तानि काष्ठानि ग्रहीष्यसि । अपरं मम परिजनान् पालयितुं मदीय-
वाञ्छासिद्धिं करिष्यसि ।
१० इत्थं सुलेमनो यथाभिलाषं तथा हीरम एरसकाष्ठानि देवदारु-

काष्ठानि च विततार । अपरं सुलेमान् हीरमस्य परिजनानां भक्ष्य- ११
निमित्तं तस्मै विंशतिसहस्रभारपरिमितान् गोधूमान् विंशतिभार-
परिमितानि निर्म्मलतैलानि च विश्राणयामास । इत्थं सुलेमान् प्रति-
वत्सरं हीरमाय विश्राणयामास । अपरं परमेश्वरो निजप्रतिज्ञानु- १२
सारेण सुलेमने ज्ञानं विततार; ततः परं हीरमसुलेमनौ सन्धिं
नियमञ्च चक्रतुः ।

अनन्तरं राजा सुलेमान् इस्रायेल्वंशस्य मध्याद् एकां कारनिवहं १३
अर्थात् त्रिंशत्सहस्राणि कारून् संजग्राह । स मासिकपर्य्यायानुसारेण १४
तेषां दशसहस्राणि जनान् लिवानोनं प्रेषयामास ततस्ते मासैकं यावत्
लिवानोने तस्थुः द्वौ मासौ च निजनिवेशनेषु तस्थुः; अदोनीरामस्तस्य
निवहस्याधिपतिरासीत् । अपरं सुलेमनः सप्ततिः सहस्राणि भार- १५
वाहका अशीतिः सहस्राणि छेदकाश्च पर्व्वत आसन् । तदन्याः कर्म्म- १६
कृतां मनुजानां त्रीणि सहस्राणि त्रीणि शतानि च प्रमुख्याः कर्म्माध्यक्षा
आसन् । अपरं राज्ञ आज्ञानुसारेण ते तक्षितपाषाणैर्मन्दिरस्य १७
भित्तिमूलं कर्त्तुं बहुमूल्यान् महापाषाणान् चख्नुः । अनन्तरं सुलेमनो १८
हीरमस्य च स्थपतयः पर्व्वतीया लोकाश्च तान् चिच्छिदुः, इत्थं मन्दिर-
निर्म्माणयोग्याः काष्ठपाषाणास्तैरासादिताः ।

---

## ६ षष्ठोऽध्यायः ।

१ मन्दिरस्य निर्म्माणारम्भः ११ तदर्थं परमेश्वरस्य प्रतिज्ञा १४ मन्दिरस्य प्रकोष्ठादीनां कथनं २३ किरूवयोः कथनं ३१ द्वारयोः कथनं ३६ प्राङ्गणस्य कथनं निर्म्माणसमयस्य कथनञ्च ।

अनन्तरम् इस्रायेल्वंशस्य मिसरदेशाद् आगमनात् परं साशीतिक १
चतुःशतवत्सरेषु गतेष्विस्रायेल उपरि सुलेमनो राजत्वस्य चतुर्थ-
वत्सरस्य सिवनामके द्वितीयमासे सुलेमान् परमेश्वराय मन्दिरं
निर्म्मातुम् आरेभे । सुलेमान् राजा परमेश्वराय यन्मन्दिरं निर्म्ममे २
तद् दैर्घ्ये षष्टिहस्तप्रमाणं प्रस्थे विंशतिहस्तप्रमाणम् उच्चत्वे च त्रिंश-
द्धस्तप्रमाणं । अपरं मन्दिरस्याग्रेऽलिन्दं एकस्तेन निर्म्ममे तस्य दैर्घ्यं ३
मन्दिरस्य प्रस्थवद् विंशतिहस्तपरिमाणं प्रस्थञ्च मन्दिरस्याग्रे दशहस्त-
परिमाणं । अपरं मन्दिरस्य निमित्तम् ऊर्द्धस्थितानि सङ्कोचितानि ४
वातायनानि निर्म्ममे । अपरं मन्दिरस्य चतुर्दिक्षु कोष्ठानां श्रेणीं ५

चकार। अर्थात् चतुर्दिक्षु मन्दिरस्येश्वरीयवाक्यस्थानस्य च भित्तेर्गात्रे
६ कोष्ठानां श्रेणीं चकार, इत्थं चतुर्दिक्षु कोष्ठानि निर्म्ममे । अधःस्था
कोष्ठश्रेणी पञ्चहस्तप्रस्था मध्यमा कोष्ठश्रेणी षड्हस्तप्रस्था तृतीया
कोष्ठश्रेणी च सप्तहस्तप्रस्थासीत यतः काष्ठानि यद् भित्तेर्मध्ये बन्ध-
नीयानि न भवेयुस्तदर्थं स चतुर्दिक्षु भित्तिं सोपानाकारां कृतवान् ।
७ अपरं प्रस्तराकरात् लब्धैः खनितैः प्रस्तरै र्मन्दिरं निर्म्ममे, इति हेतो
र्मन्दिरनिर्म्माणकालेऽयोघनस्य कुठारस्य वा कस्यचित् लौहास्त्रस्य शब्दो
८ नाश्रूयत। अपरं मध्यमायाः कोष्ठश्रेण्या द्वारं मन्दिरस्य दक्षिणदिश्या-
सीत् ततो वक्रसोपानै र्मध्यमश्रेणीं मध्यमश्रेणीतश्च तृतीया श्रेणीं चाग-
९ म्यत । इत्थं स मन्दिरनिर्म्माणं समाप्तवान् अपरम् एरसीयै र्गृहकाष्ठैः
१० पत्रैश्च मन्दिरम् आच्छादयामास । अपरं कृत्स्नमन्दिरस्योपरि पञ्चह-
स्तोच्चां कोष्ठश्रेणीं चकार मन्दिरं हस्तद्विरेरसकाष्ठै र्दृढयाञ्चकार च ।
११　अनन्तरं परमेश्वरस्य वचनमिदं सुलेमनः समीपमुपतस्थौ त्वं मन्दिर-
१२ मिमं निर्म्मासि किन्तु यदि मम विधीन् आचरसि मदीयादेशानुसा-
रात् कर्म्म करोषि ममाज्ञाः पालयसि च तर्हि मया तव तातय दायूदे
१३ यत् प्रतिश्रुतं तत् त्वां प्रति साधयिष्यते । अहम् इस्रायेल्वंशमध्ये
वत्स्यामि निजलोकान् इस्रायेलीयवंशान् न त्यक्ष्यामि च ।
१४　अनन्तरं सुलेमान् मन्दिरस्य निर्म्माणं समापयामास। स गृह-
१५ स्याधःस्थानमारभ्य गृहपृष्ठं यावद् एरसकाष्ठीयपत्रैरभ्यन्तरे गृहस्य
गात्राण्याच्छादयामास गृहस्य मध्यदेशञ्च देवदारुकाष्ठीयपत्रैराच्छा-
१६ दितवान्। तद्वद् गृहस्य विंशतिहस्तपरिमितं पश्चाद्भागम् अधःस्थानम्
आरभ्य पृष्ठं यावद् एरसकाष्ठीयपत्रैराच्छादयामास । स ईश्वरीय-
वाक्यस्थानार्थम् अर्थात् महापवित्रस्थानार्थं तम् अन्तरागारम् आसा-
१७ दयामास । तस्याग्रस्थितं चत्वारिंशद्धस्तपरिमाणं यद् गेहं तदेव
१८ मन्दिरं बभूव । गृहस्य मध्यस्थितानि तान्येरसकाष्ठानि कलिकाभि
र्विकसितैः पुष्पैश्च चित्रितान्यासन् कृत्स्नं गेहम् एरसकाष्ठमयं बभूव,
१९ किञ्चिन्मात्रः प्रस्तरो न दृष्टो बभूव । अपरम् ईश्वरस्य नियम-
मञ्जूषायाः स्थापनार्थं मन्दिरस्याभ्यन्तर ईश्वरस्य वाक्यस्थानं निर्म्ममे ।
२० ईश्वरस्य वाक्यस्थानस्य दैर्घ्यम् अग्रभागे विंशतिहस्तप्रमाणं प्रस्थं विंश-
तिहस्तप्रमाणम् उच्चत्वञ्च विंशतिहस्तप्रमाणं कृत्वा निर्म्मलसुवर्णेन तत्
२१ खचितवान् एरसकाष्ठीयधूपवेदीमपि तथैव खचितवान् । अपरं

सुलेमान् अभ्यन्तरे मन्दिरस्य कुड्यं निर्म्मलस्वर्णैः खचितवान् अपरम्
ईश्वरीयवाक्यस्थानस्याग्रे स्वर्णशृङ्खलैरावरणमेकं चकार सुवर्णेन च तत्
खचितवान्। यावत् समाप्ति र्न जाता तावत् सकलमन्दिरं सुवर्णेन २२
खचितवान् अपरम् ईश्वरीयवाक्यस्थानस्य निकटस्थां धूपवेदीमपि
सुवर्णेन खचितवान्।

अपरम् ईश्वरीयवाक्यस्थाने जितकाष्ठैः दशदशहस्तप्रमाणौ द्वौ किरूवौ २३
निर्म्ममे। तयोः प्रथमस्य किरूवस्य पक्षमेकं पञ्चहस्तम् अन्यत् पक्षमपि २४
पञ्चहस्तं चकार, तत एकपक्षस्याग्रभागाद् अन्यपक्षस्याग्रभागं यावद्
दशहस्ता बभूवुः। अपरं द्वितीयं किरूवं दशहस्तं, द्वयोः किरूवयोः २५
समं परिमाणं सममाकारञ्च चकार। एकः किरूवो यथा दशह- २६
स्तोच्चोऽन्यकिरूवोऽपि तथैव दशहस्तोच्च आसीत्। अनन्तरं स तौ २७
किरूवौ गर्भागारे स्थापयामास अपरं किरूवावित्थं विस्तीर्णपक्षौ
निर्म्मितौ यद् एकस्य पक्ष एकां भित्तिम् अन्यस्य पक्षश्चेतरां भित्तिं
पस्पर्श अपरं गृहमध्यस्थितौ तयोः पक्षौ परस्परं पस्पृशतुः। अनन्तरं २८
स तौ किरूवौ सुवर्णैः खचितवान्। अपरं मन्दिरस्य सकलकुड्यानि २९
बहिरभ्यन्तरे च चतुर्दिक्षु किरूवाणां तालवृक्षाणां विकसितपुष्पाणाञ्च
खनिताकृतिभिः शोभयाञ्चकार; अपरं गृहस्य मध्यं बहिरभ्यन्तरे च ३०
सुवर्णेन खचितं चकार।

अपरम् ईश्वरीयवाक्यस्थानस्य प्रवेशद्वारार्थं जितकाष्ठीयं कवाट- ३१
द्वयं निर्म्ममे समासापार्श्वकाष्ठद्वयं तद् द्वारं कुड्यस्य पञ्चमो भागः। ३२
तस्मिन् जितकाष्ठमये कवाटद्वये किरूवाणां तालवृक्षाणां विकसित-
पुष्पाणाञ्चाकृतीः खनित्वा तत् सुवर्णखचितं चकार विशेषतस्ताः किरू-
वाकृतीस्तालवृक्षाकृतीश्च स्वर्णेन खचिताञ्चकार। अपरं मन्दिरस्य ३३
प्रवेशद्वारार्थं कुड्यस्य चतुर्थभागपरिमाणं जितकाष्ठीयं पार्श्वकाष्ठद्वयं
चकार। अपरं देवदारुकाष्ठे द्वे कवाटे चकार तयो द्वारयोरेकस्य ३४
कवाटद्वयं यादृक् कज्जायां खेलितम् अन्यस्य कवाटद्वयमपि तादृक्
कज्जायां खेलितं। अपरं तस्योपरि किरूवान् तालवृक्षान् विकसित- ३५
पुष्पाणि च खनित्वा तत्खनितवस्तुनि सुवर्णम् आरोप्य खचितवान्।

अनन्तरं स खनितप्रस्तराणां पङ्क्तित्रयेणैरसोयानां स्थूलकाष्ठानां ३६
पंक्त्यैकया चाभ्यन्तरप्राङ्गणं निर्म्ममे। चतुर्थवत्सरस्य सिवनामके मासे ३७
परमेश्वरस्य मन्दिरस्य भित्तिमूलं निर्म्ममे। ततः परम् एकादशवत्स- ३८

स्य बूलनामके ऽष्टममासे निरूपिताकारानुसारेण सकलैरंशै र्मन्दिर-
निर्म्माणं समापितम् अतस्तस्य निर्म्माणं सप्तवत्सरान् व्यापत् ।

---

# ७ सप्तमोऽध्यायः ।

१ सुलेमनो राजगृहनिर्म्माणकथनं २ लिवानोनारण्यगृहस्य निजभार्य्याया गृहस्य च निर्म्माणकथनं १३ हूरमस्य कथनं १५ तस्य स्तम्भद्वयनिर्म्माणकथनं २३ पित्तलीयसमुद्रपात्रस्य निर्म्माणकथनं २७ सप्ताधारस्तम्भस्य कथनं ३८ प्रक्षालनपात्राणां कथनं ४० अन्यपात्राणां कथनञ्च ।

१ अनन्तरं सुलेमना त्रयोदशवत्सरान् व्याप्य निजनिवेशनं निर्म्मा-
पयता कृत्स्ननिवेशनस्य निर्म्माणं समाप्तं ।
२ अपरं स लिवानोनारण्यनाम निवेशनं निर्म्ममे तस्य दीर्घत्वं शत-
हस्तपरिमितं प्रस्थत्वं पञ्चाशद्धस्तपरिमितम् उच्चत्वञ्च त्रिंशद्धस्तपरि-
मितम् आसीत् । तत् चतसृणाम् एरसकाष्ठीयस्तम्भानां श्रेणीनाम्
उपरि स्थापितं तेषां स्तम्भानाम् उपर्य्येरसीयगृहकाष्ठानि निदधिरे ।
३ एकैकस्यां श्रेण्यां पञ्चदश साकल्येन पञ्चचत्वारिंशत् स्तम्भा आसन्
तेषाम् उपरि कोष्ठानि स्थापितानि तदुपर्य्येरसकाष्ठै र्गृहपृष्ठं निर्म्ममे ।
४ अपरं गृहकाष्ठानां तिसृषु श्रेणीषु सतीषु तिसृणां वातायनानि
५ परस्परं सम्मुखानि बभूवुः । अपरं द्वाराणि तदीयकाष्ठवेष्टनानि च
सर्व्वाणि चतुष्कोणानि बभूवुः, अपरं तिसृणां श्रेणीनां वातायनानि
६ परस्परं सम्मुखानि बभूवुः । अपरं स स्तम्भालिन्दमेकं चकार
तस्य दीर्घत्वं पञ्चाशद्धस्तपरिमाणं प्रस्थत्वं त्रिंशद्धस्तपरिमाणं तस्याग्रे
७ द्वितीयम् अलिन्दं तदग्रे च देहलीं चकार । अपरं यस्मिन् सिंहा-
सनालिन्दे विचारमकरोत् तं विचारालिन्दं निर्म्ममे मध्यदेशस्यैकां
दिशम् आरभ्यापरां दिशं यावत् तम् एरसकाष्ठैराच्छादयामास च ।
८ अपरं तस्य वासगृहम् अलिन्दस्य पश्चात् प्राङ्गणे तादृक् निर्म्मितम्
अपरं सुलेमान् फिरौणो यां दुहितरम् ऊढवान् तस्याः कृतेऽपि
९ तदलिन्दवद् गृहं निर्म्ममे । एतानि भित्तिमूलमारभ्यालिं यावद्
बहिर्द्दिशश्चारभ्य महाप्राङ्गणं यावत् तक्षितपाषाणवद् करपत्त्रै र्बहि-
१० रभ्यन्तरे च कर्त्तितया तक्षितै र्बहुमूल्यैः पाषाणैस्तेन निर्म्ममिरे । अपरं
भित्तिमूलं बहुमूल्यै र्वृहत्पाषाणैरर्थाद् दशहस्तपरिमितैरष्टहस्तप-
११ रिमितैश्च पाषाणै र्निर्म्ममे । तदुपरि तक्षितपाषाणवद् एरसो बहु-

मूल्यान् पाषाणान् एरसकाष्ठानि चारोपयामास। अपरं महाप्राङ्गणस्य १२
परमेश्वरीयमन्दिरस्य मध्यप्राङ्गणस्य निजगृहस्यालिन्दस्य च चतुर्दिक्षु
तच्छितपाषाणानां तिस्रः श्रेणीरेरसकाष्ठानाञ्चैकां श्रेणीं चकार।

अनन्तरं सुलेमान् भूपति दूतं प्रहित्य सोरतो हूरमम् आनायित- १३
वान्। तस्य हूरमस्य माता नप्तालिवंशीयैका विधवा तस्य पिता च १४
सोरनगरीयः कश्चित् कांस्यकार आसीत्। स पित्तलस्य समस्तकर्म्मसु
सुज्ञानी बुद्धिमान् निपुणश्चासीत्। स एव सुलेमनो नरपतेः समीपम्
आगत्य तस्य सर्व्वाणि शिल्पकार्य्याणि चकार। स पित्तलस्य द्वौ स्तम्भौ १५
निर्म्ममे तयोः स्तम्भयोरेकैकस्योच्चत्वम् अष्टादशहस्तपरिमितं, द्वादशहस्त-
परिमितं सूत्रञ्चैकैकं स्तम्भम् अवेष्टत। अपरं द्वयोः स्तम्भयो र्मस्तकयोरा- १६
रोपणार्थं स सिक्तौ पित्तलीयौ द्वौ मूर्द्धानौ चकार तयोरेकस्य मूर्द्ध उच्चत्वं
पञ्चहस्तपरिमितम् अन्यस्य मूर्द्ध उच्चत्वमपि पञ्चहस्तपरिमितं चकार।
अपरं स्तम्भोपरिस्थयो र्मूर्द्ध्नोरारोपणार्थं शृङ्खलवत् क्रियया गुणिताभी १७
रज्जूभि र्जालानि शिल्पकार्य्याणि निर्म्ममे। स तयोरेकस्य मूर्द्ध्नः कृते सप्त
जालान्यन्यस्य मूर्द्ध्नः कृतेऽपि सप्त जालानि चकार। अपरं स तौ स्तम्भौ १८
निर्म्माय तदुपरिस्थयो र्मूर्द्ध्नोराच्छादकजालवत्कार्य्यस्यैकस्य वेष्टनार्थं
दाडिम्बानां श्रेणीद्वयं चकार द्वितीयस्य मूर्द्ध्नः कृतेऽपि तादृक् चकार।
अपरम् अलिन्दे स्तम्भयोरुपरि स्थितौ मूर्द्धानौ चतुर्हस्तपरिमितशो- १९
शनपुष्पाकृती आस्तां। जालवत्कार्य्यस्याभ्यन्तरे स्थितस्य स्थूलदेशस्य
समीप ऊर्द्ध्वेऽपि तयोः स्तम्भयोरुपरि मूर्द्धानावास्तां। द्वितीयो मूर्द्धा
च दाडिम्बानां शतद्वयेन वेष्टितः। अनन्तरं स तौ स्तम्भौ मन्दिर- २१
स्यालिन्दे स्थापयामास। तयोरेकं स्तम्भं दक्षिणदिशि स्थापयित्वा तस्य
नाम याखीनः (स्थिरकारक इति) चकार द्वितीयञ्च स्तम्भं वाम-
दिशि स्थापयित्वा तस्य नाम बोयसो (बलीति) चकार। अनयो २२
र्द्वयोः स्तम्भयोरुपरि शोशनपुष्पाकृति शिल्पकार्य्यम् आसीत्। इत्थं
स्तम्भनिर्म्माणं समाप्तं।

अनन्तरं स सिक्तधातुना गोलाकारं सागररूपं पात्रं चकार। २३
एकम् अधरम् आरभ्य द्वितीयम् अधरं यावत् तस्य परिसरो दशहस्त-
परिमितस्तस्योच्चत्वं पञ्चहस्तपरिमितञ्च त्रिंशद्धस्तपरिमितं सूत्रञ्च तद्
अवेष्टत। अपरं तस्य चतुर्दिक्षु कर्णस्याधः प्रतिहस्तं दश दश गोला- २४
कारा आसन् ते तं सागरम् अवेष्टन्त। पात्रसेचनसमये ते श्रेणीद्वये

२५ ऽसिच्यन्त । तत् समुद्ररूपं पात्रं द्वादशानां गवाम् उपरि स्थापितं
तासां तिस्र उत्तरमुख्यस्तिस्रः पश्चिममुख्यस्तिस्रो दक्षिणमुख्यस्ति-
स्रश्च पूर्व्वमुख्यो बभूवुः । अपरं सागरपात्रं तासाम् उपरि तस्थौ
२६ तासां पश्चाद्भागा अन्तरे तस्थिरे । तत्पात्रस्य स्थूलत्वं चतुरङ्गुलपरिमाणं
तस्य कर्णः कंसवत् शोशनपुष्पाकारो द्वे सहस्रे बाताख्यपरिमाणानि च
तेन धृतानि ।

२७ अनन्तरं स चतुर्हस्तदीर्घाणि चतुर्हस्तप्रस्थानि त्रिहस्तोच्चानि पित्त-
२८ लमयानि दश पीठानि निर्म्ममे । तेषां निर्म्माणमित्थमभूत् तेषां
२९ क्षेत्राण्यासन् तानि क्षेत्राणि च शिराभि र्वेष्टितानि । अपरं शिरामध्य-
स्थितानां क्षेत्राणामुपरि सिंहगोकिरूबाकृतयश्चित्रिताः शिराणाञ्चो-
परिभागेऽपि तादृग् आसीत् अपरं सिंहानां गवाञ्चाधोऽधः सूक्ष्म-
३० कार्य्यस्य कति कति स्रज आसन् । एकैकस्य पीठस्य पित्तलमयानि
चत्वारि चक्राणि पित्तलमया अक्षदण्डाश्चासन् चतुर्षु कोणेषु च स्थापि-
तान्यवलम्बनान्यासन् तानि सिक्तान्यवलम्बनानि प्रक्षालनपात्रस्याधः
३१ स्थापितानि तेषाम् एकैकस्य पार्श्वे च स्रज आसन् । मुकुटमध्ये तदूर्द्ध्वे च
तस्य वदनं हस्तैकपरिमितं तच्च वदनं वर्त्तुलं स्तम्भाकृति सार्द्धहस्तपरि-
मितञ्च । तस्मिन् वदनेऽपि शिल्पकार्य्याण्यासन् तदीयक्षेत्राणि वर्त्तु-
३२ लानि नहि चतुष्कोणानि बभूवुः । अपरं क्षेत्राणाम् अधश्चत्वारि
चक्राण्यासन् । तेषां चक्राणाम् अक्षदण्डौ पीठेन समं निर्म्मितावा-
३३ स्ताम् एकैकं चक्रं सार्द्धहस्तोच्चं । रथचक्रमिव तेषां चक्राणामा-
३४ कृतिस्तेषाम् अक्षदण्डनेमिनाभिशलाकाः सर्व्वाः सिक्ताः । अपरम्
एकैकस्य पीठस्य चतुर्षु कोणेषु स्थापितानि चत्वार्य्यवलम्बनान्यासन्
३५ तान्यवलम्बनानि पीठेन समं निर्म्मितानि । एकैकस्य पीठस्य मूर्द्धार्द्ध-
हस्तोच्चो वर्त्तुलाकारश्च तत्पीठमूर्द्ध्नि तेन समं निर्म्मितान्यवलम्बनानि
३६ क्षेत्राणि च बभूवुः । अवलम्बनपृष्ठेषु क्षेत्रेषु च स्वपरिमाणविशिष्टाः
३७ किरूबाः सिंहास्तालवृक्षाश्च तद्वेष्टकाः स्रजश्च तेन लिलिखिरे । इत्थं
स तानि पित्तलमयानि दशपीठान्येकसञ्चन एकपरिमाणान्येकाका-
राणि च निर्म्ममे ।

३८ अनन्तरं स पित्तलमयानि दशप्रक्षालनपात्राणि निर्म्ममे तेषाम्
एकैकं पात्रं चतुर्हस्तपरिमितम् एकैकं पात्रं चत्वारिंशद्बाताख्य-
परिमाणानि दधार । एकैकपीठोपरि तेषाम् एकैकं प्रक्षालनपात्रं

निदधे। अपरं स मन्दिरस्य दक्षिणपार्श्वे पञ्चपीठानि वामपार्श्वे च पञ्च ३९
पीठानि निदधे अपरं गृहस्य दक्षिणपार्श्वे दक्षिणकोणात् पूर्व्वदिशि
सागररूपं भाजनं स्थापयामास।

हूरमः प्रक्षालनभाजनानि दर्व्वीः कुण्डानि च निर्म्ममे। इत्थं न्टपतेः ४०
सुलेमन आज्ञातः परमेश्वरीयमन्दिरस्य कृते हूरमेण यावन्ति शिल्प-
कार्य्याणि कर्त्तव्यानि तानि सर्व्वाणि समाप्तानि। इत्थं द्वौ स्तम्भौ द्वयोः ४१
स्तम्भयोरुपरि स्थितौ वर्त्तुलाकारौ द्वौ मूर्द्धानौ स्तम्भद्वयोपरिस्थमूर्द्धद्वया-
च्छादके द्वे जाले, तज्जालद्वयवेष्टनार्थं चतुःशतानि दाडिम्बाकारा अर्थतः ४२
स्तम्भद्वयोपरिस्थयो वर्त्तुलाकारमूर्द्धाराच्छादकजालद्वयस्यैकैकस्य जालस्य
कृते दाडिम्बाकाराणां द्वे श्रेणी, दशपीठानि पीठोपरिस्थानि दश- ४३
प्रक्षालनपात्राणि, सागररूपं पात्रमेकं तत्सागरपात्रस्याधो द्वादशगाव- ४४
स्तदन्यद् कटाहाणि दर्व्यः कुण्डान्येतानि तदन्यानि च यावन्ति भाज- ४५
नानि सुलेमन आज्ञातः परमेश्वरीयमन्दिरस्य कृते हूरमेण निर्म्मि-
तानि तानि सर्व्वाणि तेजोमयपित्तलै र्निर्म्मितानि। राजा यर्दनस्य ४६
प्रान्तरे सुक्कोतसर्त्तनयो र्मध्यस्थितायां घनमृदि भूमौ सिक्तधातुना
तानि निर्म्मापयामास। अपरं भाजनानाम् अतिबाहुल्यकारणात् ४७
सुलेमान् तानि न मापयामास, ततस्तेषां पित्तलानां परिमाणं न
ज्ञेयं। अपरं सुलेमान् परमेश्वरीयमन्दिरस्याभ्यन्तरे स्थापनार्थम् एतानि ४८
सकलवस्तूनि चकार स्वर्णवेदी दर्शनीयपूपयाच्छि सुवर्णासनम्, ईश्व-
रीयवाक्यस्थानस्य सम्मुखे दक्षिणे पञ्च वामे च पञ्च निर्म्मलसुवर्णमय- ४९
दीपवृक्षाश्चदीयानि सुवर्णमयानि पुष्पाणि प्रदीपा वर्त्तिकाच्छेदन-
कर्त्तर्य्यश्च, निर्म्मलसुवर्णमया आप्लाम्कुरिका कटाहाणि छेदन्यो वह्निपा- ५०
त्राणि च, अन्तःस्थितस्य महापवित्रस्थानस्य मन्दिरस्य कवाटानां कृते
हेममयाः कजाश्च। इत्थं परमेश्वरस्य गृहार्थं सकलकार्य्याणि सुलेमना ५१
समापितानि। ततः परं सुलेमान् स्वतातेन दायूदा पवित्रीकृतानि
सकलद्रव्याणि तन्मध्यम् आनिनाय। स तानि रजतहेमपात्राणि परमे-
श्वरीयमन्दिरे स्थितेषु धनागारेषु निदधे।

---

## ८ अष्टमोऽध्यायः।

१ मन्दिरोत्सर्गकरणोत्सवः १२ सुलेमन आशीर्वचनकथनं २२ सुलेमनः प्रार्थनाकथनं
६२ बलिदानानुष्ठानं।

१ अपरं सुलेमान् इस्रायेलीयलोकानां प्राचीनान् वंशानां मुख्यनरां-
श्चार्थत इस्रायेलवंशानां प्रधानपितृलोकान् परमेश्वरीयनियममञ्जूषाया
दायूद्नगरात् सियोनात् स्थानान्तरीकरणार्थं यिरूशालमे राज-
२ समीपे संजग्राह । तत एथानीमनाम्नि सप्तममासे उत्सवसमये इस्रा-
३ येलीयलोकाः सर्व्वे सुलेमनो नृपतेः समीपे मिलितवन्तः । अनन्तरम्
इस्रायेलीयानां प्राचीनगणे समुपस्थिते याजका मञ्जूषां स्थानान्तरं निन्युः ।
४ परमेश्वरस्य मञ्जूषा समाजावास आवासस्यान्तःस्थानि सकलपवित्र-
भाजनानि चैतानि सर्व्वाणि स्थानान्तरं निन्यिरे । याजका लेवीयाश्च
५ तानि निन्युः । ततः सुलेमान् नृपतिस्तस्य समीपे सम्मिलिता इस्राये-
लीयलोकाश्च मञ्जूषायाः सम्मुखं गत्वा बहुत्वकारणाद् असङ्ख्यकान् अप-
६ रिमेयांश्च मेषान् गाश्चोत्ससृजुः । अनन्तरं याजका मन्दिरमध्य ईश्वरस्य
वाक्यस्थानाख्येऽतिपवित्रस्थाने किरूबयोः पक्षाणामधो निरूपितस्थाने
७ परमेश्वरस्य नियममञ्जूषां निदधिरे । तौ किरूबौ स्वपक्षान् मञ्जूषायाः
स्थानोपरि विस्तारयामासतुस्ततस्तौ किरूबौ मञ्जूषां तदीयवहनदण्डौ
८ चाच्छादयामासतुः । तयो दण्डयो दीर्घत्वाद् तयोरग्राणीश्वरस्य वाक्य-
स्थानस्याग्रभागे पवित्रस्थानाद् दृश्यानि बभूवुः किन्तु बहिर्दृश्यानि
९ न बभूवुः, तान्यद्यापि तत्र स्थाने विद्यन्ते । तत्र मञ्जूषायाम् अन्यत्
किमपि नासीत्, केवलं मिसरदेशाद् इस्रायेलीयवंशानां निर्गमन-
काले परमेश्वरस्तैः सार्द्धं यं नियमं चक्रिवान् तदीयपत्रयुक्तं प्रस्तरफल-
कद्वयं तन्मध्य आसीत् यतो होरेवे मूसास्तत् मञ्जूषामध्ये स्थापित-
१० वान् । अपरं पवित्रस्थानस्य मध्याद् याजकानां बहिर्गमनकाले पर-
११ मेश्वरस्य मन्दिरं पयोदेन तादृक् पर्य्यपूर्य्यत यद् याजकाः पयोदात्
सेवनम् अनुष्ठातुम् असमर्था बभूवुः, यतः परमेश्वरस्य तेजः परमेश्वरीयं
मन्दिरं पूरयामास ।

१२ तदानीं सुलेमान् व्याजहार परमेश्वरो घोरान्धकारे वसतीति तेन
१३ निगदितं । तवाधिष्ठानार्थं मन्दिरमेकं मया निरमायि तव नित्यवा-
१४ सार्थं तन्निवेशनं कृतं । अपरम् इस्रायेलीयानाम् अखिले समाजेऽव-
तिष्ठमाने राजा स्वास्यं परावर्त्त्येस्रायेलीयानां कृत्स्नं समाजम् आशिषं
१५ जगाद । राजा कथयामास, इस्रायेलः प्रभुः परमेश्वरो धन्यः ; स
मम पित्रे दायूदे स्ववक्त्रेण यत् प्रतिज्ञातवान् तत् स्वकरेण साधित-
१६ वान्, यथा, मम प्रजामम इस्रायेलीयवंशा यस्मिन् दिने मिसरदे-

याह्‌ मया वहिष्कृतस्तद्दिनम् आरभ्याहम् अत्र स्थाने मम नाम्नोऽधि-
ष्ठानार्थं मन्दिरं निर्म्मातव्यमित्यभिप्रायेणेस्रायेलीयानां कस्यापि वंशस्य
किमपि नगरं नाभिरोचितवान् किन्तु मदीयप्रजागणस्येस्रायेलीयवंश-
स्याधिपतित्वाय दायूदम् अभिरोचितवान्। अपरम् इस्रायेलः प्रभोः १७
परमेश्वरस्य नाम्ने मन्दिरमेकं निर्म्मातुं मत्तातो दायूद् मनो निदधे। १८
किन्तु परमेश्वरो मम तातं दायूदं वाक्यमिदं जगाद, त्वं मम नाम्ने
मन्दिरं निर्म्मातुं मनो निरधत्था इति तव मनोगतं भद्रमेव। तथापि १९
तन्मन्दिरं त्वया न निर्म्मातव्यं किन्तु तवौरसेनात्मजेन मम नामार्थकं
तन्मन्दिरं निर्म्मातव्यम् इति परमेश्वरेण यद् वचनं प्रतिज्ञातं तदेव २०
साधितं, ततः परमेश्वरस्य वाक्यादहं निजतातस्य दायूदः पदं प्राप्येस्रा-
येलीयराजसिंहासन उपाविशम् इस्रायेलः प्रभोः परमेश्वरस्य नाम्ने
मन्दिरम् इदं निरमापयच्च। परमेश्वरेणास्मत्पूर्व्वपुरुषाणां मिसरदेशाद् २१
वहिष्करणकाले तैः सह यो नियमोऽकारि तदीयपत्रस्याधारो या
मञ्जूषा तस्याः कृतेऽपि तत्र मन्दिरे स्थानमेकं मया निरूपितं।

अनन्तरं सुलेमान् इस्रायेलः कृत्स्नसमाजस्य साक्षात् परमेश्वरस्य २२
होमवेद्याः समीपम् उपस्थायाकाशं प्रति करौ प्रसार्य्य व्याजहार, हे २३
इस्रायेलः प्रभो परमेश्वर, ऊर्द्धस्थिते स्वर्गेऽधःस्थितायां पृथिव्याञ्च तव
तुल्यो नापरः कश्चनेश्वर आस्ते। तव यावन्तो दासाः सर्व्वान्तःकरणैस्तव
चक्षुर्गोचरे चरन्ति तान् प्रति स्वनियमं स्वप्रीतिञ्च साधयसि। विशे- २४
षतः स्वदासाय दायूदे त्वं यत् प्रत्यज्ञासीस्तद् असाधयः स्ववक्त्रेणोक्तं
वचनं स्वकरेण सफलम् अकार्षीश्च। हे इस्रायेलः प्रभो परमेश्वर, २५
स्वदासाय मत्ताताय दायूदे भवता यत् प्रतिज्ञातं तदधुना साध्यतां
यथा, मम चक्षुर्गोचरे त्वं यद्वद् आचरस्तद्वत् तव सन्तानाश्चेत् स्वस्व-
मार्गमधि सावधानाः सन्तो मम दृष्टिगोचरे चरन्ति तर्हीस्रायेली-
यराजसिंहासनोपवेशकपुरुषस्याभावस्तव वंशे कदापि न भविष्यतीति।
हे इस्रायेल ईश्वर, स्वदासाय मदीयजनकाय दायूदे भवता यत् २६
कथितं तत् स्थिरं भवत्विति प्रार्थयेऽहं। किन्त्वीश्वरः पृथिव्यां निव- २७
त्स्यतीति किं सत्यं भवेत्? पश्य स्वर्गः स्वर्गापरिस्थः स्वर्गश्च भवन्तं न
धरति तर्हि मन्निर्म्मितं मन्दिरमिदं किं धरेत्? हे मम प्रभो परमेश्वर २८
त्वं स्वदासस्य प्रार्थनां निवेदनञ्च शृणु; तव दासेनाद्य या काकुक्तिः
प्रार्थना च क्रियते सा भवता श्रूयतां। अत्र स्थाने मम नाम स्थास्यतीति २९

वाक्यं यत् स्थानमिदं मन्दिरमिदमधि भवतोक्तं तत् स्थानं प्रति भवता
३० स्वनयने उन्मील्यैतत्स्थानोद्देश्या भवतो दासस्य प्रार्थना श्रूयतां। एतत्-
स्थानम् उद्दिश्य प्रार्थयमानेन भवद्दासेन भवत्प्रजागणेनेस्रायेलीयवंशेन
च या प्रार्थना क्रियते भवान् तां शृणोतु। त्वं स्वकीयस्वर्गनिवासे तिष्ठन्
तां निशामय निशम्य क्षमस्व च।
३१ केनचित् स्वसमीपवासिनः कस्मिंश्चिद् अपराद्धे लोका यदि शपथं
निश्चित्य तेन तं शापयन्ति स च शपथो यदि मन्दिरेऽस्मिन् तव वेद्याः
३२ समीपम् उपतिष्ठति तर्हि त्वं स्वर्गान्निशम्य कर्त्तव्यं कुर्व्वन् निजदासान्
विचारयार्थतो दोषिणं सदोषं कृत्वा तस्य कर्म्मणः समुचितं फलं तस्मै
वितर निर्द्दोषञ्च निर्द्दोषं कृत्वा तस्य निर्द्दोषत्वस्य फलं तस्मै विश्राणय।
३३ अपरं तव विरुद्धं पातककरणाद् रिपुभिः पराजितास्तवेस्रायेलीय-
प्रजागणा यदि त्वां प्रति परावृत्य तव नाम स्तुवन्तस्तव साक्षात् मन्दिरे
३४ ऽस्मिन् विनयन्ते प्रार्थयन्ते च तर्हि त्वं स्वर्गान्निशम्य तवेस्रायेलीयलो-
कानां पापं क्षमस्व तेषां पूर्व्वपुरुषेभ्यो यमिमं देशं दत्तवानसि तं देशं
पुनर्व्वारं तान् आनय च।
३५ अपरं तव विरुद्धं तेषां पातककरणाद् गगणे बद्धीभूते यदि वृष्टि र्न
भवति तेन ते यदि स्थानस्यैतस्य दिशि प्रार्थयमानास्तव नाम स्तुवन्ति
३६ त्वया तेषां क्लेशो जात इति विविच्य स्वपापेभ्यः परावर्त्तन्ते च, तर्हि
त्वं स्वर्गान्निशम्य तव दासानाम् इस्रायेलीयलोकानां पापं क्षमस्व गन्तव्यम्
उत्तममार्गञ्च तान् आदिश तव प्रजागणाय यं देशं भोगार्थं दत्तवानसि
तस्मिन् देशे वृष्टिं कारय च।
३७ अपरं देशे दुर्भिक्षे जाते महामार्य्यां वा जातायां शस्यानां वा
शुष्कत्वे म्लानत्वे वा जाते शुकादिपतङ्गेषु वा जातेषु देशस्थनगरेषु वा
३८ रिपुभिरवरुद्धेषु कस्याञ्चित् मार्य्यां पीडायां वा जातवत्यां तवेस्रायेलीय-
प्रजानां मध्ये केनचित् मानवेन निजमनःपीडां बुद्ध्वा यदि काचित्
प्रार्थना किञ्चन निवेदनं वा क्रियते मन्दिरस्यास्य दिशि च करद्वयं
३९ प्रसार्य्यते, तर्हि त्वं निजनिवासात् स्वर्गान्निशम्य क्षमित्वा कर्त्तव्यं कुरु,
त्वमेव सर्व्वमनुजानाम् अद्वितीयोऽन्तर्य्यामी असि ततस्तस्य मनुष्यस्य यम्
आन्तरिकभावं जानासि तदनुसारेण तस्याचरणस्य समुचितं फलं तस्मै
४० देहि। तथा कृते त्वं तेषां पूर्व्वपुरुषेभ्यो यं देशं दत्तवानसि तन्मध्ये
ते यावज्जीविष्यन्ति तावत् त्वत्तो भेष्यन्ति।

अपरं तव महानाम्नः सबलकरस्य प्रसारितबाहोश्च वार्त्ता भिन्न- ४१
जातीयैरपि निशामयितव्या; अतस्तवेस्रायेलीयवंशे न जातः कश्चिन्नरो ४२
यदि तव नामार्थं दूरदेशाद् आगत्य मन्दिरस्यास्य दिशि प्रार्थनां कुरुते
तर्ह्यपि त्वया स्ववासस्थानात् स्वर्गान्निशम्य तस्य भिन्नजातीयस्य नरस्य ४३
प्रार्थनानुसाराद् यद्यत् कर्त्तव्यं तत् क्रियतां, तथा कृते पृथिवीस्थजा-
तीयाः सर्व्वे तव नाम्नो ज्ञानं लब्ध्वा तवेस्रायेलीयप्रजागणा इव त्वत्तो
भेष्यन्ति मन्निर्म्मितमिदं मन्दिरं तव नाम्ना विख्यातमेतदपि ज्ञास्यन्ति।

अपरं युद्धयात्रार्थं त्वया प्रेषितास्तव लोका यदि रिपुभिः सह योद्धुं ४४
वहिर् गत्वा त्वयाभिरुचितं नगरं तव नामार्थं मया निर्म्मितं मन्दिरञ्चो-
द्दिश्य परमेश्वरस्य साक्षात् प्रार्थनां कुर्व्वते, तर्हि त्वं स्वर्गात्तेषां प्रार्थनां ४५
विनयञ्च निशम्य तेषां विचारस्य निष्पत्तिं कुरु। अपरं ते यदि तव ४६
विरुद्धं पापं कुर्व्वन्ति (यतः पापं न करोत्येवम्भूतः कोपि मानवो नास्ति)
त्वया च तेभ्यः क्रुद्धा रिपूणां करेषु समर्पितास्ते यदि विजेतृभि र्दूरस्थं
निकटस्थं वा रिपुदेशं नीयन्ते, ततः परं यस्मिन् देशे ते नीतास्तत्र यदि ४७
मनसि स्वदशां चिन्तयित्वा परावृत्य तत्र विजेतृणां देशे त्वाम् उद्दिश्य
प्रार्थयमाना अस्माभिरपराद्धं पातकं दुष्टत्वञ्च कृतमिति वदन्ति, इत्थं ४८
ते यदि स्वविजेतृणां रिपूणां देशे सर्व्वान्तःकरणैः सर्व्वप्राणैश्च सह त्वां
प्रति परावर्त्तन्ते तेषां पूर्व्वपुरुषेभ्यस्त्वया दत्तं स्वकीयदेशं त्वयाभिरुचितं
नगरं तव नाम्ने मया निर्म्मितं मन्दिरञ्चोद्दिश्य तव साक्षात् प्रार्थनां
कुर्व्वते च, तर्हि त्वं स्ववासस्थानात् स्वर्गात् तेषां प्रार्थनां विनयञ्च निशम्य
तेषां विचारस्य निष्पत्तिं कुरु, तव विरुद्धं कृतपापैस्तव प्रजागणै ५०
र्यद्यद् अपराद्धं तत्सर्व्वं क्षमस्व तेषां विजेतारश्च यथा तान् प्रति दयां
कुर्य्युस्तथा तान् करुणायुक्तान् कुरु च। यतस्त एव तव प्रजास्त्वया लौह- ५१
कुण्डात् मिसरदेशाद् आनीतास्त्वयोपार्जितलोकाश्च। अतो हेतोस्तवा- ५२
यं दासस्तवेस्रायेलीयप्रजागणाश्च यम् अनुनयं कुरुते तस्मिन् भवता
दृष्टिरारोप्यतां याञ्च प्रार्थनां भवन्तम् उद्दिश्य कुरुते सा निशम्यतां।
हे प्रभो परमेश्वर, अस्मत्पूर्व्वपुरुषाणां मिसरदेशाद् वहिष्करणकाले ५३
भवान् स्वदासेन मूससा यद्वद् गदितवान् तद्वद् भवानेवास्मान् स्वोपा-
र्ज्जितत्वे नियोक्तुं पृथिवीस्थाभ्यः सर्व्वजातिभ्यो विशेषितवान्।

सुलेमान् परमेश्वरस्य समीपे कृत्स्नाम् एतां प्रार्थनां निवेदनञ्च ५४
समाप्य परमेश्वरस्य होमवेद्याः सम्मुखे जानुपातनाद् उत्थाय गगनस्य

५५ दिशि हस्तौ प्रसार्य्यावतिष्ठमानः सन् उच्चैःस्वरेण वाक्यैरेतैरिस्रायेली-
५६ यानां कृत्स्नं समाजम् आशिषं जगाद, परमेश्वरो धन्यो भवतु, यतः
स यद्वत् कथितवान् तद्वदेव स्वकीयायेस्रायेलीयप्रजागणाय विश्रामं
व्यतरत्। स स्वदासेन मूससा यावन्ति मङ्गलवाक्यानि गदितवान् तेषां
५७ सर्व्वेषां मध्य एकमपि निष्फलं नाभवत्। अस्माकं प्रभुः परमेश्वरो
यादृग् अस्मत्पूर्व्वपुरुषाणां सहाय आसीत् तादृग् अस्माकमपि सहायो
५८ भवतु सोऽस्मान् न जहातु न वा त्यजतु। किन्त्वस्मत्पूर्व्वपुरुषास्तेन
यान्याज्ञाविधिविधानान्यादिष्टास्तानि वयं पालयन्तो यत् तस्य सर्व्व-
मार्गैश्चरेम तदर्थम् अस्माकम् अन्तःकरणानि स्वसमीपम् आकर्षतु।
५९ परमेश्वरस्य सम्मुखे यानीमानि वाक्यानि मया निवेदितानि तानि
दिवानिशम् अस्मत्प्रभोः परमेश्वरस्य सन्निधौ तिष्ठन्तु तेन च स्वदा-
सस्यैतस्य स्वकीयेस्रायेलीयप्रजागणस्य च विचारः प्रतिदिनं यथा कर्त्तव्य-
६० स्तथैव साध्यतां। ततः परमेश्वर एवाद्वितीय ईश्वरस्तदन्यः कोपी-
६१ श्वरो नास्तीति पृथिवीस्थैः सर्व्वजातीयैर्ज्ञास्यते। वयञ्चाद्यैव सर्व्वदा
यथा तस्य विधीन् आचरेम तस्याज्ञाश्च पालयेम तथास्मत्प्रभुं परमेश्वरं
प्रत्यस्माकं मनांसि स्थिराणि स्थास्यन्ति।
६२  अनन्तरं राजा तेन समं सर्व्वे इस्रायेलीयलोकाश्च परमेश्वरस्य
६३ सम्मुखे बलिदानम् अकुर्व्वन्। सुलेमना द्वाविंशतिसहस्राणि गावो
विंशतिसहस्राधिकं लक्षं मेषाश्च मङ्गलार्थकबलिरूपेण परमेश्वराया
६४ दीयन्त, इत्थं राज्ञेस्रायेलीयलोकैश्च मन्दिरं पावितं। तस्मिन् दिवसे
परमेश्वरीयमन्दिरस्य सम्मुखस्थप्राङ्गणस्य मध्यदेशो राज्ञा पवित्रीकृतो
यतो होमार्थका बलयो निवेदितवस्तूनि मङ्गलार्थकबलीनां मेदांसि च
तत्रैव तेनोत्सृष्टानि यतो हेतोः परमेश्वरस्य सम्मुखे स्थिता पित्तलमयी
यज्ञवेदिः क्षुद्रत्वात् होमबलीन् निवेदितवस्तूनि मङ्गलार्थकबलीनां
६५ मेदांसि च धर्त्तुं नाशक्नोत्। तस्मिन् समये सुलेमान् तेन सह हमातस्य
प्रवेशस्थानमारभ्य मिसरदेशीयां सीमास्थसरितं यावत् सर्व्वेषाम् इस्रा-
येलीयलोकानां महासमाजश्च सप्ताहद्वयम् अर्थतश्चतुर्दशदिनानि
६६ यावत् स्वप्रभोः परमेश्वरस्य साक्षाद् उटजोत्सवं चक्रे। अनन्तरम्
अष्टमे दिने लोका राजा विसृष्टास्तम् आशिषं जगदुः। ततः परं
परमेश्वरेण स्वदासं दायूदं स्वप्रजागणम् इस्रायेलीयवंशञ्च प्रति यद्यत्
मङ्गलं कृतं तेन प्रफुल्लचित्ता हर्षिताश्च ते स्वं स्वं वासस्थानं जग्मुः।

# ९ नवमोऽध्यायः।

१ द्वितीयदर्शने जाते सुलेमना सार्द्धम् ईश्वरस्य नियमः १० सुलेमन्हीरमयोः परस्परम् उपायनदानं १५ नानानगराणां निर्म्माणं २० किनानीयप्रभृतीनां दासत्वस्य कथनं २४ फिरौणो दुहितु र्मिल्लोगमनं २५ सुलेमनः सांवत्सरिकबलिदानादि २६ तस्य पोतानां कथनं।

परमेश्वरीयमन्दिरस्य राजप्रासादस्य च निर्म्माणे तदन्यानि यावन्ति १
निवेशनानि सुलेमनोऽभिलाषात् निर्म्मितानि तेषामपि निर्म्माणे समाप्ते
परमेश्वरो यादृग् गिबियोने सुलेमने दर्शनमददात् तादृग् द्वितीयवारं २
तस्मै दर्शनं ददौ। परमेश्वरस्तं जगाद त्वं मम साक्षाद् यां प्रार्थनां यच्च ३
निवेदनं कृतवान् तत् मया श्रुतं त्वच्च मदीयनाम्नो नित्यस्थित्यर्थं यन्म-
न्दिरं निरमापयस्तदपि मया पवित्रीकृतं तत्रैव मम दृष्टि र्मनश्च
सर्व्वदा स्थास्यति। अपरं तव तातो दायूद् यादृक् चरितवान् तादृक् ४
त्वमपि यदि सिद्धमनसा सारल्येन च मम साक्षात् चरन् मया
यथादिष्टं तथैव कर्म्म करिष्यसि मम विधीन् आज्ञाश्च पालयिष्यसि
च, तर्हीस्रायेलीयराजसिंहासनोपवेष्टृपुरुषस्याभावस्तव वंशे कदापि ५
न भविष्यतीति मया तव ताताय दायूदे यत् प्रतिज्ञातं तदनुसारात्
तवेस्रायेलीयराजसिंहासनं सदोन्नतं स्थास्यति। किन्तु यूयं युष्मद्वंशाश्च ६
यदि मत्तोऽपसृत्य मयादिष्टान् आज्ञाविधीन् न पालयिष्यथ, यदि
च विपथगामिनो भूत्वेतरदेवान् सेविष्यध्वे प्रणंस्यथ च, तर्हीस्रायेली- ७
वंशेभ्यो यो देशो मया दत्तस्तस्मात् त उत्पाटयिष्यन्ते यच्च मन्दिरं मम
नामार्थं पवित्रीकृतं तदपि मया स्वदृष्टिगोचराद् दवयिष्यते तेनेस्राये-
लीयवंशः सर्व्वजातीयानां परिभाषणपरिहासयोरुदाहरणं भविष्यति।
ततो ये लोका एतस्य प्रांशुमन्दिरस्य सन्निधिना गमिष्यन्ति ते चमत्- ८
कृताः सन्तो निश्वसिष्यन्ति देशमेतं मन्दिरञ्च प्रति परमेश्वरः कुत एता-
दृशं कृतवान्? इति प्रक्ष्यन्ति च। तेन लोकाः प्रतिवक्ष्यन्ति लोकानामे- ९
तेषां पूर्व्वपुरुषा येन मिसरदेशाद् बहिरानीता इमे स्वेषां तं प्रभुं पर-
मेश्वरं विहायेतरदेवान् आश्रित्य तान् प्राणमन् असेवन्त च तत्कारणात्
परमेश्वरस्तान् इत्थम् आपन्नामकृतान् कृतवान्।

परमेश्वरस्य मन्दिरं राजनिवेशनञ्चेमे द्वे वेश्मनी निर्म्मापयता सुले- १०
मना ये विंशतिवत्सरा यापितास्तेषु सोरीयराजो हीरमः सुलेमनो ११
यथाभिलषितं तथैव तम् एरसकाष्ठै र्देवदारुकाष्ठैः सुवर्णैश्चोपकृत-

वान् ततो हेतोः सुलेमान् हीरमाय गालीलप्रदेशस्थानि विंशतिं
१२ नगराणि व्यश्राणयत्। अतस्तेषु वत्सरेषु गतेषु हीरमः सुलेमना दत्तानि
तानि नगराणि द्रष्टुं सोराद् आजगाम किन्तु तानि तस्मै नारोचन्त।
१३ ततः स जगाद हे मम भ्रातस्त्वयैतानि कीदृशानि नगराणि मह्यं
वितीर्णानि? तत्कारणात् तस्य देशस्य काबूलो (ऽनुपकार इति) नाम
१४ तेन कृतं तस्य तदेव नामाद्यापि विद्यते। हीरमो विंशत्यधिकशतकि-
क्करपरिमितं हेम राज्ञे प्रेषयामास।
१५ अथ सुलेमनः कारनिबन्धस्य वृत्तान्तोऽयं। स निबन्धः परमेश्वरीयमन्दि-
रस्य स्वनिवेशनस्य मिल्लो यिरूशालमीयप्राचीरस्य हात्सोरस्य मगि[illegible]
१६ गेषरस्य च निर्म्माणार्थं तेन सङ्गृहीतः। मिसरदेशीयो भूपतिः फिरौण्
युद्धेन तद् गेषरनगरं वशीकृत्य वह्निना दाहयित्वा तन्निवासिनः
किनानीयलोकान् निहत्य च स्वदुहित्रे सुलेमनो जायायै तद् ददिवान्।
१७ अतस्तद् गेषरम् अधःस्थितं बैथोरोणं वालतं देशमध्यस्थे प्रान्तरे स्थितं
१८ तद्मोरं सुलेमनः कोषनगराणि रथनगराण्यश्वारोहिणां नगराणि
तदन्यद् यिरूशालमि लिवानोने कृत्स्नराष्ट्रे च यद्यन्निर्म्मापयितुं सुलेमान्
अभ्यलषत् तदपि, सर्व्वाण्येतानि यथाभिलाषं सुलेमना निर्म्मापितानि।
२० इस्रायेलीयवंशाद् अपरवंशोद्भवा ये इमोरीयहित्तीयपिरिषीयहि-
२१ व्वीययिवूषीयलोका अवशिष्टाः सन्त इस्रायेलीयवंशै विनंष्टुं न शेकिरे
तेभ्य उत्पन्नो देशे चावशिष्टो वंशः सुलेमना सङ्गृहीतोऽद्य यावद् दास-
२२ त्वापन्नकारनिबन्धोऽकारि। इस्रायेलीयवंशोद्भवाः केऽपि सुलेमना दासा
न चक्रिरे ते तस्य योद्धारो मन्त्रिणोऽध्यक्षा रथिनो रथाधिपतयो
२३ श्वारोहिणश्च बभूवुः। सुलेमनः कर्म्माध्यक्षाणां मध्ये पञ्चाशदधिक-
पञ्चशतानि मुख्यनराः कर्म्मकारिणां कारनिबन्धम् अशिषन्।
२४ अपरं फिरौणो दुहिता दायूद्नगरात् स्वगृहमयत्तस्याः कृते
राजा यन्निवेशनं निरमापयत् तत्राजगाम ततः परं स मिल्लं निर्म्मा-
पयाञ्चकार।
२५ सुलेमान् परमेश्वरस्य कृते यां होमवेदिं निर्म्मितवान् तस्यां प्रतिवर्षं
त्रीन् वारान् होमार्थकान् मङ्गलार्थकांश्च बलीन् अच्छेदयत् परमेश्वरस्य
सम्मुखे स्थितायां वेद्याञ्च धूपान् अज्वालयत्। इत्थं मन्दिरनिर्म्माणं तेन
समापितं।
२६ अपरम् इदोमदेशे सूफाख्यसागरस्य तट एलतस्य पार्श्वे स्थितं यद्

इस्त्रियोनगेवरनामकं स्थानं तत्र सुलेमान् पोतान् निर्म्मापयामास।
तेषु पोतेषु हीरमः सुलेमनो दासैः सार्द्धं सागरकोविदान् स्वकीयान् १७
नियामकान् दासान् अप्रेषयत्। त ओफीरदेशं गत्वा तत्र विंशत्यधि- १८
कचतुःशतकिक्करपरिमितानि स्वर्णानि गृहीत्वा सुलेमनः समीपम्
आनयन्।

---

## १० दशमोऽध्यायः।

१ शिबादेशीयराज्ञ्याः कथनं ११ हीरमस्य राज्ञः कथनं १४ सुलेमना सुवर्णमयफल-
कानां निर्म्माणं १८ सिंहासनस्य वर्णना २४ तस्य समीपे लोकानां समागमस्य रथा-
नाम् अश्वानाञ्चानयनस्य कथनं।

अपरं परमेश्वरस्य नामार्थं सुलेमनः कीर्त्तिः शिबादेशस्य महिष्या- १
श्रूयत ततः सा प्रवल्हिकाभिस्तं परीक्षितुम् आजगाम। सा सुगन्धिद्रव्य- २
प्रचुरस्वर्णमणिवाहिनां महाङ्गानां निवहेन महासमारोहेण चात्तीव
यिरूशालमम् आगच्छत् सुलेमानम् उपस्थाय च सर्व्वं स्वमनोगतमधि
तं समभाषत। ततः सा यद्यद् अपृच्छत् तत् सर्व्वं सुलेमान् तां जगाद, ३
तन्मध्ये नृपेणागम्यं किमपि वाक्यं नासीत् स तां सर्व्वमेव ज्ञापितवान्।
अतः सुलेमनो ज्ञानं तन्निर्म्मितं मन्दिरं तस्य भोजनासनस्थभक्ष्यद्रव्याण्य- ४
मात्यानां परिषद् परिचारकानां श्रेणीवेशा पानपात्रवाहिगणः पर- ५
मेश्वरस्य मन्दिरे तस्यारोहणञ्चैतानि सर्व्वाणि दृष्ट्वा सा शिबादेशस्य
महिषी हतज्ञाना बभूव। सा तु राजानं जगाद, भवतः कर्म्माणि ६
ज्ञानञ्चाधि या किंवदन्ती स्वदेशे मयाश्रावि सा सत्यैव। किन्त्वहं ७
यावदागत्य स्वनेत्राभ्यां सर्व्वं नापश्यं तावत् तां जनश्रुतिम् असत्याम्
अमन्ये, किन्तु यशसोऽर्द्धमप्यहं न श्रुतवती। भवतो ज्ञानम् उत्तमत्वञ्च
मच्छ्रुतां किंवदन्तीम् अतिशेते। धन्या भवतो नरा धन्या भवतो भृत्या ८
यतस्ते नित्यं भवतः साक्षात् तिष्ठन्तो भवतो ज्ञानालापं शृण्वन्ति।
धन्यो भवतः प्रभुः परमेश्वरो यतः स भवति तुष्ट्वायेलीयराजसिंहा- ९
सने भवन्तम् उपावेशयत्। परमेश्वरो नित्यम् इस्रायेलवंशे प्रीयत
इतिकारणाद् भवान् न्याय्यं धर्म्मञ्च समाचरेत् तदर्थं स भवन्तं
राज्याभिषिक्तम् अकरोत्। सा तु राज्ञे विंशत्यधिकशतकिक्करपरिमि- १०
तानि सुवर्णानि प्रचुराणि सुगन्धिद्रव्याणि मणींश्च ददौ। शिबादेशस्य

राज्ञी सुलेमने नृपतये यादृशानि सुगन्धिद्रव्याण्यददात् तादृशानि सुग-
न्धिद्रव्याणि बाहुल्यरूपेण तत् स्थानं पुनः कदापि नानीतानि ।
११ अपरं हीरमस्य यैः पोतैरोफीरदेशात् सुवर्णान्यानीयन्त तैः प्रचु-
राणि मलयजकाष्ठानि मणयश्च तस्माद् ओफीरदेशाद् आनीयन्त ।
१२ राजा तै र्मलयजकाष्ठैः परमेश्वरस्य मन्दिरस्य राजप्रासादस्य च
निमित्तं क्षुद्रस्तम्भानि गायकानाञ्च कृते वल्लकीः वंश्यादीनि यन्त्राणि
च निर्म्मापयामास। तादृशानि मलयजकाष्ठान्यद्य यावत् पुन र्नानीतानि
१३ न दृष्टानि वा । अनन्तरं शिवाया महिष्याः प्रार्थनातस्तस्याः सर्व्वो
मनोरथः सुलेमना राज्ञा साधितस्तदपराण्युपायनान्यपि सुलेमन्नो
राज्ञो वदान्यत्वात् तया लब्धानि, ततः परं सा स्वभृत्यगणेन सार्द्धं
स्वदेशं परावृत्य जगाम ।
१४ अनन्तरं सार्थवाहगणाद् वणिजगणाद् वशीभूतनृपगणात् प्रदेशा-
१५ ध्यक्षगणाच्च सुलेमान् यानि धनान्यलभत, तानि विना संवत्सरे
षट्षष्ट्यधिकषट्शतकिक्करपरिमितानि हेमानि सुलेमनः समीपं समा-
१६ गतानि । ततः सुलेमान् नरपतिस्ताडितसुवर्णै र्द्वे शते वर्त्तुलाका-
रफलकानि निर्म्मापयामास तेषामेकैकस्मिन् फलके षट्शतशेकल-
१७ परिमितं सुवर्णं प्रयुक्तं । अपरं स ताडितसुवर्णैस्त्रीणि शतानि
चर्म्माणि निर्म्मापयाञ्चकार तेषामेकैकस्मिन् चर्म्मणि त्रिसेटकपरिमितं
सुवर्णं प्रयुक्तं । अनन्तरं राजा लिबानोनारण्यगृहे तानि निदधे।
१८ अनन्तरं राजा दन्तिदन्तमयं सिंहासनमेकं निर्म्मापयामास तच्चो-
१९ त्तमसुवर्णै र्मण्डयामास । तस्य सिंहासनस्य षट् सोपानान्यासन् सिं-
हासनस्योर्द्धभागश्च पश्चात् वर्त्तुलाकार आसीत् उपवेशनीयस्थानस्य
पार्श्वयोश्च हस्ताकारे अवलम्बने आस्तां तयोश्चावलम्बनयोरग्रे द्वौ
२० सिंहावतिष्ठतां । तेषु षट्सोपानेषु पार्श्वयो र्द्वादश सिंहा अतिष्ठन्
२१ एतादृशं सिंहासनं कस्मिंश्चिद् राज्ये न निरमायि । सुलेमनो नृपतेः
सर्व्वाणि पानभाजनानि हेममयान्यासन् तद्वत् लिबानोनारण्यगृहे
स्थितानि सर्व्वाणि भाजनानि निर्म्मलसुवर्णमयान्यासन् रजतमयं
किञ्चन भाजनं नासीत्। सुलेमनो राजत्वसमये रजतानां किमपि
२२ मूल्यं नासीत्। यतो हीरमस्य पोतैः सार्द्धं राज्ञोऽपि तर्शीशगामी पोत-
निवहः समुद्र आसीत् । वर्षत्रयात् परं वारमेकं स तर्शीशगामी
पोतनिवह आगत्य हेम रजतम् इभदन्तान् कपीन् शिखिनश्चानयत् ।

अनेन प्रकारेण वित्तविद्याभ्यां सुलेमान् नरपति र्मेदिनीस्थानाम् इतरेषां २३
सकलभूपतीनां प्रधानो बभूव।
ईश्वरेण सुलेमनो मनसि यत् ज्ञानं निहितं तस्य तज्ज्ञानस्य २४
वचांसि श्रोतुं मनुजाः सुलेमानं साक्षात् कर्त्तुम् अयतन्त। ते च प्रति- २५
वर्षं स्वं स्वम् उपायनम् अर्थतो रजतमयानि हेममयानि च भाजनानि
वसनान्यस्त्राणि सुगन्धिद्रव्याणि हयान् अश्वतरांश्च समानिन्युः।
अनन्तरं सुलेमान् स्यन्दनानि हयारोहिणश्च संजग्राह तस्य चतुः- २६
शताधिकसहस्रं रथा द्वादशसहस्राणि हयारोहिणश्चासन् ते च
तेन रथनगरेषु यिरूशालमे च राजनिकटे निदधिरे। राजा यिरू- २७
शालमे बाहुल्यकारणाद् रजतानि पाषाणवद् एरसकाष्ठानि च प्रान्त-
रस्थोडुम्बरेन्धनवत् साधारणानि चकार। सुलेमनो हया मिसरदेशाद् २८
आनीयन्त राजवणिजाम् एकैकेन निवहेनैकैको हयनिवहो मूल्येना-
लभ्यत। तेन मिसरदेशाद् आनीतस्यैकस्य रथस्य मूल्यं षट्शतानि २९
रजतमुद्रा हयस्यैकस्य च मूल्यं सार्द्धशतं मुद्रा इत्यनेन मूल्येन ते
हित्तीयानाम् इमारीयानाञ्च भूपतीनां कृते समानिन्यिरे।

---

## ११ एकादशोऽध्यायः।

१ योषिद्भिः सुलेमनो देवतापूजनं ९ तं प्रति परमेश्वरेण तिरस्करणं १४ तस्य रिपो र्हददस्य कथनं २३ तस्य रिपो रिषोणस्य कथनं २६ तस्य रिपो र्यारबियामस्य कथनं ४१ सुलेमनो मरणकथनञ्च।

सुलेमान् नरपतिः फिरौणो दुहितरं विना बह्वीरितरदेशीया १
अर्थतो मोयाबीयाम्मोनीयेदोमीयसीदोनीयहित्तीयवंशीयाश्च योषित्स्व-
प्रीयत। यूयं तेषां मध्यं मा गच्छत तानपि युष्माकं मध्यम् आगन्तुं मानु- २
जानीत यतो हेतोस्ते युष्माकं मनांसि स्वदेवान् प्रत्यवश्यम् आकर्ष्य-
न्तीति वाक्यं यानधि परमेश्वरेणोक्तं तादृशेष्वितरजातीयेषु सुलेमान्
प्रेमार्थम् आसज्यत। तस्य सप्तशतानि महिष्यस्त्रीणि शतानि उपपत्न्य- ३
श्चासन् तास्तु तदीयं मनो विपथे समाकर्षन्। ततः सुलेमनो वार्द्ध- ४
क्यकाले तस्य मनसि स्वयोषिद्भिरितरदेवानाम् अनुगमनाय समा-
कृष्टे तस्य तातस्य दायूदोऽन्तःकरणं यादृक् स्वप्रभुं परमेश्वरं प्रति
सरलमासीत् तस्यान्तःकरणं तादृक् सरलं न तस्थौ। किन्तु सुलेमान् ५
सीदोनीयानाम् अस्तारोताख्याया देव्या अम्मोनीयानां मिल्कमाख्यस्य

६ घृण्यदेवस्य चानुगामी बभूव। अनेन प्रकारेण सुलेमान् परमेश्वरस्य
साक्षात् पातकमाचरत् स निजतातो दायूद् इव सर्व्वतोभावेन परमेश्व-
७ रस्यानुगामी न बभूव। तस्मिन् काले सुलेमान् मोयाबीयानां किमोशा-
ख्यस्य घृण्यदेवस्य कृते ऽम्मोनीयानां मोलकाख्यस्य घृण्यदेवस्य कृते च
८ यिरूशालमस्य सम्मुखस्थे पर्व्वते भजनस्थानं निर्म्मापयामास। तस्य सर्व्वा-
साम् इतरजातीययोषितामनुरोधात् तेन तथैव कृते ताः स्वकीयान्
इष्टदेवान् उद्दिश्य धूपान् अज्वालयन् बलिदानञ्चाकुर्व्वन्।

९ इस्रायेलो यः प्रभुः परमेश्वरो वारद्वयं सुलेमने दर्शनमददात् तं
१० विहाय तस्य मनो विपथाकृष्टमभवत् यस्मादेतेन च स इतरदेवानाम्
अनुगमनात् निवारितस्तस्य परमेश्वरस्य तमादेशं स लङ्घितवान्
११ एतस्मात् कारणात् परमेश्वरः सुलेमानं प्रति चुकोप। अतः परमेश्वरः
सुलेमानं जगाद कर्म्मैतत् त्वया कृतं मयादिष्टनियमविधाने त्वया
लङ्घिते चेतिहेतो मया राजत्वं त्वत्तोऽपहारिष्यते तव दासाय दास्यते
१२ च। किन्तु तव तातस्य दायूदोऽनुरोधात् तव जीवनकाले तन्मया
१३ न करिष्यते तव सुतस्य करात् राजत्वम् अपहारिष्यते। अनन्तरं मम
दासस्य दायूदो ममाभिरुचितस्य यिरूशालमनगरस्य चानुरोधान्मया
कृत्स्नं राज्यं नापकृष्य वंश एकस्तव पुत्राय दास्यते।

१४ अनन्तरं परमेश्वरः सुलेमनो विरुद्धम् इदोमीयहददनामानं वैरि-
णम् एकम् उदस्थापयत् स राजवंशोद्भव आसीद् इदोमदेशे च न्यव-
१५ सत्। इदोमदेशे दायूदोऽवस्थितिसमये सेनापति र्योयाबो हतलोकान्
१६ श्मशाने स्थापयितुं गत्वेदोमीयानां सर्व्वपुंसो हतवान्। योयाब इस्राये-
लीयाः सर्व्वे लोकाश्चेदोमीयानां सर्व्वपुरुषाणां हननं यावत् षण्मासान्
१७ तत्रावातिष्ठन्त। किन्तु स हददस्तेन सहितास्तत्तातस्य भृत्यानां मध्ये
कतिपया इदोमीयलोकाश्च मिसरदेशगमनाय पलायन्त तदानीं हददः
१८ क्षुद्रो बालक आसीत्। ते तु मिदियनात् प्रस्थाय पारणं प्रापुः।
अनन्तरं पारणस्थान् कतिपयान् लोकान् सङ्गिनः कृत्वा मिसरदेशं
गत्वा मिसरीयराजस्य फिरौणः साक्षाद् उपतस्थिरे स च हददाय निवे-
१९ शनं ददौ वृत्तिं निरूपयामास भूमिं विततार च। ततः फिरौण् हददे
ऽतीव तुष्टः स्वभार्य्यायास्तहपिनेषाख्याया महिष्या भगिनीं तं विवा-
२० हयामास। अपरं तहपिनेषाया भगिन्यां तस्य गिनुवतनामके पुत्रे
जाते तहपिनेषा फिरौणः प्रासादे तमपालयत् ततः स गिनुवतः

फिरौणः सुतानां मध्ये फिरौणो निवेशने न्यवसत्। अपरं दायूद् अपि- २१
ष्टगण इव महानिद्रां गतः सेनापति र्योयावश्च मृत इति वार्त्तां मिस-
रदेशे श्रुत्वा हददः फिरौणं जगाद भवान् मां विसृजतु मया स्वदेशो
गन्तव्यः। ततः फिरौन् तं पप्रच्छ मम समीपे तव कस्यापि वस्तुनोऽभाव २२
आस्ते यत्त्वं स्वदेशगमनाय यतसे? स उक्तवान् कस्याप्यभावो नास्ति
तथापि भवान् मां विस्रष्टुम् अर्हति।

अपरम् ईश्वरः सुलेमनो विरुद्धम् इलियादस्य पुत्रं रिषोणं वैरिणम- २३
प्युदस्थापयत्। स स्वप्रभोः सोवान्टपते र्हददेषरस्य समक्षात् पलायाञ्चक्रे।
दायूदा तस्य नृपते र्लोकानां हननकाले स पुरुषान् स्वसमीपे संगृह्य दस्यु- २४
संघस्याधिपति र्बभूव, ततस्ते दम्मेषकं गत्वा तत्र न्यवसन् दम्मेषके राज-
त्वञ्चाकुर्व्वन्। इत्थं हददस्य विपक्षतां विना तेनापि सुलेमनो याव- २५
ज्जीवनं इस्रायेलो वैपरीत्येन वैरित्वमकारि, इस्रायेलम् ऋतीयित्वा
सोऽरामस्योपरि राजत्वं चक्रिवान्।

इफ्रयिमीयनिवाटस्य पुत्रः सिरेदानिवासी यारवियाम इति नाम्ना २६
सुलेमन एको दास आसीत् सिरूयानामिका तस्य माता विधवा-
सीत् सोऽपि राज्ञो विपक्षताम् आचचार। राज्ञः प्रातिकूल्येन तस्य २७
विपक्षताचरणस्य वृत्तान्तोऽयं; सुलेमान् मिल्लुं निरमापयत् स्वतातस्य
दायूदो नगरस्य भग्नस्थानानि च पूनरपूरयत्। स च यारवियामो २८
वीर्य्यवान् पुरुष आसीत्, अतः सुलेमान् तं युवानं कर्म्मशूरं बुद्ध्वा
यूषफवंशीयस्य कृत्स्नस्य कारुनिवहस्य कर्त्तृत्वे नियुक्तवान्। तदानीम् २९
एकदा यारवियामे यिरूशालमात् वहि र्गते शीलोनीयाहियनामा
भविष्यद्वादी परिहितनूतनवसनं तं वर्त्मनि साक्षाच्चकार, तदा तौ द्वौ
विना क्षेत्रे कोऽपि नासीत्। ततोऽहियस्तस्य गात्रस्थितं नूतनवसनं ३०
धृत्वा सञ्छिद्य द्वादशखण्डानि चकार, यारवियामं जगाद च त्वमात्मनः ३१
कृते दशखण्डानि गृहाण यत इस्रायेलः प्रभुः परमेश्वरो वदति पश्य
सुलेमनः करात् मया राज्यमपकृष्य दशवंशास्तुभ्यं दास्यन्ते। मम दासस्य ३२
दायूदोऽनुरोधाद् इस्रायेलीयानां सर्व्ववंशानां मध्ये मयाभिरुचितस्य
यिरूशालमनगरस्य चानुरोधाद् अवशिष्ट एको वंशस्तस्य स्थास्यति।
यतो हेतोस्ते मां विहाय सीदोनीयानां अस्तारोताख्यां देवीं मोयावी- ३३
यानां किमोशाख्यं देवं अम्मोनवंशीयानां मिल्कमाख्यं देवञ्चापूजयन्;
तस्य तातो दायूद् इव ममाभिमतं विध्याज्ञाश्च समाचरितुं ते मदीय-

३४ मार्गेषु न चरन्ति। किन्त्वहं तस्य करात् कृत्स्नं राजत्वं नाक्रक्ष्यामि,
मदीयादेशविध्याचरणात् मयाभिरुचितस्य मदीयदासस्य दायूदोऽनु-
३५ रोधाद् अहं तस्य यावज्जीवनं तं नराधिपतित्वे स्थापयु करिष्यामि। ततः
३६ परं तस्य सुतस्य करात् मया राष्ट्रमाकृष्य दशवंशास्तुभ्यं दास्यन्ते, तस्य
पुत्राय चैको वंशो दास्यते, यतो मम नाम्नः स्थापनार्थं यन्नगरं यिरूशा-
लमं मयाभिरुचितं तत्र मम दासस्य दायूदः प्रदीपेन मम साक्षान्नित्यं
३७ ज्वलितव्यं। अनन्तरं मयानुगृहीतस्त्वं यदा यथाभिलाषं राजत्वं कुर्व्वन्
३८ इस्रायेलीयभूपति र्भविष्यसि, तदा यदि मदीयाज्ञा गृहीष्यसि मम
मार्गेषु चरिष्यसि मम दासो दायूद् इव मदीयान् आदेशविधीन्
आचरन् ममेष्टकर्म्माणि करिष्यसि च, तर्हि तव साहाय्यं कुर्व्वता मया
दायूदो वंश इव तव वंशोऽपि सुस्थिरः कारिष्यते, इस्रायेलीयलोकाश्च
३९ तुभ्यं दास्यन्ते। तदपराधाद् दायूदो वंशो मया क्लेशिष्यते किन्तु
४० तन्नित्यं नहि। ततः परं सुलेमनि यारबियामं हन्तुं यतमाने यारबि-
यामो मिसरदेशं पलाय्य मिसरदेशीयं शीशकं राजानम् आश्रित्य
सुलेमनो मरणं यावत् मिसरदेशे तस्थिवान्।
४१ सुलेमनोऽवशिष्टं चरित्रं तस्य सर्व्वकर्म्माणि ज्ञानञ्चैतानि किं सुले-
४२ मनश्चरित्राख्ये ग्रन्थे न लिखितानि? स सुलेमान् चत्वारिंशद्
वर्षाणि यावद् यिरूशालमे वसन् कृत्स्नेस्रायेल उपरि राजत्वं चकार।
४३ अनन्तरं सुलेमान् स्वपितृगण इव महानिद्रां गत्वा स्वतातस्य दायूदो
नगरे श्मशाने स्थापितः। ततस्तस्य पुत्रो रिहबियामस्तस्य पदे राजत्वं
चकार।

---

## १२ द्वादशोऽध्यायः।

१ रिहबियामस्य समीपे लोकानां निवेदनं ६ नवमन्त्रिणां मन्त्रणया लोकान् प्रति रिहबियामस्य कठिनोत्तरप्रदानं १६ इस्रायेलो दशवंशानां राजद्रोहकरणं २१ तैः सह योधनाद् भविष्यद्वाक्येन रिहबियामस्य निवारणं २५ दशवंशानाम् उपरि यारबियामस्य राजत्वं प्रतिमाद्वयस्थापनञ्च।

१ अनन्तरम् इस्रायेलीयवंशेषु सर्व्वेषु रिहबियामस्याभिषेकार्थं शिखिमे
२ समागतेषु रिहबियामोऽपि शिखिमं जगाम। इत्यनन्तरे मिसरदेश-
प्रवासी निबाटस्य सुतो यारबियामस्तां वार्त्तां श्रुतवान्। स यार-
३ बियामः सुलेमनो राज्ञः सम्मुखात् पलाय्य मिसरदेशे प्रावसत्। ततः

परं द्वितीयाह्नतः पुनरागताः । स तु यारबियामः सम्मिलिता इस्रायेलीय-
लोकाश्च रिहबियामाय वाक्यमेतन्निवेदयामासुः, तव तातोऽस्मासु गुरु ४
युगम् आरोपितवान्, कठिनदासत्वरूपं यद् गुरु युगम् अस्मास्वारोपितं
तद् अधुना त्वया लघुतरं क्रियतां तथा कृते वयं त्वां सेविष्यामहे इति ।
ततः स तान् प्रतिजगाद यूयं गच्छत दिनत्रयात् परं पुन र्ममान्तिकम् ५
आगच्छतेति । ततो लोकाः प्रस्थिताः ।

अनन्तरं सुलेमनो जीवनकाले ये तं पर्य्यचरन् राजा रिहबियामस्तैः ६
प्राचीनैः सह मन्त्रयित्वा तान् पप्रच्छ युष्माकं मन्त्रणया लोका इमे
मया किं प्रतिगदितव्याः ? ततस्ते तम् ऊचुः भवान् यद्यद्य लोकानाम् ७
एतेषां किङ्करो भूत्वा तान् सेवते मधुरवचनैश्च तान् प्रत्युत्तरं वदति
तर्हि ते सर्व्वदा भवतो दासा भविष्यन्ति । किन्तु स तैः प्राचीनै र्निवे- ८
दितां तां मन्त्रणां विहाय तस्य समवयस्का ये तत्रगास्तं पर्य्यचरन्
तैः सह मन्त्रयित्वा तान् पप्रच्छ युष्माकं मन्त्रणया लोका इमेऽस्माभिः ९
किं प्रतिगदितव्याः ? ते मां व्याहरन्, तव तातेनास्मासु यद् युगम्
आरोपितं तत् त्वया लघुतरं क्रियतामिति । ततस्तस्य समवयस्कास्तत- १०
मास्तम् ऊचुः, तव पित्रा यद् गुरु युगम् अस्मास्वारोपितं तत् त्वया
लघुतरं क्रियतामिति वाक्यं यै र्भवान् उक्तस्तान् इमान् लोकान् प्रति
भवता यद् उत्तरं कर्त्तव्यं तदिदं । भवान् तान् वदतु, मम तातस्य
कटिदेशात् मम कनिष्ठाङ्गुलिरपि स्थूलतरः । अतो मम पिता यद् ११
गुरु युगं युष्मास्वारोपितवान् तद् युष्मदीययुगं मया गुरुतरं कारिष्यते
मम तातेन यूयं कशाभि र्दण्डिताः किन्तु मया ग्रन्थियुक्ताभिस्ताडनीभि
र्दण्डयिष्यध्वे इति । अनन्तरं दिनत्रयात् परं युष्माभि र्ममान्तिके १२
पुनरागन्तव्यं राज्ञ एतस्माद् आदेशाद् यारबियामे सर्व्वेषु लोकेषु च
तृतीयदिवसे रिहबियामस्य समक्षम् आगतेषु राजा कठिनवचनै १३
र्लोकान् आबभाषे । स प्राचीनै र्निवेदितां मन्त्रणां विहाय यूनां मन्त्र- १४
णानुसारेण तान् जगाद मम तातेन यद् गुरु युगं युष्मास्वारोपितं
तन्मया गुरुतरं कारिष्यते, मम तातेन यूयं कशाभि र्दण्डिताः किन्तु
मया ग्रन्थियुक्ताभिस्ताडनीभि र्दण्डयिष्यध्वे इति । अनेन प्रकारेण १५
राज्ञा लोकानां प्रार्थितम् अस्वीकृतं । यतः परमेश्वरो निबाटस्य पुत्रं
यारबियामं प्रति शीलोनीयाहियेन यद् वाक्यं भाषितवान् तस्य तद्-
वाक्यस्य सिद्ध्यर्थं परमेश्वर एतन्निरूपितवान् ।

१६ अनन्तरम् अस्माकं निवेदनं राज्ञा न श्रोतम् इतीस्रायेलीयैः सर्व्वै
दृष्टं। ततो लोका राजानं प्रतिजगदुः, दायूदस्माकं कोऽस्य भागो?
यीशयस्य पुत्रेऽस्माकं कोऽप्यधिकारो नास्ति। हे इस्रायेलीयवंशा युष्माभिः
स्वं स्वं गृहं गम्यतां, हे दायूद् इतः परं त्वं स्ववंशस्यैवाध्यक्षो भव।
१७ तत इस्रायेलीयवंशाः स्वं स्वं वेश्म जग्मुः। यिहूदादेशस्थनगरेषु ये
इस्रायलीयवंशा न्यवसन् केवलं तेषां राजत्वं रिहबियामेन कृतं।
१८ अनन्तरं रिहबियामेन राज्ञा प्रेषितः करनिबहस्याधिपतिरदोराम
इस्रायेलीयलोकैः पाषाणाघातै र्हतः। ततो राजा रिहबियामो यिरू-
१९ शालमं पलायितुं त्वरितं रथं समारुरोह। इत्थमिस्रायेलीयवंशा
२० अद्यवद् दायूद्वंशस्याधीनत्ववर्जिता बभूवुः। अनन्तरं यारबियामः
पुनरागत इति वार्त्तां निशम्येस्रायेलीयवंशीयाः सर्व्वे दूतेन तं समा-
नायाह्वय सर्व्वेषाम् इस्रायेलीयानां राज्येऽभिषिषिचिरे। ततः केवलं
यिहूदावंशं विनान्यः कोऽपि वंशो दायूद्वंशस्यानुगामी न तस्थौ।
२१ अनन्तरं राज्यं यत् सुलेमनः पुत्रं रिहबियामं प्रति पुन र्वर्त्तेत
तत्कृत इस्रायेलीयवंशैः सह योधनार्थं यिहूदावंशीया बिन्यामीनवं-
शीयाश्च सर्व्वेऽर्यतोऽशीतिसहस्राधिकलक्षसङ्ख्यका अभिरुचिता योद्धारो
२२ यिरूशालमं प्रत्यागतेन रिहबियामेन सम्मेलिताः। तत ईश्वरीय-
२३ लोकं शिमयियं प्रतीश्वरस्यैतद् वाक्यम् उपतस्थौ, त्वं यिहूदादेशीयं
नृपतिं सुलेमनस्तनयं रिहबियामं यिहूदाबिन्यामीनवंशावशिष्टान्
२४ सर्व्वान् लोकांश्च वद, परमेश्वरो भाषते, युष्माभि र्यात्रा न कर्त्तव्या,
इस्रायेलीयवंशीये युष्मद्भ्रातृभि र्न योद्धव्यं किन्तु स्वं स्वं गृहं गन्तव्यं,
यत एतत्सर्व्वं मत्तोऽभवत्। ततस्ते परमेश्वरस्याज्ञां गृहीत्वा परमेश्वरस्य
वाक्यानुसारात् परावृत्य गताः।

२५ अनन्तरं यारबियाम इफ्रयिमपर्व्वतस्थं शिखिमनगरं पुन र्निर्म्माय
तत्र न्यवसत् तस्मात् स्थानात् प्रस्थाय च पिनूयेलमपि निर्म्मापयाञ्च-
२६ कार। ततः परं यारबियामो निजमनसि विवेचयामास, इदानीं
२७ राज्यं दायूदो वंशं प्रति पुनर्वर्त्तिष्यते। लोका इमे यदि परमेश्वरस्य
मन्दिरे बलिदानार्थं यिरूशालमं गच्छन्ति तर्हि तेषां लोकानां मनांसि
स्वप्रभौ सुलेमनः पुत्रे रिहबियामे पुनरासंक्ष्यन्ते ते च मां हत्वा
२८ यिहूदादेशीयराजं रिहबियामं प्रति पुनरावर्त्तिष्यन्ते। ततो नृपति
र्मन्त्रयित्वा स्वर्णमयं गोवत्सद्वयं निर्म्माय तान् जगाद, यिरूशालमे

गमनं युष्माकं क्लेशदं; हे इस्रायेल्वंश, पश्य तव यो देवो मिसरदेशात्
त्वां बहिरानयत् सोऽयं। ततः स तयोरेकं वत्सं बैथेले द्वितीयञ्च २९
दाने निदधे, तत् तु कर्म्म पातकं बभूव, इस्रायेलीयलोकाश्च तयोरेकं ३०
साक्षात् कर्त्तुं दानं यावद् अगच्छन्। स उच्चस्थानीयगृहाण्यपि निर्म्मा- ३१
पयामास ये च लेवीयवंशोद्भवा नासन् तादृशान् नीचतमान् लोकान्
याजकत्वे नियोजयामास। अपरं यिहूदादेशे यादृश उत्सवोऽभवत् ३२
यारबियामोऽष्टममासस्य पञ्चदशे दिने तादृशम् उत्सवम् अकरोत्
वेद्याञ्च बलीन् अददात् इत्थं स स्वेन निर्म्मितयो र्वत्सयोः कृते बैथेले
बलिदानं निरूपयामास, स्वेन नियुक्तान् उच्चस्थानीययाजकान् बैथेले
स्थापयामास च। इत्थं यो मासः स्वकीयाभिलाषात् तेन निश्चितस्त- ३३
स्याष्टममासस्य पञ्चदशे दिने स बैथेले स्वेन कृतायां वेद्यां बलीन्
अददाद् इस्रायेलीयवंशानां कृत उत्सवं निरूपयामास धूपदहनार्थं
तां वेदिं समारुरोह च।

---

## १३ त्रयोदशोऽध्यायः।

१ यारबियामस्य समीप ईश्वरीयलोकस्य कथनं ११ ईश्वरीयलोकं प्रति प्राचीनभविष्यद्वादिनो मृषावाक्यं २० तद्वचनपालनात् तं प्रतीश्वरस्यानुयोगः २७ तस्य मरणं श्मशाने स्थापनञ्च ३३ यारबियामस्य महापातकञ्च।

अनन्तरं धूपदहनार्थं यारबियामे वेद्या उपरि तिष्ठति सति परमे- १
श्वरीयवाक्ययुक्त एक ईश्वरीयलोको यिहूदादेशाद् बैथेल उपतस्थौ
स तु परमेश्वरस्य वाक्येन तद्वेद्या विरुद्धं वाणीम् एताम् घोषयामास, २
हे वेदि हे वेदि परमेश्वर एतद् वदति दायूद्वंशे जनिष्यमाणो योशि-
यनामक एकः कुमारस्तवोपरि धूपदाहकान् याजकान् तवोपरि
छेदयिष्यति तवोपरि लोका मनुष्याणाम् अस्थीनि दाहयिष्यन्ति च।
अपरं स तस्मिन् दिने लक्षणं निश्चित्य जगाद परमेश्वरेण प्रकाशितं ३
लक्षणमिदं, पश्य वेदिरेषा भंक्ष्यते तदुपरिस्थितं भस्म च भूमौ निपा-
तयिष्यते। ततो बैथेलस्थवेद्या विरुद्धम् ईश्वरीयलोकेन घोषितं तद् ४
वाक्यं निशम्य यारबियामो राजा तत्स्थानाद् वेदितः करं प्रसार्य्य, एनं
धरतेति आजुहाव, किन्तु तस्य विरुद्धं प्रसारितस्तस्य करः शुष्कत्वं गत्वा
पुनस्तेन सङ्कोचयितुं नाशक्यत। परमेश्वरस्य वाक्येनेश्वरीयलोकेन यत् ५
लक्षणं निर्द्दिष्टं तदनुसाराद् वेदिरपि भग्ना भस्म च वेदितो निपातितं।

६ ततो नृपतिरीश्वरीयलोकमुवाच त्वं स्वप्रभुं परमेश्वरम् प्रसादय, मम
करो यन्मां प्रति परावर्त्तेत मदर्थमेतत् प्रार्थयस्व च । तत ईश्वरीयलोकेन
परमेश्वरे प्रसादिते नृपतेः करस्तं प्रति परावृत्य पूर्व्ववद् बभूव ।
७ अपरं नृपतिरीश्वरीयलोकं बभाषे भवान् मया सह मम गृहं गत्वा
८ तृप्यतु मत्त उपायनं गृह्णातु च । किन्त्वीश्वरीयलोको नृपतिं प्रतिजगाद,
भवान् यद्यपि मह्यं स्वनिवेशनस्यार्द्धं दद्यात् तथाप्यहं भवता सह तत्र
९ प्रवेक्ष्यामि स्थानेऽस्मिन् भक्ष्यं न भोक्ष्ये तोयं न पास्यामि च । यतः
परमेश्वरस्य वाक्येनाहमिदमादिष्टः, त्वया भक्ष्यं न भोक्तव्यं तोयमपि
१० न पातव्यं येन मार्गेण गमिष्यसि तेन च न प्रत्यागन्तव्यं । ततः परं स
इतरेण मार्गेण प्रस्थितः, येन मार्गेण बैथेलमागतवान् तदन्येन परावृत्तः ।
११ तदानीं बैथेल एको वृद्धो भविष्यद्वादी न्यवसत् तस्य पुत्रो गृह-
मागत्य तस्मिन् दिन ईश्वरीयलोकेन कृतानि कर्म्माणि राज्ञे कथितानि
वाक्यानि च वर्णयामास । ततः स्वपुत्रैस्तत्सर्व्वं ज्ञापितः पिता तान्
१२ पप्रच्छ स केन मार्गेण गतवान्? ततो यिहूदादेशादागत ईश्वरीय-
१३ लोको येन मार्गेण गतवान् तस्मिन् पुत्रै निश्चिते पिता तान् जगाद
यूयं मदर्थं गर्द्दभं सज्जयत । ततः परं तै गर्द्दभे सज्जिते स तमारुह्येश्व-
१४ रीयलोकस्य पश्चाद् गत्वा कस्यचिद् एलावृक्षस्याध उपविष्टं तं प्राप्य
व्याजहार, य ईश्वरीयलोको यिहूदादेशाद् आगतः स किं त्वमसि?
१५ स उवाच, अहमेव । स तु तं जगाद त्वं मया सह मद्गृहमागच्छान्नं
१६ भुंक्ष्व च । स प्रत्युवाच, अहं त्वया सह परावृत्य तव वेश्म प्रवेष्टुं तत्र
१७ स्थाने त्वया सार्द्धं भक्ष्यमत्तुं तोयं पातुञ्च न शक्नोमि । यतः परमेश्वरस्य
वाक्येनाहमिदमादिष्टः, तत्र स्थाने त्वयान्नं न भोक्तव्यं तोयमपि न पातव्यं
१८ येन मार्गेण च गमिष्यसि तेन न परावर्त्तितव्यमिति । अपरं स जगाद
अहमपि त्वत्तुल्यो भविष्यद्वाद्यस्मि दूत एकश्च परमेश्वरस्य वाक्येन
मामिदमादिशद् असौ त्वया परावर्त्त्य तव गृहमानीयतां तत्रान्नं भुंक्तां
१९ तोयं पिबतु च । किन्तु तेन मृषा वचोऽभाषि । ततः स तेन सार्द्धं
परावृत्य तस्य गृहेऽन्नमभुङ्क्त तोयञ्चापिबत् ।
२० भोजनासने तयोरुपवेशनसमये तत्परावर्त्तकं भविष्यद्वादिनं प्रति
२१ परमेश्वरस्य वाक्य उपस्थिते स यिहूदादेशाद् आगतं तम् ईश्वरीयलोकं
उच्चैःस्वरेणाभाष्य जगाद, परमेश्वरेण वागियमुच्यते परमेश्वरस्याज्ञा
त्वया लङ्घिता तव प्रभुना परमेश्वरेण च त्वं यद् आदिष्टस्तदतिक्रम्य

परावर्त्तनं कृतं यत् स्थानमाश्रित्य त्वामाज्ञापितवान् त्वया तत्रान्नं न २२
भोक्तव्यं तोयञ्च न पातव्यमिति तस्मिन्नेव स्थाने त्वयान्नं भुक्तं तोयञ्च पीतं,
ततो हेतोस्तव कुणपस्तव पितृपुरुषाणां श्मशानं न प्राप्स्यति।

अपरं तेनान्ने भुक्ते पीते च यो भविष्यद्वादी पुनरानीतस्तस्य कृते गर्द्दभे २३
सज्जिते च प्रस्थितं तं सिंह एको मार्गे प्राप्य जघान ततस्तस्य कुणपो २४
मार्गे निपतितस्तदन्तिके च गर्द्दभोऽवतिष्ठत सिंहोऽपि तस्य कुणपस्या-
न्तिकेऽवतिष्ठत। ततः परं मार्गे पतितः स कुणपः कुणपस्यान्तिकेऽवति- २५
ष्ठमानः सिंहश्च कैश्चित् पथिकै र्दृष्टौ तस्य वृद्धस्य भविष्यद्वादिनो
वसतिनगरमागत्य वर्णितौ च। ततो यो भविष्यद्वादी तं मार्गात् २६
परावर्त्तयत् स तां वार्त्तां निशम्य जगाद, असौ परमेश्वरीयाज्ञालङ्घी
स ईश्वरीयलोक एव; स परमेश्वरेण यथोक्तस्तथैव परमेश्वरेण सिंहस्य
करे समर्पितस्तेन विदीर्णो हतश्च। अपरं स स्वपुत्रान् जगाद यूयं २७
मदर्थं गर्द्दभं सज्जयत। ततस्तैर्गर्द्दभे सज्जिते स गत्वा वर्त्मनि निपतितं २८
कुणपं तत्कुणपस्यान्तिकेऽवतिष्ठमानौ गर्द्दभसिंहौ च प्राप सिंहेन कुणपो
न भक्षितो गर्द्दभोऽपि न विदीर्णः। ततः स भविष्यद्वादी तस्येश्वरीय- २९
लोकस्य कुणपमुत्थाप्य गर्द्दभ आरोप्य परावृत्तः। अपरं स वृद्धो भवि-
ष्यद्वादी तं विलपितुं श्मशाने स्थापयितुञ्च स्वं नगरम् आजगाम।
अनन्तरं तस्य कुणपे तेन स्वश्मशाने स्थापिते लोकास्तं प्रति विलपन्तो व्याहरन् ३०
हा हा भ्रातरिति। श्मशाने तस्य स्थापनात् परं स स्वपुत्रान् जगाद ३१
यत्र स्थाने ईश्वरीयलोकोऽसौ निहितः श्मशानस्य तस्मिन्नेव स्थाने
ऽहमपि मरणात् परं युष्माभि र्निधातव्यस्तस्यास्थ्नामन्तिके ममास्थीनि
च स्थापितव्यानि। यतो बैथेलस्थवेद्या विरुद्धं शोमिरोणदेशीयनग- ३२
रेषु स्थितानां भजनस्थानीयगृहाणाञ्च विरुद्धं परमेश्वरस्य वाक्येन या
वाणी तेन घोषिता सावश्यं सफला भविष्यति।

ततः परं यारबियामः स्वकीयं कुमार्गं न विहाय पुनर्व्वारं लोकानां ३३
मध्ये नीचतमान् भजनस्थानानां याजकत्वपदे न्ययोजयत्। स यमभ्यलषत्
तमेव पावयित्वा भजनस्थानीययाजकम् अकरोत्। किन्तु तत् कर्म्म ३४
यारबियामवंशस्य पातकं तस्य लोपजनकं पृथिवीत उच्छिन्नताजनकञ्च
बभूव।

# १४ चतुर्दशोऽध्यायः ।

१ पुत्रस्य पीडाहेतोरहियस्य समीपं यारबियामस्य जायाया गमनं ५ अहियस्य दुःखदायकवाक्यकथनं १७ अबियस्य मरणं श्मशाने निधानञ्च २१ रिहबियामस्य कुराजत्वकथनं २५ मिसरदेशीयशीशकराजेन यिरूशालमस्य लुण्ठनं २९ रिहबियामस्य पदेऽबियस्याभिषेकश्च ।

१ तस्मिन् काले यारबियामस्य तनयेऽबिये रोगग्रस्ते सति यारबियामः
२ स्वजायाम् अगाद, त्वमुत्थायाच्छद्मवेशं धर, त्वं यारबियामस्य जायेति
केनापि न बुध्यतां ततः परं शीलों गच्छ; पश्य मयैतेषां लोकानां
राज्ञा भवितव्यम् इत्यहं येनोक्तः सोऽहियनामा भविष्यद्वादी तत्र
३ विद्यते। त्वया स्वहस्ते दशपूपान् कतिपयान् मोदकान् मधुना परिपूर्णं
भाण्डमेकञ्च गृहीत्वा तस्य समीपं गम्यतां; ततो बालकस्य का दशा
४ भविता तत् त्वं तेन ज्ञापयिष्यसे। अनन्तरं यारबियामस्य जाया तथैव
कृत्वा उत्थाय शीलों प्राप्याहियस्य निकेतनं प्रविवेश; तस्मिन् काले
वार्द्धक्यकारणाद् अहियस्य नेत्रयोः क्षीणता जाता तस्मात् स द्रष्टुं
नाप्नोत्।
५ इत्यनन्तरे परमेश्वरोऽहियं बभाषे पश्य यारबियामस्य जाया निज-
पुत्रस्य भाविदशां त्वां प्रष्टुम् आयाति यतः स रोगग्रस्तः, अतस्त्वयै-
तानि वाक्यानि तस्यै कथितव्यानि, अधिकन्तु पश्य साच्छद्मवेशं धृत्वा-
६ गच्छति। अपरं द्वारेण प्रविशन्त्यास्तस्याश्चरणयोः शब्दं निशम्या-
हियस्तत्क्षणाद् व्याजहार हे यारबियामस्य जाये त्वमागच्छ; कुत
आच्छद्मवेशं परिहितासीः? अहं कठिनां वार्त्तां वक्तुं त्वामुप प्रेषितो-
७ ऽस्मि। त्वं गत्वा यारबियामं भाषस्व, इस्रायेलः प्रभुः परमेश्वरो
वाचमिमां वदति, लोकानां मध्यात् त्वं मयोन्नमितो मदीयेस्रायेलीय-
८ प्रजागणस्याधिपतित्वे नियुक्तश्च, दायूद्वंशात् मयाकृष्टं राज्यमपि तुभ्यं
दत्तं किन्तु मम यो दासो दायूद् मदीयाज्ञाः समाचरत् केवलं मत्तुष्टि-
जनकं कर्म्म कर्त्तुं सर्व्वान्तःकरणेन ममानुगाम्यभवच्च त्वं तस्य सदृशो
९ नाभवः, किन्तु त्वत्पूर्व्ववर्त्तिभ्यः सर्व्वेभ्यो दुष्टाचारी विपथगामी च भूत्वा
मां क्रोधयितुं स्वकृत इतरदेवान् सिक्तमूर्त्तीश्च निरमापयो माञ्च
१० पृष्ठतोऽकरोः। अतो हेतोः पश्य यारबियामवंशं प्रत्यमङ्गलं मया
घटयिष्यते यारबियामवंशीयाः सर्व्वे पुमांस इस्रायेल्यदेशे बद्धा
मुक्ताश्च सर्व्वे मया विनाशयिष्यन्ते, केचिद्यथावकरां दहेत् सर्व्वतोभावेन

प्रज्वलयन्ति तद्वद् यारबियामवंशस्य पश्चात् मया सम्मार्जनं कारिष्यते।
यारबियामवंशीयो यः कोऽपि नगरमध्ये मरिष्यति स कुक्कुरै र्भक्षिष्यते ११
यश्च क्षेत्रे मरिष्यति स विहगै र्भक्षिष्यते यतः परमेश्वर एतदुक्तवान्।
अतस्त्वमुत्थाय स्वगृहं गच्छ, गोपुरे त्वया पादार्पणमात्रे तव बालको १२
मरिष्यति। अपरम् इस्रायेलीयलोकाः सर्व्वे तमधि विलप्य श्मशाने १३
निधास्यन्ति, यारबियामवंशमध्ये केवलः स एव श्मशानं प्राप्स्यति यतो
यारबियामवंशमध्य इस्रायेलः प्रभुं परमेश्वरं प्रति तस्यैव सद्भावस्य
किञ्चिद् दृष्टं। अपरम् इस्रायेलीयानामेको नृपतिः परमेश्वरेणोत्पाद- १४
यिष्यते स एकस्मिन्नेव दिने यारबियामवंशम् उच्छेत्स्यति तदन्यद्
अधुनापि किं न घटते? अपरं परमेश्वरो जलस्थं चपलं दण्डमिवे- १५
स्रायेलीयवंशम् आहनिष्यति तस्य पूर्व्वपुरुषेभ्यस्तेन दत्तादुत्तमदेशाद्
एतस्माद् इस्रायेलीयलोकान् उत्पाट्य फरातनदस्य पारे विकरिष्यति
च यतस्ते स्वकीयचैत्यवृक्षसेवया परमेश्वरम् अक्रोधयन्। यारबियामो १६
यानि पापानि कृतवान् इस्रायेलीयवंशञ्च कारितवान् तेभ्य इस्रायेलीय-
वंशं बन्दित्वावस्थायां समर्पयिष्यति।

अनन्तरं यारबियामस्य जाया प्रोत्थाय गत्वा तिर्षां प्राप। अपरं गृह- १७
द्वारस्य शिलायां तस्याः पादे प्रक्षिप्ते स बालको ममार। ततः परमेश्वरः १८
स्वदासेनाहियेन यद् वाक्यम् उक्तवान् तदनुसाराद् इस्रायेलीयलोकाः
सर्व्वे तं श्मशाने निधाय विललपुः। यारबियामस्यावशिष्टकर्म्मणां १९
युद्धराजत्वयोश्च विवरणम् इस्रायेलीयभूपानां पुरावृत्तपुस्तके लिखित-
मास्ते। यारबियामो द्वाविंशतिवर्षाणि यावद् राजत्वं कृत्वा स्वपितृ- २०
लोकाइव महानिद्रां लेभे; ततस्तस्य पुत्रो नादवस्तस्य पदे राज्याभि-
षिक्तो बभूव।

यिहूदादेशे सुलेमनस्तनयो रिहबियामो राजत्वमकरोत्। राज्य- २१
प्राप्तिसमये स रिहबियाम एकचत्वारिंशद् वर्षवयस्क आसीत् तत
इस्रायेलीयानां सर्व्ववंशानां मध्ये यन्नगरं परमेश्वरेण स्वनामस्थाप-
नार्थम् अभिरुचितं तत्र यिरूशालमे स सप्तदशवर्षाणि यावद् राजत्वं
चक्रिवान् तस्य जनन्या अम्मोनीया नयमेति नामासीत्। अनन्तरं २२
यिहूदावंशीयाः परमेश्वरस्य साक्षात् कुत्सिताचारिणो भूत्वा यानि
पापान्यकुर्व्वन् तैः परमेश्वरं स्वपूर्व्वपुरुषेभ्योऽप्यधिकम् अक्रोधयन्।
एकैकस्मिन् उच्चस्थाने एकैकस्य हरितवर्णवृक्षस्याधश्च तैरपि स्तम्भानि २३

२४ मूर्त्तयश्चैतस्तत्राच निरूपिताः। देशे पुङ्गामिनो नरा अप्यविद्यन्त, इस्रायेलीयलोकानां सम्मुखाद् इतरजातीया ये लोकाः परमेश्वरेण दूरीकृतास्तेषां घृण्यकर्म्माणि तैरपि समाचरितानि।

२५ अपरं रिहवियामस्य राजत्वस्य पञ्चमवत्सरे मिसरदेशीयनृपतिः
२६ शीशको यिरूशालमस्य विरुद्धमागत्य परमेश्वरीयमन्दिरस्य धनानि राजपुर्य्याश्च धनानि जहार, सर्व्वाण्येव तेन हृतानि। सुलेमना निर्म्मि-
२७ तानि सर्व्वाणि स्वर्णमयफलकान्यपि तेन हृतानि। अनन्तरं तेषां विनिमयेन पित्तलीयफलकानि राज्ञा रिहवियामेन निर्म्मापितानि राजपुर्य्यां द्वारपालकानां पदातीनाम् अध्यक्षाणां करेषु समर्पितानि च।
२८ ततो यतिवारं राजा परमेश्वरस्य मन्दिरमगच्छत् ततिवारं पदातयस्तान्यधारयन् अनन्तरं पदातिशालायां पुन र्न्यदधुः।

२९ तस्य रिहवियामस्य चरित्रं तेन कृतानि सर्व्वाणि कर्म्माणि च यिहू-
३० दादेशीयभूपतीनां पुरावृत्तपुस्तके लिखितानि किं न विद्यन्ते? रिह-
३१ वियामयारवियामयो र्मध्ये नित्यं युद्धमासीत्। ततः परं रिहवियामः स्वपितृगण इव महानिद्रां गत्वा निजपितृलोकैः समं दायूद्नगरे श्मशाने स्थापितः। तस्य जनन्या अम्मोनीया नयमेति नाम आसीत्। अनन्तरं तस्य तनयोऽवियस्तस्य पदे राजत्वं प्राप्तः।

---

# १५ पञ्चदशोऽध्यायः।

१ अवियस्य कुराजत्वकथनं ९ तस्य तनयस्यासाः सुराजत्वकथनं १६ तेन सार्द्धम् इस्रायेलीयबाशाराजस्य युद्धं २३ तस्य मरणं यिहोशाफटनाम्नस्तस्य तनयस्याभिषेकः २५ नादबस्य बाशायाश्च कथनं।

१ निबाटपुत्रस्य यारवियामस्याष्टादशे राजत्ववत्सरेऽवियो यिहूदादेशे
२ राजा बभूव। तेन त्रीन् वत्सरान् यावद् यिरूशालमे राजत्वमक्रियत; अवशालोमस्य माखानामिका दुहिता तस्य मातासीत्।
३ तस्य पूर्व्वं तस्य तातो यानि पापानि समाचरत् सोऽपि तानि सर्व्वाणि समाचरत् तस्य पूर्व्वपुरुषस्य दायूदो मन इव तस्य मनः स्वप्रभुं परमे-
४ श्वरं प्रति सरलं नासीत्। तथापि दायूदोऽनुरोधात् तस्य प्रभुना परमेश्वरेण तस्मै यिरूशालमे प्रदीपमेकं दत्त्वा तस्य परं तस्य वंश उन्नमितो
५ यिरूशालमनगरञ्च संस्थापितं। यतो दायूद् परमेश्वरस्य तुष्टिकरं कर्म्म समाचरत्, हित्तीयोऽरियस्य कथां विनान्येन केनापि कर्म्मणा यावज्जी-

बन्नसीम्वरीयादेशं नाकथ्यत। यारबियामस्य यावज्जीवनं तस्य रिह- ६
बियामवंशस्य च परस्परं युद्धमासीत्। तस्याबियस्य चरित्रं सर्व्वकर्म्माणि ७
च यिहूदादेशीयनृपतीनां पुरावृत्तग्रन्थे लिखितानि किं न विद्यन्ते?
अबिययारबियामयोः परस्परं युद्धमासीत्। अनन्तरम् अबियः स्वपि- ८
तृगण इव महानिद्रां गतो लोकै र्दायूद्नगरे श्मशाने स्थापितश्च, तस्य
पुत्र आसाश्च तस्य पदे राजा बभूव।

इस्रायेलीयभूपते र्यारबियामस्य विंशे राजत्ववत्सर आसा यिहू- ९
दादेशस्य राजत्वं प्राप्तवान्। तेन यिरूशालम एकचत्वारिंशद्वर्षाणि १०
यावद् राजत्वमक्रियत; अबशालोमस्य माखानामिका दुहिता तस्य
पितामह्यासीत्। स आसाः स्वपूर्व्वपुरुषो दायूद् इव परमेश्वरस्य ११
तुष्टिकरं कर्म्म समाचरत्। पुङ्गामिनो लोकास्तेन देशाद् बहिष्कृता- १२
स्तस्य पूर्व्वपुरुषाश्च यानि घृणार्हवस्तून्यस्थापयन् तानि सर्व्वाण्यपि
तेन दलितानि। तस्य पितामह्या माखया चैत्यवृक्षस्य मूले प्रतिमायां १३
स्थापितायां सापि राज्ञीपदात् तेन भ्रंशिता तस्याः प्रतिमा च भग्ना
किद्रोणतटिनीतटे दग्धा च। किन्तु भृगुस्थानानि न लुप्तानि तथाप्यासा १४
यावज्जीवनं परमेश्वरं प्रति सरलमना आसीत्। तस्य जनको यद् यत् १५
पावितवान् स स्वयञ्च यद् यत् पावितवान् तत्सर्व्वं दुर्व्वर्णसुवर्णपात्रं
परमेश्वरस्य मन्दिरे तेन निहितं।

इस्रायेलीयराजेन बाशा सार्द्धम् आसा यावज्जीवनं युद्धं बभूव। १६
विशेषतः कश्चिन्निर्गत्य यिहूदादेशीयभूपतेरासाः पक्षीयो भवितुं यन्न १७
पारयेत् तदर्थम् इस्रायेलीयनृपति र्बाशा यिहूदादेशस्य विरुद्धं गत्वा
रामतपुरीं दृढीकर्त्तुम् उपचक्रमे। तत आसाः परमेश्वरीयभवनस्य १८
भाण्डागारेष्ववशिष्टानि रजतहेमानि राजनिवेशनस्य धनानि चादाय
स्वभृत्यानां करेषु समर्पयामास। अपरम् आसाराजेन प्रेरितास्ते
हिषियोनस्य पौत्रं टब्रिम्मोणस्य पुत्रं बिन्हदद इतिनामानं दम्मेष-
कनिवासिनम् अरामीयनृपतिं जगदुः, त्वया सह मम तत्पित्रा च १९
सह मत्पितु र्नियमो विद्यते तस्मात् पश्याहम् उपायनार्थं रजतहेमानि
तव समीपं प्रहिणोमि; अत इस्रायेलीयनृपति र्बाशा यन्मत्तोऽपसरेत्
तदर्थं तेन सह तव यो नियम आस्ते स त्वया भज्यतां। ततो बिन्हदद २०
आसाराजस्य वाक्यं गृहीत्वा निजबलानाम् अध्यक्षान् इस्रायेलीय-
देशस्थनगराणां विरुद्धं प्रहित्येयोनं दानम् आबेलबैत्माखां किन्नेरताञ्च

२१ कृत्स्नं प्रदेशं कृत्स्नं नप्तालिदेशञ्च वशीचक्रे। वार्त्तामिमां निशम्य बाशा
२२ रामतनिर्म्माणात् निवृत्य तिर्सायां वसतिं चक्रे। अनन्तरम् आसा
नरपति र्यिहूदादेशीयान् सर्व्वान् आह्वयत् कमपि नात्यजत्; ततो
निर्म्माणार्थं बाशाराजेन सञ्चितान् रामतनगरस्य पाषाणान् काष्ठानि
च ते स्थानान्तरं निन्युः। अपरम् आसाराजस्तैरेव पाषाणादिभि
र्विन्यामीनदेशस्थगेवां मिस्पाञ्च निर्म्मापयामास।

२३ तस्यासा अवशिष्टं सर्व्वचरित्रं सर्व्वकर्तृत्वं सर्व्वकर्म्माणि च तेन
निर्म्मितानां नगराणां नामानि च यिहूदादेशीयराजानां पुरावृत्त-
पुस्तके लिखितानि किं न विद्यन्ते? वार्द्धक्यं गतस्य तस्य पादरोगो
२४ बभूव। अपरं स आसाः स्वपितृगणाइव महानिद्रां गत्वा स्वपितृगणस्य
समीपे निजपूर्व्वपुरुषस्य दायूदो नगरे श्मशाने निदधे; अनन्तरं तस्य
पुत्रो यिहोशाफटस्तस्य पदे राजा बभूव।

२५ यिहूदादेशीयस्यासानाम्नो नरपते र्द्वितीये राजत्ववत्सरे यारबिया-
मस्य सुतो नादव इस्रायेलदेशस्योपरि राजत्वं कर्त्तुम् आरभ्य वत्स-
२६ रद्वयम् इस्रायेल उपरि राजत्वं चकार। स परमेश्वरस्य साक्षात्
कुत्सिताचारं कुर्व्वन् स्वतातस्य मार्गम् अर्थतः स इस्रायेलं यानि पापानि
२७ कारितवान् तान्येवाचचार। अनन्तरम् इषाखरवंशीयोऽहियस्य पुत्रो
बाशास्तस्य विरुद्धं कुमन्त्रणां विधाय पिलेष्टीयानां गिब्बियोनाख्य-
नगरस्य समीपे तं जघान; यतस्तदानीं नादव इस्रायेलीयलोकाश्च
२८ तद् गिब्बियोनम् अवारुन्धन्। यिहूदादेशीयस्यासास्तृतीये राजत्ववत्सरे
२९ बाशा नादवं निहत्य तस्य पदे राजत्वं प्राप। राजत्वं प्राप्यैव स कृत्स्नं
यारबियामवंशम् उदच्छिनत् तद्वंशीयम् एकमपि प्राणिनं नावाशेषयत्,
३० यतो यारबियामो यानि पापानि कृतवान् इस्रायेलवंशं कारितवांश्च
यैः क्रोधजनकैः कर्म्मभिरिस्रायेलः प्रभुं परमेश्वरं क्रोधितवांश्च तत्-
कारणात् परमेश्वरः शीलोनीयाहियनाम्ना निजदासेन तद्विनाशसूचकं
३१ वाक्यं प्रोक्तवान्। तस्य नादवस्यावशिष्टं चरित्रं तस्य कर्म्माणि चेस्रा-
३२ येलीयभूपतीनां पुरावृत्तपुस्तके लिखितानि किं न विद्यन्ते? आसा-
राजस्येस्रायेलीयबाशाराजस्य च यावज्जीवनं तयोर्मध्ये समरो बभूव।
३३ यिहूदादेशीयस्यासास्तृतीये राजत्ववत्सरेऽहियस्य सुतो बाशास्तिर्सायां
कृत्स्नस्येस्रायेलीयवंशस्य राजा भूत्वा चतुर्विंशतिवर्षाणि यावद् राजत्वं
३४ चकार। स परमेश्वरस्य साक्षात् कुत्सिताचारं कुर्व्वन् यारबिया-

मस्य• मार्गम् अर्थतः स ऐस्रायेलीयवंशं यानि पापानि कारितवान् तान्याचचार।

## १६ षोडशोऽध्यायः।

१ बाशा विरुद्धं येहोर्भविष्यद्वाक्यं ८ सिम्रेर्विश्वासघातित्वं ११ येहो र्भविष्यद्वाक्यस्य सिद्धिः १९ अघे राज्याभिषिक्तत्वं सिम्रेर्दग्धत्वं २१ अम्रिणा तिब्नेः पराजितत्वं २७ तेन शोमिरोणस्य निर्म्माणं तस्य कुराजत्वकरणं मरणञ्च २९ अघेः सुतस्याहाबस्य राज्यप्राप्तिः कुराजत्वकरणञ्च ३४ यिरीहोः पुनर्निर्म्माणञ्च।

अनन्तरं बाशा विरुद्धं हनानेः पुत्रं येहुं प्रति परमेश्वरस्येदं वाक्य- १
मुपतस्थौ, त्वं मया धूलिमध्याद् उत्थापितो मम प्रजागणस्यैस्रायेलीयवं- २
शस्य राजत्वे नियुक्तश्च, किन्तु त्वं यारवियामस्य मार्गे चरसि ममैस्राये-
लीयवंशाश्च यत् स्वपापै र्मां कोपयेयुस्तदर्थं तान् पापानि कारयसि च।
अतः पश्याहं बाशां तदीयवंशञ्च लोप्स्यामि, निबाटसुतस्य यारविया- ३
मस्य वंशमिव तस्य वंशमपि करिष्यामि च। बाशावंशीयो यः कश्चित् ४
नगरमध्ये मरिष्यति स कुक्कुरै र्भक्षिष्यते यश्च क्षेत्रे मरिष्यति स खचरै-
र्भक्षिष्यते। तस्य बाशा अवशिष्टानि चरित्रकर्म्मकर्त्तृत्वानि किम् इस्राये- ५
लीयभूपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते? अनन्तरं बाशाः ६
स्वपितृगणा इव महानिद्रां गत्वा तिर्सायां श्मशाने स्थापितस्ततस्तस्य पुत्र
एलाहस्तस्य पदे राजा बभूव। स बाशाः परमेश्वरस्य साक्षाद् यं ७
कुत्सिताचारं कुर्व्वन् स्वक्रियाभिस्तमकोपयत् यारवियामवंशस्य तुल्यो-
ऽभवच्च तस्मात् कुत्सिताचारात् तद्वंशस्य हननाच्च बाशा विरुद्धमपि
हनानेः पुत्रेण येहुना भविष्यद्वादिना परमेश्वरस्य वाक्यं प्रकाशितं।

अपरं यिहूदादेशीयस्यासाः षड्विंशे राजत्ववत्सरे बाशाः सुत एलाह ८
इस्रायेलीयवंशस्य राजा भूत्वा वर्षद्वयं यावद् तिर्सायां राजत्वं चकार।
ततः परं तस्यैको दासोऽर्थतो रथानाम् अर्द्धस्याधिपतिः सिम्रिस्तस्य वि- ९
रुद्धं कुमन्त्रणां चकार। राज्ञि तिर्सायां तन्नत्यराजपुर्य्या अध्यक्षस्यार्सस्य
निकेतने मद्यपानेन मत्ततां गते सिम्रिरागत्य तं हत्वा जघान। यिहूदा- १०
देशीयस्यासाः सप्तविंशे राजत्ववत्सरे स तं हत्वा तस्य पदे राजा बभूव।

ततः परं राजसिंहासन उपवेशनकाले स बाशाः कृत्स्नं वंशं जघान ११
तस्यैकमपि पुमांसं ज्ञातिं बन्धुं वा नावशेषयामास। बाशास्तस्य पुत्र १२
एलाहश्च यानि पापानि कृतवन्तावैस्रायेलः प्रभुं परमेश्वरम् असार-

१३ देवपूजया कोपयितुमिस्रायेलीयवंशं यानि पापानि कारितवन्तौ,
तत्कारणात् परमेश्वरो येहो भविष्यद्वादिनो वदनेन वाशा विरुद्धं यद्
वाक्यम् उक्तवान् तदनुसाराद् वाशाः कृत्स्नो वंशः सिम्रिणोच्छिन्नः।
१४ तस्यैलाह्वस्यावशिष्टं चरित्रं सर्व्वं कर्म्म च किम् इस्रायेल्देशीयनृप-
तीनां पुरावृत्तपुस्तके लिखितं न विद्यते?
१५ यिहूदादेशीयस्यासाः सप्तविंशे राजत्ववत्सरे सिम्रिस्तिर्सायां सप्ताहं
यावद् राजत्वं चक्रे। तदानीं सैन्यानि पिलेष्टीयानां गिब्बिथोननगरम्
१६ अवारुन्धन्। अतः सिम्रिणा कुमन्त्रणां कृत्वा राजा हत इति वार्त्तायां
तत्र शिविरस्थसेनाभिः श्रुतायां तस्मिन्नेव दिने तत्र शिविर इस्राये-
लीयसैन्यनिवहस्याधिपतिरम्रिः सर्व्वैरिस्रायेलीयलोकै राजत्वे नियुक्तः।
१७ ततः सोऽम्रिस्तेन सह सर्व्वे इस्रायेलीयलोकाश्च गिब्बिथोनात् प्रस्थाय
१८ तिर्साम् अवरोद्धुम् उपचक्रमिरे। ततः परं नगरं तैर्वशीकृतमिति
दृष्ट्वा सिम्री राजपुर्य्या गर्भागारं गत्वा स्वोपरिस्थितं राजवेश्म
१९ वह्निना दाहयित्वा निधनं गतः। स परमेश्वरस्य साक्षात् कुत्सि-
ताचारं कृत्वा यारबियामस्य मार्गम् अर्थतः स इस्रायेलीयवंशं यानि
पापानि कारितवान् तान्याचरितवान् तेषां पापानां कारणात् स
२० विनाशं गतः। सिम्रेरवशिष्टं चरित्रं तेन कृतो राजद्रोहश्चेस्रायेलीय-
भूपतीनां पुरावृत्तपुस्तके लिखितं किं न विद्यते?
२१ तदानीम् इस्रायेलीयवंशो द्विसङ्घीभूतोऽर्द्धलोका गीनतस्य सुतं तिब्निं
राजानं कर्त्तुं तस्यानुगामिनो बभूवुस्तदन्येऽर्द्धलोकाश्चाम्रेरनुगामिनो
२२ बभूवुः। शेषेऽम्रेरनुगामिभि र्लोकैस्तिब्नेरनुगामिषु पराजितेषु तिब्नि
पञ्चत्वं जगामाम्रिश्च राजा बभूव।
२३ यिहूदादेशीयस्यासा एकत्रिंशे राजत्ववत्सरेऽम्रिरिस्रायेल्देशस्य राजा
भूत्वा द्वादशवत्सरान् यावद् राजत्वं चकार। स षड्वत्सरान् तिर्सायां
२४ राजत्वम् अकरोत्। ततः परं शेमराय शतद्वयकिक्कारपरिमितं रूप्यं दत्त्वा
शोमिरोणाख्यं शिलोच्चयं क्रीत्वा तदुपरि नगरमेकं निर्म्मापयामास तस्य
पर्व्वतस्याधिकारिणः शेमरस्य नामानुसारात् स्वेन निर्म्मापितस्य तस्य
२५ नगरस्य शोमिरोणमिति नाम चकार च। सोऽम्रिः परमेश्वरस्य साक्षात्
कुत्सिताचारं कुर्व्वन् निजपूर्व्ववर्त्तिभ्यः सर्व्वनृपेभ्यो दुष्टतरो बभूव।
२६ निबाटस्य सुतो यारबियामो यस्मिन् मार्गे चरन् असारदेवपूजयेस्रा-
येलः प्रभुं परमेश्वरं कोपयितुम् इस्रायेलीयवंशं पापानि कारितवान्,

तस्मिन्नेव मार्गे सोऽपि चचार। तस्यामेरवशिष्टं चरित्रं कर्तृत्वञ्च किम् २७
इस्रायेलीयभूपतीनां पुरावृत्तपुस्तके लिखितं न विद्यते? ततः परम् २८
अम्रिः स्वपितृगण इव महानिद्रां गत्वा शोमिरोणे श्मशाने स्थापित-
स्तस्य सुत आहाबो राजा बभूव च।

यिहूदादेशीयस्यासा अष्टत्रिंशे राजत्ववत्सरेऽम्रेस्तनय आहाब इस्रा- २९
येल्वंशस्य राजा भूत्वा द्वाविंशतिवर्षाणि यावत् शोमिरोणे राजत्वं
चकार। अम्रेः सुतः स आहाबः परमेश्वरस्य साक्षात् स्वपूर्ववर्त्तिभ्यः ३०
सर्व्वेभ्योऽधिकं कुत्सिताचारं चकार। स निवाटपुत्रस्य यारबियामस्य ३१
पापमार्गे गमनं लघु मत्वा सीदोनीयन्टपतेरित्बालो दुहितरम् ईषेवलं
व्यूह्य बालदेवस्यानुगामी भूत्वा तम् अपूजयत् शोमिरोणे च बालम- ३२
न्दिरं निर्म्माप्य तन्मध्ये बालः कृते वेदिमेकां चकार। स आहाबस्तैत्य- ३३
वृक्षमपि रोपयाञ्चक्रे। इस्रायेलः प्रभुं परमेश्वरं कोपयितुं स आहाबः
पूर्व्ववर्त्तिभ्य इस्रायेलीयन्टपतिभ्यः सर्व्वेभ्योऽधिकानि कुकर्म्माणि चकार।

तस्य राजत्वसमये बैथेलीयो हीयेलो यिरीहोनगरं पुन र्निर्म्ममे, ३४
ततो नूनस्य पुत्रं यिहोशूयं प्रति परमेश्वरेण यद्वद् उक्तं तद्वत् सोऽबी-
रामाख्येन ज्येष्ठपुत्रेण पणेन भित्तिमूलं स्थापयामास, सिगूबाख्येन
कनिष्ठपुत्रेण पणेन च नगरद्वाराणि स्थापयाञ्चकार।

## १७ सप्तदशोऽध्यायः।

१ किरीताख्यजलस्रोतस्तट एलियस्य गमनं तत्र काकैस्तस्य पालितत्वं ८ सारिफत-
निवासिन्याः कस्याश्चिद् विधवायाः समीपे तस्य प्रेषितत्वं १७ तस्या विधवाया
पुत्राय जीवनदानं २४ तस्या विधवाया विश्वासश्च।

तदानीं गिलियद्देशनिवासिनां मध्ये तिश्बीय एलिय इतिनामा नर १
एक आसीत्। स आहाबं जगाद, अहं यम् इस्रायेलः प्रभुं परमेश्वरं
परिचरामि स यद्यमरः स्यात् तर्ह्येतेषु कतिपयवत्सरेषु मदीयमुखनि-
र्गताम् आज्ञां विना शिशिरवृष्टी न भविष्यतः। अनन्तरं परमेश्वर- २
स्येदं वाक्यं तस्य सन्निधावुपातिष्ठत्, त्वम् अस्मात् स्थानात् प्रस्थाय ३
पूर्व्वदिशं गत्वा यर्द्दनस्य पारे स्थितस्य किरीताख्यस्य स्रोतसो निकटे
प्रच्छन्नस्तिष्ठ। तत्र त्वं स्रोतसो जलं पिब तुभ्यं भक्ष्याणि दातुञ्च काका ४
मयादेक्ष्यन्ते। ततः स गत्वा परमेश्वरेण यद् उक्तं तदेव चकार। स ५

६ गत्वा यर्द्दनस्य पारे किरीतनामकः स्रोतसो निकटे प्रावसत्। ततः प्रति-
प्रभातं काकैस्तत्समीपे पूपमांसान्यानीयन्त प्रतिसन्ध्याकालमपि पूप-
७ मांसान्यानीयन्त स च स्रोतसस्तोयान्यपिवत्। कतिपयकालात् परं देशे
ऽनावृष्टिहेतोस्तत् स्रोतः शुष्कतां गतं।

८ ततस्तं प्रति परमेश्वरस्येदं वाक्यं समुपातिष्ठत्, त्वं सीदोनदेशस्थं
९ सारिफतनगरं गत्वा तत्र प्रवस पश्य त्वां भक्षयितुं तत्रत्या काचिद्
१० विधवा मयादिष्टा। तत्र तस्मिन् उत्थाय सारिफतं गत्वा नगरद्वारं
प्राप्ते काचिद् विधवा तत्रेन्धनानि संगृह्णातीति दृष्ट्वा स ताम् आहूय
जगाद, भवति, त्वया मदर्थं पात्रेणैकेन किञ्चित् सलिलम् आनीयतां
११ पास्याम्यहं। ततस्तस्यां तदानयनार्थं गच्छन्त्यां स ताम् आहूय जगाद,
१२ त्वं मदर्थं पूपमेकमपि करेण समानय। ततः सा व्याजहार, तव प्रभोः
परमेश्वरस्यामरतायाः शपथं कृत्वाहं वदामि ममैकोऽपि पूपो न विद्यते,
केवलम् अलिञ्जरे मुष्टिकपरिमितं गोधूमचूर्णं भाण्डे च किञ्चित् तैलं
विद्यते तस्मान्मयेन्धनानि संगृह्यन्ते, संगृहीतेषु मया गत्वा मम मत्पुत्रस्य
च कृते ते गोधूमतैले पक्ष्येते, ततः परम् आवां भुंक्त्वा मृत्युं गमिष्यावः।
१३ एलियस्तां जगाद, मा भैषीः, त्वया यद् उक्तं तदेव गत्वा क्रियतां,
तथापि तेन प्रथमं मदर्थम् एकं क्षुद्रं पूपं पक्त्वा मम सन्निधिम् आनय,
१४ ततः परं गत्वा तव त्वत्पुत्रस्य च कृते पक्तुं शक्ष्यसि। यत इस्रायेलः
प्रभुः परमेश्वरो वाक्यमिदं गदति, परमेश्वरो यावत् मेदिन्यां वृष्टिं न
करिष्यति तावत् सोऽलिञ्जरो गोधूमहीनो न भविष्यति तत् तैलभा-
१५ ण्डमपि शून्यतां न गमिष्यति। ततः सा गत्वैलियेन यत् कथितं तदेव
चकार। इत्थम् एलियः सा योषित् तस्या परिजनाश्च बहुदिनानि
१६ यावद् आहारं लेभिरे। परमेश्वर एलियेन यत् कथितवान् तदनु-
सारात् सोऽलिञ्जरो गोधूमहीनो न बभूव तैलभाण्डमपि शून्यतां न गतं।

१७ अनन्तरं तस्या गृहिण्याः पुत्रो रोगग्रस्तो बभूव तस्य रोगश्च तादृशीं
१८ वृद्धिं जगाम यत् तस्य प्राणवियोगोऽभवत्। ततः सा योषिद् एलियं
जगाद भो ईश्वरीयलोक त्वया समं मम कः सम्बन्धः? त्वं किं ममाप-
राधं स्मारयितुं मम तनयं मारयितुञ्च मम समीपम् आगतोऽसि?
१९ ततः स तां प्रतिजगाद तव पुत्रं मह्यं देहि। अनन्तरं स तस्या वक्षस-
स्तं बालकं गृहीत्वा स्वयं यत्र न्यवसत् तत्र गृहपृष्ठस्थिते धामे नीत्वा
२० स्वशय्यायां शाययामास। अनन्तरं परमेश्वरम् आहूय बभाषे हे मम

प्रभो परमेश्वर यया विधवया समं मयोष्यते त्वं किं तस्यास्तनयं मार-
यितुं तस्या अप्यमङ्गलं करिष्यसि? अनन्तरं स त्रीन् वारान् तस्य २१
बालकस्योपरि स्वशरीरं विस्तार्य्य परमेश्वरम् आहूय बभाषे, हे मम
प्रभो परमेश्वर, अस्यान्तरे प्राणाः पुनः सन्तिष्ठन्तां। तत एलियस्य वाक्ये २२
परमेश्वरेण गृहीते तस्य बालकस्यान्तरे प्राणाः पुनः समतिष्ठन्त तेन स
सजीवो बभूव। तदानीम् एलियस्तं बालकं गृहीत्वा गृहपृष्ठस्थकोष्ठाद् २३
गृहमध्यम् आनीय तस्य मात्रे दत्त्वा कथयामास पश्य तव पुत्रो जीवति।
ततः सा योषिद् एलियं बभाषे त्वम् ईश्वरीयलोक एवासि तव २४
वक्त्रस्थितम् ईश्वरीयवाक्यञ्च प्रकृतमिति मयाधुना बुद्धं।

# १८ अष्टादशोऽध्यायः।

१ दुर्भिक्षसमय आहाबस्य समीपम् एलियस्य गमनं ७ ओवदियस्य साक्षात् करणं तयोः कथोपकथनञ्च १७ आहाबस्य साक्षात् करणं तयोः कथोपकथनञ्च २१ आकाशात् पतितेन वह्निना बलेर्दग्धत्वं बालः पुरोहितानां क्षोडितत्वञ्च ४१ प्रार्थनया वृष्टिप्राप्तिराहाबस्याप एलियस्य गमनञ्च।

बहुतिथकाले गते तृतीयवत्सरे परमेश्वरस्य वागियम् एलियस्य १
समीपमुपतस्थौ त्वं गत्वाहाबाय दर्शनं देहि यतो मया मेदिन्यां वृष्टिः
कारिष्यते। तत एलिय आहाबाय दर्शनं दातुं गतः। तदानीमपि २
शोमिरोणेऽतीव दुर्भिक्षम् आसीत्। अत आहाबो निजनिवेशनस्या- ३
धिपतिम् ओवदियम् आह्वयत्। स ओवदियः परमेश्वरस्यातीव भक्तः।
यस्मिन् काले ईषेबल् परमेश्वरस्य भविष्यद्वादिन उदच्छिनत् तस्मिन् ४
काले स ओवदियः शतं भविष्यद्वादिन आदाय पञ्चाशत् पञ्चाशत् तान्
गह्वरमध्ये गोपयित्वान्नतोयदानेन जीवयामास। आहाबस्तम् ओव- ५
दियं जगाद, अस्माकं सर्व्वे पशवो यन्न विनश्येयुस्तत्कृते त्वं जनपदस्य
सर्व्वाणि पयःप्रस्रवणानि स्रोतांसि च गच्छ तेन को जानाति वाजि-
नाम् अश्वतराणाञ्च प्राणरक्षणायास्माभिस्तृणानि लप्स्यन्ते। अनन्तरं तौ ६
जनपदं पर्य्यटितुं तं द्विभागं चक्राते तत आहाब एकाकी मार्गेणैकेन
जगाम, ओवदियश्चैकाकी तदन्यवर्त्मना जगाम। अपरम् ओवदियो ७
यदा यात्राम् अकरोत् तदानीम् एलियस्य साक्षात् प्राप, ततः स तं
परिचीय भूमिष्ठः सन् बभाषे, भवान् किं मम प्रभुरेलियः? ततः स ८
तं प्रतिजगाद, अहमेव। त्वं गत्वा निजप्रभुम् आवेदय, पश्य एलीय

९ आगतः। स प्रत्यवदत्, मया को दोषोऽकारि यत् त्वं निजदासं मां
१० घातयितुम् आहाबस्य करे समर्पयसि? मया तव प्रभोः परमेश्वरस्या-
मरत्वस्य शपथं कृत्वा निगद्यते मम प्रभुणा राज्ञा तवान्वेषणार्थं यत्र दूता
न प्रेषिता एतादृश एकोपि देश एकमपि राज्यं वा न विद्यते, तैः सर्व्वै
र्दूतैरुदितं सोऽत्र नास्ति; अपरं तेषां राज्यानां देशानाञ्च लोकैरपि त्वं
११ न दृष्ट एतस्मिन्नपि नृपतिस्तान् शपथं कारयामास। इदानीं त्वं मां
१२ वदसि, एलिय आगत इति वार्त्तां त्वं गत्वा निजप्रभवे निवेदय। तत-
स्तव समीपात् मम गमनात् परं परमेश्वरस्यात्मा यदि मया न विदितं
किञ्चन स्थानं त्वां नयेत् तर्हि मया गत्वाहाबाय वार्त्तायां कथितायां
स त्वाम् अप्राप्य मां हनिष्यति। किन्तु तव दासोऽहम् आबाल्यात्
१३ परमेश्वरस्य भक्तोऽस्मि। ईषेबला परमेश्वरस्य भविष्यद्वादिनां हनन-
काले मया यद् अकारि तत् किं मम प्रभुः केनापि न ज्ञापितः? अहं
परमेश्वरस्य शतसङ्ख्यानां भविष्यद्वादिनां पञ्चाशत् पञ्चाशद् गह्वरे गोप-
१४ यित्वान्नतोयदानेनाजीवयं। इदानीं त्वं मां वदसि पश्य, एलिय आगतो
वार्त्तामिमां त्वं गत्वा निजप्रभुम् आवेदय, तथा कृते स मां हनिष्यति।
१५ एलियः कथयाञ्चकार यः सैन्याध्यक्षः परमेश्वरो मया परिचर्य्यते तस्या-
१६ मरत्वस्य शपथं कृत्वा वदामि, अद्यैवाहं तस्मै दर्शनं दास्यामि। अन-
न्तरम् ओवदिय आहाबं साक्षात् कर्त्तुं गत्वा तां वार्त्तां न्यगदत् तत
आहाब एलियं साक्षात् कर्त्तुं यात्रां चक्रवान्।

१७ अनन्तरम् आहाब एलियं विलोक्य व्याहरत्, इस्रायेलः क्लेष्टा त्वं
१८ किम् आगतोऽसि? एलिय उक्तवान् इस्रायेल् मया न क्लिष्टः किन्तु
त्वया तव पितृवंशेन च यतो यूयं परमेश्वरीयनिदेशान् विहाय वाला-
१९ ऽनुगामिनो जाताः। इदानीं त्वं दूतान् प्रहित्य सर्व्वान् इस्रायेलीय-
लोकान् ईषेबलो भोजनासने भुञ्जानान् वालः सार्द्धचतुःशतानि भवि-
ष्यद्वादिनश्चैत्यवृक्षस्य चतुःशतानि भविष्यद्वादिनश्च कर्म्मिलशिखरे
२० मम समीपे संग्रहाण। तत आहाबः सर्व्वेषाम् इस्रायेलीयवंशानां
समीपं दूतान् प्राहिणोत् तान् भविष्यद्वादिनोऽपि कर्म्मिलशिखरे
समग्रहाच्च।

२१ अनन्तरम् एलियः सकललोकानां समीपं समीय प्रोवाच यूयं कति
कालं द्वयो र्नावोश्चरणौ स्थापयिष्यथ? यिहोवा यदीश्वरोऽस्ति तर्हि
तमेवानुव्रजत यदि च वाल् ईश्वरोऽस्ति तर्हि तमेवानुव्रजत। ततो लोका

एकमपि वचनं न प्रत्यवदन्। तत एलियो लोकान् अवोचत् परमे- २२
श्वरस्य भविष्यद्वादिनाम् एकाक्यहमेवावशिष्टोऽस्मि किन्तु बालो भवि-
ष्यद्वादिनः सार्द्धचतुःशतानि जनाः विद्यन्ते। तैरस्मत्सन्निधिं द्वौ वृष- २३
भावानीयेताम् अपरं स्वेषां कृते तयोरेकतरो वृषभो व्रियतां। ते तं
छित्त्वा काष्ठानाम् उपरि निदधतां किन्तु तत्र वह्निस्तै र्न दातव्यः।
अपरम् अहम् अन्यतरं वृषभं परिष्कृत्य काष्ठानाम् उपरि निधास्ये
किन्तु तत्र वह्निं न दास्यामि। अनन्तरं यूयं स्वीयदेवस्य नाम्ना प्रार्थनां २४
कुरुध्वम् अहञ्च यिहोवा नाम्ना प्रार्थयिष्ये ततस्तयो र्मध्ये यो वह्निरूपम्
उत्तरं दास्यति स एव सत्य ईश्वरो भविष्यति। तदानीं सकललोकाः
प्रत्यवदन् एषा वागुत्तमा। अनन्तरम् एलियो बालो भविष्यद्वादिनो २५
जगाद, यूयं बहवः स्थ तस्माद् यूयम् अग्रे स्वेषां कृते वृषभमेकं वृत्वा
परिष्कुरुध्वं पश्चात् स्वेषां देवस्य नाम्ना प्रार्थयध्वं किन्तु तत्र वह्निं न
दत्त। अनन्तरं तेभ्यो यो वृषभोऽदीयत तमादाय ते पर्य्यस्कुर्व्वन्त। २६
अपरं हे बाल् अस्मभ्यम् उत्तरं देहीति वाचा प्रातःकालमारभ्य मध्याह्न-
कालं यावद् बालो नाम्ना प्रार्थयाञ्चक्रिरे किन्तु कापि वाणी किमप्युत्तरं
वा केनापि नाश्रूयत ततस्ते तस्यां निर्म्मितायां वेद्याम् उत्प्लोतुम् उप-
चक्रमिरे। अनन्तरं मध्याह्नकाल एलियस्तान् आकारयन् व्याहरत् २७
यूयम् उच्चैःस्वरम् आह्वयत स देव एव स ध्यायति विहरति वा यात्रां
करोति वा किं वा भवितुं शक्नोति स निद्रागतो युष्माभि र्जागरयि-
तव्यश्च। अनन्तरं त उच्चैःस्वरं समाह्वयन् स्वेषां रीत्यनुसारेण शोणित- २८
निःसरणं यावत् स्वानि शरीराणि छुरिकाभिरस्त्रैश्चाजघ्नुः। अपरं २९
मध्याह्नकालेऽतीतेऽपि ते सन्ध्याकालीयं बलिदानं यावत् प्रालपन् तथापि
कापि वाणी किमप्युत्तरं वा केनापि नाश्रूयत मनोनिधायकश्च कोपि
नासीत्। अनन्तरम् एलियः सकललोकान् व्याहरत्, यूयं मम समीप- ३०
मागच्छत, तेन सकललोकेषु तस्य समीपं समीतेषु स परमेश्वरस्य भग्नां
वेदिं पुन र्निर्म्ममे। तव नामधेयम् इस्रायेल् भविष्यतीति परमेश्वरो यं ३१
याकूबम् उक्तवान् एलियस्तस्य पुत्राणां वंशानां सङ्ख्यानुसारेण द्वादश-
पाषाणान् गृहीत्वा तैः पाषाणैः परमेश्वरस्य नाम्ने यज्ञवेदिमेकां निर्म्ममे।
अपरं वेद्याश्चतुर्दिक्षु यो भारद्वयपरिमितानि धान्यानि धारयितुं ३२
शक्नोति तादृशां परिखामेकां चखान। अनन्तरं स इन्धनानि संस्थाप्य ३३
वृषभं छित्त्वा खण्डं खण्डं कृत्वा चेन्धनानामुपरि निधाय बभाषे चतुः-

३४ कलसान् तोयैः परिपूरयत यथोपरोन्धनोपरि च तान्यवतारयत। अन-
न्तरम् एलिय ऊचे द्वितीयवारं तत् कुरुत ततस्ते द्वितीयवारं तद्
अकुर्व्वन्। अनन्तरं स उक्तवान् तृतीयवारं तत् कुरुत, ततस्ते तृतीय-
३५ वारं तद् अकुर्व्वन्। ततो वेद्याश्चतुर्दिक् तोयं जगाम खातमपि तैस्तोयैः
३६ पर्य्यपूर्य्यत। अपरं सन्ध्याकालीयबलिदानसमय एलियो भविष्यद्वादी
समीपमेत्य जगाद, हे इब्राहीम इस्हाक इस्रायेलश्च प्रभो परमेश्वर,
त्वम् इस्रायेलो मध्य ईश्वरोऽस्यहञ्च तव दासोऽस्मि तव वचसा च मया
३७ कर्म्माण्येतानि क्रियन्त इदमद्य सर्व्वं ज्ञायतां। हे परमेश्वर मम वाचं
निशामय मम वाचं निशामय, हे यिहोवा त्वमेवेश्वरोऽसीति लोकैरेतै
३८ र्ज्ञायतां त्वञ्च तेषां मनांसि परिवर्त्तय। तदानीं परमेश्वरीयवह्निः पतन्
होमबलिम् इन्धनानि पाषाणान् धूलीश्च प्रददाह परिखास्थितानि
३९ तोयानि शोषयाञ्चकार च। तदानीम् एतद् विलोक्य सर्व्वे लोका भूमौ
निपत्य प्रणम् वाचमिमां जगदुश्च यिहोवा एवेश्वरोऽस्ति यिहोवा
४० एवेश्वरोऽस्तीति। अनन्तरम् एलियस्तान् अवदत्, यूयं बालो भवि-
ष्यद्वादिनो धरत तेषाम् एकोऽपि न पलायतां। ततस्तैस्तेषु धृतेष्वेलियः
कीशोनस्रोतस्तटेऽवरोह्य तत्र तान् अवधीत्।

४१ अनन्तरम् एलिय आहाबं व्याहरत् त्वं गत्वा भुंक्ष्व पिब च यतो
४२ महावृष्टेः शब्दो मया श्रूयते। तत आहाबे भोक्तुं पातुञ्च गत एलियः
कर्म्मिलस्य शिखरम् आरुह्य भूमौ जानुनी पातयित्वा निजशिरो जानू-
४३ परि स्थापितवान्। अपरं निजदासं जगाद त्वं गत्वा सागरस्य दिश-
मवलोकय। ततः स व्रजित्वा विलोक्य व्याहरत् किमपि नास्ति।
४४ इत्थम् एलियः सप्तवारान् तम् अवोचत्, याहि। अपरं सप्तमे वारे स
गदितवान्, पश्य मनुष्यस्य कर इवैकः क्षुद्रो मेघः समुद्राद् उत्तिष्ठति।
तदानीम् एलियः कथयामास, त्वं गत्वाहाबं ब्रूहि वृष्ट्या यत् त्वं बाधां
४५ न लभसे तदर्थं रथमारुह्य व्रज। इत्यनन्तरे मेघवाताभ्यां गगने कृष्ण-
वर्णे जाते महावृष्टि र्बभूव। तत आहाबो यानमारुह्य यिष्रियेलं नगरं
४६ जगाम। अपरं परमेश्वर एलिये समधिष्ठिते स कटिदेशं बद्ध्वा यिष्रि-
येलः प्रवेशस्थानं यावद् आहाबस्याग्रेऽग्रे धावितवान्।

---

# १९ ऊनविंशोऽध्यायः।

एलियस्य पलायनं ४ प्रान्तरे जीवने तस्य विरक्तत्वं स्वर्गदूतेन सान्त्वनाप्राप्तिः ९ होरेबगिरावीश्वरस्य दर्शनम् अपरं हसायेलस्य येहोरिलीशायस्य चाभिषेकार्थं तस्य प्रेषितत्वं १९ इलीशायस्य कुटुम्बादीनां त्यजनम् एलियस्य पश्चाद्गमनञ्च।

अनन्तरम् एलियेन यद्यत् कृतं सर्व्वं भविष्यद्वादिनश्च यत् खड्गाघा- १
तेन तेन हता इति वार्त्तायाम् आहाबेनेषेबलं कथितायाम् ईषेबल् २
एलियस्य समीपं दूतमेकं प्रहित्य वाचमिमां तं श्रावयामास, श्व एत-
स्मिन् समये तेषाम् एकस्य प्राणानिव तव प्राणान् यदि न करिष्ये तर्हि
देवा मह्यम् अमुकं दण्डं ततोऽधिकञ्च दण्डं ददतु। तत एलियस्तद् ३
विज्ञाय प्राणरक्षार्थं प्रस्थाय यिहूदादेशस्थां बेर्शेबाम् उपस्थाय तत्र
स्थाने निजदासं विजहौ।

अनन्तरं स एकाकी दिनमेकं प्रान्तरेण गत्वा कस्यचिद् रोतमतरो- ४
रध उपविवेश, अपरं मृत्युं प्रार्थयमानो व्याजहार हे परमेश्वर, अलं
जीवनेनेदानीं मम प्राणान् गृहाण यतोऽहं निजपूर्व्वपुरुषेभ्य उत्तमो
नास्मि। अनन्तरं तस्मिन् रोतमतरोरधः शयित्वा निद्रां गते दूत एक ५
आगत्य तं स्पृष्ट्वा बभाषे, उत्तिष्ठ भंक्ष्व च। ततस्तेन दृष्टौ कृतायां निज- ६
शिरःस्थानेऽङ्गारोपरि पक्वः पूप एको भाण्डमेकं तोयञ्च विद्यते इति
ददृशे तस्मात् स भुक्त्वा पीत्वा च पुनर्बारम् अशेत। अपरं परमेश्वरस्य ७
दूतो द्वितीयवारं तस्य समीपं समेत्य तं स्पृष्ट्वा जगाद त्वयोत्थाय
भुज्यतां यतो यः पन्था त्वया गन्तव्यः स त्वयाशक्यः। ततः स उत्थाय
भोजनपाने चक्रे तस्य भोजनशक्त्या च चत्वारिंशद् दिवारात्रीरीश्वरस्य
शिलोच्चयं होरेबं यावद् ययौ।

तत्र स गह्वरमेकं प्रविश्य यामिनीं यापयामास; तदानीं परमेश्व- ९
रस्य वच इदं तस्य समीपम् उपातिष्ठत्, हे एलिय त्वयात्र किं क्रियते?
ततः स ऊचे, अहं सैन्याध्यक्षस्य प्रभोः परमेश्वरस्य कृतेऽतीवोत्सुको- १०
ऽभवं; यत इस्रायेलीयवंशास्तव नियमं विहाय तव यज्ञवेद्यो भग्ना-
स्तव भविष्यद्वादिनः खड्गैर्हताश्च तेषां मध्येऽहम् एकाक्यवशिष्टोऽस्मि;
अपरं ते मम प्राणान् नाशयितुं मामपि मृगयितवन्तः। अनन्तरं स ११
उदितवान् त्वं बहिर्भूय पर्व्वतोपरि परमेश्वरस्य सम्मुखे तिष्ठ, पश्य
परमेश्वरस्तेन स्थानेन गतिं करिष्यति। ततो गिरिभेदकः पाषाणभञ्जकश्च
प्रबलप्रचण्डवायुः परमेश्वरस्याग्रे ययौ तस्मिन् वाते परमेश्वरो नाविद्यत।

वातात् परं भूमिकम्पो बभूव, तस्मिन् भूमिकम्पेऽपि परमेश्वरो नावि-
१२ द्यत । भूमिकम्पात् परं वह्नि र्बभूव तस्मिन् वह्नावपि परमेश्वरो नावि-
१३ द्यत । वह्नेः परम् ईषच्छब्दकारी क्षुद्र एकः स्वरो बभूव । तदानीम्
एलियस्तं श्रुत्वा वस्त्रेण मुखमाच्छाद्य वहिर्गत्य गह्वरस्य द्वार्य्यतिष्ठत् ततस्तं
१४ प्रति वाणीयम् उपातिष्ठत् हे एलिय त्वयात्र किं क्रियते ? तेनोदितम्
अहं सेनाध्यक्षस्य प्रभोः परमेश्वरस्य कृतेऽतीवोत्सुकोऽभवं यत इस्रा-
येलीयवंशैस्तव नियमं विहाय तव यज्ञवेद्यो भग्नास्तव भविष्यद्वादिनः
खड्गे हताश्च तेषां मध्येऽहम् एकाक्यवशिष्टोऽस्मि, अपरं ते मम प्राणान्
१५ नाशयितुं मामपि मृगयितवन्तः । परमेश्वरो व्याजहार त्वं प्रान्तरेण
परावृत्य दम्मेषकं याहि तत्रोपस्थाय हसायेलम् अरामदेशस्य राजत्वे
१६ ऽभिषिञ्च । अपरं निम्शेः पुत्रं येहूम् इस्रायेलदेशस्य राजत्वेऽभि-
षिञ्च, अपरम् आवेलमिहोलानिवासिनं शाफटस्य पुत्रम् इलीशायं
१७ तव विनिमयेन भविष्यद्वादित्वेऽभिषिञ्च । यो जनो हसायेलस्य खड्गाद्
रक्षिष्यते स येहूना हनिष्यते यश्च येहूः खड्गाद् रक्षिष्यते स इलीशायेन
१८ हनिष्यते । किन्तु वालः सम्मुखे यै र्जानुनी न पातिते येषां वदनैश्च स न
चुम्बितस्तादृशाः सप्तसहस्राणि मनुजा इस्रायेलो मध्ये मयावशेषिताः ।
१९ अनन्तरं स तस्मात् स्थानात् प्रस्थाय शाफटस्य सुतस्येलीशायस्य
सम्मुखं प्राप, तदानीं तस्याग्रे गवां द्वादशयुग्मानि क्षेत्रम् अकर्षन् तेषां
द्वादशेन युग्मेन सार्द्धं स स्वयम् आसीत् । अनन्तरम् एलियः समीपं
२० समीय निजम् उत्तरीयवसनं तस्य गात्रे निचिक्षेप । ततः स गा
विहायेलियस्य पश्चाद् धावन् बभाषे भवान् यद्यनुजानाति तर्ह्यहं
निजं पितरं मातरञ्च चुम्बित्वा भवन्तम् अनुव्रजिष्यामि । ततः स तम्
२१ अवादीत्, अहं तव किमकार्षं ? त्वं गत्वा परावृत्यागच्छ । अनन्तरं स
तस्य समीपात् परावृत्य गत्वा तद् गोयुग्मं गृहीत्वा छेदयामास युगे-
न्धनैश्च तयो र्मांसं पपाच तस्मिन् लोकेभ्यो वितरिते ते तद् बुभुजिरे च
अनन्तरं स उत्थायैलियस्य पश्चाद् गत्वा तस्य परिचारको बभूव ।

---

## २० विंशतितमोऽध्यायः ।

१ बिन्‌हदेन शोमिरोणस्यावरोधनं १३ भविष्यद्वादिना सम्बादयारामीयलोकानां वधनं २२ भविष्यद्वाक्यानुसाराद् अरामीयलोकानां पुनरागमनं २८ भविष्यद्वा-

*दिमो मल्लणयारामीयाणां पुनर्व्वारं हतत्वं ३१ पराजितेन विन्हददेनोपायनदानं ३५ आहाबं प्रति दृष्टान्तकथनं भविष्यद्वचनञ्च।*

अनन्तरम् अरामीयो विन्हददो नृपतिः स्वीयसकलसैन्यानि निज- १
सहायान् द्वात्रिंशद् राजानो हयान् रथांश्च संगृह्य शोमिरोणम्
अवरुन्धन् तद्विरुद्धं युयोध। अपरं स इस्रायेलीयनृपतेराहाबस्य समीपं २
नगरं दूतान् प्रहित्य जगाद, विन्हदद इमां वाचं वक्ति, त्वदीयानि ३
दुर्व्वर्णसुवर्णानि ममैव तव प्रियतमा जाया बालकाश्च मदीयाः। तत ४
इस्रायेलीयभूपतिः प्रतिजगाद हे मम प्रभो राजन् तव वाक्यानुसाराद्
अहमपि भवदीयो मदीयं सर्व्वञ्च भवदीयं। अनन्तरं दूताः पुन- ५
रागत्य बभाषिरे विन्हदद इमां वाचं ब्रवीति त्वं निजं हेम रजतं
जाया पुत्राश्च मह्यं देहीत्यहं दूतैस्त्वामाज्ञापितवान्। अतः श्व एतस्मिन् ६
समये मया तव समीपं भृत्याः प्रेषयिष्यन्ते ते तव निकेतनं तव भृत्यानां
वेश्मानि चानुसन्धाय तव मनोरम्यं यद् यद् विद्यते तत् सर्व्वं हस्तैरा-
दाय स्थानान्तरं नेष्यन्ति। तत इस्रायेलीयनृपति र्जनपदस्य प्राचीन- ७
मनुजान् सर्व्वान् आहूय जगाद एष मानुषः कुचेष्टामाचरतीति युष्माभि
र्बुध्यतां दृश्यताञ्च, मम जाया पुत्रा रजतहेमानि चाधि तेन दूतै-
राज्ञापितोऽहं नाङ्गीकृतवान्। ततः प्राचीना लोकाश्च सर्व्वे तं जगदुः, ८
तस्याज्ञा त्वया न गृहीतव्या नाङ्गीकर्त्तव्या च। अनन्तरं स विन्हददस्य ९
दूतान् जगाद, यूयं स्वप्रभवे राज्ञे कथयत भवता दूतैरहं प्रथमवारं
यद् आज्ञापितस्तत् सर्व्वं साधयिष्यामि किन्त्वाज्ञामेनां साधयितुं न
शक्नोमि। ततस्ते दूताः प्रस्थाय तां वार्त्तां जगदुः। अनन्तरं विन्हददो १०
दूतान् प्रहित्य तं जगाद, एतस्य शोमिरोणस्य धूलयो यदि मम पश्चा-
द्गामिनां लोकानां मुष्टीन् पूरयितुं पारयेयुस्तर्हि देवा मह्यम् अमुकं
दण्डं ततोऽधिकं दण्डं वा ददतु। तत इस्रायेलीयो नरपतिः प्रत्यब्रवीत्, ११
तस्मै कथयत सज्जात्वार्गीव सज्जायाशी न श्लाघतां। तस्मिन् समये विन्- १२
हददस्तदीयसहाया राजानश्च दूष्येष्वपिवन् इत्यनन्तरे स तां वार्त्तां
निशम्य निजदासान् अब्रवीत् नगरमाक्राम्यत ततो लोकैर्नगरमाक्रम्यत।

अनन्तरम् इस्रायेलीयाहाबस्य नृपतेः समीपम् एको भविष्यद्वादी १३
समेत्य कथयामास परमेश्वर इमां वाचं वदति त्वं किम् एतद् वृहद्
लोकारण्यम् अपश्यः? मयाद्य तव हस्ते ते नराः समर्पयिष्यन्ते तेनाहमेव
परमेश्वर इति भोत्स्यसे त्वं। आहाबो गदितवान् केन तान् समर्पयि- १४

अस्ति? भविष्यद्वादी गदितवान् परमेश्वर इति वाचं ब्रवीति मण्डले-
श्वराणां तरुणलोकैः। ततो राजा पृष्टवान् को युद्धायोपक्रमिष्यते?
१५ स उक्तवान् त्वमेव। अनन्तरं तेन मण्डलेश्वराणां तरुणेषु गणितेषु
ते सङ्ख्या द्वे शते द्वात्रिंशत् जना आसन् ततः परम् इस्रायेलीयवंशानां
१६ सकललोकेषु गणितेषु ते सङ्ख्या सप्तसहस्राणि लोका आसन्। अन-
न्तरं ते मध्याह्नकाले बहिरगच्छन् तस्मिन् समये बिन्हदद्स्तस्य सहाया
१७ द्वात्रिंशद् राजानश्च दूष्येषु मद्यपानेन मत्ता आसन्। अपरं यदा
मण्डलेश्वराणां तरुणा अग्रे बहिरगच्छन् तदानीं बिन्हददेन दूताः
प्रहिताः। त आगत्य वार्त्तामिमाम् अवदन् शोमिरोणात् कतिपयलोका
१८ बहिरगच्छन्। तदानीं स आदिदेश ते यदि सन्धिनिमित्तं बहिरागता-
स्तर्हि युष्माभिर्जीवग्राहं ग्रहीतव्याः, यदि वा रणनिमित्तं बहिर्गतास्त-
१९ थापि युष्माभिर्जीवग्राहं ग्रहीतव्याः। अनन्तरं प्रदेशाधिपतीनां तरुणेषु
२० तेषां पश्चाद्गामिसैन्येषु च नगराद् बहिर्भूतेषु तेषाम् एकैको जनोऽरा-
मीयाणाम् एकैकं जनम् अवधीत् ततोऽरामीयेषु पलायितेष्विस्रायेलीय-
लोकास्तेषां पश्चाद् अधावन्। अपरम् अरामीयो बिन्हददो मही-
२१ पतिर्हयमारुह्य सादिभिः सह पलाय्य रक्षां प्राप। अपरम् इस्रायेलीयो
राजा बहिर्गत्य तेषां वाजिनो रथांश्च पराजयत्। इत्थं तेनारामीयाणां
महाहननं कृतं।

२२ अनन्तरं स भविष्यद्वादी इस्रायेलीयनरपतेः समीपं समीय जगाद
त्वं गत्वात्मानं बलिनं कुरु सावधानो भवन् निजकर्त्तव्यं विवेचय यत
२३ आगामिवत्सरेऽरामीयो राजा तव विरुद्धं पुनरागमिष्यति। अनन्तरम्
अरामीयनरपते र्भृत्यास्तम् अवदन् तेषां देवाः पर्व्वतानां देवाः सन्त्य-
तत्कारणात् तेऽस्मत्तो बलाधिकाः। किन्तु वयं यदि तैः समं समभूमौ
२४ युध्यामस्तर्हि तेभ्योऽवश्यं बलवन्तो भविष्यामः। अतस्त्वम् इदं कर्म्म कुरु
सर्व्वान् भूपतीन् स्वपदेभ्यो दवयित्वा तेषां विनिमयेन सेनापतीन् नियो-
२५ जय। अपरं तव यावन्ति हयरथादीनि बलानि व्यनश्यन् तावन्ति
हयरथादीनि बलानि संगृहाण वयं समभूमौ तैः समं योत्स्यामस्ततो
ऽवश्यं तेभ्यो बलाधिका भविष्यामः। अनन्तरं बिन्हददेन तेषां मन्त्रणां
२६ गृहीत्वा तदनुसारेण कृतं। अपरं परस्मिन् वत्सरे उपस्थिते बिन्-
हददोऽरामीयान् गणयित्वेस्रायेलीयलोकैः समं योद्धुम् अफेकं जगाम।
२७ इस्रायेलीयवंशाश्च गणिता भूत्वा भक्ष्यपेयादीनि समादाय तेषां विरु-

क्रम् ययुः। तत इस्रायेलीयलोका अरामीयाणां सम्मुखे शिविरं स्थापयित्वा छागशावकानां द्वौ क्षुद्रौ व्रजाविव बभूवुः किन्त्वरामीयैर्देशो व्याप्तः।

अनन्तरम् ईश्वरीय एको लोक आगत्येस्रायेलीयं भूपतिं जगाद २८
परमेश्वर इमां वाचं ब्रवीति, अरामीया अवदन् यिहोवाः पर्व्वतानाम् ईश्वरः किन्तु समभूमीनाम् ईश्वरो नहीति तत्कारणाद् अहं तं महा-जननिवहं तव करे समर्पयिष्यामि तेनाहमेव परमेश्वर इति यूयं
वेदिष्यथ। अपरं तेषु शिविरे स्थित्वा सप्ताहं सम्मुखासम्मुखीभूतेषु २९
सप्तमे दिने युद्धं प्रजघटे तत इस्रायेलीयलोका एकस्मिन् दिनेऽरा-
मीयाणां लक्षं पदातीन् व्यनाशयन्। ततोऽवशिष्टाः सेनाः पलाय्याफे- ३०
कनगरं प्रविविशुः किन्तु तेषाम् अवशिष्टानां सप्तविंशतिसहस्राणां लोकानाम् उपरि प्राचीरं निपपात। अपरं बिन्हददः पलाय्य नगराभ्यन्तरस्थं गर्भागारमेकं प्रविवेश।

अनन्तरं तस्य भृत्यास्तम् अब्रुवन् इस्रायेलवंशीया राजानः करुणा- ३१
युक्ता इत्यस्माभिः श्रुतं तस्माद् वयं निवेदयामः कटिषु शाणवसनानि परिधाय कण्ठांश्च रज्जुभि र्वेष्टित्वास्माभिरिस्रायेलीयमहीपतेः समीपं
गम्यतां, भवितुं पारयति स तव प्राणान् रक्षिष्यति। अनन्तरं ते ३२
कटिषु शाणवसनानि परिधाय कण्ठांश्च रज्जुभि र्वेष्टित्वेस्रायेलीयराजस्य समीपम् एत्य जगदुः, भवतो दासो बिन्हदद आवेदयति, भवान् मम प्राणान् जीवयितुम् अर्हति। ततः स उदितवान् स किम् इदानी-
मपि जीवति? स मम भ्राता। तदानीं ते नरास्तद् वाक्यं शुभलक्षणं ३३
बुद्धा तूर्णं तस्य भावम् अनुसन्धाय कथयामासुः, बिन्हददो भवतो भ्रातैव। अनन्तरं स गदितवान् यूयं गत्वा तमानयत। ततो बिन्हददे बहिर्भूय तस्य समीपम् आगते स निजरथे तम् उपवेशयाञ्चकार।
तदानीं बिन्हददस्तम् अब्रवीत् मम जनकेन तव जनकाद् यानि यानि ३४
नगराण्यपहृतानि तानि मया परावर्त्य दायिष्यन्ते, अपरं मम तातेन शोमिरोणे यादृक् निजहट्टे रथ्या अक्रियन्त तादृक् त्वया निजहट्टे दम्मेषके रथ्याः क्रियन्तां। तत आहावेन गदितं मया नियममिमं कृत्वा त्वं विसृक्ष्यसे। अनन्तरं तेन समं नियमं विधाय स विससृजे।

अनन्तरं भविष्यद्वादीनां शिष्याणाम् एको जनः परमेश्वरस्य वचसा ३५
निजं सहशिष्यम् अब्रवीत् विनयेऽहं त्वं मां ताडय किन्तु स तं ताड-
यितुं नाभ्यमन्यत। ततः स तमवदत् त्वं परमेश्वरस्य वाक्यं नागृह्णा ३६

अतो मम समीपात् त्वया गमने कृते सिंह एकस्त्वां हनिष्यति। अनन्तरं
३७ तस्य समीपात् तस्मिन् गते सिंह एकस्तं प्राप्य जघान। अनन्तरं स
जनमन्यं प्राप्य जगाद, विनयेऽहं मां ताडय ततः स तं ताडयन् बिक्ष-
३८ तवान्। अनन्तरं स भविष्यद्वादी गत्वा प्रच्छन्नवेशार्थम् उष्णीषवस्त्रेण
३९ चक्षुषी आच्छाद्य वर्त्मनि राजानं प्रतीक्ष्य तस्थिवान्। अपरं राजनि
मार्गेणागच्छति स राजानं प्रति प्रोच्चैःस्वरम् आवेद्य कथयामास तव
दासे मयि समरं गते पश्य जन एकः पार्श्वादागत्य मम समीपं पुमांस-
मेकमानीय गदितवान् एनं मनुजं रक्ष, एष यदि केनापि प्रकारेणा-
प्राप्यो भवेत् तर्हि तस्य प्राणानां विनिमयेन तव प्राणा यास्यन्ति नो चेत्
४० त्वया किक्करैकपरिमितं रजतं दायिष्यते। किन्तु तव दासे मयि तत
इतो व्यग्रे सति स गतवान्। अनन्तरम् इस्रायेलीयो महीपतिस्तं
४१ जगाद त्वं निजदण्डं निरचिनोः। अनन्तरं तेन तूर्णं निजचक्षुर्भ्यां
वस्त्रेऽपसारिते स यद् भविष्यद्वादिनाम् एको जन इतीस्रायेलीयेन नर-
४२ पतिना परिचितं। अनन्तरं तेन नरपति र्व्याजह्रे परमेश्वर एतां वाचं
ब्रवीति यो जन उच्छिन्नतायै मया निरूपितः स त्वया निजहस्तात्
मोचित एतत्कारणात् तस्य प्राणानां विनिमयेन तव प्राणा आदायिष्यन्ते
४३ तस्य लोकानाञ्च विनिमयेन तव लोका आदायिष्यन्ते। तत इस्रायेलीयो
महीपति र्विमर्षोऽसन्तुष्टश्च निजभवनं गच्छन् शोमिरोणं प्रविवेश।

---

# २१ एकविंशोऽध्यायः।

१ नावोतस्य क्षेत्रम् अप्राप्याहाबस्य विमर्षणं ५ ईषेबला नावोतस्य हननं १५ नावोतस्य क्षेत्राहरणम् आहाबेन १७ आहाबेषेबलो र्दण्डस्य भविष्यद्वचनं २५ आहाबस्यानुतापनकारणात् तस्य दण्डस्य क्षमणं।

१ एतेषां घटनानां पश्चाद् यिम्रियेलीयस्य नावोतस्य गोस्तनीक्षेत्रमेकं
यिम्रियेलनगर आसीत् तत् शोमिरोणीयभूपतेराहाबस्याट्टालिकायाः
२ पार्श्वे स्थितं। अत आहाबो नावोतं जगाद, तव गोस्तनीक्षेत्रं मह्यं
देहि मया तत् शाकक्षेत्रं कारिष्यते यतस्तत् मम भवनस्य सन्निधौ
तस्य पार्श्वे स्थितं, तस्य विनिमयेन ततोऽप्युत्तममपरं गोस्तनीक्षेत्रमेकं
तुभ्यं मया दायिष्यते यद्वा यदि तुभ्यं रोचते तर्हि तस्य मूल्यं रजतं तुभ्यं
३ दायिष्यते मया। ततो नावोत आहाबम् अब्रवीत् मया तुभ्यं निजपैतृका
४ भूमि र्वितीर्य्यते परमेश्वरस्तन्नानुमन्यतां। अनन्तरं मया पैतृका भूमि-

तुभ्यं न वितारिष्यते यिष्रियेलीयस्य नाबोतस्यैतेन वचसाहाबो विमर्षो
ऽसन्तुष्टश्च भूत्वा निजभवनं गतवान् अपरं शय्यायां निपत्य विवर्ण-
वदनश्च भूत्वा किञ्चन भोक्तुं नैच्छत्।

अनन्तरं तस्य जायेषेबल् तस्य समीपं समीय तम् अपृच्छत् तव ५
मानसम् एतादृग् विमर्षं कुतः? त्वया किञ्चन न भुज्यते च कुतः? ततः ६
स तामवदत्, अहं यिष्रियेलीयं नाबोतं सम्भाष्य तम् अवदं, रौप्यविनि-
मयेन तव द्राक्षाक्षेत्रं त्वया मह्यं दीयतां यद्वा यदि तुभ्यं रोचते तर्हि
तस्य विनिमयेन द्राक्षाक्षेत्रमपरमेकं तुभ्यमहं दास्ये ततः स प्रत्यवदत्
मया निजं गोत्रनीक्षेत्रं तुभ्यं न दायिष्यते। तदानीं तस्य जायेषेबल् ७
जगाद तथा सति त्वया किम् इस्रायेलीयजनपदस्य राजत्वं कारिष्यते?
उत्तिष्ठ भुंक्ष्व त्वदीयं मानसं हृष्टं भवतु यिष्रियेलीयनाबोतस्य गोत्रनी-
क्षेत्रं मयैव तुभ्यं दायिष्यते। अनन्तरम् आहाबस्य नाम्ना सा पत्राणि ८
लिखित्वा तस्य मुद्राक्षरेण मुद्राङ्कितानि कृत्वा नाबोतस्य समीपवासिनां
नगरस्य मुख्यानां प्राचीनानाञ्च लोकानां सविधं प्रेषयाञ्चकार। तेषु ९
पत्रेषु लिखितमेतद् वचः, युष्माभिरुपवासो घोष्यतां नाबोतश्च लोकानां
मध्य उच्चस्थाने समुपवेश्यतां। अनन्तरं त्वम् ईश्वरं राजानञ्चानिन्दी- १०
रितवान् तस्य विपरीतम् एतत् साक्षित्वं कर्त्तुं दुराचारौ द्वौ नरौ युष्मा-
भिस्तस्य सम्मुखे स्थाप्येतां ततः परं यूयं तं बहिष्कृत्य पाषाणैर्मारयत।
अनन्तरम् ईषेबला प्रेषितेषु पत्रेषु यद्यत् लिखितं यद्यत् तयाज्ञापितञ्च ११
तदेव तन्नागरिकै र्लोकैरर्थतो नगरनिवासिभिः प्राचीनैः प्रधानमनुजै
र्ज्ञप्तं। तदुपवासो घोषितो नाबोतश्च लोकानां मध्य उच्चस्थान उपवे- १२
शितः। अपरं दुराचारौ द्वौ नरावागत्य तस्य सम्मुख उपविविशतुः। १३
तौ द्वौ दुराचारौ नरौ सकललोकानां समक्षं नाबोतस्य विरुद्धं वच
इदं वदन्तौ साक्षित्वं चक्रतुः, नाबोत ईश्वरं राजानञ्चानिन्दीरितवान् ततः
स मनुजै र्नगराद् बहिष्कृतः पाषाणै र्मारितश्च। अनन्तरं त ईषेबलः १४
समीपं वार्त्तामिमां प्रेषयाञ्चक्रिरे नाबोतः पाषाणैराहतो मृतश्च।

अपरं नाबोतः पाषाणाघातैरम्रियत वच इदम् ईषेबल् निशम्याहाबं १५
बभाषे, उत्तिष्ठ यिष्रियेलीयनाबोतो मुद्रामूल्येन यद् द्राक्षाक्षेत्रं तुभ्यं
दातुं नाभ्यलषत् तद् भुंक्ष्व यतो नाबोतो न जीवति स मृत एव।
तदानीं नाबोतो मृतो वच इदम् आकर्ण्य आहाब उत्थाय यिष्रियेलीय- १६
नाबोतस्य गोत्रनीक्षेत्रम् अधिकर्त्तुं जगाम।

१७ इत्यवसरे परमेश्वरस्य वच इदं तिश्बीयस्यैलियस्य समीपम् उपाति-
१८ ष्ठत्, त्वमुत्थाय शोमिरोणनिवासिनम् इस्रायेलीयनरपतिम् आहाबं
साक्षात् कर्त्तुं याहि, पश्य स नाबोतस्य गोस्तनीक्षेत्रे विद्यते यतस्तद्
१९ अधिकर्त्तुं स तत्रागच्छत् । त्वं तस्मै कथय परमेश्वर एतां भारतीं
भाषते त्वया किं नरहत्या कृता परसम्पत्ति र्लब्धा च ? पुनरपि तं वद,
परमेश्वरो भाषते श्वानो यत्र स्थाने नाबोतस्य रुधिरम् अवलीढवन्त-
२० स्तत्रैव स्थाने श्वानस्तवापि रुधिरम् अवलेक्ष्यन्ति । तदानीम् आहाब
एलियं गदितवान् हे मम रिपो त्वं किं मां प्राप्नोः ? ततः स उदित-
वान् प्राप्नवं यतस्त्वं परमेश्वरस्य साक्षात् कुत्सिताचारं कर्त्तुम् आत्मानं
२१ व्यक्रीणाः । अतएव (तेन निगद्यते) पश्याहम् अमङ्गलं त्वाम् अभिवर्त्त-
यिष्यामि, तव पश्चात् तव वंशम् उच्छेत्स्याम्याहाबवंशीयान् सर्व्वपुरुषान्
२२ इस्रायेलो मध्ये मुक्तान् बद्धांश्च सकलान् विनाशयिष्यामि च । त्वं येन
दुराचारेण माम् अकोपय इस्रायेलीयलोकान् पापम् अकारयश्च
तत्कारणाद् अहं निबाटपुत्रस्य यारबिआमस्य वंशमिवाहियपुत्रस्य
२३ बाशा वंशमिव च तव वंशं करिष्यामि । अपरं परमेश्वर ईषेबलमधि
वच इदं वदति श्वानो यिष्रियेलस्य प्राचीरसमीप ईषेबलं भक्षिष्यन्ति ।
२४ आहाबवंशीयो यः कश्चिन्नगरे मरिष्यति स कुक्कुरै र्भक्षिष्यते यश्च क्षेत्रे
मरिष्यति स शून्यस्य विहगै र्भक्षिष्यते ।
२५ अपरं निजजायेषेबला प्रवर्त्तितो य आहाबः परमेश्वरस्य समक्षं
कुत्सिताचारं कर्त्तुम् आत्मानं व्यक्रीणात् तस्य तुल्योऽपरः कोऽपि न
२६ बभूव । परमेश्वरो यान् इमोरीयान् इस्रायेलीयवंशस्य सम्मुखात् अद-
वयत् तेषां सकलक्रियानुसारेण स देवानाम् अनुगमनेनातीव घृणार्हं
२७ कर्म्म कृतवान् । स एवाहाबस्तानि वचांस्याकर्ण्य निजवसनानि चि-
च्छेद गात्रे शाणवसनं परिदध उपवसन् शाणवसने शिश्ये मन्दत्वम्
२८ आचचार च । ततः परमेश्वरस्य वचनमिदं तिश्बीयस्यैलियस्य सविध
२९ उपातिष्ठत्, आहाबो मम समक्षं नम्रीभूतस्त्वया किं तन्न दृश्यते ? मम
समक्षं तस्य नम्रताचरणकारणाद् अहं तस्य यावज्जीवनम् अमङ्गलं न
वर्त्तयिष्यामि । किन्तु तस्य तनयस्य जीवनसमयेऽमङ्गलं तस्यान्वयम्
अभि वर्त्तयिष्यामि ।

---

# २२ द्वाविंशोऽध्यायः।

१ आहाबेन नरपतिना मीखायस्य भविष्यद्वादिन आक्रानं १५ मीखायस्य भविष्यद्वचनं २४ वचनकारणात् तस्य दण्डनं २९ आहाबेन समं यिहूदादेशीययिहोशाफटस्य नृपतेः समरगमनं ३४ आहाबस्य हतत्वं ३७ तस्य श्मशानदानं ४१ यिहोशाफटस्य विवरणं निधनञ्च ५१ आहाबस्य तनयस्याहसियस्य विवरणञ्च।

अपरम् अरामीयलोका इस्रायेलीयलोकाश्च वत्सरत्रयपर्य्यन्तं विश्रम्- १
मुस्तेषां परस्परं समरं नाभवत्। अनन्तरं तृतीये वत्सरे यिहूदादेशीयो २
भूपति र्यिहोशाफट इस्रायेलीयनरपतेः सविधम् अगच्छत्। तदानीम् ३
इस्रायेलीयो नरपतिः स्वीयभृत्यान् अब्रवीत् गिलियददेशस्थं रामोत-
नगरम् अस्माकमेवेति किं युष्माभि र्न ज्ञायते? किन्तु वयम् अरामीय-
भूपते र्हस्तात् तद् अनपहृत्यालसास्तिष्ठामः। अपरं स यिहोशाफटं ४
पप्रच्छ त्वं किं रामोतगिलियदे समरं कर्त्तुं मया साकं गमिष्यसि?
ततो यिहोशाफट इस्रायेलीयं भूपतिं जगाद, त्वम् अहञ्च समानौ तव
लोका मम लोकाश्च समानास्तव तुरगा मम तुरगाश्च समानाः। अनन्तरं ५
यिहोशाफट इस्रायेलीयं भूपतिं गदितवान्, अहं विनये, एतस्मिन्
परमेश्वरस्य का भारती साद्य त्वया पृच्छ्यतां। तत इस्रायेलीयो भूपतिः ६
प्रायेण चतुःशतानि भविष्यद्वादिनः संगृह्य पप्रच्छ युद्धार्थं रामोतगिलि-
यदं किं मया गन्तव्यं किं वा ततो निवर्त्तितव्यं? तदानीं ते कथितवन्तः
भवता गम्यतां प्रभु र्भूपते र्हस्ते तत् समर्पयिष्यति। अनन्तरं यिहोशा- ७
फटोऽपृच्छत् योऽस्माभिः प्रष्टुं शक्यते तादृशः परमेश्वरस्यापरः कोऽपि
भविष्यद्वादी किमत्र न विद्यते? तदानीम् इस्रायेलीयो भूपति र्यिहो- ८
शाफटं जगाद, वयं येन परमेश्वरं प्रष्टुं पारयामस्तादृशोऽपर एको
जनो विद्यते किन्त्वहं तम् ऋतीये यतः स मामध्यशुभवचनं विना
शुभवचनं न वदति यिम्लस्य सुतो मीखाय इति तस्य नाम। ततो
यिहोशाफटः कथयामास नरपतिनैतादृशं वाक्यं मा गद्यतां। तदानीम् ९
इस्रायेलीयो नरपतिः खगृहस्याध्यक्षमेकम् आहूय निदिदेश यिम्लस्य
सुतं मीखायं तूर्णम् अत्रानय। तदानीम् इस्रायेलीयो नरपति र्यिहूदा- १०
देशीयो यिहोशाफटो नरपतिश्च राजकीयपरिच्छदान्वितौ शोमिरोणश्च
गोपुरनिकटस्थे समानस्थाने स्वसिंहासनयोरुपविष्टावास्तां ते सर्व्वे
भविष्यद्वादिनश्च तयोः सम्मुखे भविष्यद्वचनम् अकथयन्। विशेषतः ११
खिनानाहस्य पुत्रः सिदिकियो लौहमये शृङ्गे निर्म्माय कथितवान्,

परमेश्वर एतां वाचं ब्रवीति, एताभ्यां त्वम् अरामीयान् निःशेषं यावद्
१२ वितोत्स्यसि। अपरे सर्व्वे भविष्यद्वादिनोऽपि तथैव भविष्यद्वाक्येनाकथ-
यन् त्वं रामोतगिलियदं गत्वा कृतार्थीभव, परमेश्वरेण तद् भूपते-
१३ र्हस्तगतं कारिष्यते। अपरं यो दूतो मीखायम् आह्वातुं गतवान् स तम्
अब्रवीत् पश्य सर्व्वे भविद्वादिन एकजन इव नरपतेः शुभवचो गदन्ति,
अतोऽहं विनये त्वमपि तेषाम् एकजन इव वचो ब्रूहि शुभवाक्यं भाषस्व
१४ च। ततो मीखायो बभाषे, मया परमेश्वरस्यामरत्वस्य शपथं विधाय
निगद्यते, परमेश्वरो मां यद् आदेक्ष्यति, तदेव मया कथयिष्यते।
१५ अनन्तरं राज्ञः सविधं तस्मिन् समीते नरपतिस्तं परिपृष्टवान् हे
मीखाय, युद्धार्थम् आवाभ्यां रामोतगिलियदं गन्तव्यं किं वा ततो
निवर्त्तितव्यं? ततः स तमब्रवीत् त्वं गत्वा कृतार्थीभव, परमेश्वरस्तद्
१६ भूपतेः करे समर्पयिष्यति। अनन्तरं राजा तं जगाद त्वं परमेश्वरस्य
नाम्ना तथ्यवचो विनापरं किमपि मां न वदिष्यस्येतदर्थं कतिवारान्
१७ मया शपथं कारयिष्यसे? ततः स बभाषे, अहम् इस्रायेलः सकल-
लोकान् अरक्षकान् मेषानिव शिलोच्चयोपरि विकीर्णान् अपश्यं ततः
परमेश्वर उक्तवान् एतेषां स्वामी नास्ति, एकैको जनः स्वं स्वं निवेशनं
१८ कुशलेन परावृत्य व्रजतु। अनन्तरम् इस्रायेलीयो भूपतिर्यिहोशाफटम्
अभाषत, स मामध्यशुभवचनं विना शुभवचनं न वदिष्यतीत्यहं
१९ किं पूर्व्वं तुभ्यं नाकथयं? अनन्तरं मीखायो बभाषे, त्वया पारमेश्वरं
वचो निशम्यतां। अहं सिंहासनोपविष्टं परमेश्वरं तस्य दक्षिणवाम-
२० पार्श्वयो दण्डायमानं स्वर्गीयं सकलसैन्यञ्चापश्यं। परमेश्वर उदितवान्
आहाबो यथा रामोतगिलियदं गत्वा पतेत् तथा कस्तं भ्रमयिष्यति?
तच्च एको जन एकं प्रकारम् अन्यो जनश्चान्यं प्रकारं कथितवान्।
२१ अनन्तरम् एक आत्मा समेत्य परमेश्वरस्य समक्षं तिष्ठन् कथितवान्
२२ अहं तं भ्रमयिष्यामि। परमेश्वर उदितवान् केन? स उक्तवान् अहं
गत्वा तस्य सकलानां भविष्यद्वादिनां वदनेषु मृषावादक आत्मा भवि-
ष्यामि। तदानीं तेन निगदितं त्वं तं भ्रमयित्वा जयी भविष्यसि वहि-
२३ र्निर्य्याय तदेव कुरु। अनेन प्रकारेण पश्य परमेश्वरस्त्वदीयानां सर्व्व-
भविष्यद्वादिनां वदनेषु मृषाभाषकम् आत्मानं निहितवान् परमेश्वरे-
णैव त्वामध्यमङ्गलं निश्चितं।
२४ तदानीं खिनानाहस्य पुत्रः सिदिकियः समीपमागत्य मीखायस्य

महत्त्वम् आहूय कथितवान् परमेश्वरीय आत्मा त्वां सम्भाषितुं मम
समीपात् केन मार्गेण गतवान्? मीखाय उदितवान् प्रच्छ यस्मिन् दिने २५
त्वं प्रच्छन्नत्वार्थं गर्भागारं प्रवेक्ष्यसि तस्मिन् दिने तद् भोत्स्यसे। अन- २६
न्तरम् इस्रायेलीयराजो भृत्यमेकं समादिशत् त्वं मीखायं धृत्वा नगरा-
ध्यक्षस्यामोनस्य राजपुत्रस्य योयाशस्य च समीपं नय। अपरं ताभ्यां २७
कथय, महीपतिरिति वाचं वदति, एनं कारागारे बध्नीतं यावच्चाहं
कुशलेन परावृत्य नागच्छामि तावद् एनं दुःखरूपम् अन्नं भोजयतं
दुःखरूपं तोयं पाययतञ्च। ततो मीखायो व्याजहार, यदि त्वं कुशलेन २८
परावृत्यागमिष्यसि तर्हि परमेश्वरो मया न भाषते। अनन्तरं स
कथयामास, हे लोकाः सर्व्वे यूयम् अत्र मनो निधद्ध्वं।

अनन्तरम् इस्रायेलीयराजो यिहूदादेशीयो यिहोशाफटो राजा च २९
रामोतगिलियदं जग्मतुः। ततः परम् इस्रायेलीयो महीपति र्यिहो- ३०
शाफटं जगाद, अहं छद्मवेशं धारयन् समरं प्रविशामि त्वञ्च निजं
परिच्छदं परिधेहि। अनन्तरम् इस्रायेलीयो महीपतिश्छद्मवेशं
धारयन् समरं प्रविवेश। ततः पूर्व्वम् अरामीयो महीपतिः स्वकीयान् ३१
द्वाविंशतिरथाध्यक्षान् इत्याज्ञापयत्, यूयं केवलम् इस्रायेलीयभूपतिं
विना क्षुद्रेण महता वापरेण केनापि साकं न युध्यत। ततस्ते रथाध्यक्षा ३२
यिहोशाफटं निरीक्ष्योक्तम् एष एवेस्रायेलीयो भूपतिरिति, ततस्तेन
समं योद्धुम् उपाक्राम्यन्त किन्तु यिहोशाफटेनोच्चैःशब्दे कृते स इस्रा- ३३
येलो भूपति र्नहीति विज्ञाय रथाध्यक्षास्तस्यानुगमनात् निवर्त्तिरे।

अनन्तरम् एकेन जनेन लक्ष्यं विना धनुर्गुणम् आकृष्येस्रायेलीयो ३४
नृपति र्व्वर्म्मणः सन्धिस्थाने शरेणाहतः। ततः स निजं सारथिं बभाषे
त्वं करौ परावर्त्य सैन्यमध्यात् मां नय यतोऽहं व्यथितोऽस्मि। तस्मिन् ३५
दिवसे समरस्तुमुलोऽभवत् नरपतिश्चारामीयानां विरुद्धं निजे स्यन्दने
कूबरम् आलम्ब्यातिष्ठत्, किन्तु सायङ्काले ममार, तस्य क्षतस्य रुधिरं
स्यन्दनमध्ये पपात च। अनन्तरं रवेरस्तगमनसमय एकैको जनः स्वं ३६
स्वं नगरं स्वं स्वं जनपदञ्च गच्छत्विति निनादेन शिविरं व्याप्तं।

अनन्तरं नरपति र्मृतो लोकैः शोमिरोणम् आनीतस्तत्र शोमिरोणे ३७
श्मशाने निहितश्च। ततः परं लोकैर्यदा शोमिरोणस्य पुष्करिण्याः पार्श्वे ३८
स्यन्दनम् अक्षाल्यत तदा तस्य सञ्ज्ञायां ख्यापितायां परमेश्वरस्य वचना-
नुसारात् सारमेयास्तस्य रुधिरं अवलिलिहुः। एतस्याहावस्य सर्व्वं ३९

चरित्रम् अवशिष्टाः क्रियास्तेन निर्म्मापितं दन्तिदन्तमयं निकेतनं तेन
निर्म्मितानि नगराणि चैतानि सर्व्वाणि किम् इस्रायेलीयभूपतीनां पुरा-
४० वृत्तपुस्तके लिखितानि न विद्यन्ते? आहावे स्वपितृगणइव महानिद्रां
समीते तस्य तनयोऽहसियस्तस्य पदे राजा बभूव ।

४१ इस्रायेलीयस्याहावस्य नृपते राजत्वस्य चतुर्थवत्सरे आसाः सुतो
४२ यिहोशाफटो यिहूदादेशे राजत्वं कर्त्तुम् आरेभे । यिहोशाफटः पञ्च-
त्रिंशद्वत्सरवयस्को राजत्वं कर्त्तुं प्रारभ्य यिरूशालमे पञ्चविंशति वत्स-
रान् यावत् राजत्वं चकार । अशूबानामिका शिल्हे र्दुहिता तस्य प्रसू-
४३ रासीत् । स निजजनकस्यासा मार्गेणाचरत् तस्मात् न परावृत्य पर-
मेश्वरस्य साक्षात् सदाचारं चक्रे किन्तु भ्रगुस्थानानि नोदच्छिद्यन्त
४४ लोकास्तदानीमप्युच्चस्थानेषु बलिदानं धूपदहनञ्चाकुर्व्वन् । यिहोशाफट
४५ इस्रायेलीयभूपतिना साकं सन्धिं चकार । एतस्य यिहोशाफटस्याव-
शिष्टा क्रिया विक्रमो योधनञ्चैतानि सर्व्वाणि यिहूदादेशीयभूपतीनां
४६ पुरावृत्तपुस्तके लिखितानि किं न विद्यन्ते? तस्य जनकस्यासाः समये
ये ये पुङ्गामिनो मनुजा अवशिष्टास्ते तेन जनपदाद् व्यापादिताः ।
४७ एतस्मिन् समय इदोमदेशस्य कोऽपि भूपतिर्नासीत् एकः प्रतिनिधिः
४८ राजत्वम् अकरोत् । अनन्तरं यिहोशाफट ओफीरात् महारजता-
नाम् आनयनार्थं तर्शीशीयपोतनिवहं निर्म्मापयाञ्चकार किन्तु स
४९ पोतनिवहो न जगाम यत इत्सियोनगेवरे सर्व्वेऽभज्यन्त । तदानीम्
आहावस्य तनयोऽहसियो यिहोशाफटं व्याहरत् मम दासेयाः भवतो
दासेयैः साकं पोतैर्यात्रां कुर्व्वन्तु किन्तु यिहोशाफटस्य तस्मिन् मति
५० र्न बभूव । अनन्तरं यिहोशाफटो निजपितृगणइव महानिद्रां गत्वा
निजपूर्व्वपुरुषस्य दायूदो नगरे पूर्व्वपुरुषाणां समीपे श्मशाने निदधे
ततस्तस्य तनयो योरामस्तस्य पदे राजा बभूव ।

५१ यिहूदादेशीययिहोशाफटस्य नृपते राजत्वस्य सप्तदशे वत्सरे आहावस्य
पुत्रोऽहसिय इस्रायेलीयानां राजत्वं कर्त्तुम् आरेभे स वत्सरद्वयं यावद्
५२ इस्रायेलदेशस्य राजत्वं चकार । स परमेश्वरस्य साक्षात् कुत्सिताचारं
चकार किञ्च निजपित्रो मार्गे येनेस्रायेलवंशः पापे प्रवर्त्तितस्तस्य निबाट-
५३ पुत्रस्य यारबियामस्य मार्गे च चरितवान् । स स्वपितुः क्रियानुसाराद्
बालः सेवां पूजाञ्च कुर्व्वन् इस्रायेलः प्रभुं परमेश्वरं क्रोधयाञ्चकार ।

# राजावल्या द्वितीयं पुस्तकं।

## १ प्रथमोऽध्यायः।

१ निजपीडायाः समयेऽहसियस्य देवसमीपं दूतानां प्रेषणं ५ दूतानां समीपम् एलियस्य प्रेषितत्वं ९ एलियं धर्त्तुं सैनिकद्वयस्य प्रेषितत्वं तेषां विनाशः १३ तृतीयसैनिकस्य प्रेषितत्वं तस्य रक्षा १७ अहसियस्य निधनञ्च।

आहाबस्य निधनात् परं मोयाबीयमनुजा इस्रायेलोऽधीनत्वं तत्यजुः। १
अपरम् अहसियः शोमिरोणस्थितस्य स्वीयोच्चगेहस्य वातायनेनाधः २
पतित्वा रुग्णो बभूव। ततः स दूतान् वाचमिमां गदित्वा प्रेषयामास
अहमेतस्माद् व्याधे रक्षां प्राप्स्यामि नवेति यूयं गत्वेक्रोणीयदेवं वाल्-
सिबूबं पृच्छत। किन्तु परमेश्वरस्य दूतस्तिश्बीयम् एलियं व्याजहार, ३
त्वमुत्थाय शोमिरोणस्य भूपते दूतान् साक्षात् कुरु तान् इदं वचो ब्रूहि
च, इस्रायेलो मध्य ईश्वरो नास्त्येतत्कारणाद् यूयं किम् इक्रोणीयदेवं
वाल्सिबूबं परिप्रष्टुं व्रजथ? इतिहेतोः परमेश्वर एतां भारतीं गदति ४
त्वं यां शय्याम् आरूढोऽसि तस्याः पुन र्नावरोक्ष्यसि त्वया मर्त्तव्यमेव।
तत एलियः प्रतस्थे।
अनन्तरं नृपतेः समीपं परावृत्ता दूतास्तेन पृष्टाः, यूयं कुतः परा- ५
वृत्यागताः? ते प्रत्यवदन् एको जन आगत्यास्मान् साक्षात् कृत्वा गदित- ६
वान् येन राज्ञा यूयं प्रहितास्तस्य समीपं व्याघुट्य गत्वा गदत परमे-
श्वर इमां भारतीं भाषते, इस्रायेलो मध्य ईश्वरो नास्त्येतत्कारणात् त्वं
किम् इक्रोणीयदेवं वाल्सिबूबं परिप्रष्टुं लोकान् प्रहिणोषि? त्वं यां
शय्याम् आरूढोऽसि तस्याः पुन र्नावरोक्ष्यसि त्वया मर्त्तव्यमेव। नरपति- ७
स्तान् पप्रच्छ युष्मान् साक्षात् कर्त्तुं समीय येन मनुजेन वच इदमभाषि
तस्याकारः कीदृशः? ते प्रत्यवदन् स लोमशस्तस्य कटौ च चर्म्मशृङ्खलं ८
बद्धमासीत्। ततो नरपतिरुदितवान् स तिश्बीय एलियः।
अनन्तरं नृपतिः पञ्चाशल्लोकैः सहितं पञ्चाशत्पतिमेकं जनं तस्य ९
समीपं प्रेषयामास। तदानीम् एलिय एकस्य शिलोच्चयस्य शिखरे समु-
पाविशत्। ततः स तस्य समीपम् ऊर्द्ध्वं गत्वा तं व्याजहार, हे ईश्वरीय-

१० लोक, नृपतिरादिशति त्वमवरोह । तत एलियस्तं पञ्चाशत्पतिं प्रत्यव-
दत्, यद्यहम् ईश्वरीयलोको भवेयं तर्हि गगनाद् वह्निः पतित्वा त्वां
तव पञ्चाशल्लोकांश्च दहतु । तत आकाशाद् वह्निः पतित्वा तं तस्य
११ पञ्चाशल्लोकांश्च ददाह । अनन्तरं नृपतिः पुनर्व्वारं पञ्चाशल्लोकैः सहि-
तम् अपरम् एकं पञ्चाशत्पतिं प्रेषयामास । ततः स तम् उक्तवान् हे
१२ ईश्वरीयलोक नरपतिरादिशति त्वं तूर्णम् अवरुह्यागच्छ । एलियस्तान्
प्रत्यवादीत्, यद्यहम् ईश्वरीयलोको भवेयं तर्हि गगनाद् वह्निः पतित्वा
त्वां तव पञ्चाशल्लोकांश्च दहतु । तत आकाशाद् ईश्वरीयवह्निः पतित्वा
तं तस्य पञ्चाशल्लोकांश्च ददाह ।

१३ अनन्तरं राजा पुनर्व्वारं पञ्चाशल्लोकैः सहितं तृतीयम् एकं पञ्चाशत्-
पतिं प्रेषयामास । स तृतीयः पञ्चाशत्पतिः यात्रां विधाय समुपस्थाय
एलियस्य समक्षं जानुनी पातयित्वा विनयेन बभाषे हे ईश्वरीयलोक
मम प्राणा भवत एतेषां पञ्चाशद्दासानां प्राणाश्च भवतो दृष्टौ बहुमूल्या
१४ भवन्तु । पश्यतु पूर्व्वम् आकाशाद् वह्निः पतित्वा द्वौ पञ्चाशत्पती तयोः
पञ्चाशतं पञ्चाशतं सेनाश्च दग्धवान्, अधुना मम प्राणा भवतो दृष्टौ
१५ बहुमूल्या भवन्तु । ततः परमेश्वरस्य दूत एलियं जगाद, सममेतेना-
वरुह्य याहि, एतस्मात् मा भैषीः । ततः स उत्थाय तेन साकं राज्ञः
१६ समीपं जगाम । अपरं स राजानं व्याजहार, परमेश्वरो वच इदं
ब्रवीति त्वं यं परिप्रष्टुं शक्नोषि तादृश ईश्वरः किम् इस्रायेलो मध्ये
नास्त्येतत्कारणात् त्वं किम् इक्रोणीयदेवं बालसिवूवं परिप्रष्टुं दूतान्
प्राहिणोः ? इतिहेतोस्त्वं यां शय्याम् आरूढोऽसि तस्याः पुन र्नावरो-
क्ष्यसि त्वया मर्त्तव्यमेव ।

१७ अनन्तरम् एलियेन गदितात् परमेश्वरीयवाक्यात् स ममार तस्य
तनयाभावाच्च यिहूदादेशीयनरपते र्यिहोशाफटस्य पुत्रस्य योरामस्य
१८ द्वितीये राजत्ववत्सरे यिहोरामस्तस्य पदे राजा बभूव । एतस्याहसि-
यस्यावशिष्टं चरित्रं तेन च यद्यत् कृतं तत् सर्व्वम् इस्रायेलीयनरपतीनां
पुरावृत्तपुस्तके लिखितं किं न विद्यते ?

---

## २ द्वितीयोऽध्यायः ।

१ एलियेलीशाययो र्यात्राकरणं नद्याः पारगमनं वाक्यवदनम् एलियस्य स्वर्गारो-

स्वर्गं १२ इलीशायस्य पुनरागमनं नदीतरणं भविष्यद्वचनेन सम्मानप्राप्तिः १९
तस्य प्रथमाश्चर्य्यक्रिया २२ द्वितीयम् आश्चर्य्यकर्म्म च।

अनन्तरम् एलियं घूर्णवायुना स्वर्गं नेतुं परमेश्वर उद्यतवत्येलिये- १
लीशायौ गिल्गलात् प्रतस्थाते। अपरम् एलिय इलीशायं बभाषे २
त्वयात्रैव स्थीयतां यतः परमेश्वरो मां बैथेलं यावत् प्रहितवान्। तत
इलीशायः प्रतिजगाद यदि परमेश्वरो ऽमरो भवेत् भवतः प्राणाश्च
सजीवा भवेयुस्तर्हि मया भवान् न परित्यक्ष्यते। अतस्तौ बैथेलं
जग्मिवांसौ। तदानीं बैथेलस्था भविष्यद्वादिनां शिष्या इलीशायस्य ३
सविधं समीय तम् अवदन् अद्य परमेश्वरेण तव समक्षात् तव प्रभु
र्नेष्यते त्वया किमेतत् ज्ञायते? स उदितवान् मयापि तत् ज्ञायते यूयं
निःशब्दा भवत। ततः परम् एलियेन स न्यगद्यत, हे इलीशाय त्वयात्र ४
स्थानेऽवस्थीयतां यतः परमेश्वरो मां यिरीहूं यावत् प्राहिणोत्। ततः
स उदितवान् यदि परमेश्वरोऽमरो भवेत् भवतः प्राणाश्च सजीवा
भवेयुस्तर्हि मया भवान् न परित्यक्ष्यते। तस्मात् तौ यिरीहूं जग्मि-
वांसौ। तदानीं यिरीहूस्था भविष्यद्वादिनां शिष्या इलीशायस्य सविधं ५
समेत्य तं व्याजह्रुः, अद्य परमेश्वरेण तव समक्षात् तव प्रभु र्नेष्यते त्वया
किम् एतत् ज्ञायते? ततः स प्रतिबभाषे मयापि तत् ज्ञायते यूयं
निःशब्दा भवत। अनन्तरम् एलियस्तम् आचष्ट त्वयात्र स्थानेऽवस्थीयतां ६
यतः परमेश्वरो मां यर्द्दनं यावत् प्राहिणोत्। ततः स प्रत्यब्रवीत्,
यदि परमेश्वरोऽमरो भवेत् भवतः प्राणाश्च सजीवा भवेयुस्तर्हि
भवान् मया न परित्यक्ष्यते। अनन्तरं तौ द्वौ जनौ जग्मतुः। अपरं ७
भविष्यद्वादिनां शिष्याणां पञ्चाशज्जना व्रजित्वा किञ्चिद् दूरे तयोः
समक्षम् अतिष्ठन्। अपरं यर्द्दनस्य तटे तौ द्वौ जनावप्यवतस्थाते।
ततः परम् एलियः स्वीयं गात्रीयं वसनं धृत्वा सङ्कोचयित्वा च तोय- ८
माजघान तेन तोयेषु विभिन्नेषु तौ द्वौ जनौ शुष्कमार्गेण पारं जग्मि-
वांसौ। पारं प्राप्यैलिय इलीशायम् अब्रवीत् तव समीपात् मम ९
नयनस्य पूर्व्वं तव कृते मया यत् कर्त्तव्यं तत् त्वया याच्यतां। तत इली-
शायो जगाद त्वदीयात्मनो द्वावंशौ माम् अधितिष्ठेतां मदीया प्रार्थ-
नैषा। तेन भाषितं त्वया यदप्रार्थि तद् दुर्लभं तथापि यदि तव १०
सविधात् नयनसमये त्वयाहं वीक्ष्येय तर्हि त्वां प्रति तद् वर्त्तिष्यते
किन्तु मयि न दृष्टे न वर्त्तिष्यते। तौ गच्छन्तौ सम्भाषेते इत्यनन्तरे पश्य ११

वह्निमय एको रथो वह्निमयौ हयौ च समीय तौ पृथग् अकुर्व्वन् अप-
रम् एलियो घूर्णवायुना स्वर्गमारुरोह।

१२ तदानीम् इलीशायस्तद् वीक्षमाणो वत मम तात वत मम तात वत
इस्रायेलो स्यन्दनरथिगणेत्युच्चै र्विललाप ततः परं पुनस्तं न वीक्षाञ्चक्रे।
१३ अनन्तरं स निजवसनानि धृत्वा छित्त्वा द्विखण्डानि चकार। अपरं स
एलियस्य गात्रात् पतितं वसनम् आदाय परावृत्य यर्दनस्य तटे तस्थि-
१४ वान्। अनन्तरं स एलियात् पतितं गात्रीयं वसनं धृत्वा तेन तोयान्या-
हत्य व्याजहार, एलियस्य प्रभुः परमेश्वरः कुत्र? सोऽवश्यं स एवास्ते।
१५ ततस्तेन ताडितेषु वारिषु विभिन्नेष्विलीशायः पारं जगाम। तदानीं
यिरीहोनिवासिनो भविष्यद्वादिनां शिष्याः सम्मुखस्थानात् तद् वि-
लोक्य बभाषिरे, एलियस्यात्मा इलीशायेऽध्यतिष्ठत्। अनन्तरं ते तं
१६ साक्षात् कर्त्तुं समीय भूमौ दण्डवद् बभूवुः। अपरं तैः स ऊचे, पश्य
तव दासानां मध्ये पञ्चाशद्बलवन्तो मनुजा अत्र स्थाने विद्यन्ते ते
गत्वा तव प्रभुरन्विष्यतां को जानाति परमेश्वरस्यात्मा तम् उत्थाप्य
कस्मिंश्चित् शिलोच्चये कस्याञ्चिद् उपत्यकायां वा निक्षिप्तवान्। स उक्त-
१७ वान् मा प्रेषयत। तथापि तैः पुनः पुनर्याचित्वा लज्जितः सन् स
व्याचचक्षे तान् प्रेषयत। तस्मात् पञ्चाशल्लोकास्तैः प्रेषिताः सन्तो दिन-
१८ त्रयं यावत् तं गवेषयामासुः किन्तु तं न प्राप्य परावृत्य तस्य समीपम्
आजग्मुः। तदानीं स यिरीहावासीत्। ततः स उदितवान् युष्माभि
र्न गम्यतामिति मया किं नाभाषि?

१९ अनन्तरं तन्नगरस्य मनुजा इलीशायं व्याचचक्षिरे, पश्यतु भवान्,
एतस्य नगरस्य स्थानं रम्यमित्यस्मत्प्रभु र्वीक्षते, किन्तु तोयानि कुत्सि-
२० तानि भूमिश्चापत्यनाशिका। ततः स व्याजहार, मम समीपं नवीनं
२१ भाजनमेकमानीय तत्र लवणं निधद्ध्वं। अनन्तरं तत् तैरानीतं। ततः
स पानीयस्य प्रस्रवणं समीय तत्र लवणं निक्षिप्य बभाषे परमेश्वरः
प्राह, मया पानीयमेतद् भद्रम् अकारि, अद्यारभ्य नैतत् निधनजनकम्
२२ अपत्यनाशकं वा भविष्यति। अनन्तरम् इलीशायेन यद् गदितं तदनु-
साराद् अद्य यावत् तन्नीरं भद्रं बभूव।

२३ अनन्तरं स तस्मात् स्थानाद् बैथेलं जग्मिवान् ततस्तस्मिन् वर्त्मना
गच्छति कतिपयाः क्षुद्रबालका नगराद् बहिरागत्य तं निन्दन्तो बभा-
षिरे, हे खल्वाट त्वम् ऊर्द्धम् आगच्छ, हे खल्वाट त्वम् ऊर्द्धम् आगच्छ।

तदानीं स मुखं परावर्त्त्य तान् दृष्ट्वा परमेश्वरस्य नाम्ना शशाप। ततः २४
काननाद् द्वे भल्लुक्यौ समागत्य तेषां द्विचत्वारिंशद् बालकान् विदार-
यामासतुः। अनन्तरं स तस्मात् स्थानात् कर्म्मिलं शिलोच्चयं गतवान् २५
अपरं तस्मात् स्थानात् शोमिरोणं प्रत्याययौ

---

## ३ तृतीयोऽध्यायः।

१ यिहोरामस्य राजत्वकथनं ४ मोयाबीयराजेनेस्रायेलोऽधीनत्वत्यजनं ६ यिहोरामो यिहोशाफट इदोमीयनरपतिश्चैतेषु तोयाभावात् क्लिष्टेष्विलीशायात् तोयस्य जयस्य च प्रतिज्ञा लभनं २१ मोयाबीयानां पराजितत्वं २६ मोयाबीयराजेन निजतनयस्य बलिदानम् इस्रायेलीयलोकानां निजजनपदं प्रति पुनरागमनञ्च।

यिहूदाया भूपते र्यिहोशाफटस्य राजत्वस्याष्टादशे वत्सर आहा- १
बस्य तनयो यिहोराम इस्रायेल उपरि राजत्वं कर्त्तुं प्रारभ्य द्वादश-
वत्सरान् यावद् राजत्वं चक्रिवान्। स परमेश्वरस्य साक्षात् कुत्सि- २
ताचारं चकार। स यद्यपि निजपितु र्मातुश्च सदृशो न भवन् तातेन
निर्म्मितं वालः प्रतिमानं दवयामास, तथापि निवाटस्य तनयो यो ३
यारबियाम इस्रायेलीयवंशं पापम् अकारयत् तस्य पापान्याचचार
तानि न विजहौ।

मोयाबदेशस्य राजा मेशा मेषाधिकार्य्यासीत् तेनेस्रायेलीयनरपतये ४
लक्षमेकं मेषवत्सा लक्षमेकं सलोममेषाश्च करत्वेनादीयन्त। किन्त्वा- ५
हावस्य निधनात् परं मोयाबीयो भूपतिरिस्रायेलीयभूपतेरधीनत्वं
पर्य्यत्यजत्।

तस्मिन् समये यिहोरामो नरपतिः शोमिरोणात् प्रस्थाय सकलान् ६
इस्रायेलीयमनुजान् अगणयत्। अपरं यिहूदादेशीयनरपते र्यिहोशा- ७
फटस्य सविधं दूतं प्रहित्य बभाषे, मोयाबीयो नृपति र्ममाधीनत्वं
पर्य्यत्याक्षीत्, अतस्त्वं मोयाबीयैः समं समरं कर्त्तुं किं मया साकं गमि-
ष्यसि? स प्रत्यवादीत्, अहं यास्यामि त्वम् अहञ्च समानौ तव लोका
मम लोकाश्च समानास्तव तुरगा मम तुरगाश्च समानाः। स पृष्टवान् ८
वयं केन वर्त्मना गमिष्यामः? ततः स आचष्ट, इदोमदेशीयप्रान्तरस्य
मार्गेण। अनन्तरम् इस्रायेलीयो नरपति र्यिहूदादेशीयनरपतिरि- ९
दोमीयो नरपतिश्च यात्रां विधाय वक्रमार्गेण सप्तदिनानि जग्मि-
वांसः। तदानीं सैन्यानां तदनुगामिनां पशूनाञ्च कृते तोयं नासीत्।

१० तत इस्रायेलीयो नरपति र्व्याजहार हा हा मोयावीयलोकानां करेषु
समर्पयितुं परमेश्वर इमान् त्रीन् भूपतीन् एतत् स्थानं समानयत्।
११ किन्तु यिहोशाफटो व्याजहार, वयं येन परमेश्वरं परिप्रष्टुं पारयाम-
स्तादृशः परमेश्वरस्य भविष्यद्वादी किम् अत्र स्थाने कोऽपि नास्ति?
तत इस्रायेलीयनरपतेरेको भृत्यो बभाषे यो जन एलियस्य करे पानी-
यमसिञ्चत्, शाफटस्य तनयः स इलीशाय एतस्मिन् स्थाने विद्यते।
१२ यिहोशाफटो व्याचष्ट, परमेश्वरस्य वचनं तस्यान्तरे विद्यते। तत इस्रा-
येलीयभूपति र्यिहोशाफट इदोमीयभूपतिश्चेलीशायस्य सविधं जग्मि-
१३ वांसः। तदानीम् इलीशाय इस्रायेलीयं मही्पतिं व्याहरत् त्वया साकं
मम कः सम्बन्धः? त्वं निजतातस्य भविष्यद्वादिनां स्वजनन्याश्च भवि-
ष्यद्वादिनां सन्निधिं याहि। तत इस्रायेलीयो महीपतिरुवाच, मैतद्
वद मोयावदेशीयानां करेषु समर्पयितुं परमेश्वर एतान् त्रीन् नरप-
१४ तीन् समानयत्। इलीशाय ऊचिवान् अहं यं सैन्याधिपतिं परमेश्वरं
परिचरामि तस्यामरत्वस्य शपथं कुर्व्वे यद्यहं यिहूदादेशीयनरपतिं
यिहोशाफटं नादरिष्ये तर्हि त्वां प्रति दृष्टिं नाकरिष्ये त्वां नाद्रक्ष्यञ्च।
१५ इदानीं मम सन्निधिम् एकं यन्त्रवादिनम् आनयत। अनन्तरं तेन
यन्त्रवादिना वीणायां वादितायां परमेश्वर इलीशायम् अध्यतिष्ठत्।
१६ ततः सोऽब्रवीत् परमेश्वर एतत् कथयति, इमाम् उपत्यकां खातमयीं
१७ कुरुत। यतः परमेश्वर इमां भारतीं भाषते, युष्माभि र्वातो न दर्शि-
ष्यते वृष्टिश्च न दर्शिष्यते किन्तु युष्माकं युष्मदीयानां पशूनां वाहना-
१८ नाञ्च पानार्थम् एषोपत्यका पानीयैः परिपूरयिष्यते। एतदपि परमेश्व-
रस्य दृष्टौ क्षोदिष्ठं कर्म्म स मोयावीयान् युष्माकं करेषु समर्पयिष्यति।
१९ युष्माभिः प्राचीरवेष्टितानि नगराण्युत्तमानि नगराणि च जायिष्यन्ते
सर्व्व उत्तमा महीरुहाश्च कर्त्तिष्यन्ते सर्व्वे प्रस्रवणा मृद्भिः पूरयिष्यन्ते
२० सर्व्वाण्युत्तमानि क्षेत्राणि खण्डप्रस्तरै र्विनाशयिष्यन्ते च। अनन्तरं
प्रातःकाले बलिदानसमय इदोमजनपदस्य वर्त्मना पानीयं समीय नीवृतं
परिपूरयामास।
२१ इत्यवसरे ते राजानोऽस्माभिः साकं समरं कर्त्तुं समीयुरिति वार्त्तां
निशम्य मोयावीयलोकानाम् अस्त्रधारणनिपुणाः सर्व्वे मनुजा मिलित्वा
२२ जनपदस्य सीमायाम् अवातिष्ठन्त। अपरं प्रत्यूषे दिवाकरे पानीयोपरि
देदीप्यमाने मोयावीयैः समुत्थाय ससम्मुखे शोणितवद् रक्तवर्णानि

तोयान्यदृश्यन्त। ततस्तैरुदितं, एतत् शोणितमेव तै र्भूपतिभिः परस्परं २३
विवदमानैः स्वबन्धूनां लोका हता अतो हे मोयावीया यूयं लोभार्थं
गच्छत। अनन्तरं तेष्विस्रायेलीयानां शिबिरमुपस्थितेष्विस्रायेलीय- २४
लोका उत्थाय मोयावीयलोकान् ताडयाम् आघ्नन् यत् ते तेषां सम्मु-
खात् पलायन्त। अनन्तरं देशस्य मध्येऽपि मोयावीयान् आहन्तुं तेषां
पश्चाद् अगच्छन्। सकलनगराणि तै र्भग्नानि सर्व्वाण्युत्तमानि क्षेत्राणि २५
चैकैकेन जनेन निक्षिप्तैः पाषाणैः परिपूरितानि सर्व्वे सजलप्रस्रवणाश्च
मृद्भिस्तैः पूरिता उत्तमा महीरुहाश्च सर्व्वे तैश्छिन्नाः केवलं कीर्हेरसस्य
प्राचीरम् अवाशिष्यत तेनाश्मक्षेपकयन्त्रधारिणस्तस्य चतुर्दिशं गत्वा
तद् आचक्रमुः।

अपरं समरो मयानिवार्य्यो भवतीति विलोक्य मोयावीयो भूपति- २६
रिदोमीयभूपतेः समीपं सैन्यानि विभिद्य गन्तुं सप्तशतानि खड्गधारकान्
स्वेन समं जग्राह किन्तु ते न पारयामासुः। अनन्तरं तस्य मरणात् २७
परं येन राज्ञा भवितव्यं स्वस्य तं ज्येष्ठं पुत्रं गृहीत्वा स भित्तेरुपरि
बलिमिव कृतवान् तत इस्रायेलीयानां विरुद्धं महान् क्रोध उदपद्यत।
अनन्तरं ते तस्य समीपात् प्रस्थाय निजजनपदं परावृत्य जग्मुः।

---

## ४ चतुर्थोऽध्यायः।

१ इलीशायेन विधवायास्तैलवर्द्धनं ८ शूनेमीयायै स्त्रियै पुत्रवरदानं १८ पुत्रे मृते सति तस्य पुन र्जीवयनं ३८ गिल्गले प्राणनाशकव्यञ्जनस्य भद्रकरणं ४२ अल्पाल्पभक्ष्येण बहुलोकानां भोजनञ्च।

ततः परं भविष्यद्वादिनां शिष्याणाम् एका योषिद् इलीशायं प्रोच्चै १
र्व्याहरत्, तव दासो मम स्वामी मृतः स परमेश्वरस्य भक्त आसीत् तत्
त्वं जानासि, इदानीम् उत्तमर्णो मम द्वौ पुत्रौ निजदासौ कर्त्तुम् आग-
च्छति। इलीशायः पप्रच्छ मया तव कृते किं कर्त्तव्यं? तव गेहे किं २
विद्यते? तन्मां वद। सा जगाद भाण्डम् एकं तैलं विना तव दास्या गेहे
नापरं किमपि विद्यते। तदानीं स कथयामास त्वया गत्वा बहिः- ३
स्थानाद् अर्थतः स्वीयसमीपवासिभ्यः सर्व्वेभ्यः शून्यभाजनानि याचित्वा-
नीयन्ताम् तान्यल्पानि न भवन्तु। ततः परं पुत्राभ्यां सार्द्धं निजगेहा- ४
भ्यन्तरं गत्वा तस्य द्वारं रुद्ध्वा तानि सर्व्वाणि पात्राणि तैलेन पूर्य्यन्तां

५ यद्यद् भाजनं पूर्णं तत् पृथक् निधीयताञ्च। अनन्तरं तस्य सविधाद्
गत्वा तया स्वपुत्त्राभ्यां सार्द्धं गेहं प्रविश्य रुद्धञ्च ताभ्याञ्चानीतेषु भाजनेषु
६ तैलम् अवतारितं। अनन्तरं सर्व्वेषु भाजनेषु पूर्णेषु सा तयोरेकं पुत्त्रं
बभाषे, त्वम् अपरमेकं भाजनं देहि ततः स जगाद भाजनमपरं नास्ति
७ तस्मात् तैलस्रावो विरराम। अनन्तरं सा गत्वेश्वरीयलोकं वार्त्तां
व्याचचक्षे। ततः स उदितवान् त्वं गत्वा तैलं विक्रीय ऋणं परिशोधय
अपरं तदवशिष्टेन त्वं त्वदीयतनयौ च जीवत।

८ अपरम् एकदा इलीशाये शूनेमं समीते तत्रत्या काचिद् धनवती
नारी सविनयं तं भोजनाय निमन्त्रयामास। अनन्तरं स यति वारान्
तेन वर्त्मना गतवान् तति वारान् भोजनाय तत् स्थानं गतवान्।
९ अनन्तरं सा नारी निजं पतिं व्याचष्ट पश्य योऽयं नरोऽस्माकं सविधेन
१० नित्यं गतागतं करोति मया बुध्यते स ईश्वरस्य पवित्रो लोकः। अत-
स्तस्य निमित्तम् आवाभ्यां भित्तेरुपरि क्षुद्रं कोष्ठमेकं निर्म्मीयतां तन्मध्ये
पर्य्यङ्को भोजनासनं पीठासनं दीपवृक्षश्च निधीयतां सोऽस्मन्निवेशनम्
११ आगत्य तस्मिन् स्थाने वसतु। एकस्मिन् दिन इलीशायेन तत् स्थानं
१२ गत्वा तत् कोष्ठं प्रविश्य शयने कृते स निजदासं गेहसिं व्याचष्ट त्वं
तां शूनेमीयाम् आह्वय। ततस्तेनाहूतायां तस्यां नार्य्यां तस्य सम्मुखे
१३ तिष्ठन्त्याम् इलीशायो गेहसिं व्याजहार, त्वया सा भाष्यतां, पश्य त्वया-
वयोर्निमित्तम् एतानि चिन्तितानि, अधुना तव निमित्तम् आवाभ्यां
किं कर्त्तव्यं? तव कृते नरपतेः सेनापतेर्वा सविधे किञ्चित् प्रार्थनीयं
किं विद्यते? सा भाषितवती, मया निजलोकानां मध्ये सुखम् उष्यते।
१४ अनन्तरम् इलीशायो बभाषे तस्याः कृते किं कर्त्तव्यं? ततो गेहसिना
१५ प्रतिगदितं सा निष्पुत्त्रा तस्याः पतिश्च वृद्धोऽस्ति। इलीशायः कथया-
१६ मास त्वं ताम् आह्वय। ततस्तेनाहूतायां तस्यां द्वारे तिष्ठन्त्याम् इली-
शाय ऊचिवान् एकवत्सरात् परम् एतस्मिन् ऋतौ त्वया तनयः क्रोडे
कारिष्यते। किन्तु सा बभाषे हे मम प्रभो हे ईश्वरीयलोक तन्नहि
१७ तन्नहि, निजदासीं प्रति मृषाभारतीं न भवान् भाषतां। अनन्तरं
सा नारी गर्भिणी भूत्वेलीशायस्य वाक्यानुसारात् संवत्सरात् परं तस्मिन्
ऋतौ पुत्त्रं प्रसुषुवे।

१८ अनन्तरं स बालकः क्रमशो वृद्धिं प्राप्यैकस्मिन् दिने निजतातस्य
१९ समीपे शस्यच्छेदकानां मध्यं जगाम। ततः परं तातम् उद्दिश्य हा मम

मस्तकं हा मम मस्तकम् इति तेन विज्ञापिते स तदा दासमेकं
आज्ञापयत्, एतस्य मातुः समीपम् एनं वह। अनन्तरं स तेनोदूढ्य मातुः २०
समीपं नीतो मध्याह्नकालं यावत् मातुश्चरौ उपविश्य ममार। तदानीं २१
सा तं गृहीत्वा गत्वेश्वरीयलोकस्य खट्टायां शाययित्वा द्वारं रुद्ध्वा च
बहिराजगाम। अपरं दूतेन निजं पतिं बभाषे त्वया तरुणानाम् एको २२
जन एका गर्द्दभी च मम सन्निधिं प्रेष्येताम् अहम् ईश्वरीयलोकस्य
समीपं त्वरितं गत्वा पुनरागमिष्यामि। ततः स प्रोवाच, तस्य सविधम् २३
अद्य त्वया कुतो यास्यते? अद्यामावास्या नहि विश्रामदिनमपि नहि।
सा व्याचचक्षे मङ्गलं भविष्यति। अनन्तरं सा गर्द्दभीं सज्जयित्वा निज- २४
दासं जगाद त्वं गर्द्दभीं चालयन् व्रज मत्तो निदेशमप्राप्य मम गमनं
शिथिलं मा कुरु। अपरं तस्यां गत्वा कर्म्मिलपर्व्वते ईश्वरीयलोकस्य २५
समीपम् उपस्थितायाम् ईश्वरीयलोकः किञ्चिद् दूरात् तां विलोक्य
निजदासं गेहसिं जगाद पश्यासौ सा शूनेमीया। त्वं तां साक्षात् कर्त्तुं २६
धाव, तव मङ्गलं विद्यते? तव स्वामिनश्च मङ्गलं विद्यते? तव बालकस्य
मङ्गलं विद्यत इत्यापृच्छस्व। तेन तस्मिन् कृते सा प्रत्यवादीत् मङ्गलं
विद्यते। किन्तु शैलोच्चय ईश्वरीयलोकस्य सविधम् उपस्थाय सा तस्य २७
पादौ दधार। ततस्तां दवयितुं गेहसि निकटं जगाम, किन्त्वीश्वरीय-
लोक उक्तवान् एनां तद् अनुजानीहि यत एतस्या अन्तःकरणं शोका-
कुलमास्ते परमेश्वरश्च मत्तस्तत् प्रच्छाद्य मां न ज्ञापितवान्। तदानीं २८
सा नारी व्याचचक्षे मया निजप्रभुतः किं पुत्त्रो याचितः? किन्तु मां
न वञ्चयेति मया किं नोदितं? तदानीम् इलीशायेन गेहसि व्याहृतः, २९
त्वं बद्धकटि र्भूत्वा हस्तेन मदीयं लगुडं गृहीत्वा व्रज केनचित् सा-
क्षात् कृतस्त्वं न नमस्कुरु केनापि नमस्कृतस्त्वं किमपि न प्रतिवद तस्य
बालकस्य वदनोपरि मदीयं लगुडं निधेहि च। बालकस्य प्रसूः कथ- ३०
यामास परमेश्वरो यद्यमरो भवेत्, भवतः प्राणाश्च यदि सजीवा
भवेयुस्तर्हि भवान् मया न परित्यक्ष्यते। ततः स उत्थाय तस्याः पश्चात्
जग्मिवान्। इत्यनन्तरे गेहसिना तयोरग्रे गत्वा बालकस्य वदने ३१
लगुडे निहिते शब्दश्चेतना वा तस्य न बभूव, तस्माद् गेहसिना तं
साक्षात् कर्त्तुं समीय स ऊचे, बालको न प्रबुद्ध इति। अनन्तरम् ३२
इलीशायेन गेहं प्रविश्य स बालको मृतः स्वस्य शयनीये शयानश्चेति
दृष्टं। अतः स एकाकी तस्य समीपं प्रविश्य द्वारं संरुध्य परमेश्वरस्य ३३

३४ सन्निधौ प्रार्थनां चकार। अपरं शय्याम् आरुह्य बालकस्योपरि शयित्वा
तस्य वदनोपरि निजं वदनं तस्य लोचनयोरुपरि निजे लोचने तस्य
करयोश्चोपरि निजौ करौ समर्पयन् स्वयं बालकस्योपरि लम्बमानो
३५ बभूव ततो बालकस्य गात्रे तापो भवितुम् आरेभे। अनन्तरं सोऽ-
वरुह्य कोष्ठस्य तत इतो बभ्राम, पुनरारुह्य च तस्योपरि लम्बमानो
बभूव। ततो बालकः सप्तवारान् क्षुतं कृत्वा लोचने उदमीलत्।
३६ तदानीं स गेहसिं समाहूय व्याचचक्षे त्वं तां शूनेमीयाम् आह्वय
ततः सा तेनाहूता तस्य सविधम् आजगाम, ततः स उदितवान् त्वं
३७ निजं तनयं गृहाण। तदानीं साभ्यन्तरं समेत्य तस्य चरणयोः पतित्वा
प्रणनाम ततो निजं पुत्रं वहन्ती बहिर् जगाम।

३८ अनन्तरम् इलीशायः पुनर्व्वारं गिल्गलं जगाम। तस्मिन् समये
जनपदे दुर्भिक्षम् आसीत्, अपरं भविष्यद्वादिनां शिष्येषु तस्य सम्मुख
उपविष्टेषु स निजदासं समादिशत् वृहत् पाकभाजनम् आरोप्यैतेषां
३९ भविष्यद्वादिनां शिष्याणां कृते भक्ष्यं पच। तदानीं तेषाम् एको जनः
शाकानि संग्रहीतुं क्षेत्रं गत्वा वन्याम् इवारुलतां प्राप्य तस्याः फलै-
र्वस्त्रं परिपूर्य्यानीय तानि खण्डयित्वा पाकस्थाल्यां निदधे किन्तु तानि
४० किं तत् ते नाज्ञायत। अनन्तरं लोकानां भोजनार्थं परिवेषणे कृते ते
शाकम् आस्वाद्योच्चैःस्वरेण व्याचचक्षिरे हे ईश्वरीयलोक पाकस्थाल्यां
४१ मृत्युरास्ते ततस्ते तद् भोक्तुं नापारयन्। तदानीं स उदितवान् किञ्चिद्
गोधूमचूर्णम् आनयत ततः स पाकस्थाल्यां तन्निक्षिप्य जगाद लोकानां
कृते परिवेषणं कुरु ते तत् भुञ्जतां। ततः पाकस्थाल्यां किञ्चिदपि नाशु-
भम् अतिष्ठत्।

४२ अनन्तरम् एको लोको बाल्शालिशायाः प्रथमशस्यस्य पूपान् अर्थतो
यवस्य विंशतिपूपान् वस्त्रपुटके च शस्यमञ्जरीरीश्वरीयलोकाय दातुम्
आनिनाय तत इलीशाय आचचक्षे एतानि लोकेभ्यो विश्राणय ते
४३ भुञ्जतां। ततस्तस्य परिचारक उदितवान् मया किं शतलोकेभ्य एतत्
परिवेषयिष्यते? स पुनर्व्वारं व्याजहार तानि मनुष्येभ्यो वितर ते
भुञ्जन्तां यतः परमेश्वरेण निगद्यते तेषु भुक्तवत्स्वपि तस्य किञ्चिदव-
४४ शिष्टं स्थास्यति। तस्मात् तेन तेषां समक्षं तेषु निक्षितेषु परमेश्वरस्य
वचनानुसारात् सर्व्वेषु भुक्तवत्स्वपि किञ्चिद् अवशिष्टं तस्थौ।

# ५ पञ्चमोऽध्यायः।

१ कुष्ठरोगात् मुक्तिं लब्धुं नामानस्य शोमिरोणगमनं ८ इलीशायस्य निदेशाद् यर्द्दन-
सरिति सप्तवारान् मज्जनं १५ मुक्तितो नामानेन इलीशायस्योपहारदानाय यत्नः २०-२७ उपढौकनग्रहणाद् गेहसेः कुष्ठीभवनं।

अरामीयनरपते र्नामाननामक एकः सेनापतिरासीत् तेन च परमे- १
श्वरोऽरामीयान् जययुक्तान् अकरोत् तत्कारणात् स निजप्रभोः साक्षात्
महान् सम्मानितश्चासीत् स च वीर आसीत् किन्तु कुष्ठरोगवान्
आसीत्। एकस्मिन् समयेऽरामीयलोकानां सैनिकैः समीयेस्रायेलीय- २
देशात् क्षुद्रायां कस्याश्चिद् वन्दिबालिकायाम् आनीतायां सा नामानस्य
जायायाः परिचारिका बभूव। सा निजस्वामिनीं व्याचष्ट हा हा यदि ३
मम प्रभुः शोमिरोणस्थं भविष्यद्वादिनं साक्षात् कर्त्तुं शक्नुयात् तर्हि
स तेन कुष्ठरोगात् मोचयिष्यते। अनन्तरं स गत्वा निजप्रभुं गदित- ४
वान् इस्रायेलीयजनपदाद् आनीता बालिका वच इदं ब्रवीति। ततो ५
ऽरामीयनरपतिस्तं व्याहरत् त्वं तत् स्थानं याहि। इस्रायेलीयनर-
पतये मया पत्रं प्रेषयिष्यते। तदानीं स निजहस्तेन दशकिक्करपरि-
मितानि रजतानि षट्सहस्राणि स्वर्णमुद्रा दशयुग्मानि वसनानि च
गृहीत्वा प्रतस्थे। इस्रायेलीयस्य भूपतेः समीपं तेन यत् पत्रम् आनायि ६
तन्मध्य एतादृशं लिखितमासीत् मम भृत्यो नामानस्तव समीपं मया
प्रेषित इत्येतत् पत्रं प्राप्य त्वया बुध्यताम् अतस्तस्य कुष्ठरोगस्त्वयाप-
हर्त्तव्य इति। अनन्तरम् इस्रायेलीयो नरपतिस्तत् पत्रं पठित्वा ७
निजवस्त्रं छित्त्वा च व्याजहार मारणे जीवनदाने च समर्थ ईश्वरः
किमहमस्मि यदयं मनुष्य एकजनस्य कुष्ठरोगहरणाय मम समीपं तं
प्रहिणोति? मया विनीयते यूयं विविच्य पश्यत स मम छिद्रमेवा-
नुसन्दधाति।

अनन्तरम् इस्रायेलीयो नरपतिः स्ववसनम् अच्छिनत् वच इदं ८
निशम्येश्वरीयलोक इलीशायो राजानं प्रति दूतं प्रहित्य भारतीमिमां
बभाषे त्वया कुतो निजं वसनम् अच्छेदि स मम समीपम् आगच्छतु
तत इस्रायेलो मध्य एको भविष्यद्वादी विद्यत इति ज्ञास्यति। अतो ९
नामानो हयरथैः साकम् आगत्येलीशायस्य भवनद्वारेऽवातिष्ठत। तत १०
इलीशाय एकं दासं प्रहित्य तं व्याचचक्षे त्वं गत्वा यर्द्दनसरिति सप्त-
वारान् स्नाहि तेन तव मांसं नवीनीभविष्यति त्वञ्च शुचि र्भविष्यसि।

११ ततो नामानः क्रुद्धः सन् प्रस्थाय व्याजहार स बहिरागत्य मम समीपे
तिष्ठन् स्वीयप्रभोः परमेश्वरस्य नाम्ना प्रार्थनां कृत्वा कुष्ठस्थानोपरि करं
१२ चालयन् कुष्ठं मत्तोऽपहरिष्यतीति मया बुद्धं। दम्मेषकस्थे अवाना
पर्परा च सरितौ किम् इस्रायेलदेशस्य सकलसरिद्भ्य उत्तमे नहि?
किमहं तयोः स्नात्वा शुचि र्भवितुं नाशक्ष्यं? इत्थं कोपं कृत्वा स परा-
१३ वृत्य जग्मिवान्। अनन्तरं तस्य दासाः सविधमागत्य तं व्याचचक्षिरे,
हे तात स भविष्यद्वादी यदि भवन्तं किञ्चन महाकर्म्माज्ञापयिष्यत्
तर्हि भवान् किं तन्नाकरिष्यत्? अतः स्नात्वा शुचि र्भवेति तेन यद्
१४ आदिष्टं तद् भवतावश्यं कर्त्तव्यं। तदानीं स ईश्वरीयलोकस्य निदे-
शानुसारेण यर्द्दनसरिति सप्तवारान् ममज्ज तेन क्षुद्रबालकस्येव तस्य
नवीनं मांसं बभूव स च शुचि र्बभूव।
१५ अनन्तरं नामानो निजानुगामिलोकैः सार्द्धं परावृत्येश्वरीयलोकस्य
समीपमागत्य तस्य सम्मुखे तिष्ठन् उवाच पश्येस्रायेलमध्यं विना पृथिव्याः
कुत्रापि सत्य ईश्वरो न विद्यत एतद् इदानीं मयाज्ञायि, अतोऽहं
१६ प्रार्थये निजदासात् क्षुद्रं दानं भवता गृह्यतां। किन्तु स उदितवान्
अहं यं परमेश्वरं परिचरामि स यद्यमरो भवेत् तर्हि मया किञ्चिदपि
न ग्राहिष्यते ततः स तद् ग्रहीतुं तं बहुप्रार्थितवान् तथापि स न
१७ स्वीकृतवान्। अनन्तरं नामान आचचक्षे प्रार्थयेऽहं द्वयोरश्वतरयो
र्भारं मृत्तिका किं तव दासाय न दायिष्यते? यतोऽद्यारभ्य तव दासः
परमेश्वरं विना कञ्चनेतरं देवम् उद्दिश्य होमं बलिदानं वा न करि-
१८ ष्यति। केवलम् एतस्मिन् परमेश्वरस्तव दासं क्षमतां मम प्रभुः पूजनार्थं
रिम्मोणस्य मन्दिरप्रवेशनसमये यदि मम करम् आलम्बते तर्हि मया
रिम्मोणस्य मन्दिरे प्रणामः कारिष्यते ततो रिम्मोणस्य मन्दिरे प्रणामकर्माधि
१९ परमेश्वरः स्वीयदासं क्षमतां। तत इलीशायस्तं व्याहरत् त्वं कुशलेन
याहि। ततः स प्रस्थाय कतिपयपथ्यानं जग्मिवान्।
२० अपरम् ईश्वरीयलोकस्येलीशायस्य परिचारको गेहसि मनसि कथि-
तवान् एषोऽरामीयो नामानो यद् आनीतवान् मम प्रभुस्तस्य हस्तात्
तन्न गृहीतवान् एतेन तं प्रति मृदुताचारं कृतवान् किन्तु परमेश्वरो
यद्यमरो भवेत् तर्हि मया तस्य पश्चाद् धावित्वा तस्मात् किञ्चिद्
२१ ग्राहिष्यते। अनन्तरं गेहसी नामानस्य पश्चाद् गते नामानो निज-
पश्चाद् धावन्तं तं विलोक्य साक्षात् कर्त्तुं रथादवरुह्य पप्रच्छ किं

सर्व्वं मङ्गलं? ततः स व्याचचक्षे सर्व्वं मङ्गलं किन्तु मम प्रभु र्मां प्रहित्य २२
वच इदं निवेदयति, एतस्मिन्नेव क्षणे इफ्रयिमशिलोच्चयाद् भविष्यद्वा-
दिनां द्वौ युवशिष्यावागतौ, भवान् ताभ्यां किक्कारमेकं रजतं द्वे युग्मे
वसनानि च ददातु। ततो नामानो जगाद, त्वं किक्कारद्वयं रजतं ग्रही- २३
तुम् अर्हसि। अनन्तरं स तं पुनः पुनः प्रार्थ्य द्वाभ्यां वसनयुग्माभ्यां
सार्कं वस्त्रपुटके किक्कारद्वयं रजतं बद्धा द्वयो र्दासयोः समर्पितवान्
ततस्तौ गेहसेरग्रेऽग्रे तद् ऊढवन्तौ। अनन्तरम् उपपर्व्वतं प्राप्य स २४
तयोः करेभ्यस्तत् सर्व्वं गृहीत्वा गेहे निदधे, तेन विसृष्टौ तौ लोकौ च
परावृत्य जग्मतुः। अनन्तरं गेहसिरभ्यन्तरम् इत्वा निजप्रभोः सम- २५
क्षम् अतिष्ठत् तत इलीशायस्तं बभाषे हे गेहसे त्वया कुत आगतं?
स उक्तवान् तव दासेन किमपि स्थानं न गतं। किन्तु स उदितवान् २६
स मानवस्त्वां साक्षात् कर्त्तुं यदा स्यन्दनाद् अवरुह्यागमत् तदा मम
मनः किं त्वया सार्कं नागमत्? रजतग्रहणस्य वसनजिततरुद्राक्षाक्षेत्र-
गोमेषव्रजदासदासीनां ग्रहणस्य च किमयं समयः? तस्मात् नामा- २७
नस्य स कुष्ठरोगस्त्वयि तव वंशे च चिरं तिष्ठतु। ततो गेहसि र्हिमा-
नीवत् कुष्ठग्रस्तो भूत्वा तस्य सविधाद् वहि र्जगाम।

---

## ६ षष्ठोऽध्यायः।

१ इलीशायेन परशुफालस्य जलाद् उन्मज्जनं ८ इस्रायेल्लोयराजेनारामीयनरपतेः मन्त्रणाया निष्फलीभवनं १३ अरामीयसैन्यानाम् अन्धीकरणं १९ शोमिरोणे तेषाम् आनयनं पुनस्तेषां विसर्जनं २४ दुर्भिक्षं २६ द्वयो र्नार्य्योः स्वीयबालकभक्षणं ३० इलीशायस्य वधनाय राज्ञश्चेष्टा।

अनन्तरं भविष्यद्वादिनां शिष्या इलीशायं व्याचचक्षिरे, इदानीं वयं १
भवतः सम्मुखे यत्र स्थाने वसाम एतत् स्थानं सङ्कीर्णं। अतोऽस्माभि २
र्यर्द्दनस्य तीरं गम्यताम् एकैकेन जनेन तस्मात् स्थानाद् एकैकं गेहकाष्ठ-
मानीयताञ्च तेन वयं स्वेषां कृते तत्र स्थाने वासगृहं निर्म्मामः; ततः
स उदितवान् यात। अनन्तरम् एको जनः कथयामास भवान् कृपां ३
विधाय निजदासैः समं व्रजतु। ततस्तेन कथितं मया यास्यते। तस्मिन् ४
तैः समं समीते ते यर्द्दनस्य समीपं गत्वा काष्ठानि चिच्छिदुः। एको ५
जनो गेहकाष्ठं छिनत्ति तदन्तरे कुठारस्य फालस्तोये निपपात ततः स
उच्चैरवदत् हा हा हे प्रभो स परतो मया धारितः। तदानीम् ईश्वरो- ६

यमनुजः पप्रच्छ तत् कुत्र पतितं? अनन्तरं तेन तत् स्थानं दर्शित
इलीशायः काष्ठमेकं छित्त्वा तत्र निचिक्षेप, तेन लौहम् उदमज्जत्।
७ तदानीम् इलीशायस्तं व्याचचक्षे, स्वसमीपे तं हर ततः स करं प्रसार्य्य
तं जग्राह।

८ तस्मिन् समयेऽरामीयो भूपतिरिस्रायेलीयलोकैः साकम् अयुध्यत्
अतस्तेन निजदासैर्मन्त्रयित्वामुकस्थाने मया शिविरं स्थापयिष्यत इति
९ गदित ईश्वरीयलोक इस्रायेलीयराजाय दूतेन निवेदयामास, साव-
धानो भव, अमुकस्थानस्योपेक्षां मा कार्षीः, तत् स्थानम् अरामीया
१० आगच्छन्ति। तत ईश्वरीयलोको यत् स्थानमधि वार्त्तां प्रहित्य तं साव-
धानम् अकरोत् तत् स्थानम् इस्रायेलीयो नृपतिः सैन्यं प्रहित्यात्मान-
११ मरक्षत, एतादृशं बहुवारान् अकरोत्। अतस्तत्कारणाद् अरामीय-
महीपतेर्मनस्युद्विग्ने सति स निजभृत्यान् आहूय व्याचचक्षे, अस्मदीयानां
मध्य इस्रायेलीयमहीपतेः पक्षीयो लोकः क आस्ते तत् किं यूयं मह्यं न
१२ कथयिष्यथ? तदानीं तस्य भृत्य एक उक्तवान् हे मम प्रभो राजन्
कोऽपि नास्ति किन्त्विस्रायेलीयानां मध्यवर्त्तिनेलीशायनाम्ना भविष्यद्वा-
दिना तव शयनागारस्थमन्त्रणापीस्रायेलीयनरपतये निवेद्यते।

१३ स आचचक्षे यूयं समीय तस्य वासस्थानम् अन्विष्यत तेन मया
सैन्यं प्रहित्य स आनायिष्यते। ततः परं पश्य स दोथने विद्यते वच
१४ इदं केनापि तस्मै कथितं। ततः स वाजिनो रथान् महासैन्यानि च
१५ तत् स्थानं प्रेषयामास ते च निशायामागत्य तन्नगरं विवेष्टिरे। अन-
न्तरं प्रत्यूष ईश्वरीयलोकस्य दास उत्थाय वहिर्निर्गत्य वाजिरथमहा-
सैन्यानां संघो नगरं वेष्टत इति ददर्श ततः स दासस्तं बभाषे हा हा
१६ प्रभो अस्माभिः किं कर्त्तव्यं? स उदितवान् भयं मा कार्षीः, तेषां सङ्गि-
१७ लोकेभ्योऽस्माकं सङ्गिनो लोकाः अधिकाः। तदानीम् इलीशायः प्रार्थनां
कुर्व्वन् व्याजहार हे परमेश्वर, एष यद् दृश्यं प्राप्नोति तदर्थं तस्य
लोचने उन्मीलय। ततः परमेश्वरेण तस्य तरुणस्य लोचनद्वय उन्मी-
लिते स आलोच्येलीशायस्य चतुर्दिक्षु वह्निमयैर्हयरथैः परिपूर्णं
१८ शिलोच्चयं विलोकयामास। अनन्तरं सैन्यसमूहे तस्य सविधं समागत
इलीशायः परमेश्वरम् उद्दिश्य प्रार्थनां कुर्व्वन् उक्तवान् एष सङ्घस्त्वया-
न्धीक्रियतां। तत इलीशायस्य वचनानुसारात् स तान् अन्धीकृतवान्।

१९ अनन्तरम् इलीशायस्तान् उदितवान् एष पन्था नहि नगरमेतच्च

नहि मम पश्चाद् आगच्छत यं मनुजं यूयं गवेषयथ तस्य सविधं मया
नेष्यध्वे। अनन्तरं स तान् शोमिरोणं निनाय। तेषु शोमिरोणं प्रवि- १०
ष्टेष्विलीशाय आचचक्षे हे परमेश्वर, एते लोका यद् वीक्षितुं प्राप्नुवन्ति
तदर्थम् एतेषां लोचनान्युन्मीलय। ततः परमेश्वरेण तेषां लोचनेषू-
न्मीलितेषु शोमिरोणस्य मध्ये वयमास्मह इति ते ददृशे। अपरम् ११
इस्रायेलीयो राजा तान् वीक्ष्येलीशायं जगाद, हे मम तात किमहं
मारयिष्यामि? किमहं मारयिष्यामि? इलीशायः कथयामास ते १२
त्वया न मारयितव्याः। ये लोकाः खड्गधनुर्भ्यां त्वया वन्दीक्रियन्ते ते किं
त्वया मारयितव्याः? एतेषां समीपं पूपान् तोयानि च निधत्स्व ते भुक्त्वा
पीत्वा च निजप्रभोः समीपं गच्छन्तु। ततस्तेषां निमित्तं तेन महाभोज्ये २३
कृत ते बुभुजिरे पपुश्च ततःपरं तेन विसृष्टाः स्वेषां प्रभोः सविधं समीयुः।
ततः परम् अरामीयसैन्यसङ्घा इस्रायेलीयं जनपदं पुन र्नागताः।

अनन्तरम् अरामीयो विन्हददो नरपतिः स्वीयानि सर्व्वसैन्यानि २४
संगृह्य यात्रां कृत्वा शोमिरोणं नगरम् अवरुरोध। तेन शोमिरोणे २५
महादुर्भिक्षं बभूव तेषां नगरावरोधनाद् एकस्य गर्द्दभमस्तकस्य
मूल्यम् अशीतिमुद्रा बभूव, कपोतमलस्य कावाख्यपरिमाणस्य चतुर्था-
शस्य च मूल्यं पञ्चमुद्रा बभूव।

एकदा नृपतिः प्राचीरस्योपरि भ्रमति तदनन्तर एका नारी प्रोच्चै २६
र्निवेदयामास हे मम प्रभो राजन् उपकुरु। राजा जगाद, यदि २
परमेश्वरेण त्वं नोपक्रियसे तर्हि मया शस्यमर्द्दनस्थानात् द्राक्षारसकु-
ण्डाद्वा केन त्वम् उपकारिष्यसे? राजा पुनरुवाच तव किं दुःखं? ततः २८
सा प्रतिजगाद, आवयो र्भक्ष्यार्थम् अद्य तव पुत्रं त्वं देहि श्वो मम
पुत्र आवाभ्यां भक्षिष्यत इत्यनया नार्य्याहम् उक्ता। तत आवां मम पुत्रं २९
पक्त्वाभक्षिष्व, परदिन आवयो र्भक्षणार्थं तव पुत्रं त्वं देहीति मयोक्तं
किन्तु सा निजपुत्रम् अजूगुहत्।

तदानीं राजा तस्या नार्य्या वचनं निशम्य स्वीयं वसनं चिच्छेद, ततः ३०
प्राचीरभ्रमणसमये तस्य गात्रे शाणवसनं बद्धमिति लोकै र्ददृशे। अन- ३१
न्तरं स कथितवान्, अद्य यदि शाफटपुत्रस्येलीशायस्य शिरस्तस्य
स्कन्धे तिष्ठति तर्हीश्वरो मह्यम् अमुकं ततोधिकञ्च फलं ददातु। तदा- ३२
नीम् इलीशायो निजगेहे समुपविष्ट आसीत् प्राचीनलोकाश्च तेन
समम् उपविष्टा आसन् ततो नृपतिना स्वसमीपाद् दूते प्रहिते तस्या-

गमनात् पूर्व्वम् इलीशायः प्राचीनान् आचचक्षे, पश्यत मम शिरश्छेदनार्थं तेन हत्याकारिणः सुतेन लोकः प्रहितः । अतः पश्यत तस्मिन् दूत आगच्छति यूयं द्वारं रुद्ध्वा तं वहिष्कुरुत तस्य प्रभोः पदयोः शब्दः
३३ किं तस्य पश्चात् नहि ? स तैः समं सम्भाषत इत्यनन्तरे स दूतस्तस्य समीपम् आगत्य राज्ञा कथितम् एतद् वच उदितवान् इदम् अमङ्गलं परमेश्वराद् आगमत्, मया परमेश्वरः कुतः पुनरपेक्षिष्यते ?

---

## ७ सप्तमोऽध्यायः ।

१ बहुलभक्ष्यसम्भोलीशायस्य भविष्यद्वचनं ३ चतुर्णां कुष्ठिलोकानाम् अरामीयाणां शिविरगमनं वार्त्तानयनञ्च १२ तेषां वार्त्तां मत्यां विदित्वा लोकैररामीयाणां शिविरलोठनं १७ भविष्यद्वचनेऽविश्वासिन एकस्याधिपते र्मृत्यु ।

१ तदानीम् इलीशाय आचचक्षे यूयं परमेश्वरस्य वचो निशामयत परमेश्वर एतां भारतीं वदति श्व एतस्यां वेलायां शोमिरोणस्य गोपुरे दशशेटकपरिमितानां सूक्ष्मगोधूमचूर्णानाम् एकशेकलं मूल्यं भविष्यति
२ विंशतिशेटकपरिमितानां यवानाञ्चैकशेकलं मूल्यं भविष्यति । तदानीं राजा यस्याध्यक्षस्य करम् आलम्बत तेनेश्वरीयलोक आचचक्षे पश्य यद्यपि परमेश्वरेण वियति द्वाराणि क्रियन्ते तथापि तेन किम् एतत् कर्त्तुं शक्यते ? सोऽभिहितवान् पश्य त्वया निजदृग्भ्यां तत् दर्शिष्यते किन्तु किञ्चिन्न भक्षिष्यते ।

३ तदानीं गोपुरप्रवेशस्थाने चत्वारः कुष्ठिनोऽतिष्ठन्त । ते परस्परं बभा-
४ षिरे, अस्माभि र्निधनं यावत् कुत एतस्मिन् स्थाने उपविश्यते ? अस्माभि र्नगरं प्रविश्यतामित्युक्ते तत्रापि दुर्भिक्षम् अस्ति तत्रास्माभि र्मरिष्यते । अपरम् अत्रापि तिष्ठद्भिरस्माभि र्मरिष्यते । अत आगच्छत वयम् अरामीयाणां शिविरं गच्छामः, ते र्जीविता वयं जीविष्यामो मारिताः
५ केवलं मरिष्यामः । अतस्तैररामीयाणां शिविरं गन्तुं प्रत्यूष उत्थायारामीयाणां शिविरस्य प्रान्तभागम् उपस्थितैस्तत्र कश्चन नास्तीति ददृशे ।
६ यतः प्रभुररामीयान् बहूनां रथिस्यन्दनहयानां शब्दम् अर्थतो महाचमूनिवहस्य शब्दं श्रावयामास तेन ते परस्परं बभाषिरे पश्यतास्माकम् आक्रमणार्थम् इस्रायेलीयो महीपति र्हित्तीयानां भूपतिवृन्दाय मिस्री-
७ याणां भूपतिवृन्दाय च मुद्राः प्राददात् । ततो हेतोस्तैः प्रत्यूष उत्थाय पलायाञ्चक्रे ते स्वेषां पटोटजानि वाजिनो गर्द्दभान् सर्व्वशिविरञ्च

पूर्व्वावस्थया विहाय निजान् निजान् प्राणान् अवितुं पलायाञ्च-
क्रिरे। अनन्तरं ते कुष्ठिनो लोकाः शिविरस्य प्रान्तभागे पटोटज- ८
मेकं प्रविश्य बुभुजिरे पपुश्च। अपरं तस्मात् स्थानात् सुवर्णादुर्व्वर्ण-
वसनानि गृहीत्वा गोपयित्वा निदधिरे ततः परं पुनर्व्वारं समेत्य पटो-
टजमन्यत् प्रविश्य तस्मादपि द्रव्याणि समादाय व्रजित्वा सङ्गोप्य निद-
धिरे। अनन्तरं ते परस्परम् ऊचिरे, अस्माकम् एतत् कर्म्म न भद्रम् अद्य ९
शुभवार्त्ताया दिनं किन्तु वयं नीरवास्तिष्ठामः। यदि प्रभातं यावद्
विलम्बामहे तर्ह्यवश्यं दण्डनीया भविष्यामः। अत इदानीम् एव वयं
समेत्य राजमन्दिरे वार्त्तामेतां वदामः। अनन्तरं ते गत्वा नगरस्य दौ- १०
वारिकम् आहूय व्याचचक्षिरे, वयम् अरामीयाणां शिविरम् अगमाम,
पश्य तत्र कोऽपि न विद्यते मानुषस्य शब्दोऽपि नास्ति केवलं बद्धा
वाजिनो बद्धा गर्द्दभाश्च सन्ति वासःकुट्यश्च पूर्व्वावस्थया विद्यन्ते। ततस्तेन ११
द्वारिणा आहूतास्ते च राजमन्दिरस्याभ्यन्तरे तां वार्त्तां व्याचचक्षिरे।

अनन्तरं नृपतिः क्षणदायाम् उत्थाय निजभृत्यान् व्याजहार, अरा- १२
मीयैरस्मान् प्रति यत् कर्म्म क्रियते तदहं युष्मान् ब्रवीमि वयं बुभुक्षिता
आस्महे तदेतद् ज्ञायते, अतस्ते क्षेत्रे प्रच्छन्नाः स्थातुं शिविराद् बहि-
र्गत्वैषा मन्त्रणाकारि लोकेषु नगराद् बहिर्भूतेषु वयं तान् जीवग्राहं
ग्रहीष्यामो मध्येनगरं प्रवेक्ष्यामश्चेति। ततस्तस्य भृत्यानाम् एको जनः १३
प्रत्यब्रवीत् नगरे ये वाजिनोऽवशिष्टाः सन्ति वयं तेषाम् अवशिष्टानां
वाजिनां पञ्च गृहीत्वा प्रहित्य द्रक्ष्यामः पश्य ते नगरेऽवशिष्टानाम्
इस्रायेलीयानां निवहस्य समानाः, पश्य ते नष्टानाम् इस्रायेलीयानां
निवहस्यापि समाना भवन्ति। अनन्तरं ते द्वियुग्मे हयानां गृहीते १४
यूयं गत्वा पश्यतेति कथयित्वा नृपतिररामीयाणां एतनानां पश्चात्
तान् प्रेषयामास। ततस्तेषु यर्द्दनं यावत् तेषां पश्चाद् गतेष्वरामीयाणां १५
तूर्णताकारणात् परित्यक्तै र्वसनै र्भाजनैश्च वर्त्म परिपूर्णम् इति ददृशुः।
तदानीं तै र्दूतैः परावृत्यागत्य राज्ञे वार्त्ता निगदिता। ततः परं लोकै १६
र्बहिर्भूयारामीयाणां शिविरे लोठिते परमेश्वरस्य वाक्यानुसाराद् दश-
शेटकपरिमितानि सूक्ष्मगोधूमचूर्णानि शेकलैकमूल्येन व्यक्रीयन्त विंश-
तिशेटकपरिमिता यवाश्चैकशेकलमूल्येन व्यक्रीयन्त।

अनन्तरं नृपति र्यस्याधिपतेः करम् आलम्बितवान् तस्मिन् गोपुरम् १७
अवितुं नियुक्ते लोका गोपुरे चरणैस्तं विमम्रदुस्तत ईश्वरीयलोकस्य

सविधे भूपस्य गतिसमये तेन यदभाषि तदनुसारात् स निधनमितः।
१८ फलतः श्व एतस्यां वेलायां शोमिरोणस्य गोपुरे द्विशेटकपरिमितानि
सूक्ष्मगोधूमचूर्णानि शेकलैकमूल्येन विक्रेष्यन्ते विंशतिशेटकपरिमिता
यवाश्च शेकलैकमूल्येन विक्रेष्यन्ते वचस्येतस्मिन् ईश्वरीयलोकेन राज्ञे
१९ कथिते सोऽधिप ईश्वरीयं लोकं प्रत्यवदत्, वीक्षस्व यद्यपि परमेश्वरेण
विहायसि द्वाराणि क्रियन्ते तथापि तत् किं भवितुं पारयति? तत
ईश्वरीयलोकस्तम् अवादीत् पश्य त्वया तत् निजनेत्राभ्यां विलोकिष्यते
२० किन्तु किमपि न भक्षिष्यते। अतस्तस्य तादृशी दशा बभूव गोपुरे
लोकानां चरणै र्मर्द्दितः स ममार।

---

## ८ अष्टमोऽध्यायः।

१ दुर्भिक्षसमये शूनेमीयाया निवृत्तिः ७ हसायेलस्य विवृतिः १६ योरामस्य कुराजत्वं २० इदोमदेशेन लिब्नानगरेण च तस्याधिपतित्वत्यजनं २५ अहसियस्य कुराजत्वं २८ आहतयुक्तं यिहोरामं साक्षात् कर्त्तुं तस्य यिष्रियेले गमनञ्च।

१ पूर्व्वम् इलीशायो यस्या नार्य्या मृतं पुत्त्रम् अजीवयत् ताम् अभाषत,
परमेश्वर एतं देशं दुर्भिक्षग्रस्तं करिष्यति तत् सप्तवत्सरान् यावद् एत-
स्मिन् जनपदे स्थास्यति, तस्मात् त्वम् उत्थाय परिजनैः समं यस्मिन् स्थाने
२ प्रवस्तुं शक्नोषि तत् स्थानं प्रवस्तुं व्रज। ततः सा योषिद् ईश्वरीयलोकस्य
वचनानुसारात् परिजनैः समं प्रस्थाय पिलेष्टीयानां जनपदे सप्तवत्स-
३ रान् यावत् प्रावसत्। अनन्तरं सप्तसु वत्सरेषु व्यतीतेषु सा नारी
पिलेष्टीयानां जनपदात् परावृत्यागत्य निजनिवेशनस्य भूमेश्च कृते
४ भूपतेः सविधे निवेदयितुं वव्राज। तस्मिन्नेव समये भूपतिरीश्वरीयलो-
कस्य परिचारकं गेहसिनं सम्भाषमाणोऽवदत्, इलीशायेन कृतानि
५ सकलमहान्ति कर्म्माणि मम समीपे समाख्याहि। तत इलीशायो
मृतं शरीरं पुनरजीवयद् एतदाख्याने भूपतये तेन कथ्यमाने यस्या
योषितो मृतः पुत्त्रो जीवनं प्राप्तः सा नारी निजनिवेशनस्य भूमेश्च
कृते भूपतेरभ्यासे निवेदयितुम् उपतस्थौ तदानीं गेहसिराचचक्षे
हे मम प्रभो राजन् एषैव सा नारी तस्याश्च यं तनयम् इलीशायो-
६ ऽजीवयत् स एषः। तदानीं नरपतिना पृष्टा सा योषित् सर्व्वं व्याच-
चक्षे तेन भूपतिस्तस्याः पक्षेऽध्यक्षमेकं नियोज्य व्याहरत् एतस्या

यत्किञ्चनाविद्यत तत् सर्व्वम् एषा च यस्मिन् दिने देशमिमं पर्य्यत्यजत्
तद्दिनमारभ्याद्य यावद् एतस्याः क्षेत्रे यत्किञ्चन समुदपद्यत तत् सर्व्व-
मप्येतस्यै परावर्त्य वितर।

अनन्तरम् इलीशायो दम्मेषकम् आजगाम तदानीम् अरामीयो ७
नरपति र्विन्हददो रुग्न आसीत् तत ईश्वरीयलोक एतत् स्थानम् आग-
मत् एतां वार्त्तां कश्चित् भूपतये कथयामास। तदा नरपति र्हसायेलं ८
जगाद त्वं स्वहस्तेनोपायनम् आदायेश्वरीयलोकं साक्षात् कर्त्तुं व्रज,
अपरम् एतस्माद् व्याधेरहं किं मोचयिष्ये? वचनम् इदं तेन परमेश्वरं
पृच्छय। अनन्तरं हसायेलस्तं साक्षात् कर्त्तुं जगाम। स चत्वारिंश- ९
न्महाक्षैर्वाह्यानि दम्मेषकस्योत्तमवस्तून्युपायनार्थं गृहीत्वा समागत्य
तस्य सम्मुखे तिष्ठन् आचचक्षे किमहम् एतस्माद् व्याधे र्मोचयिष्ये?
वाचमिमां परिप्रष्टुं तव तनयोऽरामीयभूपति र्विन्हददस्तव समीपं
मां प्राहिणोत्। इलीशायस्तमुवाच त्वं स्वस्थो भविष्यसीति त्वं स- १०
मीय तं ब्रूहि तथापि तेन मर्त्तव्यमेवेति परमेश्वरो माम् अज्ञापयत्।
तदानीम् ईश्वरीयलोकस्तस्य त्रपासम्भवपर्य्यन्तं तस्य वदनं प्रति स्थिर- ११
दृष्टिं कुर्व्वन् रुरोद। ततो हसायेलः परिपृष्टवान् मम प्रभुः कुतो १२
रोदिति? स प्रतिजगाद, इस्रायेलीयवंशानां या हिंसा त्वया कारि-
ष्यते तामहं वेद्मि त्वं तेषां दुर्गाणि वह्निना दाहयिष्यसि तेषां तरुणान्
खड्गेन हनिष्यसि तेषां शिशून् भूमौ विकरिष्यसि गर्भवतीनाम् उद-
राणि विदारयिष्यसि च। हसायेलोऽवोचत् सारमेयतुल्यस्तवैष दासः १३
को य एतादृग् गुरु कर्म्म तेन कारिष्यते? इलीशाय उदितवान्
त्वम् अरामस्य राजा भविष्यसीति परमेश्वरो मां ज्ञापितवान्। अन- १४
न्तरं स इलीशायस्य सविधात् समीय निजप्रभोः समीपं जगाम। तदा
नरपतिस्तं परिपप्रच्छ इलीशायस्त्वां किमवोचत्? स प्रत्यवादीत् त्वं
स्वस्थो भविष्यसि भारतीमिमां स मामवादीत्। परेऽहनि स कम्बलमेकम् १५
आदाय तोये मज्जयित्वा राज्ञ आननस्योपरि विस्तारयामास, ततः
स ममार। अनन्तरं हसायेलस्तदीयपदे राजा बभूव।

आहाबतनयस्येस्रायेलीयभूपते र्यिहोरामस्य पञ्चमे राजत्ववत्सरे १६
यिहूदादेशीयनरपते र्यिहोशाफटस्य राजत्वसमये तस्य यिहोशाफटस्य
पुत्रो येहोरामो राजत्वं कर्त्तुं प्रारेभे। स द्वात्रिंशद्वत्सरवयस्कः सन् १७
राजत्वं कर्त्तुं प्रारभ्य यिरूशालमेऽष्टवत्सरान् यावद् राजत्वं चकार।

१८ स आहाबीयवंशवद् इस्रायेलीयभूपतीनां वर्त्मनि चचार यतः स
आहाबस्य दुहितरं व्युवाह तेन परमेश्वरस्य साक्षात् कुत्सिताचारं
१९ चकार। तथापि परमेश्वरो निजदासं दायूदं प्रति तस्य वंशाय चिर-
कालं प्रदीपदानस्य यां प्रतिज्ञाम् अकरोत् तन्निमित्तं यिहूदां विनाश-
यितुं नैच्छत्।
२० तस्य राजत्वसमय इदोमीयलोका यिहूदाया आधिपत्यं विहाय
२१ तेषामुपरि राजानमेकम् अभ्यसिषिचुः। अतो योरामस्तस्य रथिनश्च
सर्व्वे सायीरं समीय निशायां तमोत्थाय स्वान् वेष्टकान् इदोमीयान्
तेषां रथिनश्च जघ्नुस्ततो लोकाः स्वीयं स्वीयं वासस्थानं पलायाञ्च-
२२ क्रिरे। तथापीदोमीयलोका अद्यापि यिहूदाया अनधीना विद्यन्ते।
२३ तस्मिन्नेव समये लिब्नाया लोका अपि तस्याधीनत्वं तत्यजुः। एतस्य
योरामस्यावशिष्टं चरित्रं तेन कृतानि सर्व्वाणि कर्म्माणि च किं यिहू-
२४ दादेशस्य महीपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते? अनन्तरं
योरामो निजपितृलोका इव महानिद्रां गत्वा दायूद्नगरे पितृलो-
कानां सन्निधौ श्मशाने निहितस्ततस्तस्य तनयोऽहसियस्तस्य पदे राजा
बभूव।
२५ इस्रायेलीयनृपतेराहाबतनयस्य यिहोरामस्य द्वादशे राजत्ववत्सरे
२६ यिहूदादेशीययोरामस्य तनयोऽहसियो राजत्वं कर्त्तुम् आरेभे। राज्य-
प्राप्तिसमये सोऽहसियो द्वाविंशतिवत्सरवयस्क आसीत् स यिरूशा-
लमे वत्सरमेकं राजत्वं चकार। अथलियानामिकेस्रायेलीयराजस्याम्रे
२७ र्दुहिता तस्य प्रसूरासीत्। स आहाबवंशस्य वर्त्मनि चरन् आहाबीय-
वंश इव परमेश्वरस्य साक्षात् कुत्सिताचारं चकृवान् यतः स आहा-
बीयवंशस्य जामातासीत्।
२८ अनन्तरं स आहाबसुतस्य यिहोरामस्य सङ्गी भूत्वारामीयनर-
पतिना हसायेलेन समं समरं कर्त्तुं रामोतगिलियदं जग्मिवान् ततो
२९ ऽरामीयलोका यिहोरामं क्षतवन्तः। अनन्तरम् अरामीयमहीपतिना
हसायेलेन समं योधनसमये रामोतगिलियदे यिहोरामो न्टपति र्यानि
क्षतानि लब्धवान् तेभ्यः स्वस्थो भवितुं स परावृत्य यिष्रियेलं जगाम।
तदानीं यिहूदादेशाधिपो महीपति र्योरामस्य सुतोऽहसिय आहाब-
तनयस्य यिहोरामस्य पीडाकारत्वात् तं वीक्षितुं यिष्रियेलं जग्मिवान्।

# ९ नवमोऽध्यायः।

१ येहोराज्याभिषेकार्थं भविष्यद्वादिनां कस्यचित् तरुणस्येलीशायेन प्रेषणं ४ तत्कर्म्मसाधनात् परं तस्य भविष्यद्वादिनः पलायनं ११ नावोतस्य क्षेत्रे येहूराजेन यिहोरामस्य हननं २७ अहसियस्यापि हननं ३० अहङ्कारिण्या ईषेबलो गवाक्षतो निक्षिप्तत्वं सारमेयै र्भक्षितत्वञ्च।

अनन्तरं भविष्यद्वादीलीशाया भविष्यद्वादिनां शिष्यमेकम् आहूय १
गदितवान् त्वं बद्धकटि भूत्वा तैलभाण्डम् इदं करेणादाय रामोतगि-
लियदं गच्छ। तत् स्थानं प्राप्य निम्शेः पौत्रं यिहोशाफटस्य तनयं २
येहूं गवेषय, अपरं गेहं प्रविश्य तदीयभ्रातॄणां मध्यात् तम् उत्थाप्य
गर्भागारमेकं नय। अपरं तैलभाण्डं गृहीत्वा तदीयशिरसि तैलं निषिच्य ३
तं ब्रूहि परमेश्वरेण वच इदं निगद्यते अहं त्वाम् इस्रायेलो राज्ये
ऽभ्यषिञ्चं। ततः परं त्वं द्वारं विमोच्य पलायस्व मा विलम्बस्व।
अनन्तरं स भविष्यद्वादी तरुणो रामोतगिलियदं जगाम। तत्रो- ४
पस्थाय सेनापतीन् विलोक्य तेनोक्तं हे सेनापते त्वया सह मया ५
सम्भाषितव्यं। ततो येहूः परिपप्रच्छ, अस्माकं मध्ये केन सह? स
जगाद हे सेनापते त्वयैव सार्द्धं। तदानीं येहावुत्थाय भवनस्य मध्यं ६
गते स तस्य शिरसि तैलं निषिच्य तम् ऊचिवान्, इस्रायेलः प्रभुः पर-
मेश्वर एतां भारतीं भाषते परमेश्वरस्य प्रजा य इस्रायेलवंशास्तेषाम्
उपरि त्वामहं राजत्वे ऽभ्यषिञ्चं। त्वं स्वीयप्रभोराहाबस्य वंशम् उच्छे- ७
त्स्यसि, ईषेबलो हस्तेन हतस्य मदीयसेवकानां भविष्यद्वादिनां रुधिर-
पातनस्य परमेश्वरीयाणां सकलसेवकानां रुधिरपातनस्य च फलं तस्यै
दास्यसि च। आहाबस्य सर्व्वे वंशा विनंक्ष्यन्ति, तद्वंशीयाः सर्व्वपुमांस ८
इस्रायेलो मध्ये मुक्ता बद्धा वा सर्व्वजना मयोच्छेत्स्यन्ते। आहाबीयवंशं ९
निबाटस्तनस्य यारबियामस्य वंशमिवाहियतनयस्य बाशा वंशमिव च
करिष्याम्यहं। ततो यिषियेलस्थे क्षेत्रे सारमेया ईषेवलम् अत्स्यन्ति कश्चन १०
तां श्मशानं न नेष्यति। वचांस्येतान्युक्त्वा स द्वारं विमोच्य पलायाञ्चक्रे।
अनन्तरं येहौ स्वीयप्रभो दासानां समीपं वहिरागते कश्चित् तं ११
पृष्टवान् सर्व्वं मङ्गलं? स बातुलस्तव समीपं कुत आगमत्? ततः स
ऊचिवान् यूयं तं मानवं तदीयभाषणञ्च विद। त आचचक्षिरे अलम् १२
अनेन प्रलापेन त्वम् अस्मान् सर्व्वमेव व्याहर। स उदितवान् स माम्
एतादृशीं भारतीम् अभाषिष्ट परमेश्वर इमां वाणीम् आह मया

१३ त्वम् इस्रायेलो राजत्वेऽभिषिक्तः। तदानीं तेषाम् एकैकेन जनेन तूर्णं स्वं
स्वं वसनं विमोच्य सोपानोपरि तस्य पदयोरधो निदधे, तूरीञ्च वाद-
१४ यित्वा कथितं येहू राजाभवत्। इत्थं निम्शेः पौत्रो यिहोशाफटस्य
पुत्रो येहू यिहोरामस्य विरुद्धं क्रोधं चकार। तदानीं यिहोरामः सकल
इस्रायेलीयलोकाश्चारामीयनरपते र्हसायेलाद् रामोतगिलियदम्
१५ अरक्षन्। किन्त्वारामीयराजेन हसायेलेन समं यिहोरामस्य समरस-
मयेऽरामीयलोकास्तस्य यानि क्षतानि कृतवन्तस्तेभ्यः स्वस्थो भवितुं स
यिष्रियेलम् अगच्छत्। तदानीं येहूः कथयामास यदि युष्माकम् इच्छा
जायेत तर्हि यिष्रियेलं वार्त्तां नेतुम् एतस्मात् नगरात् कोऽपि जनो
१६ बहिर्भूय न पलायतां। अनन्तरं येहूः स्यन्दनम् आरुह्य यिष्रियेलं जगाम
यतस्तत्रैव यिहोरामः शय्यागत आसीत्। तदानीं यिहूदाया नर-
१७ पतिरहसियोऽपि यिहोरामं वीक्षितुं तत् स्थानम् आगमत्। अपरं
यिष्रियेलस्य दुर्गोपरि यो रक्ष्यतिष्ठत् स येहोः सङ्गिनं सेनानिवहम्
आगच्छन्तं विलोक्य कथयामास मया लोकनिवह एको दृश्यते। ततो
यिहोरामो गदितवान् त्वं हयारोहिणम् एकं गृहीत्वा तेषां साक्षात्
१८ प्रेषय ते कुशलेनागच्छन्ति न वेति तेन पृच्छ्यन्तां। अनन्तरम् एको
जनो हयारोही तं साक्षात् कर्त्तुं समीय जगाद नरपतिः कथयति
किं सर्व्वं मङ्गलं? ततो येहूना स उक्तः, मङ्गलेन सह तव कः
सम्बन्धः? त्वं मम पश्चाद् याहि। अनन्तरं रक्षी वार्त्तामिमाम् उक्त-
१९ वान् स दूतस्तेषां समीपं समीय न प्रत्यागच्छति। अनन्तरं राज्ञा
द्वितीये हयारोहिणि प्रेषिते स तेषां समीपं समीय कथितवान् नृपति
र्गदति किं सर्व्वं मङ्गलं? किन्तु येहूना स उक्तः, मङ्गलेन सह तव
२० कः सम्बन्धः? त्वं मम पश्चाद् याहि। अनन्तरं रक्षी वार्त्ताम् अब्रवीत्
स दूतस्तेषां समीपं समीय न प्रत्यागच्छति किन्त्वेतस्य चालनं निम्शे-
२१ स्तनयस्य येहोश्चालनवत् प्रकाश्यते यतः सोऽतिरयेण चालयति। तदानीं
यिहोरामो जगाद स्यन्दने हयान् आयुङ्क्त ततस्तेन हयेष्वायुक्तेष्वि-
स्रायेलीयो यिहोरामो राजा यिहूदादेशीयोऽहसियो राजा च स्वं स्वं
स्यन्दनम् आरुह्य येहूं साक्षात् कर्त्तुं गत्वा यिष्रियेलीयनाबोतस्य क्षेत्रे
२२ तं प्रापतुः। तदानीं यिहोरामो येहूं विलोक्य पप्रच्छ, हे येहो त्वं किं
मङ्गलायागच्छसि? स प्रत्यवदत् यावत् तव जनन्या ईषेबलो व्यभि-
२३ चारो माया च तिष्ठति तावत् मङ्गलं किं? ततो यिहोरामो निवर्त्त्यो

परावर्त्त्य पलायाञ्चक्रेऽहसियं आजुहाव च हे अहसिय राजद्रोहो
भवति। अनन्तरं येहूः स्वबलेन चापम् आकृष्य यिहोरामस्य बाहु- २४
मूलद्वयमध्ये शरम् आजघान ततो बाणस्तस्य हृदयेन निर्जगाम ततः
स रथे नतो भूत्वा निपपात। तदानीं येहूः स्वीयं रथिनं विद्करम् २५
आज्ञापयत् त्वम् एनं तोलयित्वा यिष्रियेलीयनाबोतस्य क्षेत्रे निक्षिप
यतो यदा त्वम् अहञ्च हयारूढौ सन्तौ तस्य पितुराहाबस्य पश्चाद्
गतवन्तौ तदा परमेश्वरस्तं यदशपत् तत् स्मर। परमेश्वर आह मया २६
ह्यो नाबोतस्य रुधिरं तदीयपुत्राणाञ्च रुधिरम् अदृश्यत। परमेश्वरः
कथयति, अहम् अस्मिन्नेव क्षेत्रे तुभ्यं समुचितं फलं दास्यामि। अत
इदानीं त्वं परमेश्वरस्य वचनानुसारात् तं नीत्वा क्षेत्रेऽस्मिन् निक्षिप।
तदानीं यिहूदादेशीयोऽहसियो नरपतिस्तद् विलोक्योद्यानस्थगेहस्य २७
पथा पलायाञ्चक्रे ततो येहूस्तस्य पश्चाद् धावन् कथयामास, एन-
मपि स्यन्दनस्य मध्ये हत। अनन्तरं ते यिब्लियमस्य समीपस्थे गूराख्य
ऊर्द्ध्वगामिमार्गे तम् आजघ्नुः। ततः स मगिद्दं पलाय्य तस्मिन् स्थाने
ममार। ततस्तस्य दासास्तं स्यन्दनेन यिरूशालमं नीत्वा दायूद्नगरे २८
तदीयपितृलोकानां सन्निधौ तस्य निजश्मशाने तं निदधिरे। सोऽह- २९
सिय आहाबतनयस्य यिहोरामस्यैकादशे राजत्ववत्सरे यिहूदाया
उपरि राजत्वं कर्त्तुम् आरेभे।
अपरं येहू यिष्रियेलम् उपतस्थिवान् तत ईषेवल् तन्निशम्य निज- ३०
लोचनयोरञ्जनम् आयुज्य केशवेशं विधाय वातायनेन समवलुलोके।
अनन्तरं येहौ गोपुरं प्रविष्टे सा कथयाञ्चकार निजप्रभुम् अवधीत् ३१
यः सिम्रिस्तस्य किं मङ्गलं समभवत्? ततो येहू वातायनं प्रति वद- ३२
नम् उत्थाप्य जगाद मम पक्षीयः कोऽस्ति? अनन्तरं द्वित्रा नपुंस-
कास्तं प्रत्यवलुलोकिरे। तदा येहूराज्ञापयामास ताम् अधो निक्षिपत। ३३
ततः सा तैरधो निक्षिप्ता तस्या रुधिरेण च भित्ति र्वाजिनश्चावकीर्णाः
स च रथेन तां ममर्द। अनन्तरं येहूरभ्यन्तरम् आगत्य भुक्त्वा पीत्वा ३४
च समीय जगाद यूयं गत्वा तां शापग्रस्तां नारीम् आलोक्य श्मशाने
निदध्वं यतः सा राजदुहिता। ततो लोकेषु तां श्मशाने निधातुं गत- ३५
वत्सु तस्याः शिरोऽस्थि पादौ पाणी च विनान्यत् किञ्चन ते नं लेभे।
अतस्ते परावृत्यागत्य तं वार्त्तां बभाषिरे ततः स ऊचिवान् अनेन पर- ३६
मेश्वरस्य वाक्यं सिद्धम् अभवत् स निजदासस्य तिश्बीयैलियस्य वदनेन

वच इदं व्याहरत् सारमेया यिष्रियेलस्य क्षेत्रे ईषेवलः पललं खादि-
३७ ष्यन्ति। ईषेवलः कुणपं यिष्रियेलस्य क्षेत्रे आलवालवत् स्थास्यति, तत
ईषेवल् एषेति वदितुं केनापि न शक्ष्यते।

---

## १० दशमोऽध्यायः।

१ येहुनाहाबस्य सप्ततिसुतानां शिरश्छेदनं ८ एलियस्य वचनेन येहोः स्वदोषप्रक्षालनं १२ अहसियस्य हननं १५ योनादबस्य साक्षात्कृतिः १८ छलेन बालः पूजकानां हननं २९ यारबियामस्य पथि येहोश्चरणं ३२ इस्रायेलस्योपद्रुति र्येहो र्निधनञ्च।

१ शोमिरोणि आहाबस्य सप्ततिः सुता आसन् तत्कारणात् येहुः शोमि-
रोणं यिष्रियेलस्य शासकान् प्राचीनलोकान् आहाबीयसन्तानपाल-
२ कांश्च प्रत्येतादृशं पत्रं लिखित्वा प्रेषयामास, युष्माकं प्रभोः पुत्रा
युष्माकं सन्निधौ सन्ति स्यन्दनानि वाजिनः प्राचीरवेष्टितानि नग-
३ राणि युद्धास्त्राणि चैतान्यपि युष्माकं हस्तगतानि विद्यन्ते। अतः
पत्रम् एतत् प्राप्य युष्माभिः स्वप्रभोः सुतानां मध्ये य उत्तमो योग्यश्च
मन्यते स निर्वाच्यतां तस्य पितुः सिंहासन उपवेश्यतां स्वप्रभो र्वंशस्य
४ निमित्तं युद्धं क्रियताञ्च। एतेन ते ऽतीव भीत्वा बभाषिरे पश्यत तस्य
५ सम्मुखे द्वाभ्यां राजाभ्यां स्थातुं नाशक्यत तर्ह्यस्माभिः कथं शक्ष्यते? अतो
गेहाध्यक्षो नगराध्यक्षः प्राचीनलोकाः शिशुपालकाश्च येहोः सविधम्
इमां भारतीं दूतेन प्राहिण्वन् वयं भवतो दासाः, भवता यद् आज्ञा-
पयिष्यामहे तदेव करिष्यामः कमपि राजत्वे न नियोक्ष्यामः, भवता
६ यद् भद्रमवगम्यते तदेव क्रियतां। अनन्तरं स तान् प्रति द्वितीयम्
एकं पत्रं प्रेषयामास, तस्मिन् लिखितम् इदं, यदि यूयं मदीया भवि-
ष्यथ मदीयाज्ञा ग्रहीष्यथ च तर्हि स्वेषां प्रभोः सुतानां शिरांस्यादाय
श्व एतस्यां वेलायां यिष्रियेले मम सन्निधिम् आगच्छत। ते राजकुमाराः
७ सप्तति र्जना आसन् नगरस्य प्रधानैः जनैश्च ते प्रत्यपाल्यन्त। तस्मिन्
पत्रे तेषां सविधमुपस्थिते ते सप्ततिं जनान् राजकुमारान् धृत्वा व्यापाद्य
च तेषां शिरांसि डल्लकेषु निधाय यिष्रियेले तस्य सन्निधिं प्रेषयामासुः।
८ अनन्तरं दूत एत्य तं वार्त्ताम् आचचक्षे, राजकुमाराणामुत्तमाङ्गानि
समानीयन्तेति। ततः स व्याजहार प्रभातं यावत् गोपुरस्य प्रवेश-
९ स्थाने द्वौ राशी कृत्वा तानि निधद्धं। अनन्तरं प्रभाते जाते स बहिः

समीप तिष्ठन् सकललोकान् बभाषे यूयं धार्म्मिका लोकाः पश्यत मया
स्वप्रभो र्द्रोहं विधाय सोऽघानि किन्त्वेते सर्व्वे केन हताः? अत आ- १०
हाबस्य वंशमधि परमेश्वरेण यद्यद् उक्तं तस्य किञ्चन वचो निष्फलं
न भविष्यत्येतद् युष्माभि र्ज्ञायतां यतः परमेश्वरः स्वीयदासस्यैलियस्य
वदनेन यद्यद् अभाषिष्ट तत् सिद्धम् अकरोत्। अनन्तरं येहू र्यिष्रि- ११
येलेऽवशिष्टान् आहाबवंशस्य सर्व्वान् लोकान् तस्य प्रधानलोकान्
आत्मीयान् याजकांश्च जघान, स तस्यैकं जनमपि नावशेषयामास।
अपरं स उत्थाय गेहं जग्मिवान् अनन्तरं शोमिरोणं गच्छन् स १२
वर्त्मनि लोमच्छेदनगेहस्य समीपे यिहूदाया महीपतेरहसियस्य भ्रातृ- १३
णां साक्षाद् बभूव। तदा स तान् पप्रच्छ यूयं के? ते जगदुः, वयम्
अहसियस्य भ्रातरो राज्ञो महिष्याश्च सन्तानाम् नमस्कर्त्तुं व्रजामः।
तदानीं स व्याजहार तान् जीवग्राहं गृह्णीत ततो दासास्तान् जीवग्राहं १४
गृहीतवन्तः। अपरं लोमकर्त्तनगेहस्यावटसन्निधौ तान् जघ्नुः, द्विच-
त्वारिंशल्लोकानाम् एको जनोऽपि नावाशिष्यत।
अनन्तरं स तस्मात् स्थानात् प्रस्थाय निजसम्मुखाभिगामिनो रेखब- १५
तनयस्य यिहोनादबस्य साक्षाद् बभूव तं नमस्कृत्य प्रोचिवांश्च त्वां प्रति
मदीयं मनो यादृक् सरलं तादृक् मां प्रति तव मनः किं सरलम् अस्ति?
यिहोनादब आचचक्षे सरलमेव। तेनोक्तं तथा सति मह्यं करं
देहि। अनन्तरं तेन तस्मै करे दत्ते येहुस्तं स्यन्दनम् आरोह्य निजनिकटं
निनीवान्। अपरं स व्याजहार मया समम् आगत्य परमेश्वर- १६
निमित्तं ममोद्योगाचारं वीक्षस्व। अनन्तरं स तस्य स्यन्दनेन लोकैर्वा-
हितः। अनन्तरं शोमिरोणम् उपस्थाय येहूरेलियं प्रति परमेश्वरस्य १७
वाक्यानुसारेणाहाबवंशस्य सर्व्वनाशं यावत् शोमिरोणेऽवशिष्टान्
तदीयान् सर्व्वान् जनान् जघान।
अनन्तरं येहुः सकललोकान् संगृह्य कथयामास, आहाबो बालं १८
स्वल्पं सेवितवान् किन्तु येहुस्तं भृशं सेविष्यते। अतो युष्माभि र्बालो १९
भविष्यद्वादिनः सेवका याजकाश्च सर्व्वे मम सन्निधिम् आहूयन्तां कोप्य-
नागतो न तिष्ठतु यतो मया बालमुद्दिश्य महायज्ञ एकः कारिष्यते
तत्र यः कश्चिद् अनुपस्थितो भविष्यति तस्य प्राणा विनंक्ष्यन्ति। किन्तु
बालः सकलसेवकानां विनाशाय येहुना छलोऽयम् अकारि। अनन्तरं २०
येहूराज्ञापयामास बालमुद्दिश्य महोत्सवमेकं निरूपयत ततस्ते तं

२१ घोषयाञ्चक्रुः। अपरम् इस्रायेलः सर्व्वत्र येहूना लोकेषु प्रेषितेषु बालः
सकलसेवका आजग्मुस्तेषाम् अनागतः कोऽपि नावाशिष्यत। अनन्तरं
तेषु बालो मन्दिरं प्रविष्टेषु सीमामेकामारभ्य सीमामन्यां यावद् बालो
२२ मन्दिरं परिपूर्णं बभूव। तदानीं स वस्त्रागारस्याधिपतिं जगाद त्वं
बालः सर्व्वसेवकानां कृते वसनानि वहिष्कृत्यानय। ततः स तेषां कृते
२३ वसनान्यानिनाय। अनन्तरं येहू रेखबस्य सुतो यिहोनादबश्च बालो
मन्दिरं प्रविश्य बालः सेवकान् बभाषाते बालः सेवकान् विना परमे-
श्वरस्य सेवकः कोऽपि यथा स्थानेऽस्मिन् युष्माकं मध्ये न तिष्ठति तथा
२४ युष्माभिरनुसन्धाय निश्चीयतां। अनन्तरं तेषु बलीन् दातुं होतुञ्चा-
भ्यन्तरं गतेषु येहूरशीतिं जनान् वहिः स्थापयित्वा निदिदेश, एते
यावन्तो लोका युष्माकं करेषु मया समर्प्यन्ते तेषाम् एको यदि पलायते
२५ तर्हि तस्य प्राणानां विनिमयेन युष्माकम् एकेन प्राणास्त्यक्तव्याः। अन-
न्तरं तस्य हवने समाप्तिं गते येहूः पदातीन् रथिनश्च समादिदेश
यूयम् अभ्यन्तरं समेत्य तान् हत, कमपि वहिरागन्तुं मानुमन्यध्वं।
तदानीं ते खड्गधारैस्तान् अवधिषुः। अपरं पदातयो रथिनश्च तान्
२६ वहि र्निक्षिप्य बालमन्दिरसमीपस्थं शालानगरं ययुः। अपरं ते बालो
२७ मन्दिरात् सकला मूर्त्ती र्वहिष्कृत्य दाहयाञ्चक्रुः। विशेषतो बालो मूर्त्तिं
बभञ्जुरपरं बालो मन्दिरमपि भंक्ता तत्र स्थाने मलगेहमेकं निर्म्मापया-
२८ ञ्चक्रुस्तद् अद्यापि विद्यते। अनेन प्रकारेण येहूरिस्रायेलो मध्याद्
बालम् उच्छिच्छेद।

२९ निवाटस्य तनयो यो यारवियाम इस्रायेलीयवंशं पापं कारयामास
तस्य पापमार्गाद् अर्थतो वैथेले दाने च स्थितयोः सुवर्णमयवत्सयोर-
३० नुगमनाद् येहू र्न निववृते। ततः परं परमेश्वरो येहूम् आचचष्टे
ममाभिमतं कर्म्म साधयित्वा त्वया सदाचारः कृत आहाबस्य वंशं प्रति
मम सर्व्वो मनोरथः सिद्धश्च तत्कारणात् चतुर्थं पुरुषं यावत् तव वंशा
३१ इस्रायेलः सिंहासन उपवेक्ष्यति। तथापि येहूः सर्व्वान्तःकरणैः समम्
इस्रायेलः प्रभोः परमेश्वरस्य व्यवस्थानुसाराद् आचरितुं न येते किञ्च
यो यारवियाम इस्रायेलीयवंशं पापं कारयामास तस्य पापमार्गात् न
निववृते।

३२ तस्मिन् समये परमेश्वर इस्रायेलवंशं न्यूनीकर्तुम् आरेभे। ततो
३३ यर्द्दनस्य पूर्व्वदिशि स्थित इस्रायेलीयः कृत्स्नो जनपदोऽर्थतो गादीय-

रूबेणीयमिनशीयानां या गिलियदाख्यो देश आसीद् अर्णोनसरित्-
तटे स्थितम् अरोयेरनगरम् आरभ्य स कृत्स्नो गिलियदद्देशो वाशन-
देशश्च हसायेलेन पराजिग्ये। एतस्य येहोरचरितं चरित्रं तेन यद्यत् ३४
कृतं तस्य विक्रमश्चैतानि सर्व्वाणि किम् इस्रायेलीयभूपतीनां पुरावृत्त-
पुस्तके लिखितानि न विद्यन्ते? अनन्तरं येहूः स्वीयपितृलोका इव ३५
महानिद्रां गतो लोकैः शोमिरोणे श्मशाने निहितश्च ततः परं तस्य
तनयो यिहोयाहसस्तस्य पदे राजा बभूव। एष येहूः शोमिरोणेऽष्टा- ३६
विंशतिवत्सरान् इस्रायेलीयानां राजत्वं चकार।

---

## ११ एकादशोऽध्यायः।

१ योयाशस्य रक्षा ४ यिहोयादायेन तस्य राज्याभिषेकः १२ अथलियाया हननं १७ यिहोयादायेन देवमन्दिरस्य भञ्जनं परमेश्वरस्य सेवनाय मनुजैः समं नियमकरणञ्च।

इत्यनन्तरेऽहसियस्य जनन्यथलिया निजं पुत्रं मृतं विलोक्योत्थाय १
निखिलं राजवंशं विनाशयामास। किन्तु योरामस्य नृपते र्दुहिता २
अहसियस्य भगिनी या यिहोशेबा सा हन्यमानानां राजपुत्राणां मध्याद्
अहसियस्य तनयं योयाशं चोरयित्वा तं तस्य धात्रीञ्च शय्यागारे गोप-
यामास तस्माद् अथलियातो गूहितः सन् स न जघ्ने। अपरं स षड्व- ३
त्सरान् यावत् तस्याः सन्निधौ परमेश्वरस्य मन्दिरे प्रच्छन्नस्तस्थिवान्
अथलिया च देशस्य राजत्वं चकार।

अनन्तरं सप्तमे वत्सरे यिहोयादाबो लोकान् प्रहित्य रक्षिणां द्रुतगा- ४
मिनाञ्च सैन्यानां शतपतीन् आहूय परमेश्वरस्य मन्दिरे स्वसमीपम्
आनिनाय तैः समं नियमं कृत्वा परमेश्वरस्य गेहे तान् शपथयित्वा च
राजपुत्रं दर्शयाञ्चकार च। अनन्तरं स तान् इदम् आदिदेश युष्माभिः ५
कर्म्मैतत् कर्त्तव्यं युष्माकम् एकेन तृतीयांशेन विश्रामदिने प्रविश्य राज-
निवेशनं रक्षितव्यं। अपरेण तृतीयांशेन सूरद्वारे स्थातव्यं शेषेण तृती- ६
यांशेन च द्रुतगामिनां पश्चात् स्थिते द्वारे स्थातव्यम् इत्थं पर्य्यायानुसाराद्
युष्माभि र्गेहं रक्षितव्यं। अपरं युष्माकं यौ द्वावंशौ विश्रामवारे बहि ७
र्गमिष्यतस्ताभ्यां नृपतेश्चतुर्दिक्षु परमेश्वरस्य मन्दिरम् अवितव्यं।
तदानीं यूयं सर्व्वे शस्त्रहस्ताः सन्तो राजानं वेष्टध्वं यः कश्चित् श्रेण्या ८
अभ्यन्तरम् आयास्यति स युष्माभि र्हन्यताम् अपरं नृपति र्यदा बहि

९ योऽस्याभ्यन्तरम् आगमिष्यति वा यदासौ यूयं तेन समं तिष्ठतेति । इत्थं
यिहोयादायेन याजकेन यद्यद् आदिष्टं तदेव तैः शतपतिभिरकारि ।
तेषाम् एकैको जनो विश्रामवारे प्रवेक्ष्यन्तो विश्रामवारे निर्गामिनश्च
स्वान् स्वान् लोकान् आदाय यिहोयादायस्य याजकस्य समीपम् आज-
१० गाम । अपरं याजकः परमेश्वरस्य मन्दिरे स्थितान् दायूदो नरपतेः
११ शूलचर्मकान् तेभ्यः शतपतिभ्यो ददिवान् । अपरं द्रुतगामिनः स्वस्वाः
करैरस्त्राण्यादाय मन्दिरस्य दक्षिणं पार्श्वम् आरभ्य मन्दिरस्य वामं पार्श्वं
यावद् यज्ञवेद्या मन्दिरस्य च समीपे नृपतेश्चतुर्दिक्षु तस्थिवन्तः ।
१२ अनन्तरं स राजपुत्रं बहिरानीय तस्य शिरसि किरीटं निधाय तस्य
हस्ते साक्ष्यपुस्तकं समर्पितवान् ततस्ते तम् अभिषिच्य राजानं चक्रुः
करताल्या च बभाषिरे राजा चिरजीवी भूयादिति ।

१३ ततः परम् अथलिया द्रुतगामिसेनानां लोकानाञ्च कोलाहलं निशम्य
१४ परमेश्वरस्य मन्दिरे लोकानां समीपम् आजगाम । अपरं राजा
विध्यनुसारेण स्तम्भस्य समीपे तिष्ठति, अध्यक्षास्तूरीवादकाश्च राज्ञः
समीपे विद्यन्ते जनपदस्य सर्व्वे लोकाश्चानन्दं कुर्व्वन्ति तूरीं वाद-
यन्ति चेति विलोक्याथलिया निजं वसनं छित्वा राजद्रोहो राज-
१५ द्रोह इत्युच्चैःस्वरेण बभाषे । ततो यिहोयादायो याजको बलेषु नियु-
क्तान् शतपतीन् समादिशन् बभाषे, एषा युष्माभिः श्रेणीमध्याद् बहि-
ष्क्रियतां, यः कश्चिद् एताम् अनुगमिष्यति स खड्गेन हन्यतामिति यतो
१६ याजकोऽब्रवीत् परमेश्वरस्य गेहमध्ये सा न हन्तव्या । अनन्तरं सा लोकै-
र्धृत्वा राजधान्या अश्वद्वारं नीता तत्रैव जघ्ने ।

१७ ततः परं लोकाः परमेश्वरस्य प्रजा भविष्यन्ति यिहोयादायः परमे-
श्वरेण सह नृपतिं लोकांश्चैतादृशं नियमं कारयामास नृपतिना सह
१८ लोकानपि नियमं कारयामास । अनन्तरं जनपदस्य सर्व्वे मनुजा बालो
गेहं गत्वा तद् बभञ्जुस्तस्य वेदीरपि बभञ्जुस्तस्य प्रतिमाश्च सर्व्वथा
चूर्णयाञ्चक्रुः वेदीनां सम्मुखे बालो याजकं मत्तनम् अवधिषुश्च ततः परं
१९ याजकः परमेश्वरस्य गेहे कर्म्मकारिणो नियोजयामास । अपरं शतप-
तिषु रक्षिषु द्रुतगामिषु सैन्येषु जनपदस्य लोकेषु च तेन समानीतेषु
ते राजानं परमेश्वरस्य गेहाद् द्रुतगामिसैन्यानां द्वारस्य मार्गेण राज-
२० निवेशनम् आनिन्युस्ततः स राजसिंहासन उपविवेश । ततो जनपदस्य
सकललोका आनन्दन् नगरमपि सुस्थिरं तस्थौ केवलम् अथलिया तै

राजनिवेशने खड्गेन जघ्ने। स योयाशः सप्तवत्सरवयस्कः सन् राजत्वं २१
कर्त्तुम् आरेभे।

---

# १२ द्वादशोऽध्यायः।

१ यिहोयादायस्य यावज्जीवनं योयाशस्य सुराजत्वं ४ ईश्वरीयभवनस्य जीर्णोद्धारार्थं तदीयनिदेशनं १७ मुद्राः प्राप्य हसायेलस्य यिरूशालमतः प्रत्यावर्त्तनं १९ योयाशस्य हतत्वं तस्य पदे तस्य तनयस्यामत्सियस्याभिषेचनञ्च।

येहो राजत्वस्य सप्तमे वत्सरे योयाशो राजत्वं कर्त्तुम् आरभ्य यिरू- १
शालमे चत्वारिंशद्वत्सरान् यावद् राजत्वं चकृवान् बेर्शेबानिवा-
सिनी सिबिया तस्य प्रसूरासीत्। यिहोयादायो याजको यावन्ति २
दिनानि तम् आदिशत् तावन्ति दिनानि योयाशः परमेश्वरस्य साक्षात्
सदाचारम् अकरोत्। किन्तु भगुस्थानानि नोदच्छिद्यन्त तदानीमपि ३
मानवा उच्चस्थानेषु बलिदानं धूपदानञ्चाकुर्व्वन्।

अनन्तरं योयाशो याजकान् आचष्ट या या मेध्या मुद्राः परमेश्वरस्य ४
मन्दिरम् आनीयन्तेऽर्थतो गणितलोकानाम् एकैकस्य मूल्याय निरूपिता
मुद्राः परमेश्वरस्य मन्दिरम् आनीता मुद्रा लोकैः स्वेच्छया दत्ता मुद्राश्चैताः ५
सर्व्वा याजकानाम् एकैकेन जनेन निजपरिचितलोकानां करतो गृहीत्वा
मन्दिरस्य भग्नस्थानानां जीर्णोद्धारः क्रियतां। किन्तु योयाशस्य नृपते- ६
स्त्रयोविंशं राजत्ववत्सरं यावद् याजका मन्दिरस्य जीर्णोद्धारं नाकुर्व्वन्।
ततो योयाशो नरपति र्यिहोयादायं याजकम् अपरान् याजकांश्चाहूय ७
जगाद यूयं मन्दिरस्य जीर्णोद्धारं कुतो न कुरुथ? अतोऽद्यारभ्य यूयं
परिचितलोकानां समीपात् पुन र्मुद्रा न गृह्णीत यतो मन्दिरस्य जीर्णो-
द्धारार्थं ता युष्माभि र्दातव्याः। ततो याजका लोकानां करेभ्यो मुद्रा न ८
ग्रहीतुं मन्दिरस्य जीर्णोद्धारं न कर्त्तुञ्चाङ्गीचक्रिरे। अनन्तरं याजको ९
यिहोयादायो मञ्जूषामेकां गृहीत्वा तस्या आच्छादकफलके छिद्रमेकं
विधाय होमवेद्याः समीपे परमेश्वरीयमन्दिरस्य प्रवेशस्थानस्य दक्षिण-
पार्श्वे निदधे ततो द्वाररक्षिणो याजकाः परमेश्वरस्य मन्दिरम् आ-
नीताः सकलमुद्रास्तस्या मध्ये न्यदधत। अनन्तरं मञ्जूषायां प्रभूतमुद्राः १०
सञ्चिता इति तैर्दृष्टे राजलेखको महायाजकश्च समागत्य परमेश्वरस्य
मन्दिरे लब्धाः सकलास्ता मुद्रा पुटकेषु बद्ध्वा परिममाते। अनन्तरं ११
परिमितास्ता मुद्रास्ताभ्यां मन्दिरे नियुक्तानां कर्म्मकारिणां करेषु सम-

र्यितास्ते च परमेश्वरीयमन्दिरस्थेभ्यः कारुभ्योऽर्थतः सूत्रधरनिचायक-
१२ स्थपतिभास्करादिभ्यः परमेश्वरीयमन्दिरस्य जीर्णोद्धारार्थं काष्ठानां
खनितपाषाणानाञ्च क्रयाय परमेश्वरीयमन्दिरस्य दृढीकरणे प्रयोज-
१३ नीयाय सर्व्वव्ययाय च ता विश्राणयामासुः । किन्तु परमेश्वरस्य मन्दिरं
या मुद्रा आनीयन्त ताभिः परमेश्वरस्य मन्दिरार्थं रजतभाण्डा वर्त्तिका-
च्छेदन्यो घटाः कूर्य्योऽन्यानि सुवर्णमयानि रूप्यमयानि भाजनानि वा न
१४ निरमीयन्त । ते परमेश्वरस्य मन्दिरजीर्णोद्धारार्थं कर्म्मकारिभ्य एव
१५ सकलाः मुद्रा ददुः । ते कारुभ्यो वितरणार्थं येषां मानवानां करेषु मुद्रा
१६ ददुस्तैः सह गणनां न चक्रुः, यतस्ते विश्वास्यत्वेन कर्म्माण्यकुर्व्वन् । अपरं
दोषार्थकाः पापार्थकाश्च या मुद्रास्ताः परमेश्वरस्य मन्दिरं नानीयन्त
ता याजकानां बभूवुः ।

१७ तस्मिन् समयेऽरामीयो राजा हसायेलो गातस्य विरुद्धं गत्वा समरं
विधाय तन्नगरं वशीचक्रे ततः परं हसायेलो यिरूशालमं गन्तुम् उन्मुखो
१८ बभूव । ततो यिहूदादेशीयो योयाशो महीपतिः स्वपूर्व्वपुरुषैरर्थतो
यिहोशाफटो योरामोऽहसियश्चेतिनामकै र्यिहूदादेशीयभूपतिभिः स्वेन
च निवेदितानि पवित्रवस्तूनि परमेश्वरीयमन्दिरस्य भाण्डागारे राज-
निवेशनस्य भाण्डागारे च स्थितानि सर्व्वाणि सुवर्णानि चादायारामीय-
भूपते र्हसायेलस्य समीपं प्रेषयामास ततः स यिरूशालमात् परावृत्य
जग्मिवान् ।

१९ एतस्य योयाशस्यावशिष्टं चरित्रं तेन च यद्यत् कृतं तत्सर्व्वं किं यिहू-
२० दादेशीयभूपतीनां पुरावृत्तपुस्तके लिखितं न विद्यते ? अनन्तरं तस्य
द्वौ दासावुत्थाय द्रोहं विधाय सिल्लाया मार्गे स्थिते मिल्लोनामके भवने
२१ तं जघ्नतुः । शिमियतस्य पुत्रो योषाखरो शोम्रीतस्य पुत्रो यिहोषाबद्-
श्चैताभ्याम् आहत्य स मारितः । ततः परं लोका दायूदनगरे तस्य पितृ-
लोकानां सन्निधौ तं श्मशाने निदधिरे । अपरं तस्य पुत्रोऽमत्सियस्तस्य
पदे राज्यं लेभे ।

---

## १३ त्रयोदशोऽध्यायः ।

१ इस्रायेलो नृपते र्यिहोयाहसस्य कुराज्यं ८ लोकानां विपत्तेः कथनं यिहोयाह-
सस्य निधनं १० तदीयतनयस्य योयाशस्य कुराज्यं १४ इलीशायस्य भविष्य-

इत्यत्र २० मृतइलीशायस्यास्थिस्पर्शाद् एकस्य कुणपस्य जीवनप्राप्तिः २१ इलीशायस्य भविष्यद्वाक्यसिद्धिः।

यिहूदादेशीयनृपतेरहसियतनयस्य योयाशस्य त्रयोविंशे राजत्वव- १
त्सरे येहोः सुतो यिहोयाहस इस्रायेलीयवंशे राजत्वं कर्त्तुम् आरभ्य
सप्तदशवत्सरान् यावत् शोमिरोणे राजत्वं चकार। स परमेश्वरस्य २
साक्षात् कुत्सिताचारं चकृवान् अर्थतो निवाटस्य सुतो यो यार-
बियाम इस्रायेलीयवंशं पापम् अकारयत् तस्य पापपथे चचार तस्मात्
न परावृत्ते।
तत इस्रायेलो विरुद्धं परमेश्वरः क्रोधेन ज्वलित्वाऽरामीयनृपते र्हसा- ३
येलस्य हसायेलसुतस्य विन्हददस्य च यावज्जीवनं तयो र्हस्तेषु तान्
समर्पयामास। अनन्तरं यिहोयाहसेन परमेश्वरम् उद्दिश्य प्रार्थनायां ४
कृतायां परमेश्वरस्तस्य प्रार्थनायां मनो निदधे यतोऽरामीयनृपतिरि-
स्रायेलीयवंशं येनोपद्रवेणाक्लिश्नात् तं स दृष्टवान्। पुरा स यिहोया- ५
हसस्य बलानां कृते केवलं पञ्चाशतं हयारोहिणो दशरथान् दशसह-
स्राणि पदातिकांश्चावाशेषयत् यतोऽरामीयनृपतिस्तान् विनाशयामास
तान् मर्द्दित्वा धूलिवत् चकार च। किन्तु परमेश्वरेणेस्रायेलीयवंशेभ्य ६
एकस्मिन् उद्धारयितरि दत्ते तेऽरामीयानां हस्तेभ्यो मोचनं लेभिरे
तस्माद् इस्रायेलीयवंशाः पूर्व्ववत् निजे निजे वासस्थाने ऊषुः। तथापी- ७
स्रायेलीयवंशं पापम् अकारयद् यो यारबियामस्तदीयपापमार्गं ते
विहाय तस्मिन्नेव चेरुः शोमिरोणे च चैत्यवृक्षस्तस्थौ। एतस्य यिहोया- ८
हसस्यावशिष्टं चरित्रं तस्य सर्व्वकर्म्म विक्रमश्चैतानि किम् इस्रायेलीय-
नृपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते? अनन्तरं यिहोयाहसो ९
निजपितृलोकाइव महानिद्रां जग्मिवान् ततो लोकास्तं शोमिरोणे
श्मशाने निदधिरे तस्य तनयो योयाशश्च तस्य पदे राजा बभूव।
यिहूदादेशीययोयाशस्य नृपतेः सप्तत्रिंशे राजत्ववत्सरे यिहोया- १०
हसस्य सुतो योयाश इस्रायेले राजत्वं कर्त्तुम् आरभ्य षोडशवत्सरान्
यावत् शोमिरोणे राजत्वं चकृवान्। स परमेश्वरस्य साक्षात् कुत्सिता- ११
चारं चकार; निवाटस्य तनयो यो यारबियाम इस्रायेलीयवंशं पापम्
अकारयत् तस्य पापमार्गं स्वल्पमपि न तत्याज तस्मिन्नेव चचार।
एतस्य योयाशस्यावशिष्टं चरित्रं तेन यद्यत् कृतं यिहूदादेशीयनृपति- १२
नामत्सियेन समं योधनसमये यो विक्रमस्तेन प्रकाशितः सर्व्वाण्येतानि

किम् इस्रायेलीयनरपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते ?
१३ अनन्तरं योयाशो निजपितृलोका इव महानिद्रां गत इस्रायेलीयनृप-
तीनां सन्निधौ शोमिरोणे श्मशाने स्थापितश्च ततो यारबियामस्तस्य
सिंहासन उपविवेश ।
१४ इलीशायेन यस्माद् रोगात् मर्त्तव्यं तेन यदा रुग्न आसीत् तदानीम्
इस्रायेलीययोयाशो राजा तस्य सविधं समीय तस्य वदने रुदित्वा
जगाद हा मम तात हा मम तात हा इस्रायेलो रथहयारोहिणश्च ।
१५ इलीशायस्तं बभाषे त्वं धनुर्व्वाणं गृहाण ततः स धनुर्व्वाणं जग्राह ।
१६ अनन्तरं स इस्रायेलीयराजम् आचचक्षे त्वं चापे हस्तम् आरोपय
ततः स चापे करम् आरोपयामास । अनन्तरम् इलीशायो राज्ञः
१७ करोपरि निजकरौ स्थापयित्वा जगाद, पूर्व्वदिक्स्थं वातायनं मोचय ।
ततः स मोचयामास । अनन्तरम् इलीशायः कथयामास शरं निक्षिप ।
ततस्तेन शरे निक्षिप्ते इलीशायः कथयामास, एष शरः परमेश्वरस्य जय-
हेतुः अरामस्य पराजयकारी च शरः, एतेन त्वम् अफेके अरामीयान्
१८ निःशेषं यावद् आहनिष्यसि । अनन्तरं स उक्तवान् शरान् गृहाण,
ततस्तेन शरेषु गृहीतेषु स इस्रायेलीयनरपतिं जगाद त्वं भूमिम् आह-
१९ न्याः ततः स वारत्रयं भूमावाघातं कृत्वा निवृत्ते । तदानीम् ईश्वरीय-
लोकस्तस्मै क्रुद्धा कथयामास पञ्चवारान् षड्वारान् वा समाहननं
तवोचितमासीत् तथा कृते त्वम् अरामियान् निःशेषं पराजेतुम् अशक्ष्यः
किन्त्विदानीम् अरामीयान् केवलं त्रीन् वारान् पराजेष्यसि ।
२० अनन्तरम् इलीशाये निधनं गते लोकास्तं श्मशाने निदधिरे । अपरं
२१ वत्सरस्यारम्भसमये मोयाबीया दस्युसङ्घा जनपदम् आचक्रमिरे । ततो
लोकैरेकं मनुजं श्मशाने निधातुं गतैकस्मिन् दस्युसङ्घे विलोकिते स
कुणप इलीशायस्य श्मशानस्थाने निचिक्षिपे । ततो दैवाद् इलीशायस्य
कीकसस्पर्शमात्रात् स शवः सजीवो भूत्वा निजचरणाभ्याम् उदतिष्ठत् ।
२२ यिहोयाहसस्य यावज्जीवनम् अरामीयनरपति हसायेल इस्रायेली-
२३ यान् प्रत्युपद्रवं चकृवान् । ततः परं परमेश्वरस्तेषु प्रसन्नो भूत्वानुकम्पां
चकार, स इब्राहीमा इस्हाका याकूबा समं यं नियमम् अकरोत्,
तस्य निमित्तं तान् प्रति सदृष्टिं विधाय तान् आघातेन विनाशयितुं नि-
२४ जसाक्षात् निक्षेप्तुञ्च नाभ्यलषत् । अनन्तरम् अरामीयनरपतौ हसायेले
२५ निधनं गते तस्य तनयो बिन्हदद्स्तस्य पदे राजत्वं प्राप । स समरं

विधाय योयाशस्य जनकाद् यिहोयाहसाद् यानि नगराण्यपहृतवान्
तानि नगराणि योयाशो हसायेलस्य पुत्राद् हददेवराात् पुन र्जग्राह।
योयाशस्त्रीन् वारान् जित्वेस्रायेलीयनगराणि पुनर्व्वारं जग्राह।

---

## १४ चतुर्दशोऽध्यायः।

१ अमत्सियस्य सुराजत्वं ५ स्वीयपितु र्निहन्त्रो रिदोमीयानाञ्च हननं ८ समरे तस्य पराजितत्वं १५ योयाशस्य निधनं १७ अमत्सियस्य हतत्वं २१ असरियस्य राज्याभिषेकः २३ यारबियामस्य कुराजत्वं २८ सिखरियस्य राज्याभिषेकश्च।

इस्रायेलीयनृपते र्यिहोयाहसपुत्रस्य योयाशस्य द्वितीये राजत्ववत्सरे १
यिहूदादेशीयनृपते र्योयाशस्य पुत्रोऽमत्सियो राजा बभूव। स पञ्च- २
विंशतिवत्सरवयस्कः सन् राज्यं लब्ध्वा यिरूशालम ऊनत्रिंशद् वत्सरान्
राजत्वं चकार। यिरूशालमनिवासिनी यिहोयद्दना तस्य जनन्या-
सीत्। स यद्यपि परमेश्वरस्य साक्षात् सदाचारम् अकरोत् तथापि ३
स्वपूर्व्वपुरुषस्य दायूदस्तुल्यो नाभवत्। स निजपितु र्योयाशस्य सकल-
कर्म्मेव कर्म्म चकार। तत उच्चस्थानानि नोच्छिन्नानि किन्तु लोकास्तदा- ४
नीमपि उच्चस्थानेषु बलिदानं धूपदाहञ्चाकुर्व्वन्।
अनन्तरं राज्ये तस्य सम्यग् वशीभूते सति तस्य याभ्यां दासाभ्यां तस्य ५
तातो राजा जघ्ने स तावबधीत्। किन्तु तयो र्घातकयोः सन्तानास्तेन न ६
जघ्निरे, यतो मूससो व्यवस्थाग्रन्थे परमेश्वरीयैषाज्ञा लिखितास्ते, यथा,
पुत्रस्य विनिमयात् पिता पितु र्विनिमयाच्च पुत्रो न हनिष्यते, एकैको
जनः स्वस्वपापाद् हनिष्यत इति। स लवणप्रान्तर इदोमीयानां सहस्र- ७
लोकान् अवधीत् समरेण च सेलानगरं स्ववशं कृत्वा तस्य नाम यक्तेल-
मिति चकार तस्य तन्नामाद्यापि विद्यते।
अनन्तरम् अमत्सिय इस्रायेलीयनरपतिं येहोः पौत्रं यिहोयाहसस्य ८
पुत्रं योयाशं प्रति दूतान् प्रहित्य कथयामास आगच्छावां परस्परं
साक्षात् कुर्व्वः। तत इस्रायेलीयो योयाशो नृपति र्यिहूदादेशस्याम- ९
त्सियं नरपतिं प्रति दूतान् प्रहित्य कथयामास लिवानोनस्थघृगाक्ष-
कण्टकं लिवानोनस्थस्येरसवृक्षस्य समीपं दूतं प्रहित्य कथयामास मम
पुत्रस्य विवाहार्थं तव दुहितरं देहीति। अनन्तरं लिवानोनस्थो वन्य-
पशुः समीत्य घृगाक्षकण्टकिं बभञ्ज। त्वम् इदोमं जितवान् एतत्कारणात् १०
तव मनो गर्व्वितमभवत् त्वम् आदरेण स्वनो निजनिकेतने तिष्ठ स्वक्षतये

कुतोऽनधिकारवर्त्मा भविष्यसि? तव सिंहलादेशस्य च पतनं कुतो
११ भविष्यति? विक्रमक्षत्रियेण सहागामि, अत इस्पायेशीयो योयाशो नर-
पतिरागमाम, तस्मात् स सिंहलाया अमत्तिरमत्तियश्च सिंहलादेशस्थे
१२ वैतक्षेमस्थे परस्परं संग्रामं चक्रतुः । तत्र इस्पायेशवंशानां सम्मुखे सिंह-
लाया लोकाः पराजिताः सन्तः सर्वे स्वं स्वं वासस्थानं पलायाञ्चक्रिरे ।
१३ तत्र वैतक्षेमस्य इस्पायेशीयो राजा योयाशोऽक्षतिशस्य पौत्रं योयाशस्य
पुत्रं सिंहलाया अमत्तियं राजानं दधार विरूपाक्षनम् आमलेप्रथि-
मोयगोपुरम् आरभ्य कोलम्बगोपुरं यावत् विरूपाक्षमोयप्राचीरस्य
१४ चतुःशतहस्तमितं खण्डं बभञ्ज च । अपरं परमेश्वरस्य मन्दिरे राजनि-
वेशनस्य भाण्डागारेषु च सञ्चितानि सकलहेमरजतानि सकलपात्राणि
आदाय बन्धकत्वेन लोकान् सङ्गिनः कृत्वा च शोमिरोयं प्रत्यागमाम ।
१५ एतस्य योयाशस्यावशिष्टं चरित्रं तस्य क्रिया सिंहलाया नृपतिनाम-
त्तियेन सह योधनसमये तस्य विक्रमश्चैतानि सर्व्वाणि किम् इस्पायेशी-
१६ यभूपतीनां पुराणग्रन्थे लिखितानि न विद्यन्ते? अनन्तरं योयाशो
निजपितृलोका इव महानिद्रां गतः शोमिरोये इस्पायेशीयराजानां
निकटे श्मशाने निहितश्च । अपरं तस्य पुत्रो यारवियामस्तस्य पदे
राजा बभूव ।

१७ अनन्तरम् इस्पायेशीयभूपते यिंशोयाङ्गसपुत्रस्य योयाशस्य निधनात्
परं सिंहलाया भूपति योयाशस्य पुत्रोऽमत्तियः पञ्चदश वत्सरान्
१८ अजीवत् । एतस्यामत्तियस्यावशिष्टं चरित्रं किं सिंहलाया भूपतीनां
१९ पुराणग्रन्थे लिखितं न विद्यते? अनन्तरं लोका विरूपाक्षमे तस्य
विरुद्धं कुमन्त्रणां चक्रुस्तदा स कालोयं प्रति पलायाञ्चक्रे, किन्तु ते तस्य
२० पश्चात् कालोयं लोकान् प्रहित्य तत्र स्थाने तं घातयामासुः । अनन्तरं
ते तद्देहम् आनीय विरूपाक्षमे रायूरनगरे तस्य पितृलोकानां सन्निधौ
तमपि श्मशाने निदधिरे ।

२१ अनन्तरं सिंहलायाः सर्व्वे लोकाः षोडशवत्सरवयस्कम् उचितं गृहीत्वा
२२ तस्य पितुरमत्तियस्य पदे राजत्वेऽभिषिषिचुः । राजनि पितृलोकवत्
महानिद्रां गतवति स इस्पतनगरं निर्म्माय पुनर्व्वारं सिंहलाया अधीनं
चकृवान् ।

२३ सिंहलाया भूपते योयाशपुत्रस्यामत्तियस्य पञ्चदशे राजत्ववत्सरे
इस्पायेशो भूपते योयाशस्य पुत्रो यारवियामः शोमिरोये राजत्वं कर्त्तुम्

आरभ्यैकचत्वारिंशद् वत्सरान् राजत्वं कृतवान्। स परमेश्वरस्य २४
साक्षात् कुत्सिताचारं कृतवान् अपरं निवाटस्य पुत्रो यो यारबियाम
इस्रायेलीयवंशं पापम् अकारयत् तदीयपापानुगमनात् न निववृते।
अपरम् इस्रायेलीयः प्रभुः परमेश्वरो गातहेफरीयस्यामित्तयपुत्रस्य २५
भविष्यद्वादिनो यूनसो वदनेन यां वाणीम् अवादीत् तदनुसारेण स
राजा हमातस्य प्रवेशस्थानम् आरभ्य प्रान्तरस्य समुद्रं यावद् इस्राये-
लीयां सीमां पुनर्व्वारं वशे कृतवान्। यत इस्रायेलवंशस्यातीव दुःखं २६
जातं तेषां मुक्ता बद्धाश्च सर्व्वे गताः कोप्युपकारको न विद्यते परमेश्वर
इति ददर्श। अपरम् अहम् इस्रायेलो नाम गगनस्याधो लोप्स्याम्ये- २७
तादृशीं वाचम् अनुक्त्वा परमेश्वरो योयाशसुतस्य यारबियामस्य
हस्तेन तान् उद्धार।

एतस्य यारबियामस्यावशिष्टं चरित्रं सकलाः क्रिया युद्धे विक्रम- २८
श्चैतेषां विवरणं स येन प्रकारेण दम्मेषकं हमातश्चेस्रायेलीयवंशेन पुन-
र्व्वारं यिहूदाया वशे कृतवान् एतस्यापि विवरणं किम् इस्रायेलीय-
नरपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते? अनन्तरं यारबि- २९
यामो निजपितृलोका इस्रायेलीयनरपतय इव महानिद्रां जगाम तत-
स्तस्य सुतः सिखरियस्तस्य पदे राजा बभूव।

---

## १५ पञ्चदशोऽध्यायः।

१ उषियस्य सुराजत्वकरणं ५ तस्य कुष्ठीभवनात् तस्य पुत्रस्य विचारणं ८ सिखरियस्य कुराजत्वकरणं हननञ्च १३ शल्लूमस्य कुराजत्वकरणं हननञ्च १६ मिनहेमस्य विवरणं २१ तस्य पुत्रस्य पिकहियस्य राजत्वेऽभिषिक्तत्वं २२ पिकहियस्य हननं २७ पेकहस्याभिषिक्तत्वं २९ इस्रायेलीयानां दुर्दशा ३० पेकहस्य हननं ३२ योथमस्य चरित्रञ्च।

इस्रायेलीययारबियामस्य नरपतेः सप्तविंशे राजत्ववत्सरे यिहूदाया १
नृपतेरमत्सियस्य पुत्र उषियो राजत्वं कर्त्तुम् आरेभे। स षोडशवत्सर- २
वयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरूशालमे द्विपञ्चाशद् वत्सरान्
यावद् राजत्वं कृतवान् यिरूशालमनिवासिनी यिखलिया तस्य प्रसू-
रासीत्। स निजपितुरमत्सियस्य कार्य्यानुसारेण परमेश्वरस्य साक्षात् ३
सदाचारं चकार। किन्तु भगुस्थानानि नोच्छिदिरे तदानीमपि लोका ४
भगुस्थानेषु बलिदानं धूपदाहञ्च चक्रुः।
अपरं परमेश्वरेणाहतः स राजा निधनदिनं यावत् कुष्ठरोगी भवन् ५

चिकित्सालये तस्थिवान् ततो योथमो राजकुमारो गेहस्याधिपति र्भूत्वा
६ देशीयलोकानां शासनं कृतवान्। एतस्योषियस्यावशिष्टं चरित्रं तस्य
सर्व्वाः क्रियाश्च किं यिहूदाया भूपतीनां पुरावृत्तपुस्तके लिखिता न
७ विद्यन्ते? अनन्तरम् ऊषियो निजपितृलोका इव महानिद्रां गतो दायूद्-
नगरे पितृलोकानां सन्निधौ श्मशाने निहितश्च। ततस्तस्य पुत्रो योथम-
स्तस्य पदे राजा बभूव।

८ यिहूदाया नरपतेरुषियस्याष्टत्रिंशे राजत्ववत्सरे यारबियामस्य
सुतः सिखरियः शोमिरोणे राज्यं प्राप्य षण्मासान् इस्रायेलीयानां
९ राजत्वं चकार। स निजपितृलोकानां कर्म्मानुसारेण परमेश्वरस्य
साक्षात् कुत्सिताचारं चकार निबाटस्य सुतो यो यारबियाम इस्राये-
१० लीयवंशं पापम् अकारयत् तस्य पापानुगमनात् न निववृते। अनन्तरं
याबेशस्य तनयः शल्लुमो राजद्रोहं विधाय लोकानां सम्मुखे तं ताड-
११ यित्वा जघान तस्य पदे स्वयं राजा बभूव च। एतस्य सिखरियस्या-
वशिष्टं चरित्रं किम् इस्रायेलीयभूपतीनां पुरावृत्तपुस्तके लिखितं न
१२ विद्यते? इत्थं येहुं प्रति परमेश्वरेण यद् उक्तं तत् सिद्धतां जगाम।
स जगाद, चतुर्थं पुरुषं यावत् तव वंश इस्रायेलीयसिंहासन उपवे-
क्ष्यतीति तदेव च सत्यं बभूव।

१३ यिहूदाया भूपतेरुषियस्योनचत्वारिंशे राजत्ववत्सरे याबेशस्य तनयः
१४ शल्लुमो राज्यं प्राप्य मासमेकं शोमिरोणे राजत्वं चकार। यतो गादेः
सुतो मिनहेमस्तिर्षातो गत्वा शोमिरोणम् उपस्थाय शोमिरोणमध्ये याबे-
शस्य सुतं शल्लुमं ताडयित्वा जघान तस्य पदे स्वयं राजा बभूव च।
१५ एतस्य शल्लुमस्यावशिष्टं चरित्रं तेन कृतो राजद्रोहश्च किम् इस्राये-
लीयभूपतीनां पुरावृत्तपुस्तके लिखितं न विद्यते?

१६ अनन्तरं मिनहेमस्तिप्सहं तन्मध्यस्थितं सर्व्वं तिर्षां यावत् तदीया
सीमाश्च जिगाय यतस्ते तस्य कृते द्वारं न मोचयामासुः। स तान् जघान
१७ तेषां सर्व्वासां गर्भवतीनाम् उदरं विदारयामास च। यिहूदाया
नरपतेरुषियस्योनचत्वारिंशे राजत्ववत्सरे गादेः पुत्रो मिनहेम इस्रा-
१८ येलीयानां राज्यं प्राप्य शोमिरोणे दशवत्सरान् राजत्वं चकार। स
परमेश्वरस्य साक्षात् कुत्सिताचारं कृतवान् निबाटस्य पुत्रो यो यार-
बियाम इस्रायेलीयवंशं पापम् अकारयत् तस्य पापानुगमनाद् याव-
१९ ज्जीवनं न निववृते। अनन्तरम् अश्शूरीयराजे पूले तस्य देशस्य विरुद्धम्

आगते पूलस्य साहाय्येन यत् तस्य राजत्वं स्थिरं तिष्ठति तन्निमित्तं
मिनहेमः पूलाय सहस्रकिक्कारपरिमितानि रजतानि ददिवान्। अप- २०
रम् अस्सूरीयराजाय दानार्थं मिनहेमः सर्व्वेभ्यो धनिलोकेभ्यः पञ्चाशत्
पञ्चाशत् शेकलपरिमितानि रजतानि गृहीत्वेस्रायेलीयानां मध्ये तानि
रजतानि सञ्चिचाय तस्माद् अस्सूरीयो नरपतिस्तस्मिन् जनपदे न
तिष्ठन् परावृत्य जग्मिवान्।

एतस्य मिनहेमस्यावशिष्टं चरित्रं सर्व्वाः क्रियाश्च किम् इस्रायेलीय- २१
भूपतीनां पुरावृत्तपुस्तके लिखितानि न विद्यन्ते? अनन्तरं मिनहेमे २२
निजपितृगणवत् महानिद्रां गते तस्य तनयः पिकहियस्तस्य पदे राजा
बभूव।

यिहूदाया उषियस्य नरपतेः पञ्चाशे राजत्ववत्सरे मिनहेमस्य पुत्रः २३
पिकहिय इस्रायेलो राज्यं प्राप्य शोमिरोणे वत्सरद्वयं राजत्वं चकृवान्।
स परमेश्वरस्य साक्षात् कुत्सिताचारं चकार निबाटस्य पुत्रो यो २४
यारबियाम इस्रायेलीयवंशं पापम् अकारयत् तदीयपापानुगमनाच्च
निववृते। अनन्तरं रिमलियस्य तनयः पेकहनामा तस्य सेनापति- २५
रेकस्तस्य विरुद्धं राजद्रोहं विधाय शोमिरोणे राजनिवेशनस्यान्तःपुरे
तम् अर्गोवम् अरियिं तस्य सङ्गिनः पञ्चाशद् गिलियदीयजनांश्च हत्वा
तस्य पदे राजा बभूव। एतस्य पिकहियस्यावशिष्टं चरित्रं सर्व्वाः २६
क्रियाश्चेस्रायेलीयनरपतीनां पुरावृत्तपुस्तके लिखितानि विद्यन्ते।

यिहूदाया नरपतेरुषियस्य द्विपञ्चाशत्तमे राजत्ववत्सरे रिमलिय २७
सुतः पेकह इस्रायेलीयानां राज्यं प्राप्य विंशतिवत्सरान् यावत् शोमि-
रोणे राजत्वं चकृवान्। स परमेश्वरस्य साक्षात् कुत्सिताचारं चकार २८
निबाटस्य पुत्रो यो यारबियाम इस्रायेलं पापम् अकारयत् तस्य पाप-
मार्गं न तत्याज।

अनन्तरम् इस्रायेलीयनरपतेः पेकहस्य राजत्वसमयेऽस्सूरीयो राजा २९
तिग्लत्पिलेषर आगत्य इयोनम् आबेल्बैतमाखां यानोहं केदशं हात्-
सोरं गिलियददेशं गालीलदेशस्थं नप्तालेः कृत्स्नं जनपदञ्च जित्वा तत्र-
त्यान् मानवान् अस्सूरदेशं नीत्वा प्रवासयामास।

अनन्तरम् उषियपुत्रस्य योथमस्य विंशतितमे राजत्ववत्सरे एला- ३०
हस्य पुत्रो होशेयो रिमलियपुत्रस्य पेकहस्य विरुद्धं राजद्रोहं विधाय
तम् आहत्य मारयामास तस्य पदे राजा बभूव च। एतस्य पेकहस्या- ३१

वशिष्टं चरित्रं तस्य सर्व्वाः क्रियाश्चेस्रायेलीयभूपतीनां पुरावृत्तपुस्तके
लिखितानि विद्यन्ते ।
३२ इस्रायेलीयभूपते रिमलियपुत्रस्य पेकहस्य द्वितीये राजत्ववत्सरे
३३ यिहूदाया राज उषियस्य पुत्रो योथमो राजत्वं कर्त्तुम् आरेभे । स
पञ्चविंशतिवत्सरवयस्कः सन् राज्यं प्राप्य यिरूशालमे षोडशवत्सरान्
३४ राजत्वं चकार । सादोकस्य दुहिता यिरूशा तस्य प्रसूरासीत् । स
परमेश्वरस्य साक्षात् सदाचारं चकार निजपितुरुषियस्य कार्य्यानुसा-
३५ रात् कार्य्यं चकार । केवलं उच्चस्थानानि नोच्छिद्यन्त लोकास्तदानी-
मपि उच्चस्थानेषु बलिदानात् धूपदाहाच्च न निववृतिरे । परमे-
३६ श्वरीयमन्दिरस्योर्द्ध्वं द्वारं तेनैव राज्ञा निर्म्ममे । एतस्य योथमस्यावशिष्टं
चरित्रं तस्य सर्व्वाः क्रियाश्च किं यिहूदाया भूपतीनां पुरावृत्तपुस्तके
३७ लिखितानि न विद्यन्ते? तस्मिन् समये परमेश्वरोऽरामीयं राजानं
रित्सीनं रिमलियस्य तनयं पेकहञ्च यिहूदाया विरुद्धं प्रेषयितुम् आर-
३८ ब्धवान् । अनन्तरं योथमो निजपितृलोकवत् महानिद्रां गतो निज-
पूर्व्वपुरुषस्य दायूदो नगरे स्वपितृलोकानां सन्निधौ श्मशाने निहितश्च
ततस्तस्य सुत आहसस्तस्य पदे राजा बभूव ।

---

## १६ षोडशोऽध्यायः ।

१ आहसस्य कुराजत्वं ५ तस्य सङ्कटं ७ तस्य मन्त्रणं १० नूतनवेदिनिर्म्माणं १७ मन्दिरलोठनं १९ तस्य निधनं ।

१ रिमलियसुतस्य पेकहस्य सप्तदशे राजत्ववत्सरे यिहूदाया भूपते
२ र्योथमस्य सुत आहसो राजत्वं कर्त्तुम् आरेभे । स विंशतिवत्सरवयस्कः
सन् राज्यं प्राप्य यिरूशालमे षोडशवत्सरान् यावत् राजत्वं चकार ।
स निजप्रभोः परमेश्वरस्य साक्षात् निजपूर्व्वपुरुषो दायूदिव सदा-
३ चारं न चकार, किन्त्विस्रायेलीयनरपतीनां मार्गे चचार । अपरं परमे-
श्वर इस्रायेलीयवंशस्य सम्मुखाद् यान् भिन्नजातीयान् दूरीकृतवान्
तेषां घृण्यक्रिया आचरन् स निजात्मजमपि वह्निं प्रवेशयामास ।
४ अपरं उच्चस्थानेषु पर्व्वतेषु सर्व्वेषां हरिद्वृक्षाणां तलस्थाने च बलि-
दानं धूपदाहञ्च चकार ।
५ अनन्तरम् अरामीयो राजा रित्सीन इस्रायेलीयनृपती रिमलियस्य
पुत्रः पेकहश्च युद्धार्थं यिरूशालमम् आगत्याहसम् अवरुरुधतुः किन्तु

तं पराजेतुं न शेकतुः। तथाप्यरामीयो राजा रित्सीन एलतनगरं ६
पुनर्व्वारम् अरामस्य वशीचकार। तत एलतनगराद् यिहूदीयेषु
बहिष्कृतेष्वरामीयास्तत् स्थानम् आगत्याद्यापि तत्र वसन्ति।

अनन्तरम् आहसोऽश्शूरीयनृपतेस्तिग्लत्पिलेषरस्य समीपं दूतान् ७
प्रहित्य वाचमिमां जगाद, अहं तव दासः पुत्रश्च, त्वम् आगत्य
मद्विरुद्धं समरकारिभ्योऽरामीयेस्रायेलीययो राज्ञोः करेभ्यो माम्
उद्धर। अपरम् आहसः परमेश्वरीयमन्दिरे राजनिवेशनस्य भाण्डा- ८
गारेषु च विद्यमानानि सकलसुवर्णरजतानि गृहीत्वाश्शूरीयराजस्य
समीपं पारितोषिकं प्रेषयामास। ततोऽश्शूरीयराजस्तस्य वचसि मनो ९
निदधे। अपरम् अश्शूरीयराजो दम्मेषकस्य विरुद्धं गत्वा तन्नगरं परा-
जिगाय तदीयप्रजाः कीरं नीत्वा प्रवासयामास रित्सीनं जघान च।

अपरम् आहसो नृपतिरश्शूरीयराजं तिग्लत्पिलेषरं साक्षात् कर्त्तुं १०
दम्मेषकं जगाम तत्र दम्मेषके यज्ञवेदिमेकां विलोक्य नृपतिराहस-
स्तस्या वेद्या अनुकृतिं तत्कल्पितसर्व्वकर्म्मणो निदर्शनञ्च याजकस्योरियस्य
सविधं प्रेषयामास। ततो दम्मेषकाद् राज्ञ आहसस्य प्रत्यागमनात् ११
पूर्व्वं याजक ऊरियस्तत्सदृशीम् एकां यज्ञवेदीं निर्म्मापयामास राज्ञा-
ऽऽहसेन दम्मेषकाद् यन्निदर्शनं प्रहितं तदनुसारेणैव याजक ऊरियस्तां
निर्म्मापयामास। अनन्तरं राजा दम्मेषकात् समागत्य वेदिं विलोक्य १२
तस्या वेद्याः समीपं गत्वा तदुपरि होमार्थकबलीन् ददौ। स तत्र १३
स्वीयहव्यानि भक्ष्यनैवेद्यानि च दाहयामास पेयनैवेद्यानि निषिषेच
तस्यां वेद्याञ्च स्वीयमङ्गलार्थकबलीनां शोणितं विचकार च। अपरं पर- १४
मेश्वरस्य सम्मुखे या पित्तलमयी वेद्यासीत् स तां मन्दिरस्य सम्मुखाद्
अर्थतः परमेश्वरीयमन्दिरस्य नूतनवेद्याश्च मध्याद् दूरयित्वा नूतन-
वेद्या उत्तरपार्श्वे स्थापयाञ्चकार। अनन्तरं नृपतिराहसो याजकम् १५
ऊरियम् इमां वाचम् आज्ञापयामास बृहद्वेद्यां प्रात्यूषिकप्रादोषिकौ
होमार्थकबली राज्ञो होमार्थकबलयस्तस्य नैवेद्यानि चापरं देशीय-
लोकानां होमार्थकबलयस्तेषां भक्ष्यपेयनैवेद्यानि च त्वया दीयन्तां
तस्याञ्च होमार्थकानाम् अन्येषाञ्च बलीनां शोणितानि विकीर्य्यन्ताम्
अपरं पित्तलमयीं वेदिमधि मया विवेचनीयं। अनन्तरं याजक ऊरिय १६
आहसस्य नरपतेराज्ञानुसारेण तत् सर्व्वं चकार।

अनन्तरं नरपतिराहसः पीठानां मध्यदेशान् सर्व्वान् छित्त्वा तद्- १७

परितः प्रक्षालनपात्राणि आधारादवाचकार पित्तलमयवृषभाणामुप-
१८ रिस्थं समुद्रपात्रम् अवरोह्य पाषाणमय्यां भूम्यां निदधे। अपरं ते
विश्रामदिनस्य कृते मन्दिरमार्गस्य यदाच्छादनं चक्रुः नृपस्य प्रवेश-
मार्गस्य यद्द्वारं कृतवन्तस्तद् अश्शूरीयराजस्य साध्वसात् परमेश्वरीय-
मन्दिरस्य मध्ये निदधिरे ।

१९ एतस्याहसस्यावशिष्टानां क्रियाणां विवरणं किं यिहूदाया भूपतीनां
२० पुरावृत्तपुस्तके लिखितं न विद्यते ? अनन्तरम् आहसो निजपितृलोका
इव महानिद्रां गतो निजपितृलोकानां सन्निधौ दायूदनगरे श्मशाने
निहितश्च। अपरं तस्य तनयो हिष्कियस्तस्य पदे राजा बभूव ।

---

## १७ सप्तदशोऽध्यायः ।

१ होशेयस्य कुराजत्वं तस्य दण्डः ५ इस्रायेलीयलोकानां पातकं बन्दित्वञ्च २४ तेषां नगरेष्वन्यलोकानां स्थापनञ्च ।

१ यिहूदाया आहसस्य राज्ञो द्वादशे राजत्ववत्सरे एलाहस्य पुत्रो
होशेयः शोमिरोणे राजा भूत्वा नववत्सरान् यावद् इस्रायेलो राजत्वं
२ चकृवान् । स परमेश्वरस्य साक्षात् कुत्सिताचारं चकार किन्तु पूर्व्व-
३ वर्त्तिनाम् इस्रायेलीयराजानां तुल्यो न बभूव । अनन्तरम् अश्शूरीये
राज्ञि शल्मनेषरे तस्य विरुद्धम् आगते होशेयस्तस्य दासो भूत्वा तस्मै
४ करं दातुम् आरेभे। अनन्तरम् अश्शूरीयो राजा होशेये विश्वासघा-
तित्वं प्राप्तवान् यतः स मिसरस्य सो नृपतेः समीपं दूतान् प्रेष्याश्शूरीय-
राजाय वार्षिकं करं पूर्व्ववन्नाददात् अतो ऽश्शूरीयो राजा तं बद्धा
कारायां ररोध ।

५ अनन्तरम् अश्शूरीयो राजा कृत्स्नं देशम् आचक्राम शोमिरोणं गत्वा
६ त्रीन् वत्सरान् यावत् तन्नगरम् अवरुरोध च । अनन्तरं होशेयस्य
नवमे राजत्ववत्सरेऽश्शूरीयो राजा शोमिरोणं वशीकृत्येस्रायेलीयलो-
कान् अश्शूरदेशं निनाय तत्र च हलहे गोषणदेशीयहाबोरतटिनीतटे
७ मादीयानां नगरेषु च तान् प्रवासयामास । यतस्ते मिसरदेशात्
मिसरीयफिरौणो नरपतेरधीनत्वाद् इस्रायेलवंशस्यानेतुः स्वेषां प्रभोः
८ परमेश्वरस्य विरुद्धं कलुषाणि कृत्वेतरदेवान् सेवितवन्तः। अपरं भि-
न्नजातीया ये लोकाः परमेश्वरेणेस्रायेलवंशस्य सम्मुखाद् दूरयाञ्चक्रिरे
तेषां विधीन् इस्रायेलीयनरपतिभि र्निर्म्मितान् विधींश्चाचरितवन्तः ।

यानि कर्म्माणि न कर्त्तव्यानि तानीस्रायेलीयलोकाः स्वीयप्रभोः परमेश्व- ९
रस्य विरुद्धं रहोऽकुर्व्वन् अपरं रक्षकगेहान्यारभ्य प्राचीरवेष्टितनग-
राणि यावत् तेषां सकलनगरेषु तेषां कृते भगुस्थानानि निरमुः। अपरं १०
सर्व्वेषाम् उच्चपर्व्वतानां मूलेषु सर्व्वेषां हरिद्वर्णवृक्षाणाम् अधश्च
प्रतिमा अस्थापयन् चैत्यवृक्षांश्चारोपयन्। अपरं ये भिन्नजातीयाः पर- ११
मेश्वरेण तेषां सम्मुखाद् दवयाञ्चक्रिरे त इव सर्व्वेषु भगुस्थानेषु धूपान्
अज्वालयन् परमेश्वरं क्रोधयितुं कलुषाण्यकुर्व्वंश्च। अपरं परमेश्वरो १२
यदधि कथितवान् एतादृशं कर्म्म युष्माभि र्न कर्त्तव्यमिति तदेवार्थतः
प्रतिमापूजाम् अकुर्व्वन्। तथापि परमेश्वरः सर्व्वै र्भविष्यद्वादिभि १३
र्दर्शकैश्चेस्रायेलीयान् यिहूदीयांश्च लोकान् आदेशमेनं ज्ञापितवान् यूयं
स्वेषां पातकमार्गेभ्यः परावर्त्तध्वम् अहं युष्माकं पितृलोकान् यां व्यवस्थाम्
आदिष्टवान् मम दासानां भविष्यद्वादिनां हस्तै र्युष्माकं सन्निधिञ्च यां
शिक्षां प्रेषितवान् तदनुसारेण मदाज्ञा विधींश्च पालयतेति। किन्तु ते १४
तद् वाक्यं ग्रहीतुं मतिमकृत्वा स्वीयप्रभौ परमेश्वरे प्रत्ययवर्ज्जिताः पूर्व्व-
पुरुषा इव स्वेषां ग्रीवा दृढा अकुर्व्वन्। ते तस्य विधीन् तेषां पितृलो- १५
कान् प्रति स्थापितं तस्य नियमं तेभ्यो दत्तानि प्रमाणवाक्यानि चावज्ञा-
यासारमूर्त्तीनाम् अनुगामिनोऽभवन् किञ्च हतबुद्धयो भूत्वा येषाम्
अनुवर्त्तनात् ते परमेश्वरेण निवारितास्तेषां चतुर्दिक्स्थानाम् अन्यजा-
तीयानामेवानुगामिनोऽभवन्। ते स्वेषां प्रभोः परमेश्वरस्य सर्व्वा आज्ञा १६
लङ्घित्वा स्वेषां कृते निर्म्मितौ द्वौ वत्सौ निरमुश्चैत्यवृक्षान् अस्थापयन्
गगनीयज्योतिर्गणान् अपूजयन् बालम् असेवन्त च। अपरं स्वेषां १७
पुत्रान् पुत्रीश्च वह्निं प्रावेशयन् गणकत्वं मायाविलञ्च समाचरन् परमे-
श्वरस्य साक्षात् कुत्सिताचारं कर्त्तुं तं क्रोधयितुञ्च स्वेषां विक्रयम्
अकुर्व्वत च। एतत्कारणात् परमेश्वर इस्रायेलवंशान् प्रति भृशं क्रुद्धा १८
निजसमक्षात् तान् दवयामास केवलं यिहूदावंशं विना नान्यः कोऽपि
वंशोऽवशिशिषे। अपरं यिहूदावंशीया लोका अपि निजप्रभोः परमे- १९
श्वरस्याज्ञा नापालयन् इस्रायेलीयलोकै र्निर्म्मिता विधयस्तैरप्यनुजग्मिरे।
अतः परमेश्वरः कृत्स्नम् इस्रायेलीयवंशं विहाय लोकान् क्लेशयामास २०
यावच्च निजसमक्षात् न दवयामास तावत् तान् नाशकानां हस्तेषु
समर्पयामास च। स एव दायूदो वंशाद् इस्रायेलीयलोकान् प्रचिच्छेद, २१
ते च निबाटस्य पुत्रं यारबियामं राजानं चक्रुः स यारबियामश्च परमे-

श्वरस्य सेवात इस्रायेलीयलोकान् निवर्त्त्य तान् महापापेन कलङ्कितान्
२२ अकरोत्। अतो यारवियामो यानि पापानि कृतवान् इस्रायेलीयलोका-
२३ स्तान्येवाचेरुस्तदनुगमनान्न निवृत्तिरे। अतो चेतोः परमेश्वरो निज-
सेवकानां भविष्यद्वादिनां वदनै र्यद्यत् कथयामास, तदनुसाराद् अव-
शेषम् इस्रायेलीयवंशं निजसम्मुखाद् दवयामास। इत्थम् इस्रायेलीय-
वंशा निजदेशाद् असूरदेशं नीता अद्यापि तस्मिन् स्थाने प्रवसन्ति।
२४ अनन्तरम् असूरीयराजो बाबिलात् कूथातो ऽव्वातो हमाताच्
सिफर्वयिमाच्च लोकान् आनीयेस्रायेलो विनिमयेन शोमिरोणदेशस्थ-
नगरेषु वासयाञ्चकार ततस्ते शोमिरोणम् अधिकृत्य तत्रत्येषु नगरेषु
२५ वसतिं चक्रुवांसः। तत्र स्थाने तेषां वासारम्भसमये ते परमेश्वरान् न
बिभयाञ्चक्रुरेतत्कारणात् परमेश्वरस्तेषां मध्यं सिंहान् प्राहिणोत् ते
२६ च तेषां कतिपयलोकान् विनाशयितुम् आरेभिरे। अतो लोका असू-
रीयराजं बभाषिरे त्वं यान् जातीयान् देशान्तरीकृत्य शोमिरोणदेश-
स्थनगरेषु निवासितवान् ते तद्देशीयदेवस्य धर्म्ममतं न जानन्त्येतत्का-
रणात् स तेषां मध्यं केशरिणः प्रहितवान् अपरं पश्य तद्देशीयदेवस्य
२७ धर्म्ममतस्यानवगतत्वात् ते केशरिभि र्विनाश्यन्ते। अनन्तरम् असूरीय-
राज इत्याज्ञापयामास यूयं तस्मात् स्थानाद् यान् याजकान् आनी-
तवन्तस्तेषाम् एकं जनं तं देशं प्रेषयत लोकास्तस्य समीपं गत्वा वसन्तु
२८ स च तान् तद्देशीयदेवस्य धर्म्ममतम् आदिशतु। ततः शोमिरोणात्
तैः प्रवासितानां याजकानां जन एको गत्वा वैथेले न्यवसत्, अपरं येन
२९ प्रकारेण परमेश्वरः सेवितव्यस्तत् तान् आदिशत। तथाप्येकैकस्या जाते
र्लोकाः स्वं स्वं देवं निर्म्ममिरे ते नानाजातीयाः शोमिरोणीया लोका
येषु नगरेषु न्यवसन् तन्मध्ये भगुस्थानीयमन्दिराणि निर्म्माय तत्रैकैकस्या
३० जाते र्देवान् स्थापयाञ्चक्रिरे। इत्थं बाबिलीया लोकाः सुक्कोद्बिनोतं
३१ कूथीयलोका नेर्गलं हमातीयलोका अशीमम् अव्वीयाश्च निभसं तर्त-
कञ्च निर्म्ममिरे सिफर्व्वीयाश्चादम्मेलकानम्मेलकाविति नामानौ सिफ-
३२ र्व्वीयदेवावुद्दिश्य निजबालकान् अग्निना दाहयाञ्चक्रुः। ते परमेश्वरम्
असेवन्त नीचलोकानां मध्यात् स्वेषां कृते भगुस्थानीयमन्दिरेषु यज्ञ-
३३ कारिणो याजकान् वव्रिरे च। ते यथा परमेश्वरम् असेवन्त तथा
यस्माद् यस्मात् देशाद् आनीयन्त तेषां धर्म्ममतानुसारेण स्वं स्वं देव-
३४ गणमप्यसेवन्त। तेऽद्यापि पूर्व्वकालीयाचारवद् आचरन्ति परमेश्वरात्

न बिभ्यति तस्य विधिव्यवस्थानुसारेणार्थतः परमेश्वरो यस्य नामेस्रायेलं
चकार तस्य याकूबो वंशं याम् आज्ञां व्यवस्थाञ्चादिष्टवान् तदनुसारेण
नाचरन्ति। यतः परमेश्वरस्तद्वंशीयैः समं नियमं विधाय तान् इत्या- ३५
ज्ञापितवान् यूयम् इतरदेवेभ्यो न बिभीत तान् न प्रणमत तान् न
सेवध्वं तेभ्यो बलीन् न दद्ध्वं। किन्तु यः परमेश्वरो महापराक्रमेण वि- ३६
स्तीर्णबाहुना च मिसरदेशाद् युष्मान् आनीतवान् तस्माद् बिभीत तं
प्रणमत तस्मै बलीन् दद्ध्वञ्च। अपरं स युष्माकं कृते याम् विधीन् राज- ३७
नीतीश्च यां व्यवस्थाम् आज्ञाश्च लेखयितवान् यूयं मनो निधाय तदनु-
सारेण सर्व्वदाचरत नेतरदेवगणाद् बिभीत। मया युष्माभिः समं यो ३८
नियमोऽकारि तं न विस्मरत नेतरदेवगणाद् बिभीत। स्वेषां प्रभोः ३९
परमेश्वरादेव बिभीत तेन स सकलरिपूणां हस्ताद् युष्मान् उद्धारयि-
ष्यति। किन्तु ते तानि वाक्यान्यश्रुत्वा स्वेषां पूर्व्वीयाचारवद् आचा- ४०
रम् अकुर्व्वन्। इत्थं ते भिन्नजातीया लोकाः परमेश्वराद् भेतुं स्वेषां ४१
निर्म्मिताः प्रतिमा अपि सेवितुञ्चोपचक्रमिरे तेषां पुत्त्राः पौत्त्राश्च स्वेषां
पूर्व्वपुरुषाणाम् आचारमिवाद्याप्याचारं कुर्व्वन्ति।

---

## १८ अष्टादशोऽध्यायः।

१ हिष्कियस्य सुराजत्वकरणं ४ देवपूजनदूरयणं ९ शोमिरोणस्य पराजितत्वं १३ सन्हेरिबस्य यिहूदादेशाक्रमणं पारितोषिकप्राप्तिश्च १७ रबशाके निन्दाकथनञ्च।

एलायपुत्त्रस्येस्रायेलीयनरपतेर् होशेयस्य तृतीये राजत्ववत्सरे यिहू- १
दाया आहसस्य नृपतेः पुत्त्रो हिष्कियो राजा बभूव। स पञ्चविंशति- २
वत्सरवयस्कः सन् राजत्वं कर्त्तुमारभ्यैकोनत्रिंशद्वत्सरान् यावद् यिरू-
शालमे राजत्वं चकार सिखरियस्य दुहिताबी तस्य जनन्यासीत्। स ३
निजपूर्व्वपुरुषो दायूदिव परमेश्वरस्य साक्षात् सदाचारं चरितवान्।

स उच्चस्थानान्युदच्छिनत् प्रतिमा अभनक् चैत्यतरूंश्चाच्छिनत् अपरं ४
मूसा यं पित्तलमयं सर्पं निर्म्मितवान् तमपि बभञ्ज यत इस्रायेल्वंशा-
स्तस्याग्रपर्य्यन्तं तमुद्दिश्य धूपान् अज्वालयन् अपरं स तस्य नाम
निहुष्टन् (पित्तलखण्डमिति) चक्रवान्। स इस्रायेलः प्रभौ परमेश्वरे ५
ऽविश्वसत् यिहूदाया भूपतीनां मध्ये तत्पूर्व्वं परतो वा तस्य समानः
कोऽपि नासीत्। स परमेश्वर आसक्तो बभूव तस्य पश्चाद्गमनात् न परा- ६
वृत्ते किन्तु परमेश्वरो मूसां यद्यद् आज्ञापयत् तत् पालयाञ्चकार।

७ अपरं परमेश्वरस्तस्य साहाय्यं चकार स यस्मिन् कर्म्मणि प्रवर्त्तते
तस्मिन् कृतार्थो बभूव। सोऽश्शूरीयनरपतेरधीनत्वं विहाय तं पुन र्न
८ सिषेवे। अपरम् असौ तस्य सीमाञ्च यावद् आरक्षकदुर्गात् प्राचीर-
वेष्टितनगरपर्य्यन्तं पिलेष्टीयान् पराजिग्ये।

९ अनन्तरं हिष्कियस्य नरपतेश्चतुर्थे राजत्ववत्सरे एलायपुत्रस्येस्रा-
येलीयनरपते र्होशेयस्य सप्तमे राजत्ववत्सरेऽश्शूरीयः शल्मनेषरो राजा
१० शोमिरोणस्य विरुद्धम् आगत्य तद् अवरुरोध, वत्सरत्रयात् परं तद्
वशीचकार च। राज्ञो हिष्कियस्य षष्ठे राजत्ववत्सरेऽर्थत इस्रायेली-
११ यराजस्य होशेयस्य नवमे राजत्ववत्सरे शोमिरोणं पराजिग्ये। अपरम्
अश्शूरीयराज इस्रायेलीयान् प्रवासयन् अश्शूरदेशं नीत्वा हलहे गोष-
नदेशस्थस्य हाबरनदस्य तीरे मादीयानां नगरेषु च स्थापयाञ्चकार।
१२ यतस्ते स्वप्रभोः परमेश्वरस्य वचनं न गृहीतवन्तस्तस्य नियमं परमेश्वर-
दासस्य मूससः सर्व्वम् आदेशञ्च लङ्घितवन्तस्तं ग्रहीतुं पालयितुं वा
नाङ्गीकृतवन्तश्च।

१३ अनन्तरं हिष्कियराजस्य चतुर्दशे राजत्ववत्सरेऽश्शूरीयः सन्हेरिबो
राजा यिहूदायाः प्राचीरवेष्टितानां सर्व्वनगराणां विरुद्धम् आगत्य
१४ तानि वशीचकार। ततो यिहूदाया हिष्कियो राजा लाखीशनगरे
ऽश्शूरीयनरपतेः समीपं दूतं प्रहित्य कथयामास, अहम् अपराधं कृत-
वान् त्वं मम समीपात् परावृत्य गच्छ त्वं मयि यं भारम् अर्पयिष्यसि
१५ तमहं सहिष्ये। अतोऽश्शूरीयो राजा यिहूदाया हिष्कियनरपते र्दण्डार्थं
शतत्रयकिक्करपरिमितं रजतं त्रिंशत्किक्करपरिमितं सुवर्णञ्च निरू-
१६ पयामास। अतो हिष्कियः परमेश्वरस्य मन्दिरे राजगृहस्य भाण्डा-
गारेषु च विद्यमानानि सकलरजतानि तस्मै ददिवान्। यिहूदाया
राजा हिष्कियः परमेश्वरीयमन्दिरस्य द्वारस्य ये कपाटे यौ स्तम्भौ च
स्वर्णेन मण्डितवान् तेषामपि सुवर्णं तत्काले हिष्कियेन छित्त्वाश्शूरीय-
राजाय दत्तानि च।

१७ अनन्तरम् अश्शूरीयो राजा बहुभिः सैन्यसामन्तैः सार्द्धं तर्त्तनं रब्-
सारीषं रब्शाकिञ्च लाखीशनगराद् यिरूशालमे हिष्कियस्य नृपस्य
समीपं प्रेषयामास; ते तु प्रस्थाय यिरूशालमं सम्प्राप्योपस्थाय चो-
र्द्धस्थितायाः पुष्करिण्याः प्रणाल्यां रजकक्षेत्रस्य मार्गेऽवस्थितवन्तः।
१८ ततो राजानि तैराहूते हिष्कियस्य पुत्र इलियाकीमनामा राजगृहा-

ध्यक्षः शिब्नो लेखक आसाफस्य पुत्रो योयाहनामा पुरावृत्तरचकश्च
ताम् साक्षात् कर्त्तुं वहिर्जग्मुः। ततो रब्शाकिस्तान् जगाद, यूयं १९
हिष्कियम् इमां कथां भाषध्वम्, अश्शूरीयो भूपति र्महाराजः कथ-
यति, त्वं यं विश्वासं करोषि स कीदृशो विश्वासः? संग्रामाय मम २०
मन्त्रणा बलञ्चास्त इति त्वं कथयसि, किन्तु तत् शब्दमात्रं। तस्मात् त्वं
कस्मिन् विश्वस्य मदीयाधीनतां त्यक्तवान् असि? पश्य त्वं तस्यां भग्न- २१
नलरूपायां यष्ठ्याम् अर्थात् मिसरि विश्वसिषि; किन्तु यः कश्चित् ताम्
आलम्बते तस्य हस्तस्तया विद्धः क्षतयुक्तश्च भवति, स्वीयशरणागतान्
सर्व्वान् प्रति मिस्रीयः फिरौण् राजा तादृशः। यूयं यदि मां वदथ २२
वयं स्वप्रभौ परमेश्वरे विश्वसिमस्तर्हि यस्य प्रांशुस्थानानि वेदीश्च दूर-
यित्वा हिष्कियो यिहूदीयान् यिरूशालमनिवासिनश्च मनुष्यान् भाषि-
तवान् यूयं केवलम् अत्र यिरूशालम एतस्या वेद्याः सम्मुखे भजध्वं स
किम् एष नहि? इदानीं त्वं मम प्रभुनाश्शूरीयराजेन सह पणं कुरु; २३
त्वं यद्यारोहिलोकान् प्राप्तुं शक्नुयास्तर्हि द्वे सहस्रे हयानहं तुभ्यं दा-
स्यामि। तस्मिन् असाध्ये सति मम प्रभोरतिक्षुद्राणां भृत्यानां मध्य २४
एकं सेनापतिमपि कथं जेष्यसि? किन्तु त्वं रथानां हयानाञ्च कृते
मिसरि विश्वसिषि। परमेश्वरीयाज्ञां विना स्थानमिदम् उच्छेत्तुम् २५
किमहम् इदानीमागमं? त्वं तं देशं गत्वा विनाशयेति परमेश्वरेणैवाहम्
आज्ञापितः।

तत इलियाकीमः शिब्नो योयाहश्च रब्शाकये कथयामासुः, प्रार्थ- २६
यामहे वयम्, अरामीयभाषया निजदासान् सम्भाषतां यतो वयं तां
बुध्यामहे; प्राचीरोपरिस्थितानां लोकानां कर्णगोचरे ऽस्मान् यिहूदि-
भाषया न सम्भाषतां। रब्शाकिस्तान् प्रत्युवाच, मम प्रभुः किम् एत- २७
द्वाक्यकथनार्थं केवलं तव राजानं त्वाञ्च प्रति मां प्रेषितवान्? अमी ये
लोका युष्माभिः सार्द्धं स्वां स्वां विष्ठां भोक्तुं स्वं स्वं मूत्रं पातुञ्च प्राची-
रोपविष्टाः सन्ति तेषां सर्व्वेषामपि सन्निधिं किमहं न प्रेरितः? तदन- २८
न्तरं रब्शाकिस्तिष्ठन् उच्चैः यिहूदिभाषया वदितुम् आरब्धवान्,
स जगाद, यूयं महाराजस्यार्थाद् अश्शूरीयस्य नृपतेः कथां शृणुत।
महाराजः कथितवान्, हिष्कियो युष्मान् न प्रवञ्चयतु; यतो मम २९
करात् युष्मान् रक्षितुं स न शक्नोति। तथा परमेश्वरो ऽस्मान् अवश्यम् ३०
उद्धरिष्यति नगरमिदं कदापि नाश्शूरीयस्य राज्ञो हस्ते समर्पयिष्यत

३० इति कथयित्वा हिष्कियो युष्मान् परमेश्वरे न विश्वासयतु । हिष्कि-
यस्य कथां मा शृणुत, यतोऽश्शूरीयो राजा कथितवान्, यूयं मया
सन्धाय मदन्तिकमायात यावद् अहम् आगत्य युष्मद्देशवत् शस्य-
द्राक्षारसो भक्ष्यं द्राक्षाक्षेत्रं तैलदजितवृक्षं मधु चैतैर्युक्तं कमपि देशं
३२ युष्मान् न नयामि तावद् युष्माकम् एकैको जनः स्वानि स्वानि द्राक्षा-
फलान्युडुम्बरफलानि च भक्षतु स्वस्वपुष्करिण्या जलञ्च पिबतु तथा
कृते यूयं जीविष्यथ न मरिष्यथ । परमेश्वरोऽस्मान् उद्धरिष्यतीति
३३ वाक्येन हिष्कियो युष्मान् न वञ्चयतु । अन्यदेशीयानां देवा अश्शूरीयस्य
३४ नृपते र्हस्तात् किं स्वं स्वं देशम् अरक्षन्? हमातार्पदीया देवाः कुत्र?
सिफर्व्वयिमदेशीया हेनादेशीया अव्वादेशीयाश्च देवाः कुत्र? देवाः किं
३५ मदीयहस्तात् शोमिरोणम् अरक्षन्? यद्येतेषां देशानां देवानां मध्ये
कोपि मम हस्तात् स्वदेशं रक्षितुं नाशक्नोत् तर्हि यिहोवा मम हस्तात्
३६ किं यिरूशालमं मोचयिष्यति? किन्तु लोका निरुत्तराः सन्तो ऽतिष्ठन्
एकस्या अपि वाचः प्रत्युत्तरं नोक्तवन्तः यतस्तमुत्तरं मा ब्रूतेति ते राज्ञा
३७ प्राज्ञापिताः । अनन्तरं हिल्कियस्य पुत्र इलियाकीमो राजगृहाधि-
पतिः शिब्नो लेखक आसाफस्य पुत्रो योयाहश्चेतिहासरचयिता च
स्ववस्त्राणि छित्त्वा हिष्कियस्य समीपम् आगत्य रब्शाकेर्वाक्यानि तं
ज्ञापयामासुः ।

---

## १९ ऊनविंशोऽध्यायः ।

१ यिशायियस्य समीपं हिष्कियस्य दूतप्रेषणं यिशायियस्योत्तरञ्च ८ हिष्कियस्य समी-
पम् अश्शूरराजेन दूतस्य पुनर्व्वारं प्रेषणं १४ हिष्कियस्य प्रार्थनं २० यिशायियस्य
भविष्यद्वाक्यं ३५ सन्हेरिबस्य सैन्यस्य विनाशस्तस्य निधनञ्च ।

१ राजा हिष्कियस्तानि वाक्यानि श्रुत्वा निजवस्त्राणि छित्त्वा शाण-
२ वसनं परिधाय च परमेश्वरस्य मन्दिरं जगाम । अपरं परिहितशाण-
वसनान् राजगृहाधिपम् इलियाकीमं शिब्नं लेखकं प्राचीनयाजकांश्चा-
३ मोत्सस्य पुत्रस्य भविष्यद्वक्तु र्यिशायियस्य समीपं प्रेषयामास । ततस्ते तं
जगदुः हिष्कियोऽकथयत्, अद्यतनं दिनं क्लेशभर्त्सनापमानानां दिनं, यतो
४ बालकप्रसवस्य समय उपस्थितः किन्तु प्रसवाय शक्ति र्नास्ति । रब्-
शाकेः प्रभुरश्शूरीयो नृपतिरमरस्येश्वरस्य निन्दार्थं यं रब्शाकिं प्रेषित-
वान् तस्य वाक्यानि तव प्रभुना परमेश्वरेण श्रूयन्तां तव प्रभुः परमेशस्तानि

श्रुत्वा समुचितं फलं तस्मै ददातु; अतएव त्वम् अवशिष्टलोकानां मङ्गलं
प्रार्थयस्व । इत्थं हिष्कियस्य नृपस्य दासगणे यिशायियस्य समीपमुप- ५
स्थिते सति यिशायियस्तान् अवदत्, युष्माकं स्वामिनं वदत, परमेश्वरो ६
ऽकथयत्, त्वं यानि वचांस्यश्रौषीः यैरश्शूरीयस्य राज्ञो दासा माम्
अनिन्दन् तेभ्यो मा भैषीः । पश्य मया तन्मध्यम् एक आत्मा प्रवेशयिष्यते, ७
स काञ्चित् वार्त्तां श्रुत्वा स्वं देशं परावृत्य यास्यति ततोऽहं तं स्वदेशे
खड्गेन पातयिष्यामि ।

ततः परम् अश्शूरीयो राजा लाखीशनगराद् प्रस्थितवान् इति वार्त्तां ८
निशम्य रब्शाकिः परावृत्य लिब्नानगरम् अव्रजत्तदा तेन राज्ञा सार्द्धं
मिलितवान् । तदानीं कूशदेशीयो राजा तिर्हकस्त्वया सह संग्रामयि- ९
तुम् आगच्छति वार्त्तामेतां स श्रुतवान्, ततः स पुनर्हिष्कियस्य समीपं
दूतान् प्रहित्य कथितवान्, यूयं यिहूदीयं हिष्कियं नृपं वदत, यिरूशा- १०
लमम् अश्शूरीयराजस्य करे न समर्पयिष्यत इति वाचा तव विश्वासभूमि-
रीश्वरस्त्वां न वञ्चयतु । पश्य सर्व्वदेशानां विनाशायाश्शूरीयराजै र्यद्यद् ११
अकारि तत् त्वं श्रुतवान् अतस्त्वं कथम् उद्धरिष्यसे? मम पूर्व्वपुरुषै र्विना- १२
शितानां गोषन्हारणरेत्सफदेशीयानां तिलसरनिवासिनाम् एदन-
वंशीयानां देवाः किं तान् उदधरन्? हमातस्य राजा कुत्र? अर्पदस्य १३
राजा च कुत्र? सिफर्व्वयिमनगरस्य हेनाया अव्वायाश्च राजानो वा क्व?

ततो हिष्कियो दूतानां हस्तात् तत्पत्रं नीत्वा पपाठ; पश्चात् परमे- १४
श्वरस्य मन्दिरं गत्वा परमेश्वरस्य सम्मुखे तद् विस्तारयामास । तदा १५
हिष्कियः परमेश्वराय प्रार्थनामेतां न्यवेदयत्, हे किरूबयो र्मध्यवासिन्
इस्रायेल ईश्वर यिहोवाः केवलस्त्वमेव पृथिव्याः सर्व्वराज्यानामीश्वरः,
स्वर्गः पृथिवी च त्वया सृष्टजाते । हे परमेश्वर कर्णौ निधाय शृणु, हे १६
परमेश्वर चक्षुषी उन्मील्यावलोकय । अमरेश्वरस्य निन्दार्थं सन्हेरी-
बेन या याः कथाः प्रहिताः स्ताः शृणु । हे परमेश्वर, सत्यम् अश्शूरीया १७
राजानः सर्व्वजातीयान् तेषां देशांश्च अनाशयन् तेषां देवांश्चाग्नौ न्यक्षि- १८
पन् यतस्ते नेश्वराः किन्तु मानुषाणां हस्तकृतानि काष्ठमयानि प्रस्तरम-
यानि च वस्तूनि, तस्मात् ते तान् नाशितवन्तः । हे अस्माकं प्रभो परमे- १९
श्वर साम्प्रतं त्वं तस्य हस्ताद् अस्मान् उद्धर, तेन हे यिहोवास्त्वमेवेश्वरो-
ऽसीति पृथिव्याः सर्व्वराज्यीया जना ज्ञास्यन्ति ।

ततः परम् आमोषस्य पुत्रो यिशायियो हिष्कियं प्रति कथामेतां २०

प्रेषयामास; इस्रायेलः प्रभुः परमेश्वर इमां कथां कथयति, त्वम् अस्मू-
२१ रीयं सन्हेरीबं नृपतिमधि मह्यं यत् न्यवेदयस्तन्मयाश्रावि । तदधि
परमेश्वरः कथामेतां कथयति ।

सियोनाख्या तु कन्या त्वां संविहस्यावमन्यते ।
तव पश्चाद् यिरूशालमदुहिता चाडयेत् शिरः ।
२२ त्वं कस्य निन्दनं कस्य चापमानं विधत्तवान् ।
उच्चशब्दोर्द्धदृष्टी चाकरोः कस्य विरुद्धतः ।
इस्रायेलधर्म्मरूपो यः किं तदीयविरुद्धतः ।
२३ निजैर्दूतैः परेशं त्वं निन्दित्वेति वचोऽवदः ।
शिलोच्चयस्य शृङ्गाणि प्रभूतस्यन्दनैरहं ।
अर्थात् पार्श्वं लिवानोनः समुपारूढवानहम् ।
तदीयानेरसान् वृक्षान् उन्नतांश्छिन्नवानहं ।
अच्छिदन्तोत्तमास्तस्य देवदारुद्रुमा मया ।
तदीयोच्चतमं स्थानं घोरमं काननं गतं ।
२४ अहं निखन्य दुष्प्राप्यं कीलालं परिपीतवान् ।
प्राचीरवेष्टितानाञ्च नगराणां जलाशयान् ।
सर्व्वान् पादतलैः स्वीयैः संशुष्कीकृतवानपि ।
२५ अपरं किं त्वया नैव प्रसमाकर्णितं त्विदं ।
जीर्णराशीकरिष्यन्ते दृढपूर्य्यस्त्वया किल ।
मया पुरा यदेतद्धि समकारि निरूपणं ।
निश्चितञ्च मया यत् प्राक् तत् सिद्धिमधुना गतं ।
२६ अतस्तेषां प्रजा भीतिं दौर्ब्बल्यञ्च त्रपां गताः ।
क्षेत्रस्थं तृणं नव्यं गृहोपरि तृणं यथा ।
अपक्वसुक्यशस्यं वा प्राभवन् हि तथैव ते ।
२७ किन्तूपवेशनं यत् ते बहिर्गमनमेव च ।
अभ्यन्तरायागमनं मद्विरुद्धञ्च कोपनं ।
एतानि सर्व्वकर्म्माणि संपरिज्ञातवानहं ।
२८ मद्विरुद्धं त्वदीयौ यौ क्रोधदर्पौ प्रकाशितौ ।
एतावप्युपतस्थाते मदीयं कर्णकोटरं ।
अतएव प्रदास्यामि नासायां वडिशं तव ।
खलीनं संप्रदास्यामि त्वदीयवदने निजं ।

त्वां परावर्त्तयिष्यामि त्वदागमनवर्त्मना।
हे हिष्किय त्वदीयार्थं चिह्नमेतद् भविष्यति। २९
एतस्मिन् वत्सरे यत्तु शस्यमुत्पद्यते स्वयं।
द्वितीयवत्सरे तस्माद् यद् भविष्यति शस्यकं।
तच्च वर्षद्वयं यावद् युष्माभिः परिभोक्ष्यते।
तृतीये वत्सरे शस्यम् उप्तं कर्त्तिष्यते पुनः।
द्राक्षाक्षेत्रञ्च कृत्वा तत्फलं भक्षिष्यते पुनः।
रक्षिता अवशिष्टाश्च यिहूदावंशमानवाः। ३०
तत्स्वरूपञ्च यन्मूलं तदधो वर्द्धिमेष्यति।
उपरिष्टात् तदीयानि फलिष्यन्ति फलानि च।
यद् यिरूशालमात् शेषाः सियोनाख्यशिलोच्चयात्। ३१
रक्षिता मानवा ये ते भविष्यन्ति वहिर्गताः।
सैन्याध्यक्षपरेशस्य सूद्योगात् तच्च सेत्स्यति।
अतोऽशूरीयराजाय परेशः कथयेदिति। ३२
स एतस्मिन् पुरे नैव करिष्यति प्रवेशनं।
नात्र क्षेप्स्यति वाणं नो फलकं दर्शयिष्यति।
तथा विरुद्धमेतस्य स्तूपं न योजयिष्यति।
परेशः कथयेद् येन पथा स समुपागतः। ३३
तेनैव च परावृत्य पुनः परिगमिष्यति।
एतस्मिन् नगरे तेन प्रवेशो न करिष्यते।
स्वकृतेऽहं सदासस्य दायूदोऽपि कृते तथा। ३४
वेष्टनं नगरस्यास्य करिष्यामि च रक्षणं॥

तस्यां रात्रौ परमेश्वरस्य दूतोऽशूरीयाणां शिविरं गत्वा तेषां पञ्चा- ३५
शीतिसहस्राधिकलक्षं लोकान् व्यनाशयत्; ततोऽवशिष्टा लोकाः प्रत्यूष
उत्थाय तान् सकलान् मृतानपश्यन्। अतस्त्वाशूरीयो राजा सन्हे- ३६
रीबः प्रस्थाय निनिवीनगरं प्रत्यागत्य न्यवसत्। पश्चात् स निस्रोकनाम्न ३७
इष्टदेवस्य मन्दिरे पूजयति तदानीम् अद्रम्मेलकशरेत्सरनामकौ तदीय-
पुत्रौ खड्गाभ्यां तं नाशयित्वारारटदेशं प्रति पलायेतां; तत एषर्-
होननामा तस्यान्यः पुत्रस्तस्य पदे राजा बभूव।

# २० विंशतितमोऽध्यायः ।

१ हिष्कियस्य मरणवार्त्ताकथनं प्रार्थनया रक्षणं ८ रक्षायाश्चिह्नं १२ हिष्कियस्य समीपे दूतानाम् उपस्थितिः सर्व्वैश्वर्य्यदर्शनं १४ तदर्थे यिशायियस्य भविष्यद्वाक्यं २० हिष्कियस्य निधनं ।

१ तदानीं हिष्कियस्य मारके व्याधौ जाते आमोषस्य पुत्रो यिशायियो
भविष्यद्वक्ता समुपागत्य कथयामास, परमेश्वरः कथयति, त्वं स्वप-
२ रिवारायादेशं विधत्स्व, यतस्त्वं मरिष्यसि न जीविष्यसि । ततो
३ हिष्कियो भित्तेः सम्मुखीभूय परमेश्वरं प्रति संप्रार्थ्य कथयामास, हे
परमेश्वर, विनयेऽहं सत्यतया सरलान्तःकरणेन च त्वत्समक्षं यादृश-
महमाचरं, तव दृष्टौ यादृशं सत्कर्म्माकरवं, तत् स्मर, ततो हिष्कियो
४ ऽतीव क्रन्दितुमारेभे । तदा यिशायियस्य मध्यप्राङ्गण उपस्थितेः प्राक्
५ परमेश्वरस्य वाक्यमिदं समुपतस्थौ, त्वं परावृत्य गत्वा हिष्कियं वद, तव
पूर्व्वपुरुषस्य दायूदः प्रभुः परमेश्वर इति कथयति, मया तव प्रार्थनम्
अश्रावि तव नेत्राम्बु चादर्शि पश्चाहं त्वां निरामयं करिष्यामि तृतीये
६ दिवसे त्वं परमेश्वरस्य मन्दिरं व्रजिष्यसि । अहं तवायुः पञ्चदश वत्स-
रान् वर्द्धयिष्यामि किञ्चाशूरीयराजस्य करात् त्वाम् एतन्नगरञ्च रक्षि-
ष्यामि मत्कृते निजदासस्य दायूदः कृते चाहं नगरस्यैतस्य पालकस्वरूपो
७ भविष्यामि । अनन्तरं यिशायियो जगाद यूयम् उडुम्बरफलानां पूप-
मेकमानयत ततो लोकैरानीय विस्फोटकोपरि तस्मिन् निहिते स स्वस्थो
बभूव ।

८ तस्मिन् काले हिष्कियो यिशायियम् आचष्ट परमेश्वरेण स्वस्थीकृतोऽहं
९ तृतीये दिवसे परमेश्वरस्य मन्दिरं यास्याम्येतस्य किं चिह्नं? ततो यिशा-
यियेन भाषितं, परमेश्वरेण प्रोक्तं वचनं सफलं कारिष्यते तस्येदं चिह्नं
परमेश्वरात् त्वं प्राप्स्यसि, कालबोधकयन्त्रे छाया दशांशान् यावद् अग्र-
१० गामिनी वा दशांशान् यावत् पश्चाद्गामिनी भविष्यति । हिष्किये-
नोदितं छाया यद् दशांशान् यावद् अग्रगामिनी भवतीति क्षुद्रं कार्य्यं,
११ किन्तु छाया दशांशान् यावत् परावर्त्ततां । अनन्तरं भविष्यद्वादिना
यिशायियेन परमेश्वरमुद्दिश्य प्रार्थनायां कृतायाम् आहसस्य कालबोध-
कयन्त्रे छाया यावन्तोंशान् अगच्छत् स तेषां दशांशान् यावत् तां
परावर्त्तयामास ।

१२ तस्मिन् काले बलदनस्य पुत्रो मिरोदकबलदननामा बाबिलीयो

राजा हिष्कियस्य पीडाया वार्त्तां श्रुत्वा दूतैस्तस्य समीपं पत्राण्युपायनञ्च
प्रेषयामास। ततो हिष्कियस्तान् साक्षात्कृत्य निजभाण्डागाराणि रज- १३
तसुवर्णानि सुगन्धिद्रव्याणि बहुमूल्यतैलानि निजास्त्रागाराणि स्वकोषेषु
स्थितानि सकलवस्तूनि च दर्शयामास। हिष्कियेन तान् न दर्शितं यत्
तादृशं किमपि वस्तु तस्य निवेशने कृत्स्ने राष्ट्रे च नासीत्।

अनन्तरं भविष्यद्वादी यिशायियो नरपतिं हिष्कियम् उपागत्य १४
पप्रच्छ ते मनुजाः किमगदन्? ते च कस्मात् स्थानात् तव समीपम् आ-
गच्छन्? ततो हिष्कियो गदितवान् एते दूरदेशाद् बाबिलाद् आग-
च्छन्। स पप्रच्छ एते तव निवेशने किं किम् अपश्यन्? हिष्कियो जगाद १५
मम निवेशने यद्यद् आस्ते तत् सर्व्वं ते दृष्टवन्तः। अहं तान् यन्न दर्शित-
वान् तादृशं किमपि द्रव्यं मम कोषमध्ये न विद्यते। अनन्तरं यिशायियो १६
हिष्कियम् अब्रवीत्, परमेश्वरस्य वचो निशामय। पश्य तव पूर्व्वपुरुषा- १७
दिभिरद्य यावत् सञ्चितं यद्यत् तव निवेशने विद्यते तत् सर्व्वं यस्मिन् काले
बाबिलनगरं नेष्यते तादृशः समय उपस्थास्यति तस्य किञ्चिदप्यवशिष्टं
न स्थास्यति परमेश्वर इति वचनं ब्रवीति। अपरं तवौरससन्तानानां १८
मध्यात् कतिपया नीता बाबिलीयराजस्य निवेशने छिन्नपुंस्त्वाः सन्तः
स्थास्यन्ति। ततो हिष्कियो यिशायियं जगाद त्वं परमेश्वरस्य यद् वचो १९
भाषितवान् तद् उत्तमं। अपरं गदितवान् मम राजत्वसमये मङ्गलं
सत्यता च भविष्यति।

एतस्य हिष्कियस्यावशिष्टं चरितं विक्रमश्च तेन पुष्करिणीं प्रणा- २०
लीञ्च कृत्वा नगराय तोयानयनञ्चैतानि सर्व्वाणि यिहूदादेशीयभूपतीनां
पुरावृत्तपुस्तके लिखितानि किं न विद्यन्ते? अनन्तरं हिष्किये निजपितृ- २१
लोकवत् महानिद्रां गते तस्य सुतो मिनशिस्तस्य पदे राजा बभूव।

---

# २१ एकविंशोऽध्यायः।

१ मिनशेः कुराजत्वं देवार्च्चनञ्च १० तस्य विषये परमेश्वरस्य दण्डाज्ञापनं १७ तस्य निधनं १९ आमोनस्य कुराजत्वं २३ तस्य निधनञ्च।

मिनशिः द्वादशवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य पञ्चपञ्चा- १
शद् वत्सरान् यिरूशालमे राजत्वं कृतवान् हिफ्सीबा च तस्य प्रसू-
रासीत्। परमेश्वर इस्रायेल्वंशानां सम्मुखाद् यान् भिन्नजातीयान् २
दूरीचकार तेषां घृणार्हाचारसमं कुत्सिताचारं स परमेश्वरस्य सा-

३ ष्टात् चक्रवान्। तस्य जनको हिष्कियो यानि भ्रगुस्थानानि विना-
शितवान् स तानि पुनर्व्वारं निर्म्मापयाञ्चकार, अपरम् इस्रायेलीय
आहाबो नरपतिरिव बालः कृते वेदीश्चैत्यवृक्षांश्च स्थापयामास, आका-
४ शीयसकलगणं प्रणनाम सिषेवे च। अपरं मया यिरूशालमे निजनाम
स्थापयिष्यत इति वाक्यं परमेश्वरो यन्मन्दिरमधि कथयामास तस्मिन्
५ परमेश्वरीयमन्दिरे देववेदी र्निर्म्मापयाञ्चकार च। अपरं परमेश्वरीय-
भवनस्य द्वयोः प्राङ्गणयोः स आकाशीयवारकाणां कृते वेदी र्निर्म्माप-
६ याञ्चकार। स निजपुत्रं वह्निं प्रवेशयाञ्चकार गणकत्वं मोहनञ्चाचचार
भूतविदां गुणिनाञ्च कर्म्म चक्रवान् इत्थं स परमेश्वरं कोपयितुं तस्य
७ साक्षाद् बहूनि कुत्सितकर्म्माणि चक्रवान्। अपरं स स्वनिर्म्मितां चैत्य-
प्रतिमां मन्दिरे स्थापयामास, किन्तु तन्मन्दिरम् अधि परमेश्वरो दायूदे
तदीयसुताय सुलेमने च वच इदं कथितवान्, एतस्मिन् मन्दिरे सर्व्वे-
षाम् इस्रायेलीयवंशानां मध्यात् मयाभिरुचिते यिरूशालमे निजं नाम
८ नित्यं मया स्थापयिष्यते। किञ्च मया ते यद्यद् आज्ञापिता मम दासेन
मूससा च ते यत् शास्त्रम् आदिष्टास्तदनुसारेणैव कर्म्मकरणाय यदि
यतन्ते तर्हि यो जनपदस्तेषां पूर्व्वपुरुषेभ्यो मया व्यतारि तस्य जनपदस्य
९ मध्याद् इस्रायेलीयवंशं पदमेकमपि नापसारयिष्यामीति। किन्तु ते तद्
वाक्यं न जगृहुः परं परमेश्वर इस्रायेलवंशस्य सम्मुखाद् या या जाती
र्व्यनाशयत् ताभ्योऽप्यधिककुकर्म्मकरणाय मिनशिस्तान् प्रवर्त्तयामास।
१० अनन्तरं परमेश्वरः स्वीयदासानां भविष्यद्वादिनां वदनै र्वाचमिमां
११ जगाद, यिहूदाया राजा मिनशिरेतानि घृणार्हकर्म्माणि कृतवान्
तस्मात् पूर्व्वं य इमोरीयलोका आसन् तेभ्योऽप्यधिकदुराचारी जातो
१२ निजप्रतिमाभि र्यिहूदावंशमपि पापं कारितवानिति हेतोरिस्रायेलीय-
प्रभुः परमेश्वर इमां वाचम् आचष्टे पश्याहं यिरूशालमं यिहूदाञ्च प्रति
तादृशीं दुर्गतिम् आनेष्यामि यस्याः श्रवणात् सकललोकानां कर्णद्वयं
१३ सशब्दं भविष्यति। अहं यिरूशालमस्योपरि शोमिरोणस्य सूत्रम् आहा-
बीयवंशस्य लम्बनञ्च विस्तारयिष्यामि, यादृक् कश्चिन्मानवो भो-
जनपात्रं प्रमृज्य न्युब्जीकरोति तादृक् मया यिरूशालमं परिमार्क्ष्यते।
१४ मया निजाधिकारस्यावशिष्टा लोकास्त्यक्ष्यन्ते रिपुकरे समर्पयिष्यन्ते च
१५ ते निजसकलरिपुभि र्लुण्ठ्या लोठ्याश्च भविष्यन्ति। यतो मिसरदेशात्
तेषां पितृलोकानां बहिरागमनदिनमारभ्याद्य यावत् ते मम साक्षात्

कुत्सिताचारं कुर्व्वन्तो मां कोपयन्ति। मिनशि बंहूनां निर्द्दोषाणां १६
रुधिरं पातयित्वा यिरूशालमम् एकस्मात् सीम्नोऽन्यसीमानं यावद्
रुधिरेण पूरयामास तदन्यत् परमेश्वरस्य साक्षात् कुत्सिताचारकरणाय
स यिहूदावंशमपि पापं कारयित्वा पातकी जातः।

एतस्य मिनशेरवशिष्टं चरित्रं तस्य सर्व्वक्रिया पापाचरणञ्चैतानि १७
सर्व्वाणि यिहूदादेशीयभूपतीनां पुरावृत्तपुस्तके लिखितानि किं न
विद्यन्ते? अनन्तरं मिनशि निजपितृलोकवत् महानिद्रां गत्वा निज- १८
निवेशनस्योद्यानेऽर्थत उषस्योद्याने श्मशानं लब्धवान् ततस्तस्य सुत आ-
मोनस्तस्य पदे राजा बभूव।

आमोनो द्वाविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरू- १९
शालमे द्वौ वत्सरौ राजत्वं कृतवान् यट्बानिवासिनो हारूषस्य दुहिता
मिशुल्लेमता तस्य प्रसूरासीत्। तस्य जनको मिनशि यादृक् कृतवान् २०
सोऽपि तादृक् परमेश्वरस्य साक्षात् कुत्सिताचारं चकार। तस्य तातो २१
यस्मिन् वर्त्मनि चरितवान् सोऽपि तस्मिन्नेव चचार। तस्य तातो यान्
निग्रहान् पूजितवान् सोऽपि तानेव पूजयामास प्रणनाम च। स नि- २२
जपितृलोकानां प्रभुं परमेश्वरं तत्याज परमेश्वरस्य वर्त्मनि न चचार।

अनन्तरम् आमोनस्य भृत्यास्तं प्रति द्रोहं विधाय तस्य गृहे राजानं २३
जघ्नुः। ततो देशीयलोका राज्ञ आमोनस्य द्रोहकान् सर्व्वान् हत्वा तस्य २४
तनयं योशियं तस्य पदे राजत्वेऽभिषिषिचिरे। एतस्यामोनस्यावशिष्टं २५
चरित्रं यिहूदादेशीयभूपतीनां पुरावृत्तपुस्तके किं लिखितं न विद्यते?
अपरं स उषस्योद्यानस्थिते निजश्मशाने निहितस्ततस्तस्य तनयो यो- २६
शियस्तस्य पदे राजा बभूव।

---

## २२ द्वाविंशोऽध्यायः।

१ योशियस्य सुराजत्वं ३ मन्दिरस्य जीर्णोद्धारणं ८ ईश्वरीयव्यवस्थापुस्तकस्य प्राप्तिः
१४ भविष्यद्वादिन्या हुल्दायाः चविधं कृतानां प्रेषणं तस्या भविष्यद्वाक्यञ्च।

योशियोऽष्टवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्यैकत्रिंशद्वत्सरान् १
यिरूशालमे राजत्वं चकार वस्कतीयस्यादायाहस्य दुहिता यिदीदा
तस्य प्रसूरासीत्। स परमेश्वरस्य साक्षात् सत्कर्म्माणि चकार निज- २
पूर्व्वपुरुषस्य दायूदो वर्त्मनि चचार तस्य दक्षिणं वामं वा प्रति न
परावृत्ते।

३ योशियस्याष्टादशे राजत्ववत्सरे मिशुल्लमस्य पौत्रोऽत्सलियस्य पुत्रः
शाफनो लेखको राज्ञा परमेश्वरस्य मन्दिरं प्रहितो वच इदम् उक्तश्च।
४ त्वं प्रधानयाजकस्य हिल्कियस्य समीपं गत्वा परमेश्वरस्य भवनम्
आनीतान्यर्थतो लोकानां करेभ्यो द्वारपालैः संगृहीतानि सर्व्वाणि
५ रजतानि गणय। अपरं ये परमेश्वरीयभवनाध्यक्षाः कार्य्यं साधयन्ति
तेषां करेषु तानि समर्प्यन्तां, अपरं ते मन्दिरस्य जीर्णोद्धारकरणार्थं
६ परमेश्वरीयमन्दिरस्य कर्म्मकारिणां करेषु तानि समर्पयन्तु। अर्थतः
सूत्रधारनिचायकस्थपतीनां वेतनार्थं गृहस्य जीर्णोद्धाराय काष्ठानां
७ खनितपाषाणानाञ्च क्रयार्थञ्च तानि समर्पयन्तु। किन्तु तेषां करेषु
या मुद्राः समर्पयिष्यन्ते ता अधि तैः समं गणना न भविष्यति यतस्ते
विश्वास्यत्वेन कर्म्म कुर्व्वन्ति।

८ अनन्तरं प्रधानयाजको हिल्कियः शाफनं लेखकं जगाद मया परमे-
श्वरस्य मन्दिरे व्यवस्थापुस्तकमिदं प्रापि। अनन्तरं हिल्कियेन शाफ-
९ नाय तत्पुस्तके दत्ते स तत् पपाठ। अपरं शाफनो लेखको राज्ञः
समीपं समीय तं वार्त्तामिमां बभाषे, मन्दिरे यावत्यो मुद्रा आसन्
ताः सर्व्वास्तव दासैः संगृहीताः परमेश्वरीयमन्दिरे नियुक्तानां कार्य्या-
१० ध्यक्षाणां हस्तेषु समर्पयाञ्चक्रिरे। अनन्तरं लेखकः शाफनो राजानं वच
इदं ज्ञापयामास, याजको हिल्कियो मह्यं पुस्तकमिदं ददिवान्,
११ अनन्तरं शाफनो राज्ञः साक्षात् तत् पपाठ। तदानीं राजा तस्य व्यव-
१२ स्थापुस्तकस्य वचांसि निशम्य निजवसनं चिच्छेद। अपरं राजा याजकं
हिल्कियं शाफनस्य तनयम् अहीकामं मीखायस्य तनयम् अक्बोरं
१३ लेखकं शाफनम् असायनामानं न्टपतेर्दासमेकञ्चेत्यादिदेश, यूयं गत्वा
मम कृते लोकानाञ्च कृत्स्नस्य यिहूदावंशस्य च निमित्तं तस्य लब्धस्य
पुस्तकस्य वाचोऽधि परमेश्वरं पृच्छत यत एतस्मिन् पुस्तके यद्यल्लि-
खितम् आस्ते तदाचरणायास्माकं पूर्व्वपुरुषैरेतस्य पुस्तकस्य वाक्यानि
न गृहीतान्येतत्कारणाद् अस्माकं विरुद्धं परमेश्वरस्य महाक्रोधः प्र-
१४ ज्वलितः। अतो याजको हिल्कियोऽहीकामोऽक्बोरः शाफनोऽसा-
यश्च वस्त्रागारस्याधिपते र्हर्हसपौत्रस्य तिक्वातनयस्य शल्लूमस्य भार्य्यां
हुल्दां भविष्यद्वादिनीम् उपागमन्; सा यिरूशालमस्थपाठशालायाम्
अवसत्। अनन्तरं तां समभाषन्त।

१५ सा तु तान् आचचक्षे, इस्रायेलः प्रभुः परमेश्वर इति वाचं ब्रवीति

यो मानुषो युष्मान् मम समीपं प्रैषयत् तं ब्रूत, परमेश्वर इति वाचं १५
निगदति पश्याहम् एतत् स्थानं तन्निवासिनश्च प्रत्यमङ्गलम् अर्थतो
यिहूदाया राज्ञा यत् पुस्तकम् अपाठि तत्र लिखितं सकलम् अमङ्गलं
घटयिष्यामि। यतस्ते निजनिजहस्तानां क्रियाभि र्मां कोपयितुं मां वि- १७
हायेतरदेवान् उद्दिश्य धूपान् अज्वालयन् एतत्कारणाद् एतस्य स्थानस्य
विरुद्धं मम क्रोधाग्निः प्रज्वलितवान् स न निर्व्वास्यते। परमेश्वरं प्रष्टुं १८
युष्मान् प्रेषितवान् यो यिहूदाया राजा तम् इदं वचो ब्रूत त्वं यानि
वचनान्याकर्णयस्तान्यधीकृत्य असौ प्रभुः परमेश्वर इति वाचं वदति,
स्थानम् एतत् तन्निवासिनश्च चमत्कारशापास्पदानि भविष्यन्तीति तेषां १९
विरुद्धं मया यद् उक्तं तस्मिन् त्वया श्रुते त्वदीयान्तःकरणं कोमलम्
अभवत् त्वञ्च परमेश्वरस्य साक्षात् नम्रोऽभवो निजवसनं छित्त्वा मम
सम्मुखेऽक्रन्दश्चैतत्कारणात् परमेश्वरः कथयति मयापि त्वदीयं वच
आकर्णितं। अहं तव पितृलोकैः समं त्वां संग्रहिष्यामि त्वं शान्त्या २०
निजश्मशाने शायिष्यसे किञ्चाहम् एतत् स्थानं यान्यमङ्गलान्यानेष्यामि
तानि तव चाक्षुषाणि न भविष्यन्ति। अनन्तरं ते राजानं तां वार्त्तां
जगदुः।

---

## २३ त्रयोविंशोऽध्यायः।

१ सभायां पुस्तकस्य पठनं ३ लोकैः समं नियमस्य स्थिरीकरणं देवपूजायाः सर्व्वीयद्रव्यस्थानानाञ्च नाशनं १५ बैथेलस्य वेद्या अशुचिकरणं २१ निस्तारपर्व्वपालनं २४ दुष्टलोकानां दूरीकरणं २६ यिहूदाया लोकान् प्रतीश्वरस्य क्रोधः २९ समरे योशियस्य निधनं ३१ नद्दोथननयस्य यिहोयाहसस्य बन्धनं ३६ यिहोयाकीमस्य कुराजत्वञ्च।

अनन्तरं राज्ञा प्रहिता दूता यिहूदादेशस्य यिरूशालमस्य च १
सर्व्वान् प्राचीनलोकान् तस्य समीपं समानिन्युः। अनन्तरं नरपतिः २
परमेश्वरस्य मन्दिरं जगाम यिहूदादेशीया यिरूशालमनिवासिनश्च सर्व्वे
लोका याजका भविष्यद्वादिनः क्षुद्रा महान्तश्च सर्व्वे मनुजास्तेन समं
जग्मुः। अनन्तरं राजा परमेश्वरीयमन्दिरे लब्धस्य नियमपुस्तकस्य
सकलवचांसि तेषां कर्णगोचरे पाठयामास।

अपरं नरपतिः स्तम्भस्यैकस्य समीपे तिष्ठन् परमेश्वरस्य साक्षात् ३
नियमम् इमं चकार, वयं परमेश्वरम् अनुगमिष्यामः सकलमनोभिः

प्राणैश्च समं तस्याज्ञाः साक्ष्यवचनानि विधींश्चाचरिष्यामोऽस्मिन् पुस्तके
लिखितानि सर्व्वाणि नियमवाक्यानि पालयिष्यामश्चेति, ततः सर्व्वे लोका
४ अपि तं नियमम् अङ्गीकृतवन्तः । अपरं बालदेवस्याशेरस्य गगनस्थ-
नक्षत्राणाञ्च निमित्तं निर्म्मितानि यावन्ति पात्राणि तानि परमेश्व-
रस्य मन्दिराद् बहिष्कर्त्तुं राजा प्रधानयाजकं हिल्कियं द्विती-
यपर्य्यायस्य याजकान् द्वारपालांश्च समादिशत् । अनन्तरं स यिरू-
शालमस्य बहिः किद्रोणस्य प्रान्तरे तानि दाहयित्वा तदीयभस्मानि
५ बैथेलं निनाय । अपरं यिहूदादेशीयभूपतिभि र्नियुक्ता ये देवार्च्चका
याजका यिहूदादेशीयनगराणां निकटे यिरूशालमस्य चतुर्दिक्षु चोच्च-
स्थानेषु धूपान् अज्वालयन् ये च बालाय सूर्य्याय चन्द्राय ग्रहेभ्य आका-
६ शीयज्योतिर्गणाय च धूपम् अज्वालयन् तान् पदच्युतान् चकार । अपरं
परमेश्वरीयमन्दिरस्य मध्यात् चैत्यप्रतिमां बहिष्कृत्य यिरूशालमस्य
बहिः किद्रोणस्रोतसः समीपम् आनीय किद्रोणस्रोतसि तां दाहया-
मास पेषणेन धूलीवत् चूर्णयित्वा सामान्यलोकानां श्मशानेषु तां धूलीं
७ विचकार च । अपरं यत्र मार्य्यचैत्यमूर्त्तेः कृते दूष्यवस्त्राणि निर्म्मितव-
त्यस्तत्र परमेश्वरीयमन्दिरस्य समीपे स्थितान् पुंद्धकारकारिणां गृहान्
८ बभञ्ज । अपरं स सकलान् याजकान् यिहूदानगरेभ्यः समानिनाय
किञ्च गेबाम् आरभ्य बेर्शेबां यावद् यत्र याजका धूपान् अज्वालयन्
तान्युच्चस्थानानि सर्व्वाण्यशुचीनि चकार किञ्च गोपुराणां निकटे
स्थितानि उच्चस्थानानि विशेषतो नगरप्रवेशिनां वामपार्श्वे स्थितं नगरा-
९ ध्यक्षस्य यिहोशूयस्य गोपुरस्थं उच्चस्थानं बभञ्ज । किन्तु उच्चस्थानीय-
याजका यिरूशालमे स्थितायाः परमेश्वरीययज्ञवेद्याः समीपं नाग-
च्छन् ते केवलं स्वेषां भ्रातॄणां मध्ये किण्वशून्यान् पूपान् अभु-
१० ञ्जत । कश्चिद् यत् मोलकम् उद्दिश्य निजतनयं तनयां वा वह्निं न
प्रवेशयेत् तदर्थं स हिन्नोमवंशस्य निम्नभूमौ स्थितं तोफताख्यं स्थानम्
११ अमेध्यं चकार । अपरं यिहूदादेशीयै राजभि र्ये वाजिनः सूर्य्याय
दत्तास्तान् परमेश्वरीयमन्दिरस्य मध्याद् अपंत उपनगरनिवासिनो
निथनमेलकनाम्नः कृतनपुंसकस्य वासातो दवयाञ्चकार वह्निना सूर्य्य-
१२ रथं दाहयामास च । अपरं नृपतेराहसस्य प्रासादोपरिस्थकोष्ठस्य
पृष्ठे यिहूदादेशीयराजै र्निर्म्मिता वेदीः परमेश्वरीयमन्दिरस्य प्राङ्ग-
णयोश्च मिनशिना निर्म्मिता वेदी भङ्क्त्वा स्थानान्तरीकृत्य च तासां धूलीं

किद्रोणस्रोतसि निचिक्षेप। अपरम् इस्रायेल्वंशस्य राजा सुलेमान् १३
यिरूशालमस्य सम्मुखे विनाशकगिरेर्दक्षिणे सीदोनीयानाम्
अस्तारोतनाम्नो घृणार्हदेवस्य निमित्तं मोयाबीयानां किमोशाख्यस्य
घृणार्हदेवस्य निमित्तम् अम्मोनवंशस्य मिल्कमाख्यस्य घृणार्हदेवस्य
निमित्तञ्च यानि भ्रंगुस्थानानि निर्म्मितवान् तानि नृपतिरशुचीनि च-
कार। अपरं ताः सकलाः प्रतिमा बभञ्ज चैत्यवृक्षांश्च चिच्छेद तेषां १४
स्थानानि मनुष्याणां कीकसैः पूरयामास च।

अनन्तरं निबाटस्य सुतो यो यारबियाम इस्रायेल्वंशं पापं कारि- १५
तवान् तेन निर्म्मिता या यज्ञवेदी यच्च भ्रंगुस्थानं बैथेलेऽतिष्ठत् सा
यज्ञवेदी तच्च भ्रंगुस्थानमपि योशियेन बभञ्जे। स भ्रंगुस्थानस्य प्रतिमां
वह्निना दाहयित्वा धूलीवत् चूर्णयामास चैत्यमूर्त्तिं दाहयामास च।
अपरं योशियेन मुखं परावर्त्य तत्र पर्व्वते श्मशानेषु दृष्टेषु पुरा येनेश्व- १६
रीयलोकेन तानि कर्म्माणि निर्द्दिष्टानि तेन घोषितानां परमेश्वरीय-
वाक्यानाम् अनुसारेणैव राज्ञा दूतान् प्रहित्य तेभ्यः श्मशानेभ्यः कीक-
सानि समानीय वेद्या उपरि दाहयित्वा वेदिरशुचिरकारि। अनन्तरं १७
स पप्रच्छ मया योऽसौ स्तम्भो दृश्यते स किम्भूतः? ततो नगरीयलो-
कास्तं प्रतिजगदुः पुरा य ईश्वरीयलोको यिहूदात आगत्य बैथेलस्थाया
यज्ञवेद्या विरुद्धं त्वया क्रियमाणानाम् एतेषां कर्म्मणां कथां घोषित-
वान् इदं तस्य श्मशानं। ततो राजा जगाद, एनं विजहीत कश्चिद् १८
एतस्य कीकसानि न स्थानान्तरीकुर्य्यात्। अतः शोमिरोणाद् आगतस्य
भविष्यद्वादिनः कीकसैः समं तस्य कीकसानि लोकै र्विजहिरे। अपरं १९
शोमिरोणदेशस्य सकलेषु नगरेषु यानि क्रोधजनकानि भ्रंगुस्थानीय-
मन्दिराणीस्रायेलीयराजै र्निर्म्मितानि तानि सर्व्वाण्यपि योशिय उच्चि-
च्छेद बैथेले स यद्यत् कृतवान् तत्तदेव तान्यपि प्रति चकार। तत्रत्यान् २०
भ्रंगुस्थानीययाजकान् सर्व्वांश्च वेदीनाम् उपरि जघान तदुपरि मनु-
ष्याणां कीकसानि दाहयामास च। ततः परं स यिरूशालमं परावृत्य
जग्मिवान्।

अनन्तरं राजा सकललोकान् इत्याज्ञापयामास यूयम् एतस्य निय- २१
मपुस्तकस्य लेखनानुसारात् स्वेषां प्रभुं परमेश्वरम् उद्दिश्य निस्तारो-
त्सवं कुरुध्वं। इस्रायेलीयवंशस्य शासकानां विचारयितॄणां समयमा- २२
रभ्येस्रायेलीयनरपतीनां यिहूदादेशीयनरपतीनाञ्च राजत्वसमये तत्स-

२३ इत्थं निस्तारोत्सवो नाकारि। योशियस्याष्टादशे राजत्ववत्सरे यिरू-
शालमे परमेश्वरोद्देशकः स निस्तारोत्सवोऽकारि।

२४ परमेश्वरस्य मन्दिरे याजकेन हिल्कियेन लब्धे पुस्तके यानि व्यवस्था-
वचांसि लिखितान्यासन् तानि सर्व्वाणि स्थिरीकर्त्तुम् इच्छन् योशियो
यिहूदादेशे यिरूशालमे च विद्यमानान् भूतज्ञान् गुणिनो विग्रहान्
२५ प्रतिमा घृणावस्तूनि च सर्व्वाण्युच्छिच्छेद। सर्व्वान्तःकरणेन सर्व्वप्राणैः
सर्व्वशक्त्या च मूससो निखिलव्यवस्थानुसारात् परमेश्वरं प्रति मनः-
परिवर्त्तने तस्य तुल्यः कोऽपि नरपतिस्तस्मात् पूर्व्वं नादभवत् तस्मात्
परमपि कोऽपि तस्य तुल्यो नाभवत्।

२६ तथापि मिनशि र्यैः क्रोधजनकैः कर्म्मभिः परमेश्वरं क्रोधयामास
तत्कारणाद् यिहूदावंशस्य प्रतिकूलं परमेश्वरस्य यो महाकोपोऽभ्यज्ञा-
२७ यत, तस्मात् परमेश्वरो न परावृत्तते। अपरं परमेश्वर आचचक्षे मया
यादृग् इस्रायेलवंशो निजदृष्टितो दवितस्तादृग् यिहूदावंशो दवयि-
ष्यते यच्च नगरं मयाभिरुचितं तन्नगरं किञ्च मम नामधेयम् एतस्मिन्
स्थाने स्थास्यतीति वचो यन्मन्दिरमधि मया कथितं तदपि मया परि-
२८ त्यक्ष्यते। एतस्य योशियस्यावशिष्टं चरित्रं यच्च तेन कृतं तत् सर्व्वं यिहू-
दादेशीयनृपतीनां पुरावृत्तपुस्तके लिखितं किं न विद्यते?

२९ तस्य समये मिस्रीयो नरपतिः फिरौण् निखुरस्सूरीयनृपते र्विरुद्धं
फरातसरितः सविधं जगाम ततो योशियेन राज्ञा तस्य विरुद्धं युद्ध-
३० यात्रायां कृतायां स तं साक्षात् प्राप्य मगिद्दो जघान। अपरं तस्य दासा-
स्तस्य कुणपं रथ आरोप्य मगिद्दुतो यिरूशालमं नीत्वा तं तस्य निज-
श्मशाने निदधिरे। अनन्तरं देशीयलोका योशियस्य तनयं यिहोयाहसं
नीत्वाभिषिच्य तस्य पदे राजानं चक्रुः।

३१ यिहोयाहसस्त्रयोविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य
यिरूशालमे त्रीन् मासान् राजत्वं चकार लिब्नानिवासिनो यिरि-
३२ मियस्य दुहिता हमूटल् तस्य प्रसूरासीत्। स निजपितृलोकानां
३३ कर्म्मानुसारतः परमेश्वरस्य साक्षात् कुत्सिताचारं चकार। किन्तु स
यद् यिरूशालमे राजत्वं न कुर्य्यात् तदर्थं फिरौण् निखु र्हमातदेश-
स्थरिब्लायां तं बबन्ध देशे च शतक्किक्कारपरिमितं रजतम् एकक्किक्कार-
३४ परिमितं स्वर्णञ्च दण्डं निरूपयामास। अनन्तरं फिरौण् निखु र्यो-
शियस्य पुत्रम् इलियाकीमं तस्य जनकस्य योशियस्य पदे राजानं

अन्यत् तस्य नाम यिहोयाकीम इति चकार यिहोयाहसञ्च निनाय
ततः स मिसरदेशं गत्वा तत्र स्थाने ममार। अनन्तरं यिहोयाकीमः ३५
फिरौणे तानि दुर्वर्णानि सुवर्णानि च ददौ किन्तु फिरौण आज्ञानुसा-
रात् तेषां रजतादीनां परिशोधार्थं जनपदे करं निरूपयामास, स
फिरौणे निखवे दानार्थम् एकैकलोकस्य सम्पदनुसाराद् देशीयप्रजाभ्यो
रजतं सुवर्णञ्चाददे।

यिहोयाकीमः पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य ३६
यिरूशालम एकादशवत्सरान् राजत्वं चकार रूमानिवासिनः पिदा-
यस्य दुहिता सिबुदा तस्य प्रसूरासीत्। स निजपितृलोकानां कर्म्मानु- ३७
सारात् परमेश्वरस्य साक्षात् कुत्सिताचारं चकार।

---

## २४ चतुर्विंशोऽध्यायः।

१ यिहोयाकीमस्य बाबिलीयनृपतेरधीनत्वास्वीकरणं ५ तस्य मृत्युः ८ तत्सुतस्य यिहो-
याखीनस्य कुराजत्वं १० तस्य तदीयबहुलोकानाञ्च बन्दीभवनं १७ सिदिकियस्य
कुराजत्वं बाबिलीयभूपतेरधीनत्वास्वीकरणञ्च।

यिहोयाकीमस्य राजत्वसमये बाबिलीयो महीपति र्निबूखद्नित्सर १
आजगाम, यतः स त्रीन् वत्सरान् यावत् तस्याधीनतायां स्थित्वा तस्या-
धीनत्वं पुनरनङ्गीकृतवान्। अपरं परमेश्वरेण तस्य विरुद्धं कास्दीयानाम २
अरामीयाणां मोयाबीयानाम् अम्मोनवंशीयानाञ्च दस्युनिवहाः प्रेरय-
ञ्चक्रिरे; परमेश्वरः स्वीयदासानां भविष्यद्वादिनां वदनै र्यद् वच उक्त-
वान् तदनुसारेण स यिहूदादेशं विनाशयितुं तस्य विरुद्धं तान् प्रेषया-
मास। तत् सर्व्वम् अमङ्गलं परमेश्वरस्यैवाज्ञया यिहूदावंशम् आच- ३
क्राम, यतो मिनशिना यानि सर्व्वाणि पापानि चक्रिरे तत्कारणात् स तं
वंशं स्वसम्मुखाद् दूरयितुं निरूपयामास। मिनशि र्निर्दोषाणां रुधिरं ४
पातयन् तेन निर्दोषाणां रुधिरेण यिरूशालमं परिपूरयामास ततः
परमेश्वरः क्षमितुं मतिं न चकार।

एतस्य यिहोयाकीमस्यावशिष्टं चरित्रं सर्व्वकर्म्म च यिहूदादेशीय- ५
भूपतीनां पुरावृत्तपुस्तके लिखितानि किं न विद्यन्ते? अनन्तरं यिहोया- ६
कीमे निजपितृगणवत् महानिद्रां गते तस्य सुतो यिहोयाखीनस्तस्य पदे
राजा बभूव। अनन्तरं मिसरो महीपतिः स्वीयदेशात् पुन र्नाजग्मि- ७

वान् यतो मिसरः सरित्समारभ्य फरातनदं यावत् मिस्रीयनरपते
र्यद्यद् आसीत् तत् सर्व्वं बाबिलीयो नरपतिर् जितवान्।
८ यिहोयाखीनोऽष्टादशवत्सरवयस्कः सन् राजत्वं कर्त्तुमारभ्य यिरू-
शालमे त्रीन् मासान् राजत्वं चकार। यिरूशालमनिवासिन इल्ना-
९ थनस्य दुहिता निहुस्ता तस्य प्रसूरासीत्। स निजपितुः कर्म्मवत् पर-
मेश्वरस्य साक्षात् कुत्सिताचारं चकार।
१० तस्मिन् समये बाबिलीयनरपते र्निबुखद्नित्सरस्य दासेया यिरू-
११ शालमं समीय नगरम् अवध्नन्। अपरं तस्य भृत्यै र्नगरे रुध्य-
माने बाबिलीयराजो निबुखद्नित्सरः स्वयं नगरस्य प्रतिकूलम् आज-
१२ गाम। ततो यिहूदावंशीयो यिहोयाखीनो महीपतिस्तस्य माता भृत्या
मुख्या राजपुरुषाध्यक्षाश्च बाबिलीयमहीपते राजत्वस्याष्टमवत्सरे तेन
१३ दध्रिरे। अनन्तरं परमेश्वरस्य यथोक्तं तद्वत् स तस्मात् स्थानात् पर-
मेश्वरीयमन्दिरे स्थितं सकलं स्वापतेयं राजनिवेशने स्थितं निखिलं स्वा-
पतेयञ्च निनायेस्रायेलः सुलेमना नरपतिना निर्म्मितानि यावन्ति हेम-
१४ भाजनानि परमेश्वरीयभवन आसन् तान्यपि छित्त्वा ननाश। अपरं
स यिरूशालमस्थितान् सकलमनुजान् अखिलान् अधिपतीन् निखि-
लान् बलिनो भटांश्च प्रवासयामास, दशसहस्राणि लोका निखिलशि-
ल्पिनः कर्म्मकारिणश्च तेन प्रवासयाञ्चक्रिरे ततो जनपदे दुर्गतमनुजे-
१५ भ्योऽपरः कोपि नावशिष्यत। अपरञ्च स यिहोयाखीनं नृपतिमपि बा-
बिलि प्रवासयामास। राजा राज्ञो माता मन्त्रिणो राजपुर्या अध्यक्षा
१६ जनपदस्य मुख्यमनुजाश्च तेन यिरूशालमाद् बाबिलं निन्यिरे। इत्थं
सर्व्वे बलिनो लोका अर्थतः सप्तसहस्राणि मानवा बलिनो युद्धयोग्याश्च
सहस्रं शिल्पकाराः कर्म्मकाराश्च मनुजा बाबिलि प्रवासार्थं बाबिलीय-
राजेन स्थानान्तरीकृताः।
१७ अनन्तरं बाबिलीयो राजा यिहोयाखीनस्य मातुलं मत्तनियं तस्य
पदे राजत्वे नियोजयामास तदीयं नामधेयं वर्णान्तरीकृत्य सिदिकिय
१८ इति चकार च। स सिदिकिय एकविंशतिवत्सरवयस्कः सन् राजत्वं
कर्त्तुं प्रारभ्यैकादशवत्सरान् यावद् यिरूशालमे राजत्वं चकार। लिब्-
१९ नानिवासिनो यिरिमियस्य दुहिता हमूटल् तस्य प्रसूरासीत्। स
यिहोयाकीमस्य निखिलकर्म्मानुसारात् परमेश्वरस्य साक्षात् कुत्सिता-
२० चारं चकार। अपरं यिरूशालमनगरं यिहूदावंशञ्च प्रति परमेश्वरस्य

क्रोधात् तौ यत् तस्य सम्मुखाद् दूरीभवेताम् एतदर्थम् एतादृशी दशा जघटे। अपरं सिदिकियो बाबिलीयराजस्याधीनत्वम् अनङ्गीकृतवान्।

---

## २५ पञ्चविंशोऽध्यायः।

१ यिरूशालमस्यावरोधनं ४ सिदिकियस्य धृतत्वं लोकानाञ्च वन्दित्वाय नयनं १३ मन्दिरस्य वस्तूनां लोठनं १८ प्रधानलोकानां वधः २२ गिदलियस्य शासनपदे नियुक्तत्वं २७ बाबिलीयनरपते राजसभायां यिहोयाखीनस्य समुन्नतिः।

अनन्तरं तस्य राजत्वस्य नवमवत्सरे दशममासस्य दशमे दिने १
बाबिलीयमहीपति र्निबुखद्नित्सरस्तस्य निखिलसैन्यानि च यिरूशा-
लमस्य विरुद्धं समेत्य शिविरं स्थापयाञ्चक्रिरे तस्य चतुर्दिक्षु दुर्गाणि नि-
र्म्ममिरे च। सिदिकियस्यैकादशं राजत्ववत्सरं यावत् नगरं रुध्यमानं २
तस्थौ। ततश्चतुर्थमासस्य नवमे दिने नगरे महादुर्भिक्षं बभूव जनप- ३
दस्य मनुजानां निमित्तं भक्ष्यं किमपि नासीत्।

अनन्तरं नगरे भग्नत्वं गते सर्व्वे योद्धारो निशायां राजोद्यानस्य ४
समीपस्थयो र्द्वयो र्भित्त्यो र्द्वारस्य मार्गेण पलायनं विधाय प्रान्तरगा-
मिनं पन्थानं जग्मुः किन्तु कस्दीयाश्चतुर्दिक्षु नगरम् अवेष्टन्त। अन- ५
न्तरं कस्दीयानां पृतना नरपतेः पश्चाद् धावित्वा यिरीहोः प्रान्तरे
तं प्रापुस्ततस्तस्य निखिलसैन्यानि तस्य सविधाद् व्यकीर्य्यन्त। अतस्ते नृ- ६
पतिं धृत्वा रिब्लायां बाबिलीयभूपतेः सविधम् आनीय तं प्रति दण्ड
आदेशि। ततः सिदिकियस्य समक्षं तस्य तनया जघ्निरे सिदिकियस्य ७
लोचने उत्पाटयाञ्चक्राते स च पित्तलीयनिगडै र्बद्धो बाबिलं निन्ये।

अपरञ्च पञ्चममासस्य सप्तमे दिने बाबिलीयमहीपते र्निबूखद्नित्स- ८
रस्योनविंशे राजत्ववत्सरे रक्षकसेनानाम् अध्यक्षो निबूषरदननामा
बाबिलीयभूपस्य भृत्यो यिरूशालमम् आगत्य परमेश्वरस्य मन्दिरं राज- ९
सदनं यिरूशालमस्य निखिलगृहान् विशेषतो बृहदट्टालिकाः सर्व्वा
वह्निना दाहयामास। अपरं रक्षकसेनापतेरनुगामिन्यः कस्दीयाः १०
सेना यिरूशालमस्य चतुर्दिक्षु प्राचीरम् अभञ्जन्। ततः परं नगरेऽव- ११
शिष्टा मनुजा बाबिलीयनरपतेः पक्षं गताः पलातका अन्येऽवशिष्टा लो-
काश्च रक्षकसेनापतिना निबूषरदनेन प्रवासयाञ्चक्रिरे। केवलं द्राक्षा- १२

द्राक्षसेवनाय भूमिकर्षणाय च कतिपया दुर्गतलोका रक्षकसेनापतिना
शेषयाञ्चक्रिरे ।
१३ अपरं कस्दीयैः परमेश्वरीयमन्दिरे स्थितौ पित्तलमयौ स्तम्भौ पीठानि
परमेश्वरीयमन्दिरे स्थितं पित्तलमयं सागरपात्रञ्च खण्डं खण्डं विधाय
१४ तेषां पित्तलं बाबिलं निन्ये । अपरम् उत्तोलनानि दर्व्यः कुण्डानि सेद्रन्य-
स्तेत्यादीनि यावन्ति सेवार्थकानि भाजनान्यासन् तानि सर्व्वाणि तैरप-
१५ हृतानि । स्वर्णमयानां वह्निपात्रकटाहादीनां सुवर्णानि रूप्यमयपात्राणां
१६ रूप्याणि च रक्षकसेनापतिना हृतानि । सुलेमान् परमेश्वरीयमन्दिरस्य
कृते यत् स्तम्भद्वयं सागरपात्रमेकं यानि च पीठानि निर्म्मितवान् तेषां
१७ निखिलपात्राणां पित्तलानां परिमाणम् असंख्यमासीत् । यतस्तयोरे-
कस्य स्तम्भस्योच्चत्वम् अष्टादशहस्तपरिमितं तदुपरि च यः पित्तलमयो
मूर्द्धासीत् तस्य मूर्द्ध उच्चत्वं हस्तत्रयपरिमितं किञ्च स मूर्द्धा येन जाला-
कृतिशिल्पकर्म्मणा दाडिम्बस्रजा चावेष्ट्यत तत् सर्व्वमपि पित्तलमयम्
आसीत् अपरं जालकर्म्म विना द्वितीयस्तम्भः प्रथमस्य समान आसीत् ।
१८ अनन्तरं रक्षकसेनापतिः प्रधानयाजकं सिरायं द्वितीयं याजकं सिफ-
१९ नियं त्रीन् द्वारपालांश्च दधार । अपरं नगरस्य योद्धृणाम् अध्यक्षमेकं
नगरे लब्धान् पञ्चजनान् राजसभासदो जनपदीयसेनानाम् अध्यक्षं
सेनागणयितारं लेखकमेकं नगरे लब्धान् जनपदीयषष्टिजनांश्च दधार ।
२० रक्षकसेनापति र्निवूषरदनस्तान् धृत्वा रिब्लायां बाबिलीयनरपतेः स-
२१ न्निधिं निनाय । अनन्तरं बाबिलीयो नरेश्वरो हमातदेशस्थायां रि-
ब्लायां तान् ताडयित्वा मारयामास । इत्थं यिहूदावंशीयलोका निजदे-
शाद् दूरे प्रवासयाञ्चक्रिरे ।
२२ बाबिलीयमहीपतिना निवूखद्नित्सरेणावशेषिता ये लोका यिहूदा-
जनपदेऽतिष्ठन् तेषां शासकपदे शाफनस्य पौत्रो ऽहीकामस्य पुत्रो
२३ गिदलियस्तेन नियुयुजे । अनन्तरं बाबिलीयनरपतिना गिदलियः शा-
सकपदे न्ययुज्यतेति वार्त्तायां सेनापतिभिस्तेषां लोकैश्च श्रुतायां निथ-
नियस्य पुत्र इस्मायेलः कारेहस्य पुत्रो योहाननो निटोफातीयस्य
तनहूमतस्य पुत्रः सिरायो माखातीयस्य पुत्रो यासनियस्तेषां लोकाश्च
२४ मिस्पायां गिदलियस्य समीपम् आजग्मुः । अनन्तरं गिदलियस्तेषां
समीपे तेषां लोकानाञ्च समीपे शपथं कृत्वा जगाद, यूयं कस्दीयानां
दासेभ्यो मा भीता जनपदे वसत बाबिलीयनरपतिं सेवध्वञ्च तेन युष्माकं

क्षेमं भविष्यति। किन्तु सप्तमे मासि राजवंशजात इलीशामस्य पौत्रो २५
निथनियस्य पुत्र इस्मायेलस्तेन सहापरे दशजनाश्चागत्य गिदलियं
मिस्पायां तस्य सन्निधौ वर्त्तमानान् यिहूदीयान् कस्दीयांश्च ताडयित्वा
जघ्नुः। अनन्तरं क्षुद्रा महान्तश्च निखिलमनुजाः सेनापतयश्च समुत्थाय २६
मिसरदेशं जग्मु र्यतस्ते कस्दीयेभ्यो बिभयाञ्चक्रुः।

अपरं यिहूदावंशीयनृपस्य यिहोयाखीनस्य प्रवासस्य सप्तत्रिंशव- २७
त्सरस्य द्वादशमासस्य सप्तविंशे दिवसेऽर्थतो बाबिलीयनृप इविल्मि-
रोदको यस्मिन् वत्सरे राजत्वं कर्त्तुम् आरेभे तस्मिन् समये स यिहो-
याखीनं राजानं कारातो मोचयामास। अपरं तं प्रति प्रीत्यालापं २८
चकार यावन्तो भूपतयश्च तेन समं बाबिल्यासन् तेषां सर्व्वेषाम् आस-
नेभ्यस्तस्मै श्रेष्ठम् आसनं ददौ तदीयानि कारावसनानि परिवर्त्तया- २९
मास च। ततः स यावज्जीवनं तेन समं भोजनपाने अकरोत्। अपरं ३०
तस्य कृते नित्यवृत्तौ राज्ञा निरूपितायां तस्य यावज्जीवनं प्रतिदिनं
नित्यजीवनोपायस्तस्मै व्यश्राण्यत।

---

# वंशावल्याः प्रथमं पुस्तकं।

## १ प्रथमोऽध्यायः।

१ नोहपर्य्यन्ता वंशावलिः ५ येफतो वंशावलिः ८ हामो वंशावलिः १७ शामो वंशावलिः २४ इब्राहीमो वंशावलिः २९ इस्मायेलो वंशावलिः ३२ किटूराया इस्हाकस्य वंशावलिः ३५ एषावो वंशावलिः ४३ तदीयवंशस्याधिपतीनां नामानि च।

आदम् शेत् इनोश् कैनन् महललेल् येरद् हनोक् मिथूशेलह् लेमक् १
नोह् शाम् हाम् येफत्। ४

एतस्य येफतः सन्ताना गोमर् माजूज् मादय् यूनान् तूबल् मेशक् ५
तीरस्। तस्य गोमरः सन्ताना अस्किनस् रीफत् तोगर्म च। अपरं ६
यूनानः सन्ताना इलीशा तर्शीश् कित्तीम् दोदानीम्।

हामः सन्तानाः कूश् मिसर् पूट् किनान्। कूशः सन्तानाः सिबा ८
हवीला सप्ता रयमाः सप्तिखाश्च, अपरं रयमाः सन्तानौ शिबादि- ९

१० दनौ। कूशः सुतो निम्रोद् स पृथिवीमध्ये पराक्रमी भवितुम् आरभत।
११ अपरं मिसरः सन्ताना लूदीयानामीयलिहाबीयनप्तूहीयपत्रूषीयाश्च
१३ लोकाः पिलेष्टीयानामादिपुरुषाः कस्लूहीयाः कप्तोरीयाश्च लोकाः। अपरं
१४ किनानो ज्येष्ठः पुत्रः सीदोन् ततः परं हित्तीययिबूषीयेमोरीयगिर्गा-
१५ शीयहिव्वीयार्कीयसीनीयार्व्वदीयसिमारीयहमातीया मनुजाः।

१७ अपरञ्च शामः सन्ताना एलम् अशूर् अर्फक्षद् लूद् अराम् ऊष् हूल्
१८ गेथर् मश्। एतस्य अर्फक्षदः सन्तानः शेलहः शेलहस्य सन्तान एबर्।
१९ एबरो द्वौ पुत्रौ, एकस्य नाम पेलग (अर्थतो विभागः) यतस्तदानीं
२० पृथिवी विभक्ता बभूव, तस्य भ्रातु र्नाम यक्तन्। एतस्य यक्तनः सन्ताना
२१ अल्मोदद् शेलफ् हत्समावत् येरहो हादोराम् ऊषल् दिक्ला ओबल्
२३ अबीमायेल् शिबा ओफीर् हवीला योवब्, एते सर्व्वे यक्तनः सन्तानाः।

२४ शाम् अर्फक्षद् शेलह एबर् पेलग् रियूः सिरूग् नाहोर् तेरह
२८ इब्राम् अर्थत इब्राहीम्। इब्राहीमः सुताविस्हाक् इस्मायेल् च।

२९ तयो र्वंशावलिः। इस्मायेलो ज्येष्ठः पुत्रो निबायोत् पश्चात् केदर्
३१ अद्वेल् मिब्सम्, मिश्मो दूमा मसा हदर् तेमाः, यिटूर् नाफीश्
केदिमा एते सर्व्वे इस्मायेलो वंशाः।

३२ इब्राहीम उपपत्न्याः किटूरायाः सन्तानाः सिम्रन् यक्षन् मिदान्
मिदियन् यिश्बक् शूहश्च। अपरं तस्य यक्षणः सन्तानौ शिबाद-
३३ दनौ। किञ्च मिदियनः सन्ताना ऐफा एफर् हनोक् अबीद इल्दाया
३४ एते सर्व्वे किटूराया वंशाः। अपरम् इब्राहीमः पुत्रो य इस्हाक् तस्य
पुत्रावेषाविस्रायेलौ।

३५ एषावः पुत्रा इलीफस् रूयेल् यियूश् यालम् कोरहश्च। तस्येलीफसः
३७ पुत्राः, तैमन् ओमार् सिफो गयितम् किनस् तिम्ना ऽमालेक्। अपरं
३८ रूयेलः पुत्रा नहत् सेरहः शम्मो मिसा च। सेयीरः सुता लोटन्
३९ शोबल् सिबियोन् अना दिशोन् एत्सर् दीशन् च। अपरं लोटनः
४० सन्तानौ होरिहेममौ। लोटनश्च तिम्नानामिका भगिन्यासीत्। अपरं
शोबलः सन्ताना अल्वन् मानहत् एबल् शिफो ओनम्। अपरम्
४१ अया अनाश्च सिबियोनः सन्तानौ। अपरम् अनाः सन्तानो दिशोन्
४२ दिशोनः सन्ताना हिम्दन् इश्बन् यित्रन् किरान्। अपरम् एत्स-
रस्य सन्ताना बिल्हन् सावन् याकन्। अपरम् ऊष् अरान् च दीशनः
सन्तानौ।

इस्रायेलो जनपदे राजत्वात् पूर्व्वम् एते राजान इदोमदेशे राजत्वं ४३
चक्रुः। बियोरो बेलानामा सुतः, दिन्हावानगरञ्च तस्य राजधान्या-
सीत्। अनन्तरं बेले मृतवति वस्रानिवासिनः सेरहस्य पुत्रो योवव् ४४
तस्य पदे राजत्वं चकार। अपरं योववि मृते सति तैमन्देशीयो हूशम् ४५
तस्य पदे राजत्वं चकार। अपरं हूशमि मृते सति विददः सुतो यो ४६
हदद् मोयाबीयप्रान्तरे मिदियनं जितवान् स तस्य पदे राजत्वं
चकार तस्य राजधान्याश्च नामधेयम् अवीत् आसीत्। अपरं हददि ४७
मृते सति मस्रेकानिवासी सम्लस्तस्य पदे राजत्वं चकार। अपरं सम्ले ४८
मृते सति फरातनटिन्याः समीपस्थरिहोबोतनिवासी शौल् तस्य पदे
राजत्वं चकार। अपरं शौलि मृते सत्यकबोरः पुत्रो बाल्हानन् तस्य ४९
पदे राजत्वं चकार। अपरं बाल्हाननि मृते सति हदर् तस्य पदे ५०
राजत्वं चकार पायूनगरञ्च तस्य राजधान्यासीत् मेषाहवस्य दौहित्री
मट्रेदो दुहिता मिहेटवेल् च तस्य जायासीत्। अनन्तरं हदर् निधनं ५१
जगाम। इदोमीयराजानां नामानि, प्रथमं तिम्नः पश्चाद् अल्वा
यिथेत् अहलीवामा एला: पीनोन् किनस् तैमन् मिव्सर् मग्दीयेल् ५४
ईरम्। इम इदोमदेशस्य राजान आसन्।

---

# २ द्वितीयोऽध्यायः।

१ इस्रायेलो वंशावलिः ३ यिहूदा वंशावलिः १८ कालेबस्य वंशावलिः २१ हिष्रोणस्य वंशावलिः २५ यिरह्मेलस्य वंशावलिः ३४ शेशनस्य वंशावलिः ४२ कालेबतनयस्य मेशा वंशावलिः ५० कालेबतनयस्य हूरस्य वंशावलिश्च।

इस्रायेल एते तनयाः, रूबेन् शिमियोन् लेवि यिहूदा इषाखर् सिबू- १
लून् दान् यूषफ् बिन्यामीन् नप्तालि गाद् आशेर्। २
किनानीयशूयस्य दुहितु गर्भे यिहूदास्त्रयः सन्ताना जज्ञिरे, एर् ३
ओनन् शेलाश्च, तेषां मध्ये यिहूदा ज्येष्ठः पुत्रः एर् परमेश्वरस्य
साक्षाद् दुष्टो भूत्वा परमेश्वरेण व्यापादयाञ्चक्रे। अनन्तरं यिहूदाः ४
पुत्रवध्वास्तामरो गर्भे तस्यौरसौ पेरससेरहौ जज्ञाते यिहूदास्ते पञ्चपुत्रा
बभूवुः। तस्य पेरसस्य तनयौ हिष्रोणहामूलौ द्वौ। अपरञ्च सेरहस्य ५
तनयाः सिम्रिरैथनो हेमनः कल्कोलो देराश्चैते पञ्चजनाः। किञ्च सम्रेः ७
पौत्रः कर्म्मेः पुत्र आखनो निवेदितं द्रव्यमधि निदेशं लङ्घित्वेस्रायेलो
विघ्नं घटितवान्। अपरम् एथनस्य तनयोऽसरियः। अपरं हिष्रोणस्य ८

१० तनया एते यिरह्मेलोऽरामः कालेबश्च। अरामस्य तनयोऽम्मीनादब-
११ स्तस्याम्मीनादबस्य पुत्रो यिहूदावंशस्याध्यक्षो नह्शोनः। नह्शोनस्य
१२ तनयः सल्मोनः सल्मोनस्य तनयो बोयसः। अपरं बोयसस्य तनय
१३ ओबेदः, ओबेदस्य पुत्रो यिशयः। एतस्य यिशयस्य ज्येष्ठः पुत्र इली-
१४ याबः, द्वितीयोऽबीनादबः, तृतीयः शिम्मः, चतुर्थो निथनेलः, पञ्चमो
१५ रद्दयः, षष्ठ ओत्समः, सप्तमो दायूद्। तेषां भगिन्यौ सिरूयाबीगयिलौ
१७ किञ्च सिरूयायास्त्रयः पुत्रा अबीशयो योयाबोऽसाहेलश्च। अपरम् अबी-
गयिलः सुतोऽमासास्तस्यामासा जनक इस्मायेलीयो येथर आसीत्।
१८ अपरं हिष्रोणस्य तनयः कालेबो निजजाययो र्यिरियोताख्ययो
१९ र्गर्भयो र्येशरं शोबबम् अर्दोनञ्च जनयामास। अपरम् अजूबायां मृतायां
२० कालेब इफ्राथां व्यवहत् तस्याञ्च हूरो जज्ञे। हूरस्य सुत ऊरिः, ऊरेः
सुतो बित्सलेलः।
२१ हिष्रोणः षष्टिवत्सरवयस्कः सन् गिलियदजनकस्य माखीरस्य दुहि-
२२ तरं व्यूढोपजग्मिवान् तस्या गर्भे च तस्मात् सिगूबोऽजायत। तस्य
सिगूबस्य पुत्रो यो यायीरस्तस्य गिलियदजनपदे त्रयोविंशतिनगराण्या-
२३ सन्। परन्तु गिशूरीया अरामीयाश्च यायीरस्य तानि नगराणि किनातं
तत्सीमास्थितग्रामांश्च साकल्येन षष्टिनगराणि तेभ्योऽपहृत्य वशीचक्रिरे।
२४ एते निखिला गिलियदतातस्य माखीरस्य वंशा आसन्। अनन्तरं
कालेबेफ्राथायां हिष्रोणे मृतवति हिष्रोणस्य जायाया अबियाया गर्भे
तदौरसस्तिकोयस्य जनकोऽश्हूरोऽजायत।
२५ हिष्रोणस्य ज्येष्ठतनयो यो यिरह्मेलस्तस्य ज्येष्ठतनयोऽरामोऽपराश्च
२६ पुत्रा बूना ओरश्च ओत्समोऽहियश्च। अपरम् अटारानामिका यिर-
२७ ह्मेलस्यापरा जायासीत् तस्या आत्मज ओनमः। अपरञ्च यिरह्-
मेलस्य ज्येष्ठतनयो योऽरामस्तस्य पुत्रो मायोऽपरो यामीन एकरश्च।
२८ ओनमस्य पुत्रौ शम्मयो यादाश्च शम्मयस्य तनयौ नादबाबीशूरौ।
२९ किञ्च अबीहयिल्नामिकाया जायाया गर्भेऽबीशूरस्य तनयावह्बान्-
३० मोलीदावजायेतां। अपरं नादबस्य तनयौ सेलदाप्पयिमौ, स सेलदो
३१ निरपत्यो ममार। अपरम् अप्पयिमस्य तनयो यिशियि र्यिशियेः पुत्रः
३२ शेशनः शेशनस्य तनयोऽह्लयः। अपरं शम्मयस्य भ्रातु र्यादास्तनयौ
३३ येथरयोनाथनौ, स येथरो निरपत्यो ममार। अपरं योनाथनस्य
तनयौ पेलतः सासाश्च। एते निखिला यिरह्मेलस्य वंशाः।

शेशनस्य तनयो नासीत्, केवलं दुहितर आसन् किन्तु यार्हानामा ३४
शेशनस्य मिस्रीय एको दास आसीत्। अनन्तरं शेशनेन निजकन्या ३५
स्वदासाय यार्है विवाहार्थम् अदायि ततस्तस्याम् अत्तयोऽजायत। तस्या- ३६
त्तयस्य तनयो नाथनः, नाथनस्य तनयः सावदः, सावदस्य तनय ३७
इफ्‌ललः, इफ्‌ललस्य तनय ओवेदः, ओवेदस्य तनयो येहूः, येहोस्तनयो ३८
ऽसरियः, असरियस्य तनयो हेलसः, हेलसस्य तनय इलियासाः, इलि- ३९
यासास्तनयः सिस्मयः, सिस्मयस्य तनयः शल्लुमः, शल्लुमस्य तनयो ४१
यिकमियः, यिकमियस्य तनय इलीशामाः।

यिरह्मेलस्य सहजस्य कालेवस्य ज्येष्ठः सुतो मेशाः, मेशाः सुतः ४२
सीफः, सीफस्य सुतो मारेशाः, मारेशाः सुतो हिब्रोणः, हिब्रोणस्य सुताः ४३
कोरहतप्पूहौ रेकमः शेमाश्च। अपरं शेमाः सुतो यर्कियमस्य जनको ४४
रेकमः, रेकमस्य सुतः शम्मयः, शम्मयस्य सुतो मायोनः, मायोनस्य ४५
सुतो बैत्सूरः। अपरं कालेवस्योपपत्न्या ऐफायाः सुता हारणो मोत्सा ४६
गासेसश्च, किन्तु हारणस्य सुतो येह्दयः। येह्दयस्य तनया रेगमो ४७
योथमो गेशनः पेलट ऐफाः शाफश्च। अपरं कालेवस्योपपत्न्या माखायाः ४८
सुतौ शेवरत्तिर्हनौ। परन्तु तस्या मद्मन्ना जनकः शाफो मग्वेनागि- ४९
वियोश्च जनकः शिवा अक्सानामिका कालेवस्य दुहिता च जज्ञिरे।

कालेवस्य वंशा एते। इफ्राथाया गर्भजातो ज्येष्ठतनयो हूरः किरि- ५०
यतयियारीमस्य पिता शोवलो बैत्लेहमस्य पिता शल्मो बैत्गादेरस्य ५१
पिता हारेफश्च। अपरं किरियतयियारीमस्य पितुः शोवलस्यात्मजा ५२
हरोया हत्सीहम्मनूखोतश्च। किरियतयियारीमस्य वंशा यित्रीयपूथी- ५३
यशूमाथीयमिश्रायीयाः। अपरं तेभ्यः सरियीयेष्टायोलीयौ समुत्पन्नौ।
शल्मस्य वंशा बैतलेहमो निटोफा अट्रोतो बैतयोयाबः सरियोयो हत्सी- ५४
हम्मनूखीयश्च किन्तु याबेसे वासकारी सोफेरीयवंशः किन्तु तिरिया- ५५
थीयशिमियर्तीयसूखाथीयाः। एते निखिला रेखबवंशस्य पितु र्हामस्य
सन्तानाः केनीयनाम्ना विख्याताश्चासन्।

---

## ३ तृतीयोऽध्यायः।

१ दायूदो वंशावलिः १० सुलेमनो वंशावलिः १७ यिखनियस्य वंशावलिश्च।

हिब्रोणे दायूद एते पुत्राः प्रसुषुविरे। यिष्रेयेलीयाहीनोयमाया १

गर्भजातोऽम्नोननामा दायूदो ज्येष्ठः पुत्रो बभूव; अपरं कर्म्मिलीयाबी-
२ गयिलाया गर्भजातो दानियेलो द्वितीयः पुत्रो बभूव; अपरं गिशूरस्य
नृपतेस्तल्मयस्य दुहितु र्माखाया गर्भजातोऽवशालोमनामा तृतीयः
पुत्रो बभूव; अपरं हग्गीताया गर्भजातोऽदोनियनामा चतुर्थः पुत्रो
३ बभूव; अपरम् अबीटलाया गर्भजातः शिफटियनामा पञ्चमः पुत्रो
बभूव; किञ्च तस्य जायाया इग्लाया गर्भजातो यित्रियमनामा षष्ठः
४ पुत्रो बभूव। हिब्रोणे तस्यैते षट्तनया जज्ञिरे, किञ्च दायूद् तत्र
स्थाने षण्मासाधिकान् सप्तवर्षान् राजत्वं चकार। ततः परं यिरूशा-
५ लमे त्रयस्त्रिंशद्वत्सरान् यावद् राजत्वं चकार। अपरं तदीया एते
तनया यिरूशालमे जज्ञिरे। शिमियः शोबबो नाथनः सुलेमान् च,
६ एते चत्वारः पुत्रा अम्मीयेलस्य दुहितु र्बतशेवाया गर्भजाताः। तदन्ये
८ यिभर इलीशूय इलीफेलटो नोगहो नेफगो याफिय इलीशामा इली-
९ यादा इलीफेलटश्चेति नवजनाः। दायूद उपपत्नीनां पुत्रान् विहाय
सर्व्व एते तेषां भगिनी तामरा च दायूदोऽपत्यान्यासन्।

१० सुलेमनः सुतो रिहबियामः, रिहबियामस्य सुतोऽबियः, अबियस्य
११ सुत आसाः, आसाः सुतो यिहोशाफटः, यिहोशाफटस्य सुतो योरामः,
१२ योरामस्य सुतोऽहसियः, अहसियस्य सुतो योयाशः, योयाशस्य सुतो
१३ ऽमत्सियः, अमत्सियस्य सुत उषियः, उषियस्य सुतो योथमः, योथमस्य
सुत आहसः, आहसस्य सुतो हिष्कियः, हिष्कियस्य सुतो मिनशिः,
१४ मिनशेः सुत आमोनः, आमोनस्य सुतो योशियः, योशियस्य ज्येष्ठपुत्रो
योहाननः, द्वितीयः पुत्रो यिहोयाकीमः, तृतीयः सुतः सिदिकियः,
१६ चतुर्थः सुतश्च शल्लुमः। किञ्च यिहोयाकीमस्य पुत्रौ यिहोयाखीनः
सिदिकियश्च।

१७ बन्दिनो यिहोयाखीनस्य सुताः शल्टीयेलो मल्कीरामः पिदायः शिन-
१९ त्सरो यिकमियो होशामा निदवियश्च। अपरं पिदायस्य सुतौ सिरु-
ब्बाबिलः शिमियिश्च किञ्च सिरुब्बाबिलस्यापत्यानि मिशुल्लमो हना-
२० नियश्च तयो र्भगिनी शिलोमीता च। हशुबा ओहेलो बेरिखियो
२१ हसदियो यूशब्हेसदश्चेमे पञ्च जनाः। अपरं हनानियस्य पुत्रौ पिल-
टियो यिशायियश्च तयोः सुताः रिफायोऽर्णन ओबदियः शिखनियश्च।
२२ शिखनियस्य तनयः शिमयियः, शिमयियस्य तनया हट्टुशो यिगालो
२३ बारीहो नियरियः शाफटो हसरियश्चेति षड्जनाः। अपरं नियरियस्य

सन्ताना इलीयवैनयो हिष्कियोऽस्रीकामश्चैते त्रयो जनाः। अपरम् २४
इलीयवैनयस्य सुता होदवियः इलीयाशीबः पिलायोऽक्कुबो योहाननो
दिलायोऽनानिश्च सप्त जना एते।

## ४ चतुर्थोऽध्यायः।

१ यिहूदा वंशावलिः ५ अश्हूरस्य वंशावलिः ११ किलूबस्य वंशावलिः २१ शेला वंशावलिः २४ शिमियोनस्य वंशावलिः ३९ मुख्याध्यक्षाणां कथनञ्च।

यिहूदा अपत्यानि पेरसो हिष्रोणः कर्म्मि हूरः शोवलश्च। अपरं १
शोवलस्य सुतो रायाः, रायाः सुतो यहतः, यहतस्य सुतावहूमयो लह- २
दश्च। एते निखिलाः सरियीयवंशनाम्ना विख्याताः। ऐटमस्य पितुर- ३
पत्यानि यिष्रियेलः यिश्मा यिद्बशस्तेषां हत्सिलिल्पोनीनामिका भगिनी
च। अपरं पिनूयेलस्य पिता गिदोरो हूशस्य तात एसरश्च वैतलेह- ४
मस्य पितुरिफ्राथा ज्येष्ठपुत्रस्य हूरस्य सुतावास्तां।

तिकोयस्य पितुरश्हूरस्य नाम्ना हिला नारा च द्वे जाये आस्तां। ५
तस्यौरसा नारायाः सुता अहुषमो हेफरस्तैमिनिरहष्टरिश्चैते ना- ६
रायाः सन्तानाः। किञ्च हिलाया अपत्यानि सेरतो यित्सोहर इत्- ७
नमः कोसश्च। कोसस्य सन्ताना आनवः सोबेवा हारुमतनयस्याह- ८
र्हेलस्य वंशाश्च। अपरम् अहर्हेलस्य पुत्रो याबेषो निजभ्रातृगणतः ९
सम्मानित आसीत्। अहं दुःखेन गर्भधारणमकार्षम् इति कथयित्वा
तस्य जननी तस्य नामधेयं याबेषः (दुःखदायकः) इत्यकरोत्। परन्तु १०
याबेष इस्रायेलीयेश्वरं प्रति प्रार्थनां कुर्व्वन् बभाषे हे ईश्वर त्वमेव
मह्यम् आशिषं देहि ममाधिकारं वर्द्धय तव करौ मम सन्निधौ भवतां
मया यत् कष्टं न लभ्यते तत्कृते तस्मात् माम् अव। तत ईश्वरेण
तस्मै तत् प्रार्थितम् अदायि।

शूहस्य भ्राता यः किलूबस्तस्य तनयो मिहीरः, मिहीरस्य च तनय ११
इष्टोनः। इष्टोनस्य तनया बैतराफा पासेह ईरनाहशस्य जनकस्ति- १२
हिन्नश्च, एते निखिला रेखाहवंशाः। अपरं किनसस्य सन्तानावत्नी- १३
येलः सिरायश्च। अत्नीयेलस्य तनयौ हथतो मियोनोथयश्च। मियो- १४
नोथयस्य तनयोऽफ्राः, सिरायस्य तनयः शिल्पकरीयप्रान्तरस्थलोकानां
जनको योयाबः, यतस्ते शिल्पिन आसन्। अपरं यिफुन्नेः पुत्रो यः १५
कालेबस्तस्य तनया ईर एलाहो नयमश्च। एलाहस्य सुतौ किनसो

१६ यिहल्लिलेलस्य। अपरं यिहल्लिलेलस्य सुताः सीफः सीफाहश्चारियो
१७ ऽसारेल इत्याह्नः। अपरम् इज्राहस्यापत्यानि येथरो मेरद एफरो या-
लोना च, किन्तु यालोनाया अपत्यानि मरियम् शम्मय इष्टिमोयस्य तातो
१८ यिश्बहश्च। अपरं तस्य जायाया यिहूदीयायाः सुतो गिदोरस्य जनको
येरदः सोखोः पिता हेबरः सानोहस्य जनको यिकूथीयेलश्च। अपरं
स फिरौणो विषियानामिकां यां दुहितरं व्यवहत् तस्याः सुतो मेरदः।
१९ नहमस्य भगिनी या होदियस्य जाया तस्याः सन्तानौ कियीलाः पिता
२० गर्मि मीखाथीय इष्टिमोयश्च। अपरं शीमोनस्य सन्ताना अम्नोनो रिन्नो
विन्हानन्स्तीलोनो यिशियिश्च। यिशयेः सुतौ सोहेतो विन्सोहेतश्च।
२१ यिहूदाः सुतस्य शेलाः सन्ताना लेकाहस्य पिता एरो मारेशाः पिता
लादाहो ऽपरम् असवेयवंशीया ये लोकाः सूक्ष्मवसनानि वयन्तेषां
२२ वंशा योकीमः कोषेवा नामवा योयाशः सारफश्चेतिनामानौ मोया-
२३ वदेशस्य जेतारौ याशुबिलेहमश्च। एताः कथा अतीव पुरातन्यः। इमे
कुम्भकारा आसन् उद्यानेषु प्राचीरविशिष्टस्थानेषु च न्यवसन्, यतस्ते
राज्ञः कार्य्यार्थं तस्य सन्निधौ न्यवसन्।
२४ शिमियोनस्य सन्ताना निमूयेलो यामीनो यारीवः सेरहः शौलश्च।
२५ शौलस्य सन्तानः शल्लुमः, शल्लुमस्य सुतो मिब्समः, मिब्समस्य सुतो
२६ मिश्मः। मिश्मस्य तनयो हमूयेलः, हमूयेलस्य तनयः सक्कूरः, सक्कूरस्य
२७ तनयः शिमयिः। तस्य शिमयेः षोडश तनयाः षट् दुहितरश्चासन्
किन्तु तस्य सहजानां बहवः सुता नासन् तेषां वंशाश्च यिहूदावंश इव
२८ न ववृधिरे। ते बेर्शेबायां मोलादायां हत्सरशूयाले बालायाम् एत्समे
३० तोलदे बथूयेले हर्मायां सिक्लगे बैतमर्काबोते हत्सरसूसीमे बैतबिर्य्यां
शारयिमे च समूषुः। दायूदो राजत्वपर्य्यन्तम् एतानि नगराणि तैर-
३२ ध्यक्रियन्त। अपरम् ऐटमम् ऐनं रिम्मोणं तोखेनम् आशनञ्च ग्रामैः
३३ समम् एतानि पञ्च नगराणि तेषामेवासन्। अपरं बालं यावद् एतेषां
नगराणां चतुर्दिक्स्थिताः सकलग्रामाः। तेषां निवासस्थानान्येतानि
वंशावली चैषा।
३४ मिशोववो यम्लेको ऽमत्सियस्य सुतो योशो योयेलो ऽसीयेलस्य प्रपौत्रः
३५ सिरायस्य पौत्रो योशिबियस्य पुत्रो येहूः, अपरम् इलियवैनयो याको-
३६ वाहो यिशोहायो ऽसायो ऽदीयेलो यिशीमीयेलो बिनायश्च, किञ्च शिम-
यियस्यात्मजप्रपौत्रः शिफ्रे वंशप्रपौत्रो यिदयियस्य प्रपौत्रो ऽल्लोनस्य

पौत्रः शिफियेः पुत्रः सीषः । इमे लब्धनामा निजनिजवंशस्याधिपतयो ३८
बहुगोष्ठ्यश्चासन् ।

ते स्वेषां पशुव्रजानां चरणयोग्याया भूमेरन्वेषणार्थं गिदोरस्य प्रवेश- ३९
स्थानम् अर्थतः प्रान्तरस्य पूर्व्वपार्श्वं यावत् जग्मुः । ततस्ते बहुतृणाम् ४०
उत्तमां चरणयोग्यभूमिं प्रापुः स च देशः प्रशस्तः शान्तो निर्व्विरोध-
श्चासीत् यस्मात् हाम्वंशीया मनुजाः पूर्व्वं तत्रावसन् । यिहूदादे- ४१
शीयराजस्य हिष्कियस्य राजत्वसमये पूर्व्वलिखितास्ते लोका व्रजित्वा
तेषां मनुजानां दूष्याणि तत्र लब्धान् मियूनीयांश्च विनाश्य निःशेषम्
उच्चिच्छिदुः । अद्यापि ते तत्र स्थाने निवसन्ति यतस्तत्र स्थाने तेषां
पशुव्रजानां चरणयोग्या भूमि र्विद्यते । अपरं तेषां शिमियोनीयवंशस्य ४२
पञ्चशतसंख्यजनाः यिशयेः पुत्रान् पिलटियं नियरियं रिफायम् उषी-
येलञ्च सेनापतीन् विधाय सेयीरं शिलोच्चयं जग्मुः । अपरम् अमा- ४३
लेकीयानां येऽवशिष्टा मनुजा जीवन्त आसन् तान् ताडयित्वा तस्मिन्
स्थाने वसतिं कृत्वाद्यापि तत्र निवसन्ति ।

---

## ५ पञ्चमोऽध्यायः ।

१ रूबेणस्य वंशावलिः ११ गादस्य वंशावलिः १८ रूबेणीयानां गादीयानां मिनशेर-
र्द्धवंशस्य च चरित्रं ।

रूबेण इस्रायेलो ज्येष्ठतनय आसीत् परन्तु स निजजनकस्य शय- १
नीयम् अपवित्रं कृतवान् एतत्कारणाद् इस्रायेलः सुतस्य यूषफ-
सुताभ्यां तस्य ज्येष्ठाधिकारोऽदीयत किन्तु वंशावल्यां तयो र्नामनी
ज्येष्ठस्य श्रेण्यां न लिलिखाते । यतो यिहूदा निजसहजगणमध्ये बल- २
वत्तमः सन् तस्य पदे प्रधानाधिपतित्वं प्राप तथापि ज्येष्ठाधिकारो
यूषफस्य बभूव । इस्रायेलो ज्येष्ठतनयस्य रूबेणस्य सन्ताना हनोकः ३
पल्लु र्हिष्रोणः कर्म्मिश्च । किञ्च योयेलस्य सुतः शिमयियः, शिमयियस्य सुतो ४
गूगः, गूगस्य सुतः शिमियिः, शिमियेः सुतो मीखायः, मीखायस्य ५
सुतो रायायः, रायायस्य सुतो वाल्, वालः सुतो बेरायः, स रूबेण- ६
वंशीयानाम् अध्यक्षः सन् अश्शूरस्य नरपतिना तिग्लतपिलेषरेण प्रावा-
स्यत । यदा तेषां वंशावलिरलिख्यत तदा निजनिजवंशानुसारेण ७
तस्यैते सहजगणा आसन् । मुख्यो यियूयेलोऽपरः सिखरियः । अपरं ८
योयेलस्य प्रपौत्रः शेमाः पौत्र आससस्य पुत्रो बेलाः, सोऽरोयेरस्य

९ समीपे निवं बालमियोनञ्च यावद् अवसत् । अपरं पूर्व्वदिशि फरात-
सरितः समीपस्थप्रान्तरस्य प्रवेशस्थानं यावद् वसतिम् अकरोत्, यतो
१० गिलियद्देशे तेषां पशुनिवहस्य बाहुल्यम् अजायत । अपरं शौलस्य
राजत्वसमये ते हाजिरीयैः समं युध्यन्तस्तान् वशीकृत्य गिलियद्-
जनपदस्य कृत्स्ने पूर्व्वभागे तेषां दृष्येषु न्यवसन् ।
११ अपरं गादवंशीया वाशनजनपदस्थां सल्खां यावत् तेषां सम्मुखे
१२ ऽवसन् । तेषां मध्ये योयेलो मुख्य आसीत् तस्य पश्चात् शाफमः,
१३ अनन्तरं यानयः शाफटश्चैते वाशनेऽवसन् । किञ्च तेषां पितृवंश-
सम्बन्धीया भ्रातरो मीखायेलो मिशुल्लमः शेवा योरयो याकनः सीय
१४ एवरश्चैते सप्त जना आसन् । अपरं वृषस्य सुतो यहुदः, यहुदोः सुतो
यिशीशयः, यिशीशयस्य सुतो मीखायेलः, मिखायेलस्य तनयो गिलियदः,
गिलियदस्य तनयो यारोहः, यारोहस्य तनयो हूरिः, हूरेः सुतो
१५ ऽवीहयिलः, ते तस्यावीहयिलस्य वंशाः । अपरं गूनेः पौत्रो ऽब्दियै-
१६ लस्य सुतो ऽहिस्तेषां पितृवंशस्य मुख्य आसीत् । ते गिलियदे वाशने
१७ तत्रत्येषु ग्रामेषु स्वकीयसीमास्थितस्य शारोणस्य ग्रामेषु चावसन् । अपरं
यिहूदादेशीयस्य योथमस्य इस्रायेलदेशीयस्य यारवियामस्य च राजत्व-
समये तेषां सर्व्वेषां वंशावलिर्लिख्यत ।
१८ तत्र रूबेणवंशस्य गादवंशस्य मिनशेरर्द्धवंशस्य च फलकखड्गधनुर्धा-
रिणो युद्धे निपुणा युद्धगामिनश्च सप्तशतचतुश्चत्वारिंशत्-
१९ सहस्राणि जना योद्धार आसन् । हाजिरीयै यिटूरेण नाफिशेन
२० नोदवेन च समं तैः समरं कृत्वा तेषां विपरीतम् उपकारो लेभे ततो
हाजिरीयास्तेषां सर्व्वे सहायाश्च तेषां हस्तगता बभूवुः, यतः समरे
तैरीश्वरस्य सन्निधौ प्रार्थनायां कृतायां स तेषां प्रार्थनां शुश्राव यतस्ते
२१ तस्मिन् व्यश्वसन् । अतस्ते तेषां पञ्चाशत्सहस्राणि महाङ्गान् पञ्चाशत्-
सहस्राधिके द्वे लक्षे मेषान् द्वे सहस्रे गर्दभान् लक्षमेकं मनुजान् वशी-
२२ कृत्य लेभिरे । तं समरम् ईश्वर एव कृतवान् एतत्कारणाद् बहवो
ऽहन्यन्त, अपरम् इस्रायेलीयलोका यावन्न प्रावास्यन्त तावत् ते तेषां
२३ देशं जगृहुः । अपरं मिनशेरर्द्धवंशस्तस्मिन् जनपदे वाशनम् आरभ्य
बालहर्म्मोणं शिनीरं हर्म्मोणं शिलोच्चयञ्च यावद् वसतिं कुर्व्वन्तो ववृ-
२४ धिरे । तेषां पितृवंशानां मध्य एते मनुजा मुख्या आसन् एफरो
यिशियिरिलीयेलोऽस्रीयेलो यिरमियो होदवियो यहदीयेलश्चैते बलवन्तो

विख्याताश्च नरा निजनिजपितृवंशस्याध्यक्षा आसन्। परन्तु ते निज- २५
पितृलोकानाम् ईश्वरस्य विरुद्धम् अपराधिनो बभूवुस्तेषां सम्मुखाद्
ईश्वरेण तद्देशीया ये लोका दवयाञ्चक्रिरे तेषां सुरान् अनुगन्तुं विपथ-
गामिनो बभूवुश्च। तस्माद् इस्रायेलीयेनेश्वरेण पूलस्तिग्लतपिलेष- २६
रश्चैतयोरस्सूरीययो भूपत्यो र्मनसि प्रवर्त्तिते तौ तान् रूबेणवंशीयान्
गादवंशीयान् मिनशेरर्द्धवंशस्य लोकांश्च प्रवासयाञ्चक्रतुः किञ्च तान्
हलहं हाबोरं हारां गोषणसरितञ्च समानिन्यतुस्ते तत्र स्थाने ऽद्यापि
निवसन्ति।

---

## ६ षष्ठोऽध्यायः।

१ लेवेर्वंशावलिः ४ इलियासरस्य वंशावलिः १६ गेर्शोनस्य किहातस्य मिरारेश्च वंशावलयः ४९ हारोणवंशस्य कर्म्मणां कथनं ५४ याजकानां लेवीयानाञ्च नगराणां निर्णयश्च।

लेवेः सुता गेर्शोनः किहातो मिरारिश्च। अपरं किहातस्य तनयो १
ऽम्रामो यिस्हरो हिब्रोण उषीयेलश्च। अपरम् अम्रामस्य सन्ताना २
हारोणो मूसा मरियम् च किञ्च हारोणस्य सुता नादवोऽबिहूरिलिया-
सर ईथामरश्च।
अपरम् इलियासरस्य तनयः पीनिहसः, पीनिहसस्य सुतो ऽवीशूयः, ४
अवीशूयस्य सुतो बुक्किः, बुक्केः सुत उषिः, उषेः सुतः सिरहियः, सिर- ५
हियस्य सुतो मिरायोतः, मिरायोतस्य सुतो ऽमरियः, अमरियस्य सुतो
अहीटूवः, अहीटूवस्य सुतः सादोकः, सादोकस्य सुतो ऽहीमासः, अही- ८
मासस्य सुतो ऽसरियः, असरियस्य सुतो योहाननः, योहाननस्य सुतो १०
ऽसरियः, एष असरियो यिरूशालमे सुलेमना निर्म्मिते मन्दिरे ऽयजत।
अपरम् असरियस्य तनयो ऽमरियः, अमरियस्य तनयो ऽहीटूवः, अही- ११
टूवस्य सुतः सादोकः, सादोकस्य सुतः शल्लुमः, शल्लुमस्य सुतो हिल्कियः, १२
हिल्कियस्य सुतो ऽसरियः, असरियस्य सुतः सिरायः, सिरायस्य सुतो १४
यिहोषादकः। यस्मिन् समये परमेश्वरो निबूखद्नित्सरस्य करे यिहूदां १५
यिरूशालमञ्च समर्पयामास तस्मिन् समये एष यिहोषादको बन्दीभूय
जगाम।
लेवेः सुता गेर्शोनः किहातो मिरारिश्च। अपरं गेर्शोमस्य सुतौ १६
लिब्निः शिमियिश्च। अपरं किहातस्य सुता अम्रामो यिस्हरो हिब्रोण १८

१९ उषीयेलश्च। अपरं मिरारेः सुतौ मह्लि मूशिश्च। लेवीयपूर्ब्बपुरु-
२० षानुक्रमेण लेवीया वंशा एते। गेर्शोमस्य सुतो यो लिव्निस्तस्य सुतो
२१ यहतः, यहतस्य सुतः सिम्मः, सिम्मस्य सुतो योयाहः, योयाहस्य सुत
२२ इद्दुः, इद्दोः सुतः सेरहः, सेरहस्य सुतो यियत्रयः। अपरं किहातस्य सुतो
२३ ऽम्मीनादबः, अम्मीनादबस्य सुतः कोरहः, कोरहस्य सुतो ऽसीरः, असी-
रस्य सुत इल्कानाः, इल्कानाः सुतो ऽवीयासफः, अवीयासफस्य सुतो
२४ ऽसीरः, असीरस्य सुतस्तहतः, तहतस्य सुत ऊरीयेलः, ऊरीयेलस्य सुत
२५ उषियः, उषियस्य सुतः शौलः। अपरम् इल्कानाः सुतावमासयो ऽही-
२६ मोतश्च। अपरम् इल्काना अन्यः सुतः सूफः, सूफस्य सुतस्तोहः, तोहस्य
२७ सुत इलीयावः, इलीयावस्य सुतो यिरोहमः, यिरोहमस्य सुत इल्कानाः।
२८ इल्कानाः सुतः शिमूयेलः, शिमूयेलस्य ज्येष्ठः सुतो योयेलो ऽपरो ऽबियः।
२९ किञ्च मिरारेः सुतो मह्लिः, मह्लेः सुतो लिव्निः, लिव्नेः सुतः शि-
३० मियिः, शिमियेः सुत उषः, उषस्य सुतः शिमियः, शिमियस्य सुतो
३१ हगियः, हगियस्य सुतो ऽसायः। मञ्जूषाया अवस्थितेः परं दायूद्
परमेश्वरस्य मन्दिरे यान् जनान् गीतसेवायां न्ययोजयत् तेषां नामानि।
३२ यावत् सुलेमान् यिरूशालमे परमेश्वरस्य मन्दिरं न निरमापयत्
तावत् ते समाजस्य पवित्रावासस्य सम्मुखे गानेन पर्य्यचरन् स्वीयस्वीय-
३३ पर्य्यायानुसारेण च क्रियाम् अन्वतिष्ठन्। ते ऽनुष्ठातारस्तेषां पुत्राश्च
आसन्। किहातीयवंशस्य मध्ये हेमनो गायकः, तस्य हेमनस्य जनको
३४ योयेलः, योयेलस्य जनकः शिमूयेलः, शिमूयेलस्य जनक इल्कानाः,
इल्काना जनको यिरोहमः, यिरोहमस्य जनक इलीयेलः, इलीयेलस्य
३५ जनकस्तोहः, तोहस्य जनकः सूफः, सूफस्य जनक इल्कानाः, इल्काना
३६ जनको माहतः, माहतस्य जनको ऽमासयः, अमासयस्य जनक इल्-
कानाः, इल्काना जनको योयेलः, योयेलस्य जनको ऽसरियः, असरि-
३७ यस्य जनकः शिफनियः, शिफनियस्य पिता तहतः, तहतस्य जनको
ऽसीरः, असीरस्य जनको ऽवीयासफः, अवीयासफस्य जनकः कोरहः,
३८ कोरहस्य पिता यिष्हरः, यिष्हरस्य पिता किहातः, किहातस्य पिता
३९ लेविः, लेवेर्जनक इस्रायेल्। हेमनस्य दक्षिणे तस्य भ्राताऽसफो
ऽतिष्ठत्, तस्यासफस्य जनको बेरिखियः, बेरिखियस्य जनकः शिमियः,
४० शिमियस्य जनको मीखायेलः, मीखायेलस्य जनको बासेयः, बासेयस्य
४१ जनको मल्कियः, मल्कियस्य जनक इत्निः, इत्नेर्जनकः सेरहः, सेरहस्य

जनको ऽदायाः, अदाया जनक एथनः, एथनस्य जनकः सिम्मः, सिम्मस्य ४१
जनकः शिमियिः, शिमिये र्जनको यहतः, यहतस्य जनको गेर्षोमः, गेर्षो- ४३
मस्य जनको लेविः। एतेषाम् एथनादयो मिरारिवंशीया भ्रातरो वाम- ४४
दिश्यतिष्ठन् तस्यैथनस्य जनकः कीशिः, कीशे र्जनको ऽब्दिः, अब्दे र्जनको
मल्लूकः, मल्लूकस्य जनको हशवियः, हशवियस्य जनको ऽमत्सियः, अम- ४५
त्सियस्य जनको हिल्कियः, हिल्कियस्य जनको ऽम्सिः, अम्से र्जनको ४६
बानिः, बाने र्जनकः शेमरः, शेमरस्य जनको मह्लिः, मह्ले र्जनको ४७
मूशिः, मूशे र्जनको मिरारिः, मिरारे र्जनको लेविः। तेषां भ्रातरो ४८
लेवीया ईश्वरमन्दिरीयावासस्य निखिलकार्य्यार्थं निवेदिता आसन्।

परन्तु हारोणस्तस्य सुताश्च महापवित्रस्थानस्य निखिलकार्य्यानुसा- ४९
राद् होमवेदिधूपवेद्योरुपरि दग्धवस्तून्यदाहयन्; ईश्वरसेवकस्य मूसस
आज्ञानुसाराद् इस्रायेलः कृते प्रायश्चित्तञ्चाकुर्व्वन्। अपरम् एते सर्व्वे ५०
हारोणस्य वंशाः, हारोणस्य सुत इलियासरः, इलियासरस्य सुतः
पिनीहसः, पिनीहसस्य सुतो ऽबीशूयः, अबीशूयस्य सुतो बुक्किः, बुक्केः ५१
सुत उषिः, उषेः सुतः सिरहियः, सिरहियस्य सुतो मिरायोतः, मिरा- ५२
योतस्य सुतो ऽमरियः, ऽमरियस्य सुतो ऽहीटूवः, अहीटूवस्य सुतः ५३
सादोकः, सादोकस्य सुतो ऽहीमासः।

सीमानुसारेण दुर्गानुसारेण च किहातीयान्वयोद्भवानां हारोण- ५४
वंशीयानाम् इमानि वासस्थानानि बभूवुः, यतस्तेषामेव (प्रथमं) गुटि-
कापातो बभूव। चतुर्दिक्स्थप्रान्तरेण समं यिहूदादेशस्थं हिब्रोणं तेभ्यो ५५
ऽदीयत। परन्तु तस्य नगरस्य क्षेत्राणि ग्रामाश्च यिफुन्नेः सुताय काले- ५६
बायादीयन्त। अपरं हारोणवंशाय (यिहूदादेशे) नगराण्येतान्यदीयन्त, ५७
आश्रयनगरं हिब्रोणम्, अपरं प्रान्तरेण सह लिब्ना प्रान्तरेण समं
यत्तीरम् इष्टिमोयश्च? प्रान्तरेण समं हिलेनं प्रान्तरेण समं दिवीरं प्रा- ५८
न्तरेण समम् आशनं प्रान्तरेण समं बैतशेमशश्च। अपरं बिन्यामीनवंशे ६०
प्रान्तरेण समं गेबा प्रान्तरेण समम् आलेमतं प्रान्तरेण समम् अनाथो-
तश्च। इत्थं वंशानुसारेण तेषां साकल्येन त्रयोदशनगराण्यासन्। अन- ६१
न्तरं किहातीयवंशस्यावशिष्टेभ्यो मनुजेभ्यो गुटिकापातं विधाय मिनशि-
रर्द्धवंशाद् दशनगराणि प्रादीयन्त। अपरं गेर्षोनीयवंशायेषाखरवंशाद् ६२
आशेरवंशात् नप्ताल्विंशाद् वाशनस्थात् मिनशिरर्द्धवंशाच्च त्रयोदश-
नगराणि प्रादीयन्त। किञ्च मिरारिवंशाय रूबेणवंशात् सिबूलूनवंशाच्च ६३

६४ गुटिकापातं विधाय द्वादशनगराणि प्रादीयन्त। अनेन प्रकारेणेस्राये-
६५ लीयलोका लेवीयेभ्यो प्रान्तरैः समं तानि निखिलनगराणि ददुः। ते
यिहूदावंशात् शिमियोनवंशाद् बिन्यामीनवंशाच्च गुटिकापातेन नग-
राण्येतानि तेभ्यो दत्तानि च तेषां नामभि र्विख्यातानि भवन्ति।
६६ अपरं किहातीयवंशस्यावशिष्टा मनुजा इफ्रयिमवंशात् स्वसीमा-
६७ नगराणि लेभिरे। ते तेभ्य आश्रयनगरमेकम् अर्थतः प्रान्तरेण समम्
६८ इफ्रयिमशिलोच्चयस्थं शिखिमं प्रान्तरेण समं गेषरं, प्रान्तरेण समं
६९ यक्मियामं प्रान्तरेण समं बैथोरोणं, प्रान्तरेण समम् अयालोनं प्रान्त-
७० रेण समं गात्रिम्मोणं, मिनशिरर्द्धवंशात् प्रान्तरेण समम् आनेरं प्रान्त-
रेण समं बिल्यियमञ्चेमानि नगराणि किहातीयवंशस्यावशिष्टेभ्यो मनु-
७१ जेभ्यो ददुः। अपरं गेर्शोमीयवंशाय मिनशिरर्द्धवंशात् प्रान्तरेण समं
७२ बाशनस्थं गोलनं प्रान्तरेण समम् अस्तारोतञ्चादीयत। अपरम् इषा-
७३ खरवंशात् प्रान्तरेण समं केदशं प्रान्तरेण समं दाबिरतं, प्रान्तरेण समं
७४ रामोतं प्रान्तरेण समम् आनेमञ्च तेभ्योऽदीयत। अपरम् आशेरवंशात्
७५ प्रान्तरेण समं मिशालं प्रान्तरेण समम् अब्दोनं, प्रान्तरेण समं हुक्कोकं
७६ प्रान्तरेण समं रिहोबञ्च तेभ्योऽदीयत। अपरं नप्तालिवंशात् प्रान्तरेण
समं गालीलस्थं केदशं प्रान्तरेण समं हम्मोनं प्रान्तरेण समं किरिया-
७७ थयिमञ्च तेभ्योऽदीयत। अपरं मिरारेरवशिष्टवंशाय सिवूलूनवंशात्
७८ प्रान्तरेण समं रिम्मोणं प्रान्तरेण समं ताबोरञ्चादीयत। अपरं यिरीहोः
समीपे यर्द्दनस्य पारेऽर्थतो यर्द्दनस्य पूर्व्वदिशि रूबेणवंशात् प्रान्तरेण
७९ समं काननस्थं बेत्सरं प्रान्तरेण समं यहसं, प्रान्तरेण समं किदेमोतं
८० प्रान्तरेण समं मेफातञ्च तेभ्योऽदीयत। अपरं गादवंशात् प्रान्तरेण समं
८१ गिलियदस्थं रामोतं प्रान्तरेण समं महनयिमं, प्रान्तरेण समं हिष्बोनं
प्रान्तरेण समं याषेरञ्च तेभ्योऽदीयत।

---

## ७ सप्तमोऽध्यायः।

१ इषाखरस्य वंशावलिः ६ बिन्यामीनस्य वंशावलिः १३ नप्तालेः वंशावलिः १४ मिनशेः वंशावलिः २० इफ्रयिमस्य वंशावलिः २१ [illegible] वंशावलिः २८ तेषाम् अधिकारः ३० आशेरस्य वंशावलिश्च।

१ इषाखरस्य सुतास्तोलयः पूयो याशूबः शिम्रोणश्चैते चत्वारो जनाः।
२ अपरं तोलयस्य सुता उषिः रिफायो यिरीयेलो यह्मयो यिब्सम

शिमूयेलश्च। इम स्वीयपितृवंशस्यार्थतस्तोलयवंशस्य मुख्या निजलो-
कानां मध्ये पराक्रान्ताश्चासन् अपरं दायूदः समये ते संख्यया षट्-
शताधिकद्वाविंशतिसहस्राणि लोका आसन्। अपरम् उषेः सुतो ३
यिष्राहियः, यिष्राहियस्य तनया मीखायेल ओवदीयो योयेलो यिशिय-
श्चैते पञ्च जना मुख्या आसन्। अपरं युद्धार्थं तेषां पितृवंशानुसारेण ४
षट्त्रिंशत्सहस्राणि सैन्यान्यासन् यतस्तेषां जाया सुताश्चानेका आसन्।
अपरम् इषाखरवंशीयास्तेषां भ्रातरः सर्व्वे महापराक्रमिण आसन् ५
ते निजनिजवंशानुसारेण गणिताः सप्ताशीतिसहस्राणि लोका आसन्।
अपरं बिन्यामीनस्य सुता बेला बेखरो यिदीयेलश्चैते त्रयो जनाः। ६
अपरं बेलाः सुता इष्बोन उषिरुषीयेलो यिरेमोत ईरश्च। एते ७
पञ्च जना निजनिजपितृवंशे मुख्याः पराक्रमिणश्चासन्। वंशानुसारेण
गणितास्तेषां द्वाविंशतिसहस्राणि लोका आसन्। अपरं बेखरस्य तनयाः ८
शिमीरो योयाश इलियेसर इलीयवैनयो ऽम्रि यिरेमोतो ऽवियो ऽना-
थोत आलेमतश्चैते बेखरस्य सन्तानाः। तेषां पितृवंशीयमुख्यलोकानां ९
वंशावली गणिता विंशतिसहस्राणि द्वे शते पराक्रमिणो लोका लि-
खिता आसन्। अपरं यिदीयेलस्य सुतो बिल्हनः, बिल्हनस्य सुता १०
यियूशो बिन्यामीन एहूदः खिनानाः सेथनस्तर्शीशो ऽहीशहरश्च।
यिदीयेलस्यैते निखिलाः सन्ताना निजनिजपितृवंशानां मुख्याः परा- ११
क्रमिणो लोका आसन्। अपरं तेषां समरगमनयोग्या द्विशताधिक-
सप्तसहस्राणि योद्धार आसन्। अपरम् ईरस्य सुतौ शुप्पीमो हुप्पी १२
मश्च, अहेरस्य च सुतो हुशीमः।
अपरं बिल्हाया गर्भजातस्य नप्तालेः सुता यहसियेलो गूनि येत्सरः १३
शल्लूमश्च।
मिनशेः सुतावस्रियेलो ऽरामीयाया उपपत्न्या जातो गिलियदस्य १४
पिता माखीरश्च। स माखीरो हुप्पीमशुप्पीमयो र्भगिनीं माखाम् उद्- १५
वाह तस्य द्वितीयपुत्रस्य नाम सिलफाद आसीत् तस्य सिलफादस्य
केवलं दुहितर आसन्। अपरं माखीरस्य जाया माखा पुत्रं प्रसूय १६
तस्य नाम पेरश इति चकार, तस्य सहोदरस्य नाम शेरशः, अपरं
पेरशस्य सुतयो र्नामनी ऊलमो रेकमश्च। ऊलमस्य सुतो बिदानः, १७
मिनशेः पौत्रो माखीरस्य पुत्रो गिलियद एतेषां सर्व्वेषाम् आदिपुरुष
आसीत्। अपरं तस्य भगिन्या हम्मोलेकतायाः सुता इश्होदो ऽबीये- १८

१९ सदो महलाः शिमीदाश्च। अपरं शिमीदाः सुता अहीयनः शेखमो
लिक्हिरनीयामश्च।

२० इफ्रयिमस्य सुतः शूथलहः, शूथलहस्य सुतो बेरदः बेरदस्य सुतस्त-
२१ हतः, तहतस्य सुत इलियादाः, इलीयादाः सुतस्तहतः, तहतस्य सुतः
सावदः, सावदस्य सुताः शूथेलह एत्सर इलियादश्च, परन्तु देशनि-
वासिनो गातीया लोकास्तान् अवधिषुः, यतस्ते तेषां पशून् नेतुम्
२२ आजग्मुः। ततस्तेषां जनक इफ्रयिमो बहुदिनानि यावद् अशोचत्
तस्य भ्रातरश्च तं सान्त्वयितुम् आगच्छन्।

२३ अनन्तरं तस्मिन् निजभार्य्यामुपगते तस्य जाया गर्भवती भूत्वा पुत्र-
मेकं प्रसूय तस्य नाम बिरियम् (अमङ्गलमिति) चकार यतस्तदानीं तस्य
२४ निवेशने ऽमङ्गलम् अभवत्। तस्य दुहिता शेरा चोपरिस्थं नीचस्थञ्च
२५ बैथोरोणम् उषेणशेराञ्च निर्म्मापयामास। तस्य सुतौ रेफहरेशफौ,
२६ रेशफस्य सुतस्तेलहः तेलहस्य सुतस्तहनः, तहनस्य सुतो लादनः,
२७ लादनस्य सुतो ऽम्मीहूदः, अम्मीहूदस्य सुत इलीशामाः, इलीशामाः
सुतो नूनः, नूनस्य सुतो यिहोशूयः।

२८ एतैरधिकृतानि देशनिवासस्थानानि चेमानि, बैथेलं तदीयग्रामाश्च,
अपरं पूर्व्वस्यां दिशि नारणं पश्चिमायां दिशि च गेषरं तदीयग्रामाश्च
२९ शिखिमं तदीयग्रामाश्च, असा तदीयग्रामाश्च। अपरं मिनशिवंशस्य
सीमायाः समीपस्थं बैतशानं तदीयग्रामाश्च तानकं तदीयग्रामाश्च मगि-
द्दस्तदीयग्रामाश्च दोरं तदीयग्रामाश्च। एतेषु स्थानेष्विस्रायेलः पुत्रस्य
यूषफस्य वंशा न्यूषुः।

३० आशेरस्यापत्यानि यिम्ना यिश्वो यिश्वि बिरियस्तेषां भगिनी सेरहा
३१ च। बिरियस्य तनयौ हेवरो बिर्षातस्य पिता मल्कियेलश्च। हेवरस्या-
३३ पत्यानि यफ्लेटः शोमरो होथमस्तेषां भगिनी शूया च। यफ्लेटस्य
३४ सुताः पासको बिमहलोऽश्वतश्च, एते सर्व्वे यफ्लेटस्य वंशाः। अपरं
३५ शेमरस्य सुता अहिः रोहगो यिहुब्बो ऽरामश्च। अपरं तस्य भ्रातुर्हेल-
३६ मस्य सुताः सोफहो यिम्नः शेलशः आमलश्च। सोफहस्य च सुताः
३७ सूहो हर्णेफरः शियालो बेरि यिम्रो बेत्सरो होदः शम्मः शिलशो
३८ यित्रो बेराश्च। अपरं येथरस्य सुता यिफुन्निः पिस्पो ऽराश्च। अपरम्
४० उल्लस्य सुता आरहो हन्नीयेलो रित्सियश्च। एते सर्व्वे आशेरस्य वंशाः
स्वीयपितृवंशानां मुख्या महाविक्रान्ताश्च मनुजा अधिपतीनां मध्ये

अय्याश्चासन् एतेषां समरगमनयोग्याः षड्विंशतिसहस्राणि लोका वंशावल्यां लिखिता आसन्।

---

## ८ अष्टमोऽध्यायः।

१ बिन्यामीनस्य प्रधानापत्यानां वंशावलिः ३३ शौलयोनाथनयो र्वंशावलिश्च।

बिन्यामीनस्य ज्येष्ठः सुतो बेला द्वितीयोऽस्वेलस्तृतीयो ऽहर्हश्चतुर्थो १
नोहाः पञ्चमो राफाः। अपरं बेलाः सुता अद्दरो गेरा अबीहूदो ऽबी- २
शूयो नामानो ऽहोहो गेराः शिफूफनो हूरमश्च। इम एहूदस्य सुता ३
गेबानिवासिनां मध्ये पितृवंशानां मुख्या आसन् अनन्तरं ते तान् मान-
हतं स्थानान्तरं निन्युः। विशेषतो नामानो ऽहियो गेराश्च, स एव ७
तान् दूरीचकार, तस्य गेराः सुता उषो ऽहीहूदः शहरयिमस्य। अपरं ८
तेषु स्थानान्तरीकृतेषु शहरयिमो मोयावजनपदे सुतान् जनयामास
तस्य हूशीमा वारा चेतिनामिके द्वे जाये आसन्। अपरं निजभा- ९
र्यया होदशाया गर्भजातास्तस्य तनया योबबः सिबियो मेशा मल्कमो
यियूशः शखियो मिर्मश्च तस्यैते सुता निजपितृवंशानां मुख्या आसन्। १०
अपरं हूशीमाया गर्भजातौ तस्य सुतावबीटूब इल्पालश्च। तस्येल्पा- ११
लस्य सुता एबरो मिशियम ओनो लोदस्य तदन्तःपातिग्रामाणाञ्च नि-
र्माता शामदश्च। अपरं बिरियः शेमाश्चैतावयालोननिवासिनां मध्ये पि- १३
तृवंशानां मुख्यावास्तां तौ गातनिवासिनो द्रवयाञ्चक्राते। अपरं बेरियस्य १४
सुता अहियुः शाशको यिरेमोतः सिबदियो ऽराद एदरो मीखायेलो १५
यिश्पा योहश्च। अपरम् इल्पालस्य सुताः सिबदियो मिशुल्लमो हिल्कि- १७
र्हेबरो यिश्मिरयो यिष्लियो योबबश्च। अपरं शिमियेः सुता याकीमः १९
सिखिः सब्दिः इलीयवैनयः सिल्लियय इलीयेलोऽदाया बिरायाः शि- २१
म्रतश्च। अपरं शाशकस्य सुता यिश्पन एबर इलीयेलो ऽब्दोनः २२
सिखि र्हाननो हनानिय एलमो ऽन्तोथियो यिफिदियः पिनूयेलश्च। २५
अपरं यिरोहमस्य सुताः शम्शिरयः शिहरियो ऽथलियो यारिशिय २६
एलियः सिखिश्च। एते स्वीयपितृवंशानां मुख्याः सन्तो यिरूशालमे २८
न्यवसन्। अपरं गिबियोनस्य जनको गिबियोने न्यवसत्, तस्य जायाया २९
नाम माखा। अपरं तस्य ज्येष्ठः सुतो ऽब्दोनो ऽपरः सूरः कीशो बाल् ३०
नादबो गिदोरो ऽहियुः सखूरो मिक्लोतश्च, मिक्लोतस्य च सुतः शि- ३२
मियः, एते यिरूशालमे स्वीयभ्रातॄणां समीपे न्यवसन्।

३३ नेरस्य सुतः कीशः, कीशस्य सुतः शौलः, शौलस्य सुता योनाथनो
३४ मल्कीशूयो ऽवीनादव इश्बालश्च। अपरं योनाथनस्य सुतो मिरीबालः,
३५ तस्य च तनयो मीखाः। अपरं मीखाः सुताः पिथोनो मेलकस्तरेय
३६ आहसश्च। आहसस्य सुतो यिहोयादाः, यिहोयादाः सुता आलेमतो
३७ ऽस्मावतः सिम्रिश्च, सिम्रेः सुतो मोत्साः। मोत्साः सुतो बिनियाः, बि-
नियाः सुतो राफाः, राफाः सुत इलीयासाः, इलीयासाः सुत आत्सेलः।
३८ तस्यात्सेलस्य षट् सुता बभूवुः, तेषां नामान्यस्त्रीकामो बोखिरः इस्मा-
३९ येलः शियारिय ओवदियो हाननश्चैते सर्व्वे आत्सेलस्य वंशाः। अपरं
तस्य भ्रातुरेशकस्य ज्येष्ठः सुत ऊलमः, द्वितीयो यियूशस्तृतीय इलीफेलटः।
४० अपरम् ऊलमस्य सुता महाविक्रमा धनुर्धरा बहुप्रजाश्चासन् तेषां
सार्द्धशतं पुत्रपौत्रा आसन् एते सर्व्वे बिन्यामीनस्य वंशाः।

---

# ९ नवमोऽध्यायः।

१ वंशावलिलिखनस्य कथनं २ वासिनः प्रत्यागतलोकानां कथनं १० याजकानां लेवीयानाञ्च कथनं २७ लेवीयानां निरूपकर्म्मणां कथनं ३५ शौलस्य चरित्रञ्च।

१ अनेन प्रकारेण सर्व्वस्येस्रायेलो वंशावलयो रचयाञ्चक्रिरे इस्राये-
लीयभूपतीनां पुस्तके लिलिखिरे च। अनन्तरं यिहूदीयमनुजाः स्वस-
दोषेण बाबिलं निन्यिरे।
२ अनन्तरम् इस्रायेलजनपदे याजका लेवीया निथीनीयाश्च प्रथमं
३ स्वीयस्वीयाधिकृतनगरेषु न्यवसन्। अपरं यिरूशालमे यिहूदावंशस्य
बिन्यामीनवंशस्येफ्रयिमवंशस्य मिनशिवंशस्य च कतिपया मनुजा न्यव-
४ सन्। यिहूदाः सुतो यः पेरसस्तस्य वंशस्य मध्ये बानेरिम्रपौत्र इम्रेः
५ प्रपौत्रो ऽम्रेः पौत्रो ऽम्मीहूदस्य सुत ऊथयः। अपरं शीलोनीयानां
६ मध्ये ज्येष्ठो ऽसायस्तस्य पुत्राश्च। अपरं सेरहवंशस्य मध्ये यूयेलस्तस्य
७ नवत्यधिकषट्शतानि भ्रातरश्च। अपरं बिन्यामीनवंशस्य मध्ये हसि-
८ नूयस्य प्रपौत्रो होदवियस्य पौत्रो मिशुल्लमस्य पुत्रः सल्लुः, अपरं यि-
रोहमस्य पुत्रो यिब्नियः, मिख्रेः पौत्र उषेः पुत्र एलाः, यिब्नियस्य
९ प्रपौत्रो रूयेलस्य पौत्रः शिफटियस्य सुतो मिशुल्लमश्च। एते तेषां
भ्रातरश्च निजनिजवंशानुसारेण षट्पञ्चाशदधिकनवशतानि मानवा
आसन्। इमे निखिलाः स्वीयस्वीयवंशस्य मुख्या आसन्।
१० अपरं याजकानां मध्ये यिदयियो यिहोयारीबो याखीनश्च, अपरम्

ईश्वरीयमन्दिरस्याधिपति र्यो ऽहीटूबस्तस्यातिवृद्धप्रपौत्रो मिरायो- ११
तस्य वृद्धप्रपौत्रः सादोकस्य प्रपौत्रो मिशुल्लमस्य पौत्रो हिल्कियस्य पुत्रो
ऽसरियः, अपरं मल्कियस्य प्रपौत्रः पश्हूरस्य पौत्रो यिरोहमस्य १२
पुत्रो ऽदायाः, अपरम् इम्मेरस्यातिवृद्धप्रपौत्रो मिशिल्लेमोतस्य वृद्ध-
प्रपौत्रो मिशुल्लमस्य प्रपौत्रो यह्सेराः पौत्रो ऽदीयेलस्य पुत्रो मासयः,
अपरं तेषां षष्ट्यधिकसप्तशताधिकसहस्रं भ्रातरः, ते निजनिजपि- १३
तृवंशस्य मुख्या ईश्वरीयमन्दिरस्य कर्म्म कर्त्तुम् अतिनिपुणाश्चासन्।
लेवीयानां मिरारिवंशस्य मध्ये हशवियस्य प्रपौत्रो ऽस्रीकामस्य पौत्रो १४
हश्शूबस्य पुत्रः शिमयियः। अपरं बक्बकरो हेरशो गालल आसफस्य १५
प्रपौत्रः सिख्रेः पौत्रो मीखाः पुत्रो मत्तनियश्च, अपरं यिदूथूनस्य १६
प्रपौत्रो गाललस्य पौत्रः शिमयियस्य पुत्र ओबदियः, अपरम् इल्-
कानाः पौत्र आसाः पुत्रो निटोफातीयानां ग्रामेषु वासकारी बेरिखियः।
अपरं द्वारिणः शल्लुमोऽक्कूवः टल्मोनोऽहीमानस्तेषां सहजाश्च किन्तु १७
शल्लुम एतेषां मुख्य आसीत्। ते पूर्व्वदिक्स्थिते राजद्वारे ऽतिष्ठन् अपरं १८
लेविवंशसमूहस्य मध्ये द्वारपाला आसन्। अपरं कोरहस्य प्रपौत्रो १९
ऽबीयासफस्य पौत्रः कोरेः पुत्रः शल्लुमस्तस्य पितृवंशीयाः कोरहीया
भ्रातरश्च सेवाकर्म्मणि नियुक्ता आसन्। यस्मिन् समये परमेश्वरस्य २०
साहाय्यं प्राप्त इलीयासरस्य तनयः पीनिहसस्तेषाम् अध्यक्ष आ-
सीत् तस्मिन् पूर्व्वस्मिन् समये यादृक् तेषां पितृलोकाः परमेश्वरीय-
शिबिरस्य प्रवेशस्थानम् अरक्षन् तादृग् इमे मन्दिरस्य द्वाररक्षा-
कर्म्मणि नियुक्ता आसन्। मिशेलिमियस्य तनयः सिखरियः समाग- २१
मावासस्य द्वारपालक आसीत्। द्वारपालनकार्य्ये नियुक्ता इमे मनुजा २२
द्वे शते द्वादशजना आसन्; अपरं निजनिजग्रामानुसारेण तेषां वंशाव-
ल्योऽलिख्यन्त दायूद् शिमूयेलश्च प्रदर्शकस्ताम् एतस्मिन् निरूपिते कार्य्ये
नियोजयामासतुः। अतस्ते तेषाम् अपत्यानि च परमेश्वरीयमन्दिरस्यावा- २३
सस्य वा द्वारपालनकर्म्मणि पर्य्यायानुक्रमेण न्ययुज्यन्त। एते द्वारपा- २४
लकाः पूर्व्वस्यां पश्चिमायाम् उत्तरस्यां दक्षिणस्यां चेति चतुर्दिक्ष्वतिष्ठन्।
अपरं ग्रामस्थास्तेषां सहजाः स्वस्वसमये सप्ताहं यावत् तेषां सविधं समा- २५
गच्छन्। यतो लेवीयानां मध्ये चत्वारो मुख्या द्वारपालकाः स्वीयस्वीय- २६
निरूपितपदे नित्यं तिष्ठन्तः परमेश्वरीयमन्दिरस्य कोष्ठानां भाण्डागा-
राणाञ्चाधिपा आसन्।

२७ द्वारपालपदे नियुक्तास्ते जना रात्रावीश्वरीयमन्दिरस्य चतुर्दिक्ष्वशेरत
२८ प्रतिप्रभातञ्च द्वारममोचयन्। अपरं तेषां कतिपया मनुजाः सेवार्थकानि भाजनानि रक्षितुं गणयित्वा बहिरन्तः समानेतुञ्च नियुक्ता
२९ आसन्। अपरं पवित्रस्थानस्य पात्राणि गोधूमचूर्णानि गोस्तनीरसा-तैलानि कुन्दुरूणि गन्धद्रव्याणि चेत्यादीनि सर्व्वद्रव्याणि रक्षितुं वीक्षि-
३० तुञ्च तेषां कतिपया नरा नियुक्ता आसन्। अपरं कतिपया याजकसुता
३१ गन्धद्रव्यार्थकं तैलं निर्म्मितवन्तः। अपरं लेवीयानां मध्ये कोरहीयस्य शल्लुमस्य ज्येष्ठः सुतो मत्तथियः पाकस्थालीयकर्म्मणो ऽध्यक्ष आसीत्।
३२ अपरं तेषां किहातीयभ्रातृणां मध्ये कतिपया जनाः प्रतिविश्रामवारं
३३ दर्शनपूपानां स्थापने नियुक्ता आसन्। अपरं लेवीयानां प्रधानपितृ-लोका ये गायकास्ते कोष्ठीयकर्म्मभ्यो मुक्ता अभवन् यतस्ते दिवानिशं
३४ तस्मिन् कर्म्मणि प्रवृत्ता आसन्। इमे पुरुषपरम्परायां लेवीयानां मध्ये वंशानां मुख्या लोका आसन्, स्ववंशानां मुख्याः सन्त इमे यिरूशालमे न्यवसन्।

३५ अपरं गिबियोनस्य जनको यियीयेलो गिबियोने न्यवसत् तस्य
३६ जायाया नामधेयं माखा आसीत्। तस्य ज्येष्ठः सुतो ऽब्दोनो ऽपरे च
३७ सुताः सूरः कीशो बाल् नेरो नादबो गिदोरो ऽहियुः सिखरियो
३८ मिक्लोतश्च। अपरं मिक्लोतस्य सुतः शिमियामः, एते तेषां स्वजनैः समं
३९ यिरूशालमे न्यवसन्। अपरं नेरस्य सुतः कीशः, कीशस्य सुतः शौलः,
४० शौलस्य सुता योनाथनो मल्कीशूयो ऽबीनादब इश्बाल् च। अपरं
४१ योनाथनस्य सुतो मिरीबाल्, मिरीबालः सुतो मीखाः, मीखाः सुताः
४२ पीथोनो मेलकस्तहरेय आहसश्च। आहसस्य सुतो यारः, यारस्य
४३ सुता आलेमतो ऽस्मावतः सिम्रिश्च, सिम्रेः सुतो मोत्साः। मोत्साः पुत्रो बिनियाः, बिनियाः सुतो रिफायः, रिफायस्य सुत इलियासाः, इलि-
४४ यासाः सुत आत्सेलः। आत्सेलस्य षट् सुता आसन्, तेषां नामान्यस्रि-कामो बोखिरुः इस्मायेलः शियरिय ओबदियो हाननश्चेति सर्व्वे आत्सेलस्य सुताः।

---

## १० दशमोऽध्यायः।

१ शौलस्य पराजितत्वं ८ पिलेष्टीयानां जयः ११ याबेश्गिलियदीयलोकानां प्रभक्तता १३ पापकारणात् शौलस्य निधनस्य कथनं।

इस्रायेल्वंशेन समं पिलेष्टीयेषु युध्यत्सु इस्रायेल्वंशः पिलेष्टीयानां १
सम्मुखात् पलायाञ्चक्रे गिल्बोयपर्व्वते च लोकास्तैराहताः सन्तो नि-
पेतुः। अपरं पिलेष्टीयाः शौलं तस्य पुत्रांश्च प्राप्य योनाथनोऽबीना- २
दबो मल्कीशूयश्चेतिनामकान् शौलस्य पुत्रान् जघ्नुः। अपरं शौलमधि ३
घोरतरे संग्रामे जाते धनुर्धारिषु च तं प्रति शरान् निक्षिपत्सु स धनु-
र्धारिभिः क्षताङ्गीकृतः। ततः शौलो निजास्त्रवाहिनं जगाद, त्वं स्वखड्गं ४
निष्कोषं कृत्वा मां छिन्धि नो चेद् अच्छिन्नत्वच एत आगत्य ममा-
पमानं करिष्यन्ति। किन्तु तस्यास्त्रवाहकोऽतीव भयकारणात् तत्
कर्त्तुम् उररी न चकार, तस्मात् शौलः खड्गं गृहीत्वा स्वयं तदुपरि
निपपात। ततः शौलो मृतवानिति वीक्ष्य तस्यास्त्रवाहकोऽपि निजखड्गो- ५
परि निपतन् ममार। अनेन प्रकारेण शौलस्तस्य त्रयः पुत्राः तत्स्ववंशश्च ६
सर्व्वे युगपद् अम्रियन्त।

अनन्तरं समभूमिनिवासिन इस्रायेलीयलोका इस्रायेलीयानां पला- ७
यनं शौलस्य तस्य पुत्राणाञ्च मरणमपि वीक्ष्य स्वस्वनगराणि परित्यज्य
पलायाञ्चक्रिरे, ततः पिलेष्टीया आगत्य तेषां मध्ये न्यवसन्।

परदिवसे पिलेष्टीया हतमनुष्याणां वस्त्रादीन्यपहर्त्तुम् आगत्य ८
गिल्बोयपर्व्वते शौलस्य तस्य त्रयाणां पुत्राणाञ्च देहान् प्राप्य तस्य ९
वस्त्रादीनि मोचयित्वा तस्य मस्तकं सज्जाञ्च नीत्वा तेषां देवानां लोका-
नाञ्च समीपे वार्त्तां घोषयितुं पिलेष्टीयानां देशस्य चतुर्दिक्षु दूतान्
प्रेषयामासुः। अपरं ते तस्य सज्जां स्वकीयदेवताया मन्दिरे निदधिरे
तस्य शिरश्च दागोनस्य मन्दिरमध्य उल्लम्बयामासुः।

अनन्तरं शौलं प्रति पिलेष्टीयानां तस्यापकारस्य वार्त्तायां यावेश- ११
गिलियदनिवासिभि र्लोकैः श्रुतायां सर्व्वे बलवन्तो लोका उत्थाय १२
शौलस्य तस्य पुत्राणाञ्च शरीराणि वहन्तो यावेशम् आनीय तेषाम्
अस्थीनि यावेशस्थस्य कस्यचिद् आलोनतरो मूले भूमौ पोथयामासुः।
अनन्तरं ते सप्तदिनानि यावद् उपवासं चक्रिरे।

शौलः परमेश्वरस्याज्ञां लङ्घित्वा परमेश्वरस्य विरुद्धम् अपराधं १३
कृतवान् अपरं तत्त्वं वेत्तुं भूतं पृष्ठवान् इति कारणात् ममार। स १४
परमेश्वरं न पृष्ठवान् इति हेतोस्तेन जघ्ने तस्य राजत्वञ्च यिशयस्य सुते
दायूदि समर्पयाञ्चक्रे।

---

# ११ एकादशोऽध्यायः।

१ यिरूशाले दायूदो राजत्वप्राप्तिः ४ यिरूशालमस्य जयकरणं १० प्रथमानां त्रयाणां प्रधानसेनापतीनां कथनं १५ तेषां कर्म्माणि २० द्वितीयानां त्रयाणां प्रधानसेनापतीनां कथनं २६ प्रधानलोकानां नामानि च।

१ अनन्तरम् इस्रायेलः सर्व्वे वंशा यिरूशाले दायूदः समीपं समागता
२ निवेदयामासुः पश्य वयं तव कीकसमांसानि। अपरं पूर्व्वं यदा शौलो
ऽस्माकं राजासीत् तदापि त्वमेवेस्रायेलं बहिरभ्यन्त र्गमनागमने
ऽकारयः। अपरं ममेस्रायेल्लोकानां पालकोऽनायकश्च त्वं भवि-
३ तव्यमिति त्वं परमेश्वरेणोक्तः। इत्थम् इस्रायेलः सकलप्राचीनलोकेषु
यिरूशाले राज्ञः समीपम् आगतेषु दायूदा न्वपेण यिरूशाले परमेश्वरस्य
साक्षात् तैः सार्कं नियमोऽकारि परमेश्वरस्य शिमूयेलेन यद् वाक्यं
कथितवान्, तदनुसारात् ते दायूदम् इस्रायेलो राज्ये ऽभिषिषिचुः।
४ अपरं दायूद् निखिला इस्रायेल्मानवाश्च यिरूशालमम् अर्थतो
५ यिवूषं जग्मुः, तदानीं देशे जाता यिवूषीयास्तत्र स्थाने न्यवसन्। ततो
यिवूषनिवासिनो दायूदम् अवादिषुः, एतत् स्थानं प्रवेष्टुं त्वया न
शक्यते, तथापि दायूद् सियोनं दुर्गम् अर्थतो दायूद्नगरं वशीचकार।
६ दायूद् कथयामास, यो जनो ऽग्रे यिवूषीयान् हनिष्यति स प्रधान-
सेनापति र्भविष्यति। ततः सिरूयायाः सुतो योयाबः प्रथमगमनात्
७ प्रधानसेनापति र्बभूव। अपरं दायूद् तस्मिन् दुर्गे उवास, तेन लोका-
८ स्तदीयं नाम दायूद्नगरं चक्रवांसः। अपरं स चतुर्दिक्ष्वर्थतो मिल्लुम्
आरभ्य चतुर्दिक्षु दायूदो नगरस्य जीर्णोद्धारं चकार योयाबश्च नगर-
९ स्यावशिष्टानां स्थानानां जीर्णोद्धारं चकार। अनन्तरं दायूद् क्रमशो
वर्द्धमानो महान् बभूव सैन्याध्यक्षः परमेश्वरश्च तस्य सहायआसीत्।
१० इस्रायेलमधि परमेश्वरस्य वाक्यानुसारेण दायूदं राजानं कर्त्तुं दायूद
एते पराक्रमिणो मनुजा निखिलेस्रायेलीयैः सार्कं राजत्वे तस्य प्रबलाः
११ सहकारिणो बभूवुः। दायूदः प्रधानमनुजानाम् एषा गणना। प्रथमानां
त्रयाणां जनानां प्रधानं हक्मोनीयो याशबियामः, स त्रयाणां शतानां
१२ लोकानां विरुद्धं शूलं धृत्वा तान् युगपद् अवधीत्। अपरम् अहोही-
यस्य दोदयस्य तनय इलीयासरोऽपि तेषां त्रयाणां पराक्रमिणां मध्ये
१३ एको जन आसीत्। स पस्दम्मीमे दायूदा समम् आसीत् तस्मिन्

स्थाने कस्यचिद् यवक्षेत्रस्य समीपे पिलेष्टीयेषु समरार्थं मिलितेषु यदा
लोकाः पिलेष्टीयेभ्यः पलायन्त तदानीम् इमे तत्क्षेत्रमध्ये तिष्ठन्तस्त- १४
द्रक्षन् पिलेष्टीयांश्च न्यघ्नन् ततः परमेश्वरो महाजयं कारयामास।
त्रिंशत्प्रधानलोकानां मध्ये त्रयो जना एते दुराक्रमणस्थानेऽर्थतोऽदु- १५
ल्लमगुहायां दायूदः समीपम् आगच्छन्, तदा पिलेष्टीयानां निवहो १६
रिफायिमतलभूमौ शिबिरं स्थापयाञ्चकार बैतलेहमेऽपि पिलेष्टीयानां
सैन्यवृन्दम् एकम् आसीत्। अपरं दायूद् दुराक्रमणस्थाने वसन् १७
पिपासितो भूत्वा जगाद हा हा बैतलेहमस्य गोपुरसमीपस्थात् प्रहेः
पानीयम् आनीय को मां पाययिष्यति? ततस्ते त्रयो नराः पिलेष्टीयानां १८
शिबिरमध्येन गत्वा बैतलेहमस्य गोपुरसमीपस्थात् प्रहेः पानीयम्
उत्तोल्य गृहीत्वा दायूदः सविधम् आगच्छन् किन्तु दायूद् तत् पातुं
नैच्छत्, स परमेश्वरमुद्दिश्य तत् तोयं निचिक्षेप। वाक्यमिदं बभाषे च १९
हे मदीश्वर, एतादृशं कर्म्म नाहं करिष्ये प्राणपणेन गतवताम् एतेषां
नराणां रुधिरं किं मया पास्यते? यत इमे निजप्राणपणेन तोयमेतद्
आनीतवन्तः। अतो हेतोः स तत् पातुं नैच्छत्। ते तु त्रयो बलिनो
जना एतत् कर्म्म चक्रुः।

अपरं योयाबस्य सहोदरोऽबीशयो (द्वितीयस्य) नरत्रयस्य मध्ये मुख्य २०
आसीत्। स शतत्रयाणां लोकानां विरुद्धं शूलं धृत्वा तान् विनाश्य
त्रयाणां मध्ये लब्धनामा बभूव। स किं तेषां त्रयाणां मध्येऽन्यद्वाभ्यां २१
मान्यो नहि? तस्मात् स तेषां सेनापति र्बभूव तथापि स प्रथमानां
त्रयाणां तुल्यो नहि। अपरं कब्सेलीयस्यैकस्य बलिनः पौत्रो यिहो- २२
यादस्य पुत्रो बिनायो ऽनेककार्य्यकर्त्तासीत्। स सिंहतुल्यौ द्वौ मोया-
बीयलोकौ जघान, तदन्यत् स हिमागीसमये गत्वा गर्त्तमध्ये सिंहमेकं
मारयामास। अपरं स पञ्चहस्तदीर्घं मिस्रीयमेकम् अवधीत् तस्य मिस्री- २३
यस्य करे तन्तुवायस्य तन्तुदण्डतुल्यं शूलमेकमासीत् किन्त्वस्य करे
दण्ड एक आसीत् ततः स गत्वा मिस्रीयस्य करात् शूलमाच्छिद्य गृहीत्वा
तस्यैव शूलेन तं जघान। यिहोयादस्य सुतो बिनाय एतानि कर्म्माणि २४
चकार तेन स द्वितीयानां त्रयाणां पराक्रमिणां मध्ये लब्धनामा बभूव।
स तेभ्यस्त्रिंशज्जनेभ्यो विख्यात आसीत् किन्तु प्रथमत्रयाणां समतां २५
न प्राप, अपरं स दायूदा स्वरक्षकसैन्यानां सेनापति र्नियुक्तो बभूव।

अपरं सैन्यानां मध्ये एते नरा वीरा आसन् योयाबस्य सहजोऽसा- २६

२७ हेलः, अपरं दोदयस्य सुतो वैतलेहमीय इल्हाननः, अपरं हरोरीयः
२८ शम्मोतः, अपरं पिलोनीयो हेलसः, अपरम् इक्केशस्य सुतस्तिकोयीय
२९ ईराः, अपरम् अनाथोतीयोऽवीयेषरः, अपरं हूशातीयः सिब्बिखयः,
३० अपरम् अहोहीय ईलयः, अपरं निटोफातीयो महरयः, अपरं बाना-
३१ हस्य सुतो निटोफातीयो हेलदः, अपरं बिन्यामीनदेशस्थगिबियानिवा-
३२ सिनो रीबयस्य तनय इत्तयः, अपरं पिरियाथोनीयो बिनायः, अपरं
३३ नहलगाशनिवासी हूरयः, अपरम् अर्ब्बतीयोऽवीयेलः, अपरं बाहरू-
३४ मीयोऽस्मावतः, अपरं शाल्बीय इलीयहबाः, अपरं गिषोणीयो हिषे-
३५ शाशेमः, अपरं शागेः सुतो हरारीयो योनाथनः, अपरं साखरस्य
३६ तनयो हरारीयोऽहीयामः, अपरम् ऊरस्य सुत इलीफालः, अपरं
३७ मिखेरातीयो हेफरः, अपरं पिलोनीयोऽहियः, अपरं कर्म्मिलीयो
३८ हिस्रयः, अपरम् इष्वयस्य सुतो नारयः, अपरं नाथनस्य सहजो
३९ योयेलः, अपरं हग्रेः सुतो मिभरः, अपरम् अम्मोनीयः सेलकः, अपरं
४० सिरूयायाः सुतस्य योयाबस्यास्त्रवाही वेरोतीयो नहरयः, अपरं यि-
४१ त्रीय ईराः, अपरं यित्रीयो गारेवः, अपरं हित्तीय ऊरीयः, अपरम्
४२ अहलयस्य सुतः साबदः, अपरं रूबेणीयशीषाः सुतोऽदीनाः, स रूबे-
४३ णीयानां सेनापतिरासीत् तस्यानुगामिनस्त्रिंशज्जना आसन्, अपरं
४४ माखाः सुतो हाननः, अपरं मित्नीयो योशाफटः, अपरम् अस्तिरो-
तीय उषियः, अपरम् अरोयेरीयस्य होथमस्य शामा यियीयेलश्चेतिना-
४५ मानौ द्वौ सुतौ, अपरं शिम्रेः सुतो यिदीयेलस्तस्य सहजश्च तीषीयो
४६ योहाः, अपरं महवीय इलीयेलः, अपरम् इल्नामस्य यिरीबयो यो-
शवियश्चेतिनामानौ द्वौ सुतौ, अपरं मोयाबीयो यित्माः, अपरम्
४७ इलीयेल ओवेदो मिषोबायीयो यासीयेलश्च।

---

## १२ द्वादशोऽध्यायः।

१ दायूदो बिन्यामिनीयोपकारिणां नामानि ८ गादियोपकारिणां नामानि १६ अमीषां प्रति दायूदः कथनं १९ मिनशिवंशीयानां कतिपयलोकानां कथनं २३ सर्व्ववंशीयोपकारिणां संख्या।

१ यस्मिन् काले दायूद् कीशस्य पुत्रात् शौलाद् भीत्वा सिक्लगे बद्ध
आसीत् तस्मिन् समय एते मनुजाः दायूदः समीपम् आगच्छन्, ते वी-
२ राणां मध्ये गणिताः समरे चोपकारिण आसन्। विशेषतो धनुर्धारिणो

वामदक्षिणहस्ताभ्यां पाषाणां धनुर्बाणानाञ्च निक्षेपणे निपुणाश्च कति-
पया विन्यामीनीयाः शौलस्य सहजा आगच्छन्। गिबियातीयस्य ३
शिमायस्य सुतावहीयेषरो योयाशश्च तेषां मुख्यावास्तां, अपरं घास्-
मावतस्य सुतौ यिषीयेलपेलटौ बिराखा अनाथोतीयो येहूश्चापरं त्रिं- ४
शज्जनानां मध्ये बलवान् त्रिंशत उपरि नियुक्तो गिबियोनीयो यिश्म-
यियो यिरिमियो यहसीयेलो योहाननो गिदेराथीययोषावद इलि- ५
यूषयो यिरेमोतो बालियाः शिमरियो हरूफीयशिफटिय इल्काना ६
यिशियोऽसरेलो योयेषरो याशबीयामश्चैते सर्व्वे कोरहीयलोकाः, अपरं ७
गिदोरनिवासिनो यिरोहमस्य पुत्रौ योयेलाः सिबदियश्च।

अपरं गादीयानां मध्ये युद्धयोग्या बलवन्तः फलकशूलधारिणः ८
सिंहवदनाः शिलोच्चयस्थहरिणवद् द्रुतगामिनश्च कतिपयलोकाः प्रा-
न्तरस्थिते दुराक्रमणस्थाने दायूदः समीपम् आगच्छन्। प्रथम एषरः, ९
द्वितीय ओबदियः, तृतीय इलीयावः, चतुर्थो मिश्मन्नाः, पञ्चमो यिरि- १०
मियः, षष्ठो ऽत्तयः, सप्तम इलीयेलः, अष्टमो योहाननः, नवम इल्- १२
सावदः, दशमो यिरिमियः, एकादशो मग्बन्नयः। गादवंशीया एते १४
नराः सेनापतय आसन् क्षुद्रो जनः शतपतिरासीत् महालोकश्च सह-
स्रपतिरासीत्। प्रथममासे यस्मिन् समये यर्द्दनसरित्तोयानि तटं १५
समप्लावयन् तदानीम् एते तस्याः पारं गत्वा पूर्व्वदिशि पश्चिमदिशि च
प्रान्तरस्थान् निखिलमनुजान् पलायनं कारयाञ्चक्रुः।

अपरं विन्यामीनयिहूदावंशयोः कतिपयलोकेषु दुराक्रमणस्थाने
दायूदः सन्निधिम् आगतेषु दायूद् तान् साक्षात् कर्त्तुं बहि र्गत्वा तान् १७
जगाद, यदि यूयं मामुपकर्त्तुं निर्विरोधं मम सन्निधिमागच्छथ, तर्हि
मदीयं मनो युष्मान् प्रत्येकाग्रं भविष्यति, किन्तु यदि निरुपद्रवं मां
रिपूणां करेषु समर्पयितुम् इच्छथ तर्ह्यस्माकं पितृलोकानाम् ईश्वर-
स्तत् पश्यन् भर्त्सयतु। तदानीम् आत्मा प्रधानरथिनम् अमासयम् १८
अध्यतिष्ठत् तस्मात् स कथयामास, हे दायूद् वयं तव पक्षीयाः, हे
यिषयस्य तनय वयं तव सङ्गिलोकाः। मङ्गलं भूयात् तवैव मङ्गलं
भूयात् तवोपकारिणाञ्च मङ्गलं भूयात् यतस्तवेश्वरस्त्वाम् उपकरोति।
तदानीं दायूद् तान् अनुगृह्य स्वीयसेनानिवहानां सेनापतीन् चकार।
अनन्तरं शौलेन सह योधनार्थं पिलेष्टीयानां सहायत्वेन दायूदि गत- १९
वति मिनशिवंशस्य कतिपयलोका दायूदः पक्षा बभूवुः किन्तु तदानीं

स पिलेष्टीयान् नोपाकरोत् यतः पिलेष्टीयानाम् अधिपतिगणेन विविच्य
भारतीमिमां निगद्य स विसृष्टो, यथा, सोऽस्माकं शिरांसि हत्वा
२० स्वीयप्रभुना शौलेन सार्द्धं सन्धास्यति। अनन्तरं यदा दायूद् सिक्लगम्
अगच्छत् तदानीम् अद्नहो योषावदो यिदीयेलो मीखायेलो योषावद
इलीहूः सिल्लिययश्च मिनशीयसैन्यानां सहस्राधिपतय इमे मिनशीया
२१ लोकास्तस्य पक्षा बभूवुः। ते दस्युनिवहस्य विपक्षं दायूदम् उपाकुर्व्वन्
२२ यतस्ते महावीराः सेनापतयश्चासन्। तस्मिन् समये दायूदम् उपकर्त्तुं
प्रतिदिनं सैन्येष्वागच्छत्सु ईश्वरीयसैन्यानीव तस्य बहुसैन्यानि बभूवुः।
२३ अपरं परमेश्वरस्य वचनानुसारात् शौलस्य राजत्वं दायूदि सम-
र्पयितुं ये सैन्यनिवहाः समरार्थं सज्जिताः सन्तो हिब्रोणे तस्य सन्नि-
२४ धिम् आगच्छन् तेषां गणनैषा। यिहूदावंशीयाः फलकशूलधारिणः
२५ समरार्थं सज्जिता अष्टशताधिकषट्सहस्राणि लोकाः। शिमियोन-
२६ वंशीया इमे महावीराः शताधिकसप्तसहस्राणि मनुजाः। लेविवंशीयाः
२७ षट्शताधिकचतुःसहस्राणि लोकाः। अपरं हारोणवंशस्याधिपति र्यि-
होयादास्तस्यानुगामिनः सप्तशताधिकानि त्रीणि सहस्राणि मानवाश्च।
२८ अपरं तरुणो महावीरः सादोकस्तस्य पितृवंशीया द्वाविंशतिः प्रधान-
२९ मानवाश्च। अपरं शौलस्य स्वजातीयबिन्यामीनवंशीयास्त्रीणि सहस्राणि
मानवाः, किन्तु तत्समयं यावत् तेषाम् अधिकलोकाः शौलवंशस्य
३० पक्षा आसन्। अपरम् इफ्रयिमवंशीया अष्टशताधिकविंशतिसह-
स्राणि पराक्रमिणो मानवास्ते निजे निजे पितृवंशे विख्याता आसन्।
३१ अपरं मिनशेरर्द्धवंशाद् अष्टादशसहस्राणि मानवास्ते दायूदं राजानं
३२ कर्त्तुं निजनिजनाम्ना निरूपिताः सन्त आगच्छन्। अपरम् इषाखर-
वंशीया २ शते प्रधानमनुजास्ते ज्ञानिनः परिणामदर्शिनश्चासन् तस्मिन्
समये येस्रायेल्लोकै र्यत् कर्त्तव्यं तद् अबुध्यन्त तेषां सहजाश्च सर्व्वे तेषाम्
३३ आज्ञायाहिण आसन्। अपरं सिबूलूनवंशीयाः समरगामिनो व्यूहं
रचयितुं निपुणाः समरार्थं शस्त्रास्त्रधारिण एकचित्ताः पञ्चाशत्सहस्राणि
३४ मानवा आसन्। अपरं नप्तालिवंशीयाः सहस्रं सेनापतयस्तैः सार्द्धं
३५ फलकशूलधारिणः सप्तत्रिंशत्सहस्राणि मानवाश्च। अपरं दानवंशीया
व्यूहं रचयितुं निपुणाः षट्शताधिकाष्टाविंशतिसहस्राणि मानवाः।
३६ अपरम् आशेरवंशीया व्यूहं रचयितुं निपुणाश्चत्वारिंशत्सहस्राणि यो-
३७ द्धारो मानवाः। अपरं यर्दनस्य पूर्व्वपाराद् रूबेणवंशीया गादवंशीया

मिनशेरर्द्धवंशसम्बन्धीयाश्च समरार्थं सर्व्वविधास्त्रधारिणो विंशतिसह-
स्राधिकलक्षं मानवा आगच्छन्। समरे व्यूहरचने च निपुणा एते १८
निखिला मनुजा दायूदम् इस्रायेलीयानां राजानं कर्त्तुं सरलान्तःकरणै
र्हिब्रोणम् आजग्मुः, अपरम् इस्रायेलोऽवशिष्टाः सकललोका अपि दा-
यूदं राजत्वे ऽभिषेक्तुम् एकचित्ता अभवन्। अपरं ते त्रीणि दिनानि १९
तस्मिन् स्थाने दायूदः सन्निधौ तिष्ठन्तो बुभुजिरे पपुश्च यतस्तेषां
सहजास्तेषां कृते पेचुः। तेषां समीपवासिन इषाखरसिवूलूननप्तालि- ४०
वंशीया मनुजाश्च महाङ्गगर्द्दभाश्वतरगवां पृष्ठेषु भक्ष्याणि गोधूमज-
द्रव्याण्युडुम्बरपिष्टकान् द्राक्षास्तवकान् द्राक्षारसान् तैलानि गोमे-
षांश्च प्रभूतान् आनिन्युः, यत इस्रायेलीयलोकानां महानन्दो ऽभवत्।

---

## १३ त्रयोदशोऽध्यायः।

१ नियममञ्जूषाया आनयनार्थं दायूदो मन्त्रणा ९ आनयनसमय उषस्य निधनञ्च।

तदनन्तरं दायूद् सहस्रपतिभिः शतपतिभि र्निखिलैरधिपतिभिश्च १
साकम् अमन्त्रयत्। अपरं दायूद् इस्रायेलो निखिलं समाजं बभाषे यद्ये- २
तद् युष्माकं प्रभोः परमेश्वरस्य चाभिमतं भवेत् तर्हीस्रायेलः कृत्स्ने
जनपदे निवसन्तो ऽस्माकम् अवशिष्टाः सहजाः प्रान्तरयुक्ते स्व-
नगरे निवसन्तो याजका लेवीयाश्च यद् अस्माकं सविधं समायान्ति
ततस्ते वयं तेषां सर्व्वस्थानं दूतान् प्रेषयिष्यामः। अस्माकम् ईश्वरस्य ३
मञ्जूषास्माभिः पुनर्व्वारं स्वेषां सविधं समानेष्यते यतः शौलस्य समये
वयं तस्यान्वेषणं न कृतवन्तः। ततो निखिलमनुजेभ्यस्तस्मिन् वाक्ये रोच- ४
माने समाजीयाः सर्व्वे तत् कर्त्तुम् अङ्गीचक्रुः। अनन्तरं किरीयतयि- ५
यारीमाद् ईश्वरीयमञ्जूषाया आनयनार्थं दायूद् मिसरीयशीहोरतटि-
नीम् आरभ्य हमातप्रवेशस्थानं यावत् सकलान् इस्रायेलीयान् सञ्ज-
ग्राह। अपरं किरूबयो र्मध्ये निवासिनः परमेश्वरस्य नाम्ना विख्याताम् ६
ईश्वरीयमञ्जूषाम् आनेतुं दायूद् निखिला इस्रायेलीयमानवाश्च बालाम्
अर्थतो यिहूदादेशस्थं किरियतयियारीमं जग्मुः। अनन्तरम् ईश्वरीय- ७
मञ्जूषां नूतनं शकटम् आरोप्याबीनादबस्य वेश्मनस्तां वहिश्चक्रुः, अप-
रम् उषो ऽहियश्च तत् शकटं चालयामासतुः। अपरं दायूद् नि- ८
खिला इस्रायेलीयमनुजाश्च यथाशक्ति गायन्तो वल्लकीसुवीरमुरजान्
करतालान् तूरीश्च वादयन्त ईश्वरस्य साक्षाद् आनन्दन्।

९ ततः परं तेषु कीदोनस्य शस्यमर्द्दनस्थाने उपस्थितेषु गावावबले जाते
१० तत उष ईश्वरीयमञ्जूषां धारयितुं करौ प्रसारयामास। तत उषं
प्रति परमेश्वरस्य क्रोधे प्रज्वलिते मञ्जूषां प्रति तस्य करप्रसारणकार-
णाद् स तम् आजघान तेन स तस्मिन्नेव स्थाने ईश्वरस्य समक्षं ममार।
११ परमेश्वर उषम् आहतवान् इति कारणाद् दायूद् असन्तुष्टो बभूव,
अपरं स तस्य स्थानस्य नाम पेरसुषम् उषाघातस्थानमिति कृतवान्
१२ अद्यापि तस्य तन्नाम विद्यते। अपरं दायूद् तस्मिन् दिने ईश्वराद्
भीत्वा जगाद तर्ह्यत्र केन प्रकारेणाहं मम सन्निधिम् ईश्वरस्य मञ्जूषाम्
१३ आनेष्यामि? तस्मात् स दायूद्नगरे निजनिकटं तां मञ्जूषां नानीय
१४ पथपार्श्वस्थं गातीयस्योवेदेदोमस्य निवेशनं नीत्वा स्थापयामास। ततः
परम् ईश्वरस्य मञ्जूषायाम् ओवेदेदोमस्य निवेशने ऽर्थतस्तस्य निकेतने
मासत्रयं स्थितायां परमेश्वर ओवेदेदोमस्य तदीयसकलपरिजनस्य च
क्षेमं चकार।

---

## १४ चतुर्दशोऽध्यायः।

१ दायूदं प्रति हीरमस्य प्रणयः ४ दायूदः सुतानां नामानि ८ द्विः पिलेष्टीयानां पराजितत्वं।

१ अनन्तरं सोरीयराजो हीरमः प्रासादनिर्म्माणार्थं दायूदः सन्निधिम्
२ एरसकाष्ठानि स्थपतीन् सूत्रधरांश्च मनुजान् दूतैः प्रेषयाञ्चकार। ततः
परमेश्वर इस्रायेलो राजत्वपदे मां संस्थापितवान् यतो निजेस्रायेल्-
वंशस्यानुरोधात् मम राज्यस्योन्नतिस्तेनाकारीति दायूद् बुबुधे।
३ अपरं दायूद् यिरूशालमे जाया अन्या जग्राह ततो दायूदोऽपरे
४ पुत्रा दुहितरश्च जज्ञिरे। यिरूशालमे शम्मूयः शोबबो नाथनः सुलेमान्
६ यिभर इलीशूय इल्पेलटो नोगहो नेफगो याफीय इलीशामा बीलि-
७ यादा इलीफेलटश्चेतिनामानस्तस्य पुत्रा जज्ञिरे।
८ अनन्तरं दायूद् निखिलेस्रायेल्वंशोपरि राजत्वेऽभिषिक्त इति वार्त्तां
निशम्य सर्व्वे पिलेष्टीया दायूदं गवेषयितुम् आजग्मुः। अपरं दायूदि
९ तन्निशम्य तेषां विरुद्धं बहिरागतवति पिलेष्टीयाः समेत्य रिफायिम-
१० तलभूमौ विस्तीर्णा बभूवुः। अनन्तरं दायूद् ईश्वरं पृष्टवान् पिलेष्टी-
यानां विरुद्धं मया किं गन्तव्यं? त्वं किं मम करे तान् समर्पयिष्यसि?
११ ततः परमेश्वरस्तं जगाद, याहि मया ते तव करे समर्पयिष्यन्ते। अपरं

तेषु बाल्पिरासीमम् समागतेषु दायूद् तस्मिन् स्थाने तान् पराजिग्ये।
ततः परं दायूद् बभाषे, ईश्वरो मदीयकरेण मम रिपून् स्रोतोभङ्गवद्
बभञ्ज। तस्मात् तस्य स्थानस्य नाम बाल्पिरासीमम् देवताभङ्गस्थान-
मिति बभूव। अनन्तरं तैः स्वेषां प्रतिमासु तत्र परित्यक्तासु लोका १२
दायूदो निदेशात् ता वह्निना दाहयाञ्चक्रुः।
ततः परं पिलेष्टीयाः पुनरागत्य तस्यां समभूमौ विस्तीर्णा बभूवुः। १३
ततो दायूदा पुनः परिपृष्ट ईश्वरः कथयामास त्वं तेषां पश्चात् मा १४
गच्छ किन्तु तेषां समीपाद् व्याघुट्यागत्य वाकास्थानस्य सम्मुखे तान्
आक्रमिष्यसि। वाकाया उच्चस्थानेषु गमनस्य निनादे त्वया श्रुते त्वं १५
समरं कर्त्तुं गमिष्यसि यतस्तदेश्वरः पिलेष्टीयानां सैन्यानि निहन्तुं
तवाग्रगामी भविष्यति। अनन्तरम् ईश्वरस्य निदेशानुसारेण दायूदा १६
कर्म्मणि कृते गिबियोनम् आरभ्य गेषरं यावत् पिलेष्टीयानां सैन्यानि तै
र्जघ्निरे। तेन दायूदो यशः सकलान् जनपदान् व्यानशे परमेश्वरश्च १७
सर्व्वान् भिन्नजातीयान् तस्मात् त्रासयुक्तान् चकार।

---

## १५ पञ्चदशोऽध्यायः।

१ नियममञ्जूषाया आनयनार्थं लेवीयानां याजकानाञ्च दायूदा नियोजनं ११ सादो-
काबियाथरप्रभृतीनां निवेदनं १६ अन्यलेवीयानां गायकपदे नियोजनं २५ मञ्जू-
षानयनं २९ मीखलया दायूदस्तुच्छीकरणं।

अनन्तरं दायूद्नगरे दायूदा स्वस्य कृते वेश्म निर्म्मापयाञ्चक्रे ईश्व-
रीयमञ्जूषायाश्च कृते स्थानं निरूपयाञ्चक्रे तस्या निमित्तं पटोटजं स्थाप-
याञ्चक्रे च।
अपरं दायूद् आज्ञापयामास, ईश्वरीयमञ्जूषावहने लेवीयान् विना २
कस्याप्यन्यस्याधिकारो न विद्यते यत ईश्वरीयमञ्जूषाया वहनार्थं नित्यं
सेवनार्थञ्च परमेश्वरः लेवीयं तानेव वरीतवान्। अनन्तरं दायूद् ३
ईश्वरीयमञ्जूषायाः कृते यत् स्थानं निरूपितवान् तत् स्थानं तस्या आन-
यनार्थं स निखिलेस्रायेलीयान् यिरूशालमे सञ्चयाञ्च। अपरं दायूद् ४
हारोणवंशीयान् लेवीयवंशीयांश्च सञ्चयाञ्च। ऊरीयेलः किहातवंशस्य ५
मुख्य आसीत् तस्य भ्रातरो विंशत्यधिकशतं नराः। अपरम् असायो ६
मिरारिवंशस्य मुख्य आसीत् तस्य भ्रातरो विंशत्यधिकं शतद्वयं नराः।
अपरं योयेलो गेर्शोमवंशस्य मुख्य आसीत् तस्य भ्रातरस्त्रिंशदधिकं ७

८ शतं नराः। अपरं शिमयिय इलीषाफनवंशस्य मुख्य आसीत् तस्य भ्रातरो
९ द्वे शते नराः। अपरम् इलीयेलो हिब्रोणवंशस्य मुख्य आसीत् तस्य
१० भ्रातरो ऽशीतिजनाः। अपरम् अम्मीनादब उषीयेलवंशस्य मुख्य आसीत्
तस्य भ्रातरो द्वादशाधिकं शतं नराः।

११ अनन्तरं दायूद् सादोकाबियाथरौ याजकौ लेवीयांश्चार्थत ऊरिये-
लम् असायं योयेलं शिमयियम् इलीयेलम् अम्मीनादबञ्च समाहूय
१२ तेभ्यः कथयाञ्चकार, यूयं लेवीयपितृवंशानां मुख्या नरा अत इस्रायेलः
प्रभोः परमेश्वरस्य मञ्जूषायाः कृते मया निरूपितं स्थानं ताम् आनेतुं
१३ यूयं युष्माकं सहजाश्च पवित्रीभवत। यतो युष्माभिस्तत् पूर्व्वं नाक्रि-
यतैतत्कारणाद् अस्माकं प्रभुना परमेश्वरेणास्माकं मध्य आघातोऽकारि
१४ यतो वयं विधिवत् तस्यान्वेषणं नाकुर्म्म। अनन्तरम् इस्रायेलः प्रभोः
परमेश्वरस्य मञ्जूषाम् आनेतुं याजकाः लेवीयाश्च स्वान् मेध्यान् अकुर्व्वत।
१५ अपरं परमेश्वरीयवाक्यात् मूसा यद्वद् आदिष्टवान् तद्वत् लेविवंशीया
नरा वहनदण्डाभ्यां स्वीयस्कन्धैरीश्वरीयमञ्जूषाम् अवहन्।

१६ अपरं दायूदा लेवीयानां मुख्यलोकाः पुनरगद्यन्त यूयं मुरजवल्लकी-
करतालादियन्त्रैर्वाद्यकरणाय हर्षध्वनिकरणाय च तेषां सहजान् गाय-
१७ कान् नियोजयत। ततो लेवीयाः योयेलस्य सुतं हेमनं तस्य सहजानां
मध्ये वेरिखियस्य तनयम् आसफञ्च मिरारिवंशीयानां स्वकीयभ्रातृ-
१८ णाञ्च मध्ये कूशायाः सुतम् एथनं नियोजयामासुः। अपरं तैः सार्कं तेषां
द्वितीयपदस्थान् सहजान् अर्थतः सिखरियो बिनो यासीयेलः शिमी-
रामोतो यिहीयेल उन्निरिलीयाबो बिनायो मासेयो मत्तथिय इली-
फिलेहु मिक्नेय ओबेदेदोमो यियूयेलश्चेतिनामकान् द्वारपालकान् नि-
१९ योजयाञ्चक्रुः। अतो हेमन आसफ एथनश्चैते गायकाः पित्तलीयकर-
२० तालैरुच्चै र्ध्वनिकरणाय सिखरियोऽसीयेलः शिमीरामोतो यिहीयेल
२१ उन्निरिलीयाबो मासेयो बिनायश्चैते मुरजैरलामोताख्यस्वरवादनायापरं
मत्तथिय इलीफिलेहु मिक्नेय ओबेदेदोमो यियूयेलो ऽससियश्चैते वल्ल-
कीभि र्जयध्वनिकरणार्थं शिमीनीताख्यस्वरवादनाय नियुक्ता बभूवुः।
२२ अपरं लेवीयानां मध्ये प्रधानीभूतो यः किननियो गाने निपुण आसीत्
२३ स गानाय नियुक्तः सन् गानमधि समादिशत्। अपरं वेरिखिय इल्का-
२४ नाश्च मञ्जूषाया द्वाररक्षकावास्ताम्। अपरम् ईश्वरीयमञ्जूषायाः सम्मुखे
शिवनियो यिहोशाफटो निथनेलो ऽमासयः सिखरियो बिनाय इली-

येषरश्चैते तूरीरवादयन् अपरम् ओवेदेदोमो यिहियश्च मञ्जूषाया
द्वाररक्षकावास्तां ।

अनन्तरं दायूद् इस्रायेलः प्राचीनलोकाः सहस्रपतयश्चानन्दन्त २५
ओवेदेदोमस्य निवेशनात् परमेश्वरीयां नियममञ्जूषाम् आनेतुं जग्मुः ।
अपरं परमेश्वरीयनियममञ्जूषाया वाहकानां लेवीयानाम् ईश्वरेणोप- २६
कृतत्वात् ते सप्त वृषभान् सप्त मेषांश्चोदसृजन् । दायूद् नियममञ्जूषा- २७
वोढारो लेवीया गायकाश्च गायकैः साकं गानाधिपतिः किननियश्चा-
तसीयवसनानि पर्य्यदधत दायूदो वपुषि चातसीयम् एफोदाख्यवसनम्
आसीत् । अनेन प्रकारेणोच्चैः स्वरैः शृङ्गतूरीकरतालमुरजवल्लकीवाद- २८
नेन च निखिलेस्रायेलीयमनुजाः परमेश्वरीयां नियममञ्जूषाम् आनिन्युः ।

अनन्तरं दायूद्नगरे परमेश्वरीयमञ्जूषायाः प्रवेशनसमये शौलस्य २९
दुहिता मीखला गवाक्षेण निरीक्ष्योत्प्लवमानं नृत्यन्तञ्च दायूदं नरपतिं
विलोक्य स्वान्ते तं तुच्छीचकार ।

---

## १६ षोडशोऽध्यायः ।

१ दायूदो यज्ञकर्म्म ४ गायकानां नियोजनं ७ प्रशंसागीतं ३७ सेवकानां वाद्कानां
याजकानां वाद्कानाञ्च नियोजनं ।

अनन्तरं मानवा ईश्वरीयां मञ्जूषामानीय दायूदा निर्म्मितस्य वस्त्र- १
वेश्मनो मध्ये स्थापयाञ्चक्रुरीश्वरस्य समक्षं होमबलीन् मङ्गलार्थकब-
लींश्च समुत्ससृजुश्च । अपरं होमबलीनां मङ्गलार्थकबलीनाञ्चोत्सर्गं २
समाप्य दायूद् परमेश्वरस्य नाम्ना लोकान् आशिषं जगाद । अपरं ३
निखिलेस्रायेलीयमनुजानां मध्ये प्रतिपुरुषं प्रतिनारि चैकैकं पूपम् एकैकं
पात्रं द्राक्षारसम् एकैकम् उडुम्बरखण्डञ्च परिवेशयाञ्चकार ।

अपरं तेन परमेश्वरीयमञ्जूषायाः समक्षम् इस्रायेलः प्रभोः पर- ४
मेश्वरस्य स्मारणधन्यवादस्तोत्रादिसेवनाय लेवीयानां कतिपयमानवाः
न्ययुज्यन्त । तेषां मुख्य आसफो द्वितीयः सिखरीयः अपरे यियूयेलः ५
शिमीरामोतो यिहीयेलो मत्तथिय इलीयाबो विनाय ओवेदेदोमश्चैत-
आसन् किन्तु यियूयेलो मुरजं वल्लकीञ्चावादयत् आसफस्तु करतालम्
अवादयत् । अपरं विनायो यहसीयेलश्च याजकावीश्वरीयनियम- ६
मञ्जूषायाः सम्मुखे नित्यं तूरीवाद्यम् अकुर्व्वातां ।

७ अपरं दायूद् तस्मिन् दिने परमेश्वरस्य धन्यवादार्थम् आसफस्य तस्य सहजानाञ्च करेषु प्रथमं गीतमिदं समर्पयाञ्चकार ।

८ परेशं स्तुत तन्नाम्ने कुर्य्यात प्रार्थनामपि ।
तदीयाश्चर्य्यकर्म्माणि प्रकाशयत लोकतः ।
९ प्रगायत तमुद्दिश्य गीतं गायत तं प्रति ।
तदीयाश्चर्य्यकर्म्माणि सञ्चिन्तयत सर्व्वशः ।
१० तदीयस्य पवित्रस्य नाम्नः श्लाघां विधत्त च ।
सदा तिष्ठतु सानन्दं परेशान्वेषिणां मनः ।
११ परेशितुश्च तच्छक्तेः प्रकुरुध्वं गवेषणां ।
सर्व्वदा तस्य वक्त्रस्य प्रकुरुध्वं गवेषणां ।
१२ हे दासस्य तदीयस्य इस्रायेलः कुलोद्भवाः ।
हे मनोभिमतास्तस्य याकूबो वंशजा नराः ।
१३ स्मर्य्यन्तां विचित्रकर्म्माणि तेनैव साधितानि हि ।
अद्भुतानि च चिह्नानि दण्डाज्ञास्तन्मुखोद्गताः ॥
१४ भवति प्रभुरस्माकं स एव परमेश्वरः ।
व्याप्नोति मेदिनीं कृत्स्नां तदीयं राजशासनं ।
१५ स्मर्य्यतां नियमस्तस्य युष्माभि र्हि निरन्तरं ।
वाक्यञ्चाज्ञापितं तेन सहस्रं पुरुषानभि ।
१६ इब्राहीमा समं तेन नियमः स स्थिरीकृतः ।
इस्हाकं प्रति पश्चाच्च कथितः शपथेन हि ।
१७ याकूबश्च व्यवस्थार्थं सोऽपि तेन निरूपितः ।
इस्रायेलश्च विध्यर्थं वाक्यमेतदकथ्यत ।
१८ अधिकारं किनान्देशं दास्ये तुभ्यं सुनिश्चितं ।
१९ तदा ते बहुसंख्या नो विदेशेऽल्पाः प्रवासिनः ।
२० स्थानात् स्थानान्तरं प्रापन् राष्ट्राद् राष्ट्रान्तरं तथा ।
२१ उपद्रवाय तेषां तु नानुमेने स कश्चन ।
भर्त्सयंश्च कृते तेषां नृपतीनिदमब्रवीत् ।
२२ मयाभिषिक्तलोकानां कुरुध्वं स्पर्शनं नहि ।
कुरुध्वं नाशुभं किञ्चित् भविष्यद्वादिनां मम ॥
२३ परमेश्वरमुद्दिश्य गीतं गायत भूगताः ।
कृतं तेन परित्राणं प्रकाशयत प्रत्यहं ।

मध्येऽन्यदेशिनां तस्य संवर्णयत गौरवं। २४
आश्चर्य्याश्च क्रियास्तस्य नरलोकस्य सर्व्वतः।
महान् अति प्रशस्यश्च जायते परमेश्वरः। २५
यावत्यो देवताः सन्ति ताभ्यो भेतव्य एव सः।
अन्यदेशीयलोकानाम् असाराः सकलाः सुराः। २६
किन्तु सर्ज्जनकर्त्तास्ति गगनस्य परेश्वरः।
समादरः प्रशंसा च तदीयाग्रे हि वर्त्तते। २७
तिष्ठतः शक्तिसौन्दर्य्ये तदीयधर्म्मवेश्मनि।
यूयं मनुष्यसन्तानाः परमेशं प्रशंसत। २८
महिमानं परेशस्य विक्रमञ्च प्रशंसत।
परमेशीयनाम्नश्च महिमानं प्रशंसत॥ २९
नैवेद्यानि समादाय प्रयात तस्य सन्निधिं।
पवित्रशोभया तत्र कुरुध्वं प्रणिपातनं।
पृथिवीस्था जनाः सर्व्वे तस्य साक्षाद् बिभीत वै। ३०
संस्थापितं जगत् तेन न कदापि स्खलिष्यति।
नन्दन्तु सकलाः स्वर्गे हर्षो व्याप्नोतु मेदिनीं। ३१
कथ्यताम् अन्यदेशेषु राजति परमेश्वरः।
समुद्रस्तस्य मध्यस्थाः सर्व्वे कुर्व्वन्तु गर्ज्जनं। ३२
क्षेत्रक्षेत्रस्थिताः सर्व्वे भवन्त्वाह्लादसंयुताः।
वन्यवृक्षाः परेशस्य साक्षादुच्चं ध्वनन्तु हि। ३३
स समायाति मेदिन्या विचारं कर्त्तुमेव हि।
परेशं ब्रूत धन्यश्च प्रशंसत परेश्वरं। ३४
यतः क्षेमप्रदाता स चिरस्थस्तदनुग्रहः।
यूयं भाषध्वम् अस्माकं त्राता त्वं परमेश्वर। ३५
आयस्व सङ्ग्रहाणास्मान् उद्धर चान्यजातितः।
तस्मात् तव पवित्रस्य नाम्नो वर्द्धिष्यते स्तवः।
अस्माकमपि श्लाघा ते प्रशंसातो जनिष्यते।
इस्रायेलः प्रभु र्योऽस्ति स प्रभुः परमेश्वरः। ३६
भूयाद् आद्यन्तपर्य्यन्तं धन्यो धन्यश्च सर्व्वदा॥
अनन्तरं सर्व्वे लोकास्तथास्त्वित्युक्त्वा परमेश्वरं तुष्टुविरे।
अपरं प्रत्यहं कर्त्तव्यक्रियानुसारेण मञ्जूषायाः सम्मुखे सेवनार्थम् ३७

३८ आसफ ओबेदेदोमस्तयोरष्टषष्टिसहजाश्च परमेश्वरीयनियममञ्जूषायाः
सम्मुखे तस्थुः, अपरं यिदूथूनस्य सुत ओबेदेदोमो होषाश्च द्वारपाल-
३९ कावास्तां। किञ्च परमेश्वर इस्रायेलं यां व्यवस्थाम् आज्ञापयत् तन्मध्ये
४० लिखितानां सर्व्वक्रियाणां करणार्थं विशेषतः प्रत्यहं प्रातःकाले सन्ध्या-
काले च होमवेद्यां परमेश्वराय होमार्थकबलिदानार्थं याजकः सादोक-
स्तस्य याजका भ्रातरश्च गिबियोनस्थे भजनस्थाने परमेश्वरीयावासस्य
४१ सम्मुखे तस्थुः। अपरं चिरस्थायी तदनुग्रह इत्यादिना गीतेन परमेश्वरस्य
धन्यवादार्थं तैः सार्कं हेमनो यिदूथूनोऽपरेषाञ्च येषां नामानि लिखि-
४२ तानि ते वृता लोकास्तस्थुः। विशेषत उच्चध्वनिकरणार्थम् ईश्वरीययन्त्र-
वादनार्थञ्च तूरीकरतालधारिणां कृते हेमनयिदूथूनौ तैः सार्कं तस्थतुः।
४३ यिदूथूनस्य तनयाश्च द्वारपाला बभूवुः। अनन्तरं सर्व्वे लोका निजं निजं
निवेशनं प्रतस्थिरे किञ्च दायूद् निजपरिजनान् आशिषं निगदितुं
परावृत्य जगाम।

---

## १७ सप्तदशोऽध्यायः।

१ मन्दिरनिर्म्माणमधि नाथनस्य परमेश्वरस्य च कथनं अपरं दायूदमधि कथनं १६ परमेश्वरं प्रति दायूदः प्रार्थना प्रशंसनञ्च।

१ 　अनन्तरं दायूद् यदा निजगेहे न्यवसत्, तदा स भविष्यद्वादिनं
नाथनं जगाद, पश्य मयैरसकाष्ठे निर्म्मिते प्रासाद उष्यते किन्तु परमे-
२ श्वरीयनियममञ्जूषा यवनिकानाम् अधस्तिष्ठति। ततो नाथनो दायूदं
बभाषे त्वं निजमनोगतं साधय परमेश्वरस्तव सहाय आस्ते।

३ 　अपरं तस्यां रजन्याम् ईश्वरस्य वाक्यमिदं नाथनस्य निकटं समाग-
४ च्छत्, त्वं गत्वा मम दासं दायूदं वद, परमेश्वर इति वाचं वक्ति, मम
५ वासार्थं त्वया मन्दिरं न निर्म्मातव्यं। इस्रायेल्वंशस्याज्ञानयनदिनमा-
रभ्याद्य यावत् मया मन्दिरे न न्युष्यते किन्त्वेकं वस्त्रवेश्म विहायान्यद्
६ वस्त्रवेश्मैकञ्च स्थानं विहायान्यत् स्थानं गम्यते। तथापीस्रायेल्वंशमध्ये
मम पर्य्यटनकाले मम प्रजापालकत्वपदे नियुक्तः कश्चिद् विचाराधि-
पतिः कदापि किं मया पृष्ट इदं, युष्माभि र्मत्कृते कुत एरसकाष्ठमयं
७ गृहं न निर्म्मीयते? इदानीं त्वं मम दासं दायूदं वद, सेनाधिपः
परमेश्वर एतां वाचं वक्ति मम प्रजानाम् इस्रायेल्वंशीयानां राजानं
कर्त्तुम् अहं त्वां मेषस्थानात् मेषाणाम् अनुचरणाच्च गृहीतवान्।

अपरं त्वं यद्यद् उपक्रमितवान् तत्सर्व्वस्मिन् अहं तव सहायो भवन् ८
तव सम्मुखे तव सकलशत्रून् उच्छिन्नवान् चक्रवर्त्तिनां महतां लोकानां
नामवत् तव महानाम च कृतवान्। तदन्यत् मया निजप्रजानाम् ९
इस्रायेल्वंशीयानां कृते स्थानमेकं निश्चित्य ते तस्मिन् स्थाने समस्था-
प्यन्त, ते तत्र स्वस्थाने निवसन्ति पुनश्चालिता न भविष्यन्ति। पूर्व्वकाले
यदा चाहं मदीयेस्रायेलीयलोकान् शासितुं विचाराधिपतीन् न्ययो- १०
जयं तदा ते यादृशं दुष्टै र्मानवैरक्लिश्यन्त तादृशं पुन र्न क्लेक्ष्यन्ते।
तव रिपवः सर्व्वे मया दमिताः परमेश्वरस्त्वत्कृते वंशमेकं स्थापयिष्यतीति
वाक्यमपि मया कथितं।

अपरं त्वयि सम्पूर्णायुषि सति निजपितृलोकानां सन्निधिं गतवति ११
चाहं तव सन्तानजं भाविवंशं स्थापयिष्यामि तस्य राज्यं स्थिरीकरि-
ष्यामि च। स मदर्थं मन्दिरमेकं निर्म्मास्यति, अहञ्च तस्य राजसिंहा- १२
सनम् अनन्तकालं यावत् स्थिरीकरिष्यामि। अहं तस्य पिता भवि- १३
ष्यामि स च मम पुत्रो भविष्यति। तवाग्रवर्त्तिनो राजतो मया
यादृक् स्वानुग्रहोऽपसारितस्तादृक् तत्तो ममानुग्रहो नापसारयिष्यते।
किन्तु मम गृहे मम राज्ये च स मयानन्तकालं यावत् संस्थापयिष्यते १४
तस्य राजसिंहासनमप्यनन्तकालं यावत् स्थिरं स्थास्यति। अनन्तरं १५
तानि सकलवाक्यानि तच्च दर्शनं यथातथ्यं नाथनेन दायूदे कथया-
ञ्चक्रिरे।

ततो राजा दायूद् अभ्यन्तरं गत्वा परमेश्वरस्य सम्मुख उपविश्य १६
कथयामास हे प्रभो परमेश्वर कोऽहं मम वंशश्च कः यत् त्वं माम् एतत्प-
र्य्यन्तम् आनीतवान्? तथापि हे ईश्वर, त्वम् एतदपि स्वदृष्टौ क्षुद्रं १७
कार्य्यं मन्यसे, हे प्रभो परमेश्वर त्वं निजदासस्य सुदीर्घं भाविवंशम-
प्यधि वाचम् उक्तवान् मामेवाचपदस्थलोकवत् ज्ञातवान्। एतदन्यत् १८
भवतो दासस्य सम्मानमधि दायूदा किं वदितुं शक्यते? त्वं निजदासं
वेत्सि। हे परमेश्वर त्वं स्वदासस्य कृते स्वमनोऽभिलाषाद् एतादृशं १९
सम्पूर्णं माहात्म्यं विदधत् एतानि सर्व्वाणि महत्कार्य्याणि प्रकाशित-
वान्। हे परमेश्वर, अस्माभिः स्वकर्णै र्यद्यत् श्रुतं तस्मिन् सर्व्वस्मिन् २०
तव सदृशः कश्चिदपि नास्ति त्वां विना कश्चिद् ईश्वरो नास्ति। अपरं २१
तवेस्रायेल्लोकस्य तुल्या काप्यन्या जाति र्भूमण्डले किं विद्यते यस्या
मोचनेन स्वीयजातिं कर्त्तुम् ईश्वरः स्वयम् आगतवान्? त्वं महद्भि

र्भयङ्करैश्च कर्म्मभि र्महायशःप्राप्त्यर्थं तदेव कृत्वा मिसरदेशात् निजलो-
कान् मोचयित्वा तेषां सम्मुखाद् अन्यदेशीयान् लोकान् दवयितवान्,
२२ निजेस्रायेलवंशीयांश्चानन्तकालार्थं स्वकीयप्रजाः कृतवान् अपरं हे पर-
२३ मेश्वर त्वमेव तेषाम् ईश्वरोऽभवः। इदानीं हे परमेश्वर त्वद्दासमधि
तस्य वंशमधि च त्वया प्रतिश्रुतं वाक्यम् अनन्तकालं यावत् स्थिरीभवतु,
२४ त्वया यदुक्तं तदेव क्रियतां। तत् स्थिरीभवतु किञ्च सेनाधिपतिः परमे-
श्वरो य इस्रायेलवंशस्येश्वरः स एवेस्रायेलवंशस्येश्वरोऽभवदिति वाचा
तव नाम नित्यं महद् भवतु तव दासस्य दायूदो वंशश्च तव साक्षात्
२५ स्थास्नु र्भवतु। हे मम प्रभो तव वंशमहं वर्द्धयिष्यामीति वाक्यं त्वयैव
तव दासस्य कर्णगोचरीकृतं ततो हेतोस्तव समीपे प्रार्थनामिमां निवे-
२६ दयितुं तव दास उत्सुकोऽभवत्। हे परमेश्वर त्वमेव सत्य ईश्वरः,
२७ त्वं निजदासाय शुभं प्रतिश्रुतवान् अतस्तव दासस्य वंशो यथानन्त-
कालं तव समक्षं स्थिरो भवेत् तथा तव दासस्य वंशं प्रत्याशिषं
वक्तुं त्वमेवार्हसि यतस्तवाशीर्व्वादेन सोऽनन्तकालार्थम् आशीःप्राप्तो
भविष्यति।

---

## १८ अष्टादशोऽध्यायः।

१ पिलेष्टीयानां मोयाबीयानाञ्च लोकानां दायूदा दमनं ३ सोबादेशस्यारामीय-
लोकानाञ्च जयनं ९ दायूदं प्रति तोयिराजप्रहितोनाम उपायनं १२ इदोमीयानां
जयो देशे दुर्गस्थापनञ्च १४ दायूदः सैन्याधिपतीनां नामानि च॥

१ अनन्तरं दायूद् पिलेष्टीयान् पराजित्य नम्रीचकार तेषां करेभ्यो
२ गातं तदीयोपनगराणि चापजहार। अपरं स मोयाबीयान् परा-
जिग्ये ततो मोयाबीया दायूदो वशीभूय करदायिनो बभूवुः।
३ अनन्तरं फरातनद्याः समीपप्रदेशे निजकर्त्तृत्वं संस्थापयितुं सो-
४ बाया राज्ञि हददेषरे गतवति दायूद् हमाते तं पराजित्य तस्य सहस्रं
रथान् सप्तसहस्राणि हयारोहिणो विंशतिसहस्राणि पदातिकांश्च
जग्राह रथहयानां पादशिराश्चिच्छेद च किन्तु तेषां मध्ये शतं
५ रथान् अवशेषयामास। अनन्तरं दम्मेशकस्थारामीयेषु सोबाराजस्य
हददेषरस्य साहाय्यं कर्त्तुम् आगतेषु दायूद् तेषाम् अरामीयाणां द्वाविं-
६ शतिसहस्राणि लोकान् अवधीत्। अपरं दायूद् अरामीयदम्मेशक-
प्रदेशे सैनिकाः स्थापयामास ततोऽरामीया दायूदो वशीभूय करदा-

दिनो बभूवुः। अनेन प्रकारेण दायूद् यद्यद् उपाक्राम्यत् तत्सर्व्वस्मिन्
परमेश्वरस्तं जयिनं चकार। अपरं दायूद् हददेषरस्य दासानां गात्र- ७
स्थानि स्वर्णफलकानि गृहीत्वा यिरूशालमम् आनिनाय। अपरं ८
दायूद् हददेषरस्याधीनाभ्यां टिभतं कूनश्चेतिनामकाभ्यां नगराभ्यां
भूयिष्ठानि पित्तलान्यानिनाय तैरेव सुलेमान् पित्तलमयं सागराख्यं
पात्रं स्तम्भद्वयं पित्तलमयभाजनानि च निर्म्मितवान्।

अनन्तरं दायूदा सोबान्पस्य हददेषरस्य सर्व्वाणि सैन्यानि परा- ९
जितानीति वार्त्तां निशम्य तोयिनामा हमातीयनृपती राज्ञो दायूदः
कल्याणं प्रष्टुं युध्यता तेन हददेषरस्य पराजितत्वकारणात् तस्य धन्य- १०
वादं कर्त्तुञ्च तस्य समीपं स्वपुत्रं हदोरामं तेन सार्द्धञ्च रौप्यमयानि
सुवर्णमयानि पित्तलमयानि च सर्व्वविधभाजनानि प्रेषयामास यतो
हददेषरेण सार्द्धं तोयिनाम्नोऽपि युद्धम् आसीत्। तत इदोममोयाबा- ११
म्मोनपिलेष्टीयामालेकप्रभृतिभ्यः सर्व्वजातिभ्यो लोठितै रूप्यसुवर्णैः सह
तानि सर्व्वाण्यपि राज्ञा दायूदा परमेश्वरम् उद्दिश्य समुत्ससृजिरे।

अनन्तरं सिरूयायाः सुतो योयाबो लवणाख्यायाम् उपत्यकायाम् १२
अष्टादशसहस्राणीदोमीयलोकान् जघान। अपरं स इदोमदेशे सैनिकान् १३
स्थापयामास, इदोमीया लोकाश्च सर्व्वे दायूदो दासा बभूवुः। अपरं
दायूद् यद्यत् स्थानं जगाम तत्सर्व्वस्थाने परमेश्वरस्तं जयिनं चकार।

इत्थं दायूद् इस्रायेलः सर्व्ववंशोपरि राजत्वं कुर्व्वन् निजसकल- १४
प्रजाः प्रति सविचारं न्यायञ्चाचचार। तस्मिन् काले सिरूयायाः पुत्रो १५
योयाबः प्रधानसेनापतिरासीत्। अहीटूबस्य सुतः सादोकोऽबियाथ- १६
रस्य सुतोऽहीमेलकश्च याजकावास्तां सिरायश्च लेखक आसीत्। यि- १७
होयादस्य सुतो बिनायः किरेथीयानां पिलेथीयानाञ्चाध्यक्ष आसीत्।
तथा दायूदः सुता नरपतेः प्रधानसभासद आसन्।

---

## १९ ऊनविंशोऽध्यायः।

१ हानूनेन दायूदो दूतानां वसनच्छेदनं ६ अम्मोनीयलोकानां पराजितत्वं १६ तेषाम् उपकारिणः शोबकस्य पराजितत्वं।

ततः परम् अम्मोनवंशस्य राज्ञि नाहशे मृतवति तस्य पुत्रस्तस्य पदे १
राजा बभूव। ततो दायूद् अवदत्, हानूनस्य जनको नाहशो मां २

प्रति यादृशं सद्भावम् आचरद् अहमपीदानीं हानूनं प्रति तादृशं
सद्भावम् आचरिष्यामि। अतो दायूद् तस्य पितरमधि तं सान्त्वयितुं
३ दूतान् प्रेषयामास। दायूदस्तेषु दासेष्वम्मोनवंशीयानां देशे तस्य सम-
क्षम् उपस्थितेष्वम्मोनवंशीयानां मुख्या हानूनं जगदुः, दायूदा तव
समीपं सान्त्वयितारो जनाः प्रहिता इति कर्म्म तव पितुः सम्मानार्थं
तेन कृतं त्वं किमित्थं बुध्यसे? दायूदो दासा देशं निरीक्ष्यानुसन्धाय च
४ नाशयितुं तव समीपम् आगच्छन्तीति किं नहि? ततो हानूनो दायूदो
दासान् धृत्वा तेषां श्मश्रूणाम् अर्द्धमर्द्धं क्षौरयित्वा नितम्बपर्य्यन्तं तेषां
५ वस्त्राणि छित्त्वा च तान् विससर्ज। अनन्तरं केनचिद् गत्वा वार्त्तायामेतां
दायूदि ज्ञापिते तेषाम् अतीव त्रपाकारणाद् राजा तेषां साक्षात्कर-
णार्थं लोकान् प्रहित्येदम् आदिदेश, यावद् युष्माकं श्मश्रूणि न वर्द्धन्ते
तावद् यूयं यिरीहो तिष्ठत पश्चात् परावृत्यागच्छत।
६ अनन्तरं वयं दायूदः सम्मुखे घृणार्हा अभवामेत्यम्मोनवंशीयै र्दृष्टे,
ततो हानूनोऽम्मोनवंशीयाश्चारामनहरयिमाद् अराममाखातः सोबा-
तश्च वेतनग्राहिणां रथचयारोहिणाम् आनयनार्थं दूतैरेकसहस्रकि-
७ क्कारपरिमितं रौप्यं प्रेषयामासुः। तैस्तु वेतनम् अङ्गीकृत्य द्वात्रिंशद्
रथेषु माखाया राज्ञि तस्य लोकेषु च चलितेषु ते समागत्य मेदिबायाः
सम्मुखे शिविरं स्थापयामासुस्ततोऽम्मोनवंशीया अपि स्वस्वनगरेभ्यः
८ समागत्य युद्धायाजग्मुः। तां वार्त्तां निशम्य दायूद् योयाबं बलवन्ति
९ सर्व्वसैन्यानि च तत् स्थानं प्रेषयामास। ततोऽम्मोनवंशीया बहिर्भूय
गोपुरप्रवेशस्थाने सैन्यानि रचयाञ्चक्रिरे ते च समागता राजानः क्षेत्रे
१० पृथग् व्यूहं रचयाञ्चक्रिरे। इत्थम् अग्रदिशि पश्चाद्दिशि च द्वयो र्दिशो
र्मद्विरुद्धं युद्धं जायत इति दृष्ट्वा योयाब इस्रायेलः सर्व्वेभ्यः परीक्षि-
११ तलोकेभ्यो लोकान् वृत्वारामीयानां विरुद्धं व्यूहं रचयामास। अव-
शिष्टलोकेषु च निजसहजे ऽबीशये तेन समर्पितेषु सोऽम्मोनीयानां
१२ विरुद्धं व्यूहं रचयाञ्चकार। अपरं योयाबस्तं जगाद, अरामीयाश्चेत्
मत्तो बलवन्तो भवन्ति तर्ह्यहं त्वयोपकर्त्तव्यः, अम्मोनीयाश्च चेत् त्वत्तो
१३ बलवन्तो भवन्ति तर्ह्यहं त्वाम् उपकरिष्यामि। त्वं प्रबलो भव, वयं
स्वलोकानाम् अस्मदीश्वरस्य नगराणाञ्च कृते पुरुषत्वं प्रकाशयिष्यामहे
१४ परमेश्वरश्च यत् क्षेमं मन्यते तदेव करिष्यति। अनन्तरं योयाबे तस्य
सङ्गिलोकेषु चारामीयैः समं योद्धुं प्रगतेषु ते तस्याग्रेऽग्रे पलायाञ्चक्रिरे।

अपरम् अरामीयाः पलायन्त इति दृष्ट्वाम्मोनवंशीया अपि तस्य भ्रातु- १५
रबीशयस्याग्रे पलाय्य नगरं प्रविविशुः। ततो योयाबो यिरूशालमं
जगाम।

अनन्तरं वयम् इस्रायेल्वंशीयैः पराजिता इति वीक्ष्यारामीया १६
दूतान् प्रहित्य फरातनद्याः पारस्थान् अरामीयान् बहिरानिन्युः, हद-
देषरस्य सेनापतिः शोवकश्च तेषाम् अग्रगामी बभूव। अनन्तरं दायूद् १७
तां वार्त्तां निशम्येस्रायेलः सकलवंशान् संगृह्य यर्द्दनतटिन्याः पारं गत्वा
तेषां सन्निधिम् उपस्थाय तेषां विरुद्धं व्यूहं रचयाञ्चक्रे ततोऽरामीय-
लोकानां विरुद्धं दायूदा युद्धाय व्यूहरचनायां कृतायां ते तेन सह
युयुधुः। किन्त्वरामीया इस्रायेल्वंशस्य सम्मुखात् पलायाञ्चक्रिरे ततो १८
दायूद् अरामीयाणां सप्तसहस्राणि रथान् चत्वारिंशत्सहस्राणि पदा-
तींश्च नाशयामास विशेषतस्तेषां सेनापतिं शोवकं जघान। अनन्तरं १९
वयम् इस्रायेल्वंशीयैः पराजिता इति वीक्ष्य हददेषरस्य भृत्या दायूदा
सह सन्धिं कृत्वा तस्य वशीबभूवुः। अतोऽरामीया अम्मोनवंशीयान्
पुनरुपकर्त्तुं नैच्छन्।

---

## २० विंशोऽध्यायः।

१ दायूदः प्रतनाभी रब्बानगरस्य पराजितत्वं ४ पिलेष्टीयानां त्रयाणां दीर्घवपुषां लोकानां वधनं।

अनन्तरं तस्मिन् वत्सरे गते सति राज्ञां रणयात्रासमये योयाबः १
सैन्यान्यादाय जगाम ततः सोऽम्मोनवंशीयानां देशं नाशयामास किञ्च
रब्बानगरीं गत्वा संरुरोध, किन्तु दायूद् यिरूशालमे तस्थौ। अन- २
न्तरं योयाबो रब्बां पराजित्य विनाशयामास। अपरं दायूदा रत्न-
सुवर्णानां किक्कारैकपरिमाणे राजमुकुटे तद्देशीयन्टपस्य मस्तकाद् आदत्ते
तद् दायूदः शिरस्यारोप्यत, अपरं स तस्मात् नगरात् प्रभूतानि लोठि-
तद्रव्याणि बहिष्कृत्यानिनाय। अनन्तरं दायूद् तन्मध्यवर्त्तिनो मनुजान् ३
बहिष्कृत्यानीय करपत्राणां लोहमयानां लोष्ट्रघ्नानां परशूनाञ्च कर्म्मसु
न्ययुङ्क्त। दायूद् अम्मोनवंशस्य सकलनगराणि प्रति तादृशं चकार।
ततः परं दायूद् तस्य निखिला मनुजाश्च यिरूशालमं प्रत्याजग्मुः।

अनन्तरं गेषरे पिलेष्टीयैः सार्द्धं संग्राम उपस्थिते हूशातीयः सिब्बि- ४
खयस्तस्य रफायस्य तनयं सपं व्यापादयामास। पुनर्व्वारं पिलेष्टीयैः ५

समं समरे आरब्धे तत्र यायीरस्य सुत इल्हाननस्तन्तुदण्डवच्छस्त्र-
६ धारिणं गातीयगलियतस्य भ्रातरं लह्मिं व्यापादयामास। अनन्तरं
गाते पुन युद्धे जाते प्रतिहस्तं प्रतिपदञ्च षट् षट् अङ्गुल्यः साकल्येन
चतुर्विंशत्यङ्गुल्यो यस्यासन् एवम्भूतस्तस्य हराफायस्यातीव दीर्घकाय
७ एकजनस्य इस्रायेलं नरं स्पर्द्धयामास ततो दायूदो भ्रातुः शिमियस्य पुत्रो
८ योनाथनस्तं व्यापादयामास। गातीया हराफायवंशीया एते चत्वा-
रो जना दायूदा तस्य दासैश्च जघ्निरे।

---

## २१ एकविंशोऽध्यायः।

१ दायूदा लोकानां गणनं ९ गादेन दायूदं प्रति दण्डत्रयकथनं १४ महामारीभिर्लो-
केषु हतेषु यिरूशालमः क्षते दायूदः प्रार्थनं १८ अरौणास्य शस्यमर्दनस्थाने
मन्त्रिणा दायूदे उपहारदानं २८ तत्र स्थाने यज्ञवेदिनिर्म्माणं मन्दिरनिर्म्माणाय
निदेशश्च।

१ अनन्तरं शयतान इस्रायेलवंशस्य प्रतिकूलम् उत्थायेस्रायेलवंशस्य
२ गणनाय दायूदं प्रवर्त्तयाञ्चकार। अनन्तरं दायूद् योयाबं मनुजानां
मुख्यांश्च समादिदेश यूयं बेर्शेबामारभ्य दानं यावद् इस्रायेलीयमनु-
जान् गणयत ततः परं मम सन्निधिं वार्त्ताम् आनयत, अहं तेषां संख्यां
३ विविदिषामि। ततो योयाबः कथयाञ्चकार, इदानीं यावन्तो मनुजा
विद्यन्ते परमेश्वरस्तस्य शतगुणं निजलोकान् वर्द्धयतु किन्तु भो मम
प्रभो राजन् ते सर्व्वे किं मत्प्रभो र्दासेया नहि? तर्हि मम प्रभु र्नृपति-
४ रेतस्मिन् कर्म्मणि प्रवृत्त्या कुत इस्रायेलो दोषस्य मूलं भवेत्? तथापि
योयाबस्य वचनाद् राज्ञो वचने प्रबले सति योयाबः प्रस्थायेस्रायेलीय-
जनपदस्य सर्व्वत्र पर्य्यटितवान् ततः परं यिरूशालमं पुनराजगाम।
५ अनन्तरं योयाबो लोकानां गणनस्य संख्यां दायूदं ज्ञापयामास सर्व्वे-
स्रायेलीयवंशस्यैकादशलक्षाणि खड्गधारिणो मानवा यिहूदावंशस्य च
सप्ततिसहस्राधिकानि चतुर्लक्षाणि खड्गधारिणो मानवा आसन्।
६ परन्तु तेषां मध्ये स लेवीयान् बिन्यामीनवंशीयांश्च न गणयाञ्चकार
७ यतो योयाबो महीपतेस्ताम् आज्ञां घृणार्हाम् अमन्यत। अपरं कार्य्ये-
८ णैतेनेश्वरस्यासन्तोषे जाते स इस्रायेलवंशम् आजघान। अनन्तरं दायूद्
ईश्वरम् अवोचत् कार्य्येणानेन मया महापातकम् अकारि, इदानीं
विनयेऽहं निजदासस्य कलुषं क्षमस्व मयातीव मूढस्य कर्म्माकारि।

अनन्तरं परमेश्वरो दायूदः प्रदर्शकं गादं वच इदम् अवोचत्, त्वं ९
गत्वा दायूदं ब्रूहि परमेश्वरेण वच इदम् उच्यते तव सम्मुखे मया त्रयो १०
दण्डा निधीयन्ते तेषाम् एकस्त्वया व्रियतां मया स एव त्वां प्रति कारि-
ष्यते। ततो गादो दायूदः सन्निधिं गत्वा तम् अवोचत् परमेश्वरो ब्रवीति ११
त्रीन् वत्सरान् दुर्भिक्षोऽथवा त्रीन् मासान् यावत् तव पश्चाद् १२
अरीणां खड्गेषु तिष्ठतु तेषां सम्मुखे तव विनाशोऽथवा त्रीन् दिवसान्
यावत् जनपदे परमेश्वरस्य खड्गस्वरूपाया महामार्य्या अर्थत इस्रा-
येलः कृत्स्ने जनपदे विनाशकदूतस्य भ्रमणाम् एतत्त्रयस्य मध्ये त्वयैकं
व्रियतां मत्प्रेरयित्रे मया किमुत्तरं दातव्यं तदिदानीं त्वयालोच्यतां।
ततो दायूद् गादं बभाषे मम महती मनःपीडा जाता, इदानीं परमे- १३
श्वरस्य हस्ते पतितुमिच्छाम्यहं यस्मात् तस्य कृपा प्रचुरा नाहं मनुष्याणां
हस्तेषु पतितुम् इच्छामि।

अनन्तरं परमेश्वर इस्रायेल्वंशं प्रति महामारीं प्रेषयाञ्चकार तत १४
इस्रायेलीयानां सप्ततिसहस्राणि मनुजा अम्रियन्त। अपरम् ईश्वरो १५
यिरूशालमस्य विनाशार्थं यं दूतं तत् स्थानं प्रहितवान् तस्य विनाशन-
समये परमेश्वरो विलोक्य विपद्यनुतप्य तं विनाशकं दूतम् अब्रवीत्,
अलमनेन त्वं स्वकरं सङ्कोचय। तदानीं परमेश्वरस्य दूतो यिबूषीय-
स्यारौणाहस्य शस्यमर्द्दनस्थानस्य सन्निधाववातिष्ठत्। अनन्तरं दायूद् १६
ऊर्द्ध्वदृष्टिं भवन् द्यावाभूम्यो र्मध्यपथिस्थितं परमेश्वरस्य दूतं तस्य करे
च यिरूशालमस्योपरि प्रसारितं निष्कोषं खड्गं ददर्श ततो दायूद् प्रा
चीनमनुजाश्च परिहितशाणवसनाः सन्तो न्युब्जीभूय न्यपतन्। अन- १७
न्तरं दायूद् ईश्वरं बभाषे मनुजानां गणनस्यादेशः किं मया नाकारि?
मयैव पापमकारि ममैव सोऽपराधोऽस्ति मेषैरेतैः किम् अपराद्धं?
हे मम प्रभो परमेश्वर विनयेऽहं मम मदीयपितृवंशस्य च विरुद्धं त्वया
करः प्रसार्य्यतां परन्तु निजप्रजानाम् आघाताय न प्रसार्य्यतां।

अनन्तरं परमेश्वरस्य दूतो गादं बभाषे त्वं दायूदम् इदम् आदिश, १८
त्वं गत्वा यिबूषीयस्यारौणाहस्य शस्यमर्द्दनस्थाने परमेश्वराय यज्ञ-
वेदीमेकां निर्म्मापय। अनन्तरं परमेश्वरस्य नाम्ना गादो यद् आज्ञापि- १९
तवान् तदनुसारेण दायूद् यात्रां विदधे। तदानीम् अरौणाहो गोधू- २०
मान् अमर्द्दयत्, अनन्तरं स परावृत्य दूतम् अदर्शत् ततः स तस्य
चत्वारः सुताश्च प्रच्छन्ना बभूवुः। अनन्तरं दायूदरौणाहस्य समी २१

यम् उपस्थितवति स दृष्टिं कुर्व्वन् दायूदं विलोक्य शस्यमर्द्दनस्थानाद्
२१ वहिर्गत्वा भूमिष्ठमस्तकः सन् दायूदं प्रणनाम। तदानीं दायूद्
अरौणाहम् अब्रवीत् त्वम् इदं शस्यमर्द्दनस्थानं मह्यं देहि त्वया सम्पूर्णं
मूल्यमादाय तत् मह्यं दीयतां, मनुजानां मध्यात् महामारी यन्निवर्त्तेत
२२ तत्कृते मयात्र स्थाने परमेश्वराय यज्ञवेदिरेका निर्म्मापयिष्यते। ततो
ऽरौणाहो दायूदं बभाषे, गृह्णातु, मम प्रभुना पार्थिवेन यत् क्षेमं
बुध्यते तदेव क्रियतां। पश्यतु होमबले र्निमित्तं वृषभा इन्धननिमित्तं
मर्द्दनयन्त्राणि नैवेद्यस्य निमित्तं गोधूमाश्च मया दीयन्ते सर्व्वाण्येतानि
२४ मया त्यज्यन्ते। अनन्तरं दायूद् अरौणाहं जगाद तन्न भवतु मया
सम्पूर्णं मूल्यमेव दत्त्वा सर्व्वाण्येतानि क्रयिष्यन्ते नाहं परमेश्वराय तव
२५ सम्पदं दास्यामि विनामूल्यक्रयान् होमबलीन् वोत्स्रक्ष्यामि। अनन्तरं
दायूद् षट्शतशेकलपरिमितानि स्वर्णरजतानि दत्त्वारौणाहात् तत्
२६ स्थानं चिक्राय। अपरं दायूद् तस्मिन् स्थाने परमेश्वराय यज्ञवेदीं
निर्म्माप्य होमबलीन् मङ्गलार्थकबलींश्च प्रोत्ससर्ज परमेश्वरम् उद्दिश्य
प्रार्थनां चकार च। ततः स होमार्थकयज्ञवेद्युपरि स्वर्गात् समेतेन
२७ हुतवहेन तस्मायुत्तरं ददौ। अनन्तरं परमेश्वरेण दूते समादिष्टे स
निजासिं कोषे निदधे।

२८ अनेन प्रकारेण परमेश्वरो यिबूषीयारौणाहस्य शस्यमर्द्दनस्थाने
मह्यम् उत्तरं दत्तवान् इति विलोक्य दायूद् तदारभ्य तत्रैव बलीन् अद-
२९ दात्। परन्तु प्रान्तरे मूससा परमेश्वराय निर्म्मापित आवासो होम-
३० वेदिश्च तदानीं उच्चस्थाने गिबियोन आस्तां। किन्त्वीश्वरं प्रष्टुं दायूद्
तस्य समक्षं गन्तुं नाशक्नोत्, यतः स परमेश्वरीयदूतस्य खड्गत्रासाद्
बिभयाञ्चकार। अनन्तरं दायूद् बभाषे स्थानम् एतत् प्रभोः परमेश्व-
रस्य मन्दिरम् इस्रायेलो होमवेद्याः स्थानञ्च भविष्यति।

---

## २२ द्वाविंशो ऽध्यायः।

१ मन्दिरस्य निर्म्माणार्थं दायूदा वस्तुद्रव्याणां संग्रहणं ६ सुलेमानं प्रति मन्त्रणा निर्द-
शश्च १७ सुलेमन उपकारार्थम् अधिपतीनाम् आज्ञापनं।

१　अनन्तरं दायूद् इस्रायेलीयजनपदे प्रवासिनां सर्व्वेषां विदेशिनां
२ संग्रहणम् आज्ञापयाञ्चकार, अपरम् ईश्वरमन्दिरस्य निर्म्माणार्थं घो-
३ ष्टपाषाणानां कर्त्तनाय भास्करान् नियुयुजे। अपरं द्वारीयकवाटानां

कोषाणां कृते कजानां कृते चापरिमितान् आयसान् अपरिमितान्
आरकूटांश्च सङ्गृहीतवान्। अपरम् असंख्यान्येरसकाष्ठानि संगृहीत- ४
वान् यतः सीदोनीयाः सोरीयाश्च दायूदः समीपं बहून्येरसकाष्ठानि
समानिन्युः। दायूद् कथयामास मम तनयः सुलेमान् अल्पवयस्को ५
मृदुश्चास्ति परन्तु परमेश्वरस्य कृते यत् मन्दिरं निर्म्मातव्यं तेनातीव
बृहता भवितव्यं तस्य यशसा शोभया च सर्व्वे देशा व्याप्तव्याः, अतोऽहं
तत्कृते द्रव्यसङ्ग्रहं करिष्यामि। तस्मात् दायूद् स्वनिधनात् पूर्व्वं तस्य
कृते बाहुल्यतः सङ्ग्रहं चकार।

ततः परं दायूद् निजतनयं सुलेमानम् आहूयेस्रायेलीयस्य प्रभवे ६
परमेश्वराय मन्दिरनिर्म्माणम् आज्ञापयाञ्चकार। दायूद् सुलेमानं ७
जगाद, हे मम तनय, मदीयप्रभोः परमेश्वरस्य नाम्नेऽहं मन्दिरं निर्म्माप-
यिष्यामीति मम मनोरथे जाते परमेश्वरस्य भारतीयं मां प्रति समुपा- ८
तिष्ठत् त्वया बहूनि रुधिराण्यपात्यन्त महान्तः समराश्चाक्रियन्त तत्-
कारणात् त्वया मम नाम्ने मन्दिरं न निर्म्मापितव्यं यतः पृथिव्यां मम
गोचरे बहूनि रुधिराणि त्वयापात्यन्त। पश्य तवैकः सुतो जनिष्यते स ९
शान्तो मानवो भविष्यति मया तस्मै चतुर्दिक्स्थितेभ्यः परिपन्थिभ्यो
विश्रामो वितारिष्यते तदीयं नामधेयं सुलेमान् शान्त इति भविष्यति,
तस्य राजत्वसमयेऽहम् इस्रायेलीयेभ्यः शान्तिं निष्कण्टकत्वञ्च विश्राण-
यिष्यामि। स एव मम नाम्ने मन्दिरं निर्म्मापयिष्यति स मम तनयो १०
भविष्यत्यहञ्च तस्य पिता भविष्यामीस्रायेलीयानाम् उपरि तस्य रा-
सिंहासनम् अनन्तकालं स्थैर्यं करिष्यामि च। हे मम तनय, परमेश्वर ११
इदानीं तव सहायो भवतु स त्वामधि यादृग् उक्तवान् तदनुसारेण त्वं
भाग्यवान् भूत्वा निजप्रभोः परमेश्वरस्य मन्दिरं निर्म्मापय। तदन्यद् १२
इस्रायेलीयानाम् आधिपत्यार्थं स्वप्रभोः परमेश्वरस्य व्यवस्थाया आच-
रणार्थञ्च परमेश्वरस्तुभ्यं ज्ञानबुद्धी प्रदेयात्। परमेश्वर इस्रायेलः कृते १३
मूससं यान् विधीन् याश्चाज्ञा आदिशत् ताः पालयितुं यदि मनो नि-
धत्से तर्ह्येव त्वं भाग्यवान् भविष्यसि, तस्मात् शक्तिमान् उत्सुकश्च भव
भीतो निराशश्च माभूः। पश्याहं निजदुःखसमये परमेश्वरीयमन्दिरस्य १४
कृते लक्षकिक्कारपरिमितानि सुवर्णानि दशलक्षकिक्कारपरिमितानि
दुर्वर्णानि प्रचुरत्वाद् अपरिमेयान् आरकूटान् लौहांश्च समग्रहम्
अपरम् अहं काष्ठानि पाषाणांश्च समग्रहं त्वमप्यपरान् सङ्ग्रहीतुं

१५ प्राप्स्यन्ते। अपरं तव सन्निधौ बहवः शिल्पिनो ऽर्थतः पाषाणतक्षकाः सूत्र-
१६ धराः सर्व्वविधकर्म्मसु निपुणाः सर्व्वविधलोकाश्च विद्यन्ते। सुवर्णरूप्यपि-
पित्तललोहाश्चापरिमेयाः सन्ति, तस्मात् त्वम् उत्तिष्ठ कर्म्मणि उद्योगं
कुरुष्व, परमेश्वरस्तव सहायो भूयात्।
१७ अनन्तरं दायूद् इस्रायेलः सकलान् अधिपतीन् निजपुत्रस्य सुलेमन
१८ उपकारायादिश्य जगाद, युष्माकं प्रभुः परमेश्वरो युष्माकं सहायो भूत्वा
किं सर्व्वदिक्षु युष्मभ्यं विश्रामं न प्रादात्? जनपदनिवासिषु तेनैव
मदधीनीकृतेषु परमेश्वरस्य तदीयप्रजानाञ्च गोचरे नीदत् पराजितो
१९ ऽभवत्। अतो निजप्रभोः परमेश्वरस्य गवेषणे स्वेषाम् अन्तःकरणानि
चित्तानि च निधद्ध्वम्, अपरम् उत्तिष्ठत, परमेश्वरस्य नाम्ने यन्मन्दिरं
निर्म्मापयिष्यते तन्मध्ये परमेश्वरस्य नियममञ्जूषाया ईश्वरीयाणां नैवेद्य-
भाजनानाञ्चानयनार्थं स्वप्रभोः परमेश्वरस्य पवित्रं स्थानं निर्म्मापयत।

---

## २३ त्रयोविंशोऽध्यायः।

१ सुलेमनो राज्ये नियोगो २ लेविवंशस्य विभजनं ७ गेर्शोनीयवंशस्य नामधेयानि १२ किहातीयवंशस्य नामधेयानि २१ मिरारिवंशस्य नामधेयानि २४ लेवीयानां कर्म्माणि च।

१ ततः परं दायूदि स्थविरे सम्पूर्णायुषि च जाते स निजतनयं सुले-
२ मानम् इस्रायेलीयानां राजत्वे नियुयोज। स याजकैर्लेवीयैश्च सार्द्धम्
३ इस्रायेलीयान् अधिपतीन् संजग्राह। ते लेवीयास्त्रिंशद्वर्षवयस्कास्ततो
ऽधिकवत्सरवयस्काश्चासन् अपरं तेषां शिरोगणनया ते ऽष्टत्रिंशत्स-
४ हस्राणि पुरुषा आसन्। अपरं दायूद् अवोचत्, तेषां मध्याच्चतुर्विं-
शतिसहस्राणि मनुजाः परमेश्वरीयमन्दिरकार्य्याध्यक्षा भवन्तु, अपरं
५ षट्सहस्राणि मानवाः शासितारो विचारयितारश्च भवन्तु। अपरं
चत्वारि सहस्राणि पुरुषा दौवारिका भवन्तु। मया प्रशंसार्थानि यानि
वाद्ययन्त्राणि निर्म्मापितानि तेषु नियुक्ताः परमेश्वरस्तावकाश्चत्वारि सह-
६ स्राणि लोका भवन्तु। अपरं दायूद् गेर्शोनीयः किहातीयो मिरारीय-
श्चेतिनामकान् लेविवंशान् विभज्य तेषां पर्य्यायान् निरूपयामास।
७ तेषां गेर्शोनीयानां मध्ये लादनः शिमियिश्च। अपरं लादनस्य त्रयः
८ सुता आसन्, ज्येष्ठो यिहीयेलः, अपरौ सेथमो योयेलश्च। किञ्च शिमि-

यस्त्रयः सुता आसन् शिलोमीतो हसीयेलो हारणश्च, इमे लादनवंशस्य
मुख्या आसन् । अपरं शिमियेः पुत्रा यहतः सीषो यियूशो विरियश्च, १०
शिमियेरेते ये चत्वारः सुता आसन् । तेषां मध्ये ज्येष्ठो यहतो द्वितीयश्च ११
सीष आसीत् । अपरं यियूशस्य विरियस्य च बहवः सन्ताना नासन्
एतत्कारणात् ते पितृवंशानुसारेण एकस्मिन् पक्षे गणिता अभवन् ।

अपरं किहातस्य चत्वारः पुत्रा आसन् अम्रामो यिष्हरो हिब्रोण १२
ऊषीयेलश्च । अपरम् अम्रामस्य सुतौ हारोणो मूसाश्च, एष हारोण- १३
स्तस्य पुत्राश्च यथा महापवित्रेण पवित्रीक्रियेरन् परमेश्वरस्य सम्मुखे
धूपान् ज्वालयेयुः सेवाम् अनुतिष्ठेयुस्तस्य नाम्ना नित्यम् आशिषं वदेयुश्च
तदर्थं चिरकालकृते पृथक्कृता बभूवुः । ईश्वरीयलोकस्य मूससः पुत्रौ १४
लेविवंशस्य मध्ये गणितावास्तां । मूससः सुतौ गेर्शोम इलीयेषरश्च । १५
तस्य गेर्शोमस्य सन्तानानां मध्ये शिबूयेलो मुख्य आसीत् । इलीयेषरस्य १७
च सन्तानानां मध्ये रिहवियो मुख्य आसीत् । तस्येलीयेषरस्य नापरः
सुत आसीत्, परन्तु रिहवियस्य बहवः सुता आसन् । अपरं यिषह- १८
रस्य सुतानां मध्ये शिलोमीतो मुख्य आसीत् । अपरं हिब्रोणस्य ज्येष्ठः १९
सुतो यिरियः, द्वितीयो ऽमरीयः, तृतीयो यहसीयेलः, चतुर्थो यिकमि-
यामः । अपरम् उषीयेलस्य ज्येष्ठः सुतो मीखाः, द्वितीयो यिशियः । २०

अपरं मिरारेः सुतौ महलि मूशिश्च । महलेः सुतावलियासरः २१
कीशश्च । अयम् इलियासरो यदा मृतवान् तदा तस्य सुतो नासीत्, २२
केवलं दुहितर आसन् ततो ज्ञातेः कीशस्य सुतास्ता व्यवहन् । अपरं २३
मूशेस्त्रयः सुता आसन्, महलिरेदरो यिरेमोतश्च ।

निजनिजपितृवंशानुसारेणेमे लेवीयानां मध्ये स्वस्वपितृवंशस्य मुख्या २४
आसन् एतेभ्यो वर्गेभ्यश्च परमेश्वरीयमन्दिरस्य सेवार्थं लेवीयानां मध्ये
ये विंशतिवत्सरवयस्कास्ततो ऽधिकवत्सरवयस्काश्च तेषां सर्व्वेषां नामानि
शिरांसि च गणयाञ्चक्रिरे । यतो दायूद् अब्रवीत्, इस्रायेलीयानां प्रभुः २५
परमेश्वरो निजलोकेभ्यो विश्रामं व्यतरत्, स च सर्व्वदा यिरूशालमे
निवत्स्यति । अपरं लेवीयैरपि दूष्यं तत्सेवार्थकभाजनानि च पुन र्न २६
वोढव्यानि । एतत्कृते दायूदः शेषाज्ञया विंशतिवत्सरवयस्कास्ततो २७
ऽधिकवत्सरवयस्काश्च लेवीया गणयाञ्चक्रिरे । अपरं परमेश्वरीयमन्दिरस्य २८
सेवायां हारोणवंशीयानाम् उपकारः प्राङ्गणानां कोष्ठानाञ्चाध्यक्षत्वम्
अर्थतो निखिलानां पवित्रवस्तूनां परिष्करणम् ईश्वरीयमन्दिरस्य परि-

२९ चर्य्याकर्म्म, अपरं दर्शनीयपूपा नैवेद्यार्थकगोधूमचूर्णानि किण्वशून्यपि-
ष्टकाः पक्वानि भृष्टानि वा द्रव्याणि निखिलपरिमाणानि तौलानि चैतेषां
३० सर्व्वेषां कर्म्म, अपरं प्रतिप्रातः प्रतिसन्ध्यञ्च परमेश्वरस्य प्रशंसार्थं धन्य-
३१ वादार्थञ्चोपस्थितिरपरं विश्रामवासरेष्वमावस्यासु वार्षिकपर्व्वसु च
परमेश्वरस्य साक्षात् नित्यं संख्यानुसारेण विधिवत् परमेश्वरोद्देश्यहो-
३२ मार्थकबलिदानञ्चैतेषु सर्व्वेषु ते न्ययुज्यन्त। अपरं परमेश्वरीयमन्दिरस्य
सेवायां समाजावासस्य रक्षा पवित्रस्थानस्य रक्षा स्वीयभ्रातॄणां हारोण-
वंशीयानां परिचर्य्या च तैरेव कर्त्तव्या।

---

## २४ चतुर्विंशोऽध्यायः।

१ गुटिकापातेन चतुर्विंशतिवर्गे हारोणवंशस्य विभजनं २० किहातवंशस्य विवृतिः २६ मिरारिवंशस्य विवृतिश्च।

१ हारोणवंशस्य पर्य्यायाणां विवृतिः। हारोणस्य सुता नादबो ऽवीहू
२ रिलियासर ईथामरश्च। तेषां मध्ये नादबो ऽवीहूश्च स्वजनकस्याग्रे
मृतवन्तौ। तयोः सन्ताना नासन्, अत इलियासर ईथामरश्च याज-
३ कत्वं प्रापतुः। अनन्तरं दायूद् इलियासरवंशीयः सादोक ईथामर-
वंशीयो ऽहीमेलकश्च तान् विभज्य निजनिजसेवापदेषु न्ययोजयन्।
४ तदानीम् ईथामरवंशीयेभ्य इलियासरवंशीयानां मध्ये बहुतरेषु प्रधान-
पुरुषेषु विद्यमानेषु ते तान् इत्थं विबभजुः। इलियासरवंशमध्ये पितृ-
वंशानुसारेण षोडशजना ईथामरवंशमध्ये च पितृवंशानुसाराद् अष्ट-
५ जनाः प्राधान्यप्राप्ता अभवन्। ते तान् अविशेषेण गुटिकापातेन व्यभजन्,
यतः पवित्रस्थानस्याध्यक्षा ईश्वरीयाध्यक्षाश्चेलियासरवंशस्येथामरवंशस्य
६ च मध्ये बभूवुः। अपरं राज्ञो ऽधिपतीनां सादोकयाजकस्याबिया-
थरसुतस्याहीमेलकस्य याजकीयलेवीयपितृवंशानां प्रधानलोकानाञ्च
साक्षात् लेवीयनिथनेलस्य सुतः शिमयियो लेखकस्तेषां नामानि लिखि-
तवान् अपरम् ईथामरस्यैकः पितृवंशस्ततः परम् इलियासरस्यैकः पितृ-
७ वंश इत्थम् एकैकः पितृवंशो ऽलिख्यत। ततः प्रथमे गुटिकापाते यिहो-
८ यारीबस्य गुटिकोदतिष्ठत्, द्वितीये यिदयियस्य, तृतीये हारीमस्य,
९ चतुर्थे सियोरीयस्य, पञ्चमे मल्कियस्य, षष्ठे मियामीनस्य, सप्तमे कोसस्य,
१० अष्टमे ऽवियस्य, नवमे येशूयस्य, दशमे शिखनियस्य, एकादशे इलिया-

शीवस्य, द्वादशे याकीमस्य, त्रयोदशे हुप्पस्य, चतुर्द्दशे येशवावस्य, १२
पञ्चदशे बिल्गाः, षोडश इम्मेरसस्य, सप्तदशे हेषीरस्य, अष्टादशे १३
हप्पीसेसस्य, ऊनविंशे पिथाहियस्य, विंशतितमे यिहिष्केलस्य, एकविं- १५
शतितमे याखीनस्य, द्वाविंशतितमे गामूलस्य, त्रयोविंशतितमे दिलायस्य, १६
चतुर्विंशतितमे पाते च मासियस्य गुटिका समुदतिष्ठत्। इस्रायेलः १९
प्रभुः परमेश्वरो यादृक् तेषां पूर्व्वपुरुषं हारोणम् आज्ञापयाञ्चकार तादृक् तेषां विधिमतानुसारेण परमेश्वरीयमन्दिरप्रवेशादिसेवाकर्म्मणि तेषाम् एते पर्य्याया बभूवुः।

लेवेरन्येषामपत्यानां विवृतिः। अम्रामवंशस्य मध्ये शिवूयेलः, शिवू- २०
येलवंशस्य मध्ये येहदियः। अपरं रिहवियस्य विवृतिरियं। रिहवियस्य २१
सुतानां मुख्यो यिशियः। यिष्हरीयाणां मध्ये शिलोमीतः, शिलोमीतस्य २२
सुतानां मध्ये यहतः। अपरं हिब्रोणस्य ज्येष्ठः सुतो यिरियः, द्वितीयो २३
ऽमरियः, तृतीयो यहासीयेलः, चतुर्थो यिकमियामः। अपरम् उषीये- २४
लस्य तनयो मीखाः, मीखाः सुतानां मध्ये शामीरः। मीखा भ्राता यि- २५
शियः, यिशियस्य पुत्राणां मध्ये सिखरियः।

अपरं मिरारे वंशा महलि र्मूशिश्च तस्य तृतीयपुत्रस्य यासियस्य २६
सन्तानाश्च। अपरं मिरारेः सुतस्य यासियस्य वंशाः शोहमः सक्कूर २७
इब्रिश्च। अपरं महलेः सुत इलियासरः, तस्य सुतो नासीत्। कीशस्य २९
विवृतिः, कीशस्य तनयो यिरह्मेलः। अपरं मूशेः सुतो महलिरेदरो ३०
यिरेमोतश्च, इमे स्वीयस्वीयपितृवंशानुसारेण लेवीयवंशाः। एते ऽपि ३१
दायूदो महीपतेः सादोकस्याहीमेलकस्य याजकीयलेवीयपितृप्रधानानाञ्च साक्षात् स्वेषां भ्रातु र्हारोणस्य वंशा इव गुटिकापातं चक्रिरे, तेषां पितृप्रधानमनुजास्तदीयकनिष्ठभ्रातरश्चैकमतं चक्रिरे।

---

## २५ पञ्चविंशोऽध्यायः।

१ गायकानां विवृतिः ८ गुटिकापातेन चतुर्विंशभागेषु तेषां विभजनं।

अपरं दायूद् उपासकानां मुख्याश्च वल्लकीमुरजकरतालवाद्यार्थम् १
आसफस्य हेमनस्य यिदूथूनस्य च सन्तानान् विभज्य न्ययुङ्क्त तेषां कर्म्मा-
नुसारेण कर्म्मकारिणां सङ्ख्येयं। आसफवंशस्य विवृतिः। आसफस्य २
सन्तानाः सक्कूरो यूषफो नियनियो ऽसारेलश्च। अपरं नरपतेः पार्श्वे

३ आसफे वाद्यं कुर्व्वति ते तस्य साहाय्यम् अकुर्व्वन् । यिदूथूनस्य कथनं ।
यिदूथूनस्य सन्ताना गिदलियो यिस्रिः (सिरिमियि) यिशयियो हशबियो
मत्तथियश्च । परमेश्वरस्य धन्यवादार्थं प्रशंसार्थञ्च वीणावाद्ये क्रियमाणे
४ इमे निजतातस्य यिदूथूनस्य साहाय्यम् अकुर्व्वन् । हेमनस्य कथनं ।
हेमनस्य सन्ताना बुक्कियो मत्तनिय उषीयेलः शिवूयेलो यिरेमोतो
हनानियो हनानिरिलीयाथा गिद्दल्ती रोमामत्येषरो यशूविकाशा
५ मल्लोथि होथीरो मह्सीयोतश्च । यो हेमन ईश्वरस्य वाक्यमधि राज्ञः
प्रदर्शक आसीत् तस्योन्नतये तस्यैते सर्व्वे पुत्रा आसन् । ईश्वरो हेमनाय
६ चतुर्दशपुत्रान् तिस्रः पुत्रीश्च ददौ । एते सर्व्वे ईश्वरीयमन्दिरस्य सेवार्थं
करतालवल्लकीमुरजैः परमेश्वरस्य मन्दिरे गानार्थञ्च निजपितुः साहा-
य्यम् अकुर्व्वन्, अपरम् आसफो यिदूथूनो हेमनश्च राज्ञः पार्श्वे ऽतिष्ठन् ।
७ परमेश्वरस्य शिक्षितगीतास्ते तेषां बुद्धिमन्तो भ्रातरश्च संख्ययाष्टाशी-
त्यधिके द्वे शते जना आसन् ।

८ अनन्तरं ते क्षुद्राणां महताञ्च गुरूणां शिष्याणाञ्च पर्य्यायान् गुटिका-
९ पातेन स्थिरीचक्रुः । तत्र आसफस्य सुतस्य यूषफस्य कृते प्रथमा गुटिका
उदतिष्ठत्, द्वितीया गिदलियस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश
१० जनाः । तृतीया सक्कूरस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
११ चतुर्थी यिस्रेः कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः । पञ्चमी
१३ निथनियस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः । षष्ठी बुक्कियस्य
१४ कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः । सप्तमी यिशारेलाः कृते,
१५ स तस्य भ्रातरः सुताश्च द्वादश जनाः । अष्टमी यिशायियस्य कृते, स तस्य
१६ भ्रातरः सुताश्च द्वादश जनाः । नवमी मत्तनियस्य कृते, स तस्य भ्रातरः
१७ सुताश्च द्वादश जनाः । दशमी शिमियेः कृते, स तस्य भ्रातरः सुताश्च
१८ द्वादश जनाः । एकादशी असरेलस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश
१९ जनाः । द्वादशी हशबियस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२० त्रयोदशी शिवूयेलस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२१ चतुर्द्दशी मत्तथियस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२२ पञ्चदशी यिरेमोतस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२३ षोडशी हनानियस्य कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२४ सप्तदशी यशूविकाशाः कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः ।
२५ अष्टादशी हनानेः कृते, स तस्य भ्रातरः सुताश्च द्वादश जनाः । ऊनविंशी

मल्लोथेः क्षते, स तस्य भ्रातरः सुताश्च द्वादश जनाः। विंशतितमो हवी- २७
याथाः क्षते, स तस्य भ्रातरः सुताश्च द्वादश जनाः। एकविंशतितमो २८
होथीरस्य क्षते, स तस्य भ्रातरः सुताश्च द्वादश जनाः। द्वाविंशतितमो २९
गिद्दल्तेः क्षते, स तस्य भ्रातरः सुताश्च द्वादश जनाः। त्रयोविंशतितमो ३०
महसीयोतस्य क्षते, स तस्य भ्रातरः सुताश्च द्वादश जनाः। चतुर्विंशति- ३१
तमो गुटिका रोमाम्तेषरस्य क्षत उदतिष्ठत्, स तस्य भ्रातरः सुताश्च
द्वादश जना आसन्।

---

## २६ षड्विंशोऽध्यायः।

१ दौवारिकाणां विवृतिः १२ गुटिकापातेन दौवारिकाणां निरूपणं २० भाण्डागार-रक्षार्थं लेवीयानां नियोजनञ्च।

दौवारिकाणां पर्य्यायाणां विवृतिः। कोरहीयाणां मध्ये कोरेः सुतो १
मिशेलिमिय आसफवंशीयो लोक आसीत्। मिशेलिमियस्य ज्येष्ठः सुतः २
सिखरियः, द्वितीयो यिदीयेलः, तृतीयः सिवदियः, चतुर्थो यत्नीयेलः,
पञ्चम एलमः, षष्ठो यिहोहाननः, सप्तम इलियो-एनयः। अपरम् ओवे- ४
दिदोमस्य ज्येष्ठः सुतः शिमयियः, द्वितीयो यिहोषावदः, तृतीयो योयाहः,
चतुर्थः साखरः, पञ्चमो निथनेलः, षष्ठोऽम्मीयेलः, सप्तम इषाखरः, ५
अष्टमः पियुल्तयः, यतः परमेश्वरस्तस्मा आशिषं दत्तवान्। अपरम्
ओवेदिदोमस्य सुतस्य शिमयियस्य तनयनिवहो जज्ञे, ते बलवन्तो लोका
भूत्वा पितृवंशेऽधिपतित्वं चक्रिरे। शिमयियस्य तनया अत्नी रिफायेल ७
ओवेद इल्सावदश्च तस्य भ्रातरावेलीहुः सिमखियश्चेमे बलवन्तो
मनुजा आसन्। एते ऽपि सन्ताना ओवेदिदोमस्य, अपरम् इम एतेषां ८
सुता भ्रातरश्च सेवार्थकबलेन बलवन्त आसन्, ओवेदिदोमस्य वंशजाता
द्विषष्टिजना आसन्। अपरं मिशेलिमियस्य तनया भ्रातरश्चाष्टादश ९
बलवन्तो मनुजा आसन्। अपरं मिरारिवंशीयस्य होषाः सुतानां मध्ये १०
शिम्नि मुख्य आसीत्, ज्येष्ठो न सन्नपि स स्वपित्रा प्रधानीचक्रे। द्वितीयो ११
हिल्कियः, तृतीयः टिबलियः, चतुर्थः सिखरियः। होषास्तनया भ्रात-
रश्च साकल्येन त्रयोदश जना आसन्। परमेश्वरीयमन्दिरसेवार्थं १२
भ्रातृनिवहेन समं रक्षाकर्म्मसु लोकसंख्यानुसारेण दौवारिकाणां पर्य्या-
या एतेषामेवाभवन्।

१३ अपरं ते प्रधानाप्रधानत्वेन निजनिजपितृवंशानुसारेणैकैकस्य द्वारस्य
१४ कृते गुटिकापातं चक्रिरे। प्रथमं शेलिमियस्य कृते पूर्व्वदिक्स्थद्वारस्य
गुटिका समुदतिष्ठत्। अनन्तरं मन्त्रणाचतुरस्य तस्य पुत्रस्य सिखरियस्य
१५ कृते गुटिकापाते कृत उत्तरदिक्स्थद्वारस्य गुटिका समुदतिष्ठत्। अपरम्
ओबेदिदोमस्य कृते दक्षिणदिक्स्थद्वारस्य गुटिका तस्य सुतानाञ्च कृते
१६ भाण्डागारस्य गुटिका समुदतिष्ठत्। अपरं शुप्पीमस्य होषाञ्च कृते पश्चि-
मदिक्स्थद्वारस्यार्थत ऊर्द्ध्वगामिपथस्य निकटस्थं यत् शल्लेखतनाम द्वारं
तस्य गुटिका समुदतिष्ठत् तस्य द्वौ रक्षकनिवहौ परस्परम् अभिसम्मु-
१७ खावास्तां। अपरं पूर्व्वस्यां दिशि लेवीयानां षट् जनाः, उत्तरस्यां दिशा
चत्वारः, दक्षिणस्यां दिशा चत्वारः, एकैकस्मिन् भाण्डागारे च द्वौ द्वौ
१८ जनौ। अपरं पश्चिमदिशि स्थितस्योपनगरस्य द्वारे राजवर्त्मनि चत्वारो
१९ जना उपनगरे च द्वाविमे नियुक्ता आसन्। अनेन प्रकारेण कोरहस्य
मिरारेश्च वंशयोर्मध्ये दौवारिकाणां पर्य्याया न्यरूप्यन्त।

२० अपरं लेवीयानां मध्ये ऽहियः परमेश्वरीयमन्दिरस्य धनागारस्य
२१ पवित्रीकृतद्रव्याणां धनागारस्य चाध्यक्ष आसीत्। अपरं लादनस्य तन-
यानां विवृतिः। गेर्शोनीयलादनस्यैतान्यपत्यानि पितृवंशानां प्रधानान्या-
२२ सन्। गेर्शोनीयलादनस्य तनयो यिहीयेलिः, यिहीयेलेः सुतः सेथमस्तस्य
२३ भ्राता योयेलश्चेमे परमेश्वरीयमन्दिरस्य धनाध्यक्षा आसन्। अपरम्
२४ अम्रामीयाणां यिष्हरीयाणां हिब्रोणीयानाम् उषीयेलीयानाञ्च मध्ये
मूससः सुतो यो गेर्शोमस्तस्य तनयः शिबूयेलो धनाधिपतिरासीत्।
२५ अपरम् इलीयेषरवंशीयास्तस्य भ्रातरो रिहवियस्तस्य तनयो यिशायियः,
यिशायियस्य तनयो योरामः, योरामस्य सुतः सिख्रिः, सिख्रेः सुतश्च
२६ शिलोमीतः। दायूद् महीपतिः पितृवंशानां प्रधानलोकाः सहस्रपतयः
शतपतयः सेनापतयश्च यानि द्रव्याणि न्यवेदयन् तेषां पवित्रीकृतद्रव्या-
२७ णाम् अध्यक्षत्वं स शिलोमीतस्तदीयभ्रातृनिवहश्च लेभिरे। परमेश्वरीय-
मन्दिरस्य निर्म्माणार्थं समरलब्धानि बहूनि द्रव्याणि तैः पवित्रीकृतानि।
२८ अपरं शिमूयेलः प्रदर्शकः कीशस्य सुतः शौलो नेरस्य सुतो ऽब्नेरः सिरू-
यायाः सुतो योयाबश्चैते यानि द्रव्याणि पवित्रीकृतानि तान्यन्यानि च
सर्व्वाणि पवित्रीकृतद्रव्याणि शिलोमीतस्य तदीयभ्रातृनिवहस्य च करेषु
२९ समार्प्यन्त। अपरं यिष्हरीयाणां मध्ये किननियस्तस्य पुत्रनिवहश्चेस्रा-
येलीयानां बाह्यकर्म्मणि नियुक्ताः सन्तो ऽधिपतयो विचारयितारश्चा-

भवन्। अपरं हिब्रोणीयानां मध्ये हशवियस्तस्य भ्रातृनिवहश्चार्यतः ३०
सप्तशताधिकं सहस्रं बलवन्तो मानवाः परमेश्वरीयकार्य्येषु राजकर्म्म
कर्त्तुं पश्चिमायां दिशि यर्द्दनतीरस्थदेशे इस्रायेलीयलोकानाम् अध्यक्ष-
त्वपदे न्ययुज्यन्त। निजनिजपितृवंशानुसारेण हिब्रोणीयलोकानां मध्ये ३१
यिरियो मुख्य आसीत्। दायूद्राजस्याधिकारस्य चत्वारिंशद्वत्सरे तेषां
परीक्षायां कृतायां गिलियदस्थे यासेरनगरे तेषां मध्ये बलवन्तो लोकाः
प्राप्यन्त। अपरं तस्य तद्भ्रातृनिवहस्य सप्तशताधिके द्वे सहस्रे बलवन्तो ३२
मनुजाः पितृवंशस्य प्रधानान्यासन्। अपरं दायूद् नरपतिरीश्वरीय-
कर्म्मार्थं राजकर्म्मार्थञ्च तान् रूवेणीयानां गादीयानां मिनशेरर्द्धवंशस्य
चाध्यक्षत्वपदे नियोजयामास।

---

## २७ सप्तविंशोऽध्यायः।

१ मासिकसेनापतीनां नामानि १६ द्वादशवंशाधिपतीनां नामानि २३ लोकानां गण-
नायाम् आपत्तिः २५ दायूदो नरपतेर्राजपतीनां नामानि च।

इस्रायेलीयवंशस्य संख्यानुसारेण पितृवंशानां ये प्रधानलोकाः सहस्र- १
पतयः शतपतयोऽधिपतयश्च राजानं नित्यम् असेवन्त अर्थात् ये पर्य्याये
विभक्ताः सन्तो वत्सरस्यैकैकमासं यावत् कर्म्मार्थम् आगत्य पश्चात्तो
न्यवर्त्तन्त तेषाम् एकैकस्मिन् पर्य्याये चतुर्विंशतिसहस्राणि लोका आसन्।
प्रथममासस्य प्रथमपर्य्याये सब्दीयेलस्य तनयो याशवियामो नियुक्त २
आसीत् तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा आसन्। प्रथममासे ३
नियुक्तः स पेरसवंशोद्भवो नरः सर्व्वेषां सेनानीनां मुख्य आसीत्। अपरं ४
द्वितीयमासस्य पर्य्यायेऽहोहीयो दोदयो नियुक्त आसीत्, तस्मिन् पर्य्याये
मिक्लोतो मुख्य आसीत्, अपरं तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा
आसन्। अपरं तृतीयमासस्य पर्य्याये तृतीयसेनानी यिहोयादा याज- ५
कस्य सुतो बिनायो नियुक्त आसीत्, अपरं तस्य पर्य्याये चतुर्विंशति-
सहस्राणि मनुजा आसन्। अयं बिनायस्त्रिंशज्जनानां मध्ये पराक्रान्त- ६
स्तेषाम् अधिपश्चासीत्, अपरं तस्य पर्य्याये तदीयतनयोऽम्मीषाबद्
आसीत्। अपरं चतुर्थमासस्य पर्य्याये चतुर्थः सेनानी योयाबस्य भ्राता ७
असाहेलस्तस्य निधनात् परं तस्य तनयः सिबदियश्च नियुक्त आसीत्, तस्य
पर्य्याये चतुर्विंशतिसहस्राणि मनुजा आसन्। अपरं पञ्चममासस्य पर्य्याये ८

पञ्चमः सेनानी यिंब्राहीयः शम्होतो नियुक्त आसीत्, तस्य पर्य्याये चतु-
९ र्विंशतिसहस्राणि मनुजा आसन्। अपरं षष्ठमासस्य पर्य्याये षष्ठः
सेनानीरिक्केशस्य पुत्रस्तिकोयीय ईरा नियुक्त आसीत्, तस्य पर्य्याये
१० चतुर्विंशतिसहस्राणि मनुजा आसन्। अपरं सप्तममासस्य पर्य्याये
सप्तमः सेनानीरिफ्रयिमवंशोद्भवः पिलोनीयो हेलसो नियुक्त आसीत्,
११ तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा आसन्। अपरं अष्टममासस्य
पर्य्याये ऽष्टमः सेनानीः सेरहवंशीयो हूशातीयः सिब्बखयो नियुक्त
१२ आसीत्, तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा आसन्। अपरं
नवममासस्य पर्य्याये नवमः सेनानी बिन्यामीनवंशोद्भवो ऽनाथोतीयो
ऽबीयेषरो नियुक्त आसीत्, तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा
१३ आसन्। अपरं दशममासस्य पर्य्याये दशमः सेनानीः सेरहवंशीयो
निटोफातीयो महरयो नियुक्त आसीत्, तस्य पर्य्याये चतुर्विंशति-
१४ सहस्राणि मनुजा आसन्। अपरम् एकादशमासस्य पर्य्याय एका-
दशः सेनानीरिफ्रयिमवंशोद्भवः पिरियाथोनीयो बिनायो नियुक्त
१५ आसीत्, तस्य पर्य्याये चतुर्विंशतिसहस्राणि मनुजा आसन्। अपरं
द्वादशमासस्य पर्य्याये द्वादशः सेनानीरत्नीयेलवंशीयो निटोफा-
तीयो हिल्दयो नियुक्त आसीत्, तस्य पर्य्याये चतुर्विंशतिसहस्राणि
मनुजा आसन्।

१६ अपरम् इस्रायेलीयवंशानां मध्ये रूबेणवंशे सिख्रेः सुत इलीयेषरः
१७ शास्ता, शिमियोनवंशे माखाः सुतः शिफटियः, लेविवंशे किमूयेलस्य
१८ सुतो हशबियः, हारोणवंशे च सादोकः, यिहूदावंशे दायूदः सहज
१९ इलीहुः, इषाखरवंशे मीखायेलस्य पुत्रो ऽम्रिः, सिबूलूनवंश ओबदियस्य
२० सुतो यिश्मयियः, नप्तालिवंशे ऽस्रीयेलस्य सुतो यिरेमोतः, इफ्रयिमवंशे
२१ ऽससियस्य सुतो होशेयः, मिनशेरर्द्धवंशे पिदायस्य सुतो योयेलः, गि-
लियदस्थमिनशेरर्द्धवंशे सिखरियस्य सुतो यिद्दोः, बिन्यामीनवंशे ऽब्-
२२ नेरस्य सुतो यासीयेलः, दानवंशे च यिरोहमस्य सुतो ऽसरेलः। इमे
इस्रायेल्वंशानाम् अधिपतय आसन्।

२३ दायूद् विंशतिवत्सरवयस्कान् ततो न्यूनवयस्कांश्च लोकान् न गण-
यामास, यतः परमेश्वरः कथयामास, इस्रायेल्वंशो नभो नक्षत्र-
२४ ताराभिरिव वर्द्धिष्यते। सिरूयायाः सुतो योयाबो गणयितुम् आरेभे
परन्तु तेन समाप्तो न कृतायां तत्कारणाद् इस्रायेल्वंशस्य विरुद्धं

परमेश्वरस्य कोपः प्रज्वलत ततो हेतोस्तेषां संख्यापि दायूदो नृपतेः पुरावृत्तपुस्तके नालिख्यत।

राजधनाध्यक्षो ऽदीयेलस्य सुतो ऽस्मावतः, अपरं क्षेत्रनगरग्रामदुर्गेषु २५
ये कोषागारा आसन् उषियस्य तनयो यिहोनाथनस्तेषाम् अध्यक्ष
आसीत्। अपरं क्षेत्राणां कृषिकर्म्माणि कुर्व्वताम् अधिपतिः किलूबस्य २६
तनय इष्रिः। अपरं द्राक्षाक्षेत्राणाम् अधिपती रामाथीयः शिमियिः, २७
अपरं द्राक्षाक्षेत्रस्थितानां द्राक्षारसशालानाम् अधिपतिः शिफमीयः
सब्दिः। अपरं निम्नभूमिस्थितानां जिततरूणाम् उडुम्बरतरूणाञ्चाधिपति २८
र्गिदेरीयो बाल्हाननः, अपरं तैलभाण्डागाराणाम् अधिपति र्योयाशः।
अपरं शारोणस्थानां गोधनानाम् अधिपतिः शारोणीयः सिट्रयः, प्रान्तर- २९
स्थानाञ्च गोधनानाम् अधिपतिरद्लयस्य तनयः शाफटः। उष्ट्राणाम् ३०
अधिपतिरिस्मायेलीय ओबीलः, गर्द्दभीनाम् अधिपति र्मेरोणोथीयो
येहदियः। अपरं मेषव्रजानाम् अधिपति र्हागिरीयो यासीषः, एते ३१
दायूदो महीपतेः सम्पदो ऽधिपतय आसन्। अपरं दायूदो भूपतेः ३२
पितृव्यो योनाथनो मन्त्री परिणामदर्शी च भवन् लेखक आसीत्।
अपरं हक्मोनेः सुतो यिहीयेलो राजतनयानां सभास्तार आसीत्।
अहीथोफलो राजमन्त्र्यासीत्, अर्कीयहूशयो राज्ञो मित्रमासीत्। ३३
अपरं विनायस्य तनयो यिहोयादा अबियाथरश्चाहीथोफलस्य सहा- ३४
यावास्ताम्, अपरं योयाबो राज्ञः सेनानीरासीत्।

---

## २८ अष्टाविंशोऽध्यायः।

१ मिलिताध्यक्षेषु मिलितेषु तान् प्रति दायूदो मन्त्रणा ९ सुलेमानं प्रति दायूदो मन्त्रणा ११ सुलेमनि मन्दिरादर्शसमर्पणं स्वर्णरूप्यादिसमर्पणञ्च २० दायूदो ऽन्यत् कथनञ्च।

अनन्तरं दायूद् इस्रायेलः सर्व्वान् मुख्यनरान् अर्थतो वंशाध्यक्षान् १
पर्य्यायानुसारेण राज्ञः सेवाकारिणां पर्य्यायाग्र्यान् सहस्रपतीन् शतप-
तीन् राज्ञो राजपुत्राणाञ्च सम्पदो ऽध्यक्षान् राजप्रहाध्यक्षान् पराक्रा-
न्तान् बलवन्तञ्च लोकान् सर्व्वान् यिरूशालमे संजग्राह। तदानीं दायूद् २
चरणाभ्यां तिष्ठन् अवोचत्, हे मम भ्रातरः, हे मम प्रजाः, मम वाक्यं
शृणुत। परमेश्वरीयनियममञ्जूषायाः कृते ऽस्माकम् ईश्वरस्य पादपीठस्य
च कृते विश्रामार्थकं मन्दिरमेकं निर्म्मातुं मदीयमतिरभवत् तेन मया

३ निर्म्माणार्थं वस्तूनाम् आयोजनम् अकारि । परन्तु ईश्वरो माम् अवोचत्, मम नामधेयमुद्दिश्य मन्दिरनिर्म्माणं त्वया न कर्त्तव्यं यतस्त्वं योद्धा
४ भवन् रुधिरपातम् अकार्षीः । तथापीस्रायेलीयानां प्रभुः परमेश्वर इस्रायेलीयानाम् उपरि नित्यराजत्वप्राप्त्यर्थं मम समस्तपितृवंशात् मां वरीतवान् । स शासनपदार्थं यिहूदावंशं यिहूदावंशे च मम पितृवंशं वरीतवान्, मम पितुः पुत्राणां मध्ये च मयि तुष्टः समस्तेस्रायेलो राजत्वे
५ मां नियोजितवान् । अपरं परमेश्वरो मह्यं यान् बहून् तनयान् अददात् मम तेषां निखिलतनयानां मध्य इस्रायेलीयलोकानां मध्ये परमेश्वरीयराजसिंहासन उपवेशयितुं मदीयतनयं सुलेमानं वरीतवान् ।
६ अपरं स माम् अब्रवीत्, तव तनयः सुलेमानेव मम मन्दिरं मम प्राङ्गणानि च निर्म्मास्यति, अहं निजतनयमिव तं वरीतवान् अहञ्च तस्य
७ तातो भविष्यामि । अपरञ्च स यदि मम निदेशान् विधींश्च पालयितुमद्यवद् बलवान् भवेत् तर्हि मया तस्य राजत्वं चिरस्थायि कारिष्यते ।
८ अत इदानीं परमेश्वरस्य समाजो य निखिलेस्रायेलवंशस्तद्दृष्टिगोचरे ऽस्माकम् ईश्वरस्य कर्णगोचरे च (वदामि, यूयम्) अस्माकं प्रभोः परमेश्वरस्य सर्व्वान् आदेशान् पालयितुं यतध्वं तेनोत्तमम् इमं जनपदं भोक्ष्यध्वे युष्माकं परतो ऽपि स्वकीयसन्तानेषु चिरकालीयाधिकारार्थं तं समर्पयिष्यथ ।
९ हे मम तनय सुलेमन् त्वं स्वीयतातस्येश्वरम् अभिजानीहि सरलान्तःकरणेन प्रसन्नमनसा च तं सेवस्व यतः परमेश्वरः सर्व्वेषाम् अन्तःकरणानां परीक्षकः सर्व्वमनःसङ्कल्पज्ञश्च । त्वं यदि तस्यान्वेषणं कुर्य्यास्तर्हि तं प्राप्स्यसि, किन्तु यदि तं परित्यजेस्तर्हि स त्वां सदाकालार्थं दूरयि-
१० ष्यति । अधुना सावधानो भव, पवित्रस्थानार्थं मन्दिरनिर्म्माणाय परमेश्वरस्त्वां वरीतवान्, अतस्त्वया बलवता कर्म्म क्रियतां ।
११ अनन्तरं दायूद् निजतनयाय सुलेमने मन्दिरस्यादर्शम् अर्थात्तस्यालिन्दः कोष्ठानि भाण्डागाराण्युपरिस्थितकोष्ठान्यन्तःस्थितागाराणि पा-
१२ पावरणस्य स्थानञ्चैतेषाम् आदर्शं दत्तवान् । अपरं परमेश्वरीयमन्दिरस्य प्राङ्गणानि चतुर्दिक्स्थकोष्ठानीश्वरीयमन्दिरस्य भाण्डागाराणि पवित्रद्र-
१३ व्यार्थकभाण्डागाराणि याजकानां लेवीयानाञ्च पर्य्यायाः परमेश्वरीयमन्दिरस्य परिचर्य्याया निखिलकर्म्म परमेश्वरीयमन्दिरस्य सेवार्थकानि सर्व्वभाजनानि चैतत् सर्व्वमधि तस्य आत्मना प्रदत्तो य आदर्शस्तमपि

तस्मै दत्तवान्। अपरं सर्व्वप्रकारसेवार्थकानां सुवर्णमयानां भाजनानां १४
कृते काञ्चनानि तोलयित्वा व्यतरत्। अपरं सर्व्वप्रकारसेवार्थकानां रज-
तमयानां भाजनानां कृते रजतानि तोलयित्वा दत्तवान्। अपरं स्वर्ण- १५
दीपवृक्षाणां स्वर्णदीपानाञ्च कृत एकैकस्य दीपवृक्षस्य तदीयदीपानाञ्च
परिमाणानुसारेण सुवर्णानि तोलयित्वा दत्तवान्। अपरं रजतमय-
दीपवृक्षाणां दीपानाञ्च कृत एकैकस्य दीपवृक्षस्य कर्म्मानुसारेण रज-
तानि तोलयित्वा दत्तवान्। अपरं दर्शनीयपूपानाम् आसनानां कृते १६
ऽर्थत एकैकस्यासनस्य कृते सुवर्णानि तोलयित्वा ददौ। अपरं रजत-
मयासनानां कृते रजतानि तोलयित्वा ददौ। अपरं त्रिशूलानां चुल्ली- १७
नाम् आच्छादकपात्राणाञ्च निर्म्माणार्थं निर्म्मलानि सुवर्णानि सुवर्णमय-
भाजनानाम् एकैकस्य भाजनस्य कृते ऽपि सुवर्णानि तोलयित्वा ददौ।
रूप्यमयभाजनानाञ्चैकैकस्य भाजनस्य कृते रजतानि तोलयित्वा ददौ।
अपरं धूपवेद्याः कृते निर्म्मलकाञ्चनानि, अपरं वाहनाकृते निर्म्मितम् १८
अर्थतो विस्तृतपक्षाभ्यां परमेश्वरीयनियममञ्जूषाच्छादकयोः किरूवयो
र्निर्म्मितं काञ्चनानि तोलयित्वा ददौ। अपरं दायूद् आचचक्षे, परमे- १९
श्वरो मयि हस्तार्पणं कृत्वा ग्रन्थे लिखितम् एतदादर्शसम्बन्धीयकार्य्या-
णाम् आदेशम् अबोधयत्।

अनन्तरं दायूद् निजतनयं सुलेमानम् अवोचत् बलवान् उत्साह- २०
वांश्च भव कर्म्म कुरुष्व च, भयं माकार्षीः, निराशो मा भव, यतो मदी-
येश्वरः प्रभुः परमेश्वरस्तव सहायो भविष्यति; परमेश्वरीयमन्दिरस्य
परिचर्य्याया निखिलं कर्म्म यावन्न सेत्स्यति तावत् स त्वां न विहास्यति
न वा परित्यक्ष्यति। पश्य, ईश्वरीयमन्दिरस्य निखिलपरिचर्य्यायाः २१
कृते याजकानां लेवीयानाञ्च पर्य्याया विद्यन्ते। अपरं सर्व्वप्रकारशिल्प-
कर्म्मणः कृते सर्व्वप्रकारपरिचर्य्यायाः कृते च सर्व्वे विद्वांसो लोका
इच्छुका भवन्तस्तव वशे विद्यन्ते, अपरम् अधिपतयः सर्व्वाः प्रजाश्च
सर्व्वथा तवाज्ञायाधीनाः सन्ति।

---

## २९ ऊनत्रिंशोऽध्यायः।

१ दायूदा कृतस्यायोजनस्य कथनं ६ अधिपतीनां प्रजानाञ्च दानानि १० दायूदः प्रार्थना २० बलिदानं द्वितीयवारं सुलेमनो राज्ये नियोगः २६ दायूदो राजत्वं निधनञ्च।

अनन्तरं नरपति र्दायूद् कृत्स्नं समाजं व्याजहार, ईश्वरः केवलं मदी- १

यतनयं सुलेमानं वरीतवान् स तरुणो ऽविपक्वबुद्धिश्च विद्यते कर्म्मेदञ्च
महागुरु यत एष प्रासादो मनुजाय न निर्म्मास्यते किन्तु प्रभवे परमे-
२ श्वराय । अत एवाहं निजशक्त्यनुसारेण मदीयेश्वरस्य मन्दिरस्य कृते
द्रव्याणाम् आयोजनं कृतवान्, अर्थतः काञ्चनमयवस्तूनां कृते काञ्चनानि,
रजतमयवस्तूनां कृते रजतानि, आरकूटमयवस्तूनां कृत आरकूटान्,
लौहमयवस्तूनां कृते लौहान्, काष्ठमयवस्तूनां कृते काष्ठानि, अपरं
वैदूर्य्यमणीन् खचनार्थकप्रस्तरान् तेजस्विप्रस्तरान् चित्रवर्णपाषाणान्,
अपरं सर्व्वप्रकारान् बहुमूल्यपाषाणान् प्रभूतत्वेन मर्म्मरपाषाणांश्च
३ सञ्चितवान् । अपरं तस्य पवित्रमन्दिरस्य निमित्तं यद्यद् आयोजनम्
अकरवं तदतिरिक्तम् अहं निजेश्वरस्य मन्दिरे ऽनुरागकारणात् निजात्
स्वापतेयादपि निजेश्वरस्य मन्दिरनिमित्तं काञ्चनानि रजतानि च ददा-
४ मि, अर्थतो मन्दिरस्य भित्तिषु खचनार्थं सहस्रत्रयकिक्कारपरिमि-
तान्योफीरीयसुवर्णानि सप्तसहस्रकिक्कारपरिमितानि निर्म्मलदुर्व्वर्णानि
५ च ददामि । हेममयवस्तूनां कृते हेमानि रजतमयवस्तूनां कृते रज-
तानि शिल्पकरैः कर्त्तव्यानां सर्व्वप्रकारवस्तूनां कृते च यत् प्रयोजनीयं
तदहं वितीर्णवान् । अपरम् अद्य युष्माकं मध्ये को मुक्तहस्तः सन् परमे-
श्वरस्य सन्निधिम् आगन्तुम् इच्छति ?
६ ततः पितृवंशानां मुख्यनरा इस्रायेलो वंशाध्यक्षाः सहस्रपतयः शत-
७ पतयो राजकर्म्माध्यक्षाश्च स्वेच्छया दानम् अकुर्व्वन् । ईश्वरीयमन्दिरस्य
कार्य्यस्य कृते ते सुवर्णानां पञ्चसहस्राणि किक्काराण् दशसहस्राण्यदर्को-
णाख्यमुद्राश्च, रजतानां दशसहस्राणि किक्काराण्, पित्तलानाम् अष्टा-
८ दशसहस्राणि किक्काराण्, लौहानाञ्च लक्षमेकं किक्काराण् ददुः । अपरं
येषां मणय आसन् ते गेर्शोनीयस्य यिहीयेलस्य करे परमेश्वरस्य मन्दि-
९ रस्य भाण्डागारे तान् समर्पयामासुः । ततो लोकास्तेषां दातृत्वाद् आ-
नन्दं चक्रिरे, यतस्ते सरलान्तःकरणैः स्वेच्छया परमेश्वराय दानं ददुः ।
दायूद् महीपतिरपि महानन्दं चकार ।
१० अपरं दायूद् निखिलसमाजस्य साक्षात् परमेश्वरस्य धन्यवादं
चकार । दायूद् व्याजहार, हे अस्माकं पितुरिस्रायेलः प्रभो परमेश्वर,
११ त्वं सदाकालं धन्यो ऽसि । हे परमेश्वर, महत्त्वं पराक्रम ऐश्वर्य्यं जयः
प्रशंसा चैतानि तवैव सन्ति, यतो हेतोः स्वर्गे पृथिव्याञ्च यद्यद् विद्यते
तत् सर्व्वं तवैव विद्यते । हे परमेश्वर राजत्वं भवतो ऽस्ति भवान्

सर्व्वोपरि समुन्नतमूर्द्धा। अपरं त्वत्तो धनान्नता सम्मानश्च जायते ११
भवान् अखिलानां राजत्वं करोति बलपराक्रमौ भवतः करे विद्येते
सर्व्वेभ्यो वृद्धिबलदानं भवतः करस्य कर्म्म। अतो हे अस्माकम् ईश्वर, १२
वयं भवन्तं धन्यं वदामो भवत ऐश्वर्य्यवतो नामधेयस्य प्रशंसां कुर्म्मश्च च।
किन्त्वहं कः? मम प्रजागणाश्च वा के? यद् वयम् अनेन प्रकारेण १४
स्वेच्छया दानं कर्त्तुं समर्था भवेम? यतो भवतो निखिलं परिलब्धं,
वयञ्च भवता दत्तं द्रव्यमेव तुभ्यम् अददाम। यतो ऽस्माकं सर्व्वे पितृलोका १५
इव वयं तव सम्मुखे विदेशिनः प्रवासिनश्च। पृथिव्याम् अस्माकं जी-
वनकालश्छायासदृशः स्थायी च। हे अस्माकं प्रभो परमेश्वर, तव १६
पवित्रनामधेयमुद्दिश्य वयं तव मन्दिरनिर्म्माणार्थं यान्येतानि बहुद्रव्याणि
सञ्चितवन्तस्तानि निखिलानि त्वदीयहस्तात् लब्धानि निखिलानि च
त्वदीयानि विद्यन्ते। हे मदीश्वर, त्वम् अन्तःकरणं परीक्षसे सरलतया १७
तुष्यसि च तन्मया जायते। अहमेव स्वान्तःकरणस्य सरलतया सर्व्वाण्ये-
तानि स्वेच्छया प्राददाम्, इदानीञ्चात्र समुपस्थितं तव प्रजागणमपि त्वाम्
उद्दिश्य स्वेच्छया दानकर्म्मण्यानन्दितं पश्यामि। हे अस्माकं पितृलोकानाम् १८
इब्राहीम इस्हाक इस्रायेलश्च प्रभो परमेश्वर, भवान् स्वीयप्रजानाम्
अन्तःकरणानां कल्पनाया एतादृशं भावं सन्ततं निश्चित्य रक्षतु भवन्तं
प्रति तेषाम् अन्तःकरणानि दृढम् आकर्षतु च। अपरं मम तनयः १९
सुलेमान् यद् भवत आज्ञा विधीन् व्यवस्थाश्च पालयन् कर्म्म कुर्य्यात्
यस्य प्रासादस्य कृते मयायोजनं कृतं तं निर्म्मापयेच्च तदर्थं तस्मै सरला-
न्तःकरणं ददातु।

अनन्तरं दायूद् अखिलसमाजं आजहार, इदानीं स्वेषां प्रभोः २०
परमेश्वरस्य धन्यवादं कुरुध्वं। ततः कृत्स्नः समाजः स्वेषां पितृलोकानां
प्रभोः परमेश्वरस्य धन्यवादं चकार शिरोभिः प्रणम्य परमेश्वरं भेजे
राजानञ्च प्रणनाम। अपरं परे ऽहनि ते कृत्स्नइस्रायेलः कृते परमेश्वरमु- २१
द्दिश्य बलिदानं चक्रिरे होमबलीन् उत्ससृजुश्चार्पत उपयुक्तैः पेयनैवेद्यैः
समं सहस्रं वृषभान् सहस्रम् ऊर्णायून् सहस्रं मेषशावकांश्चेत्यादीन्
बहून् बलीन् उत्ससृजुः। अपरं तस्मिन्नहनि महानन्देन परमेश्वरस्य २२
साक्षाद् बुभुजिरे पपुश्च दायूद आत्मजञ्च सुलेमानं द्वितीयवारं राजानं
चक्रुः। अपरं नराधिपमिव तं याजकमिव च सादोकं परमेश्वरमुद्दि-
श्याभिषिषिचुः। ततः सुलेमान् स्वीयजनकस्य दायूदः पदेन राजा २३

भूत्वा परमेश्वरीयसिंहासन उपविवेश भाग्यवान् बभूव च, इस्रा-
२४ येलीयाः सर्व्व मनुजास्तस्याज्ञायाहिणो बभूवुः । विशेषतो ऽधिपतयः
पराक्रमिणो मनुजाश्च दायूदो नरपतेस्तनयाश्च नृपतेः सुलेमनो वशी-
२५ बभूवुः । अपरं परमेश्वरः कृत्स्नस्येस्रायेलः साक्षात् सुलेमानं महोन्नतं
चकार । स तस्मै यादृशं राजकीयप्रतापं ददिवान् पूर्व्वम् इस्रायेलीयानां
कस्यचिद् भूपतेस्तादृशः प्रतापो नाभवत् ।
२६ यिशयस्य तनयो दायूद् कृत्स्नस्येस्रायेल उपरि राजत्वं कृतवान् । स
२७ चत्वारिंशद्वत्सरान् यावद् इस्रायेल उपरि राजत्वं चकार, तन्मध्ये सप्त-
वत्सरान् हिब्रोणे त्रयस्त्रिंशद्वत्सरांश्च यिरूशालमे राजत्वं चकृवान् ।
२८ अनन्तरं स सम्पूर्णम् आयुर्धनं सम्मानञ्च भुक्त्वा शुभवार्द्धक्यसमये
२९ प्राणान् तत्याज तस्य तनयश्च सुलेमान् तस्य पदेन राजत्वं लेभे । तस्य
दायूद आद्यन्तक्रिया तदीयराजत्वपराक्रमयो र्विवृतिस्तं प्रतीस्रायेलं
प्रति भूमण्डले स्थितान्यन्यानि सर्व्वाणि राष्ट्राणि प्रति च यद्यद् अघटत
३० तत् सर्व्वं प्रदर्शकस्य शिमूयेलस्य पुस्तके भविष्यद्वादिनो नाथनस्य पुस्तके
प्रदर्शकस्य गादस्य पुस्तके च लिखितं विद्यते ।

---

# वंशावल्या द्वितीयं पुस्तकं ।

---

## १ प्रथमोऽध्यायः ।

१ गिबियोने सुलेमनो बलिदानं ७ बुद्धिज्ञानयो र्वरप्रार्थनं १४ तस्य रथानां घोटकानाञ्च कथनं ।

१ अनन्तरं दायूद आत्मजः सुलेमान् स्वीयं राजत्वम् अदृढयत् तस्य
प्रभुः परमेश्वरश्च तस्य सहायो भवन् तस्योन्नतिम् अतीव वर्द्धयामास ।
२ अनन्तरं सुलेमान् कृत्स्नम् इस्रायेलं विशेषतः सहस्रपतीन् शतपतीन्
विचारयितॄन् इस्रायेलीयानां सर्व्वान् अध्यक्षान् पितृवंशानां मुख्य-
३ नरांश्चाज्ञापयामास । अनन्तरं सुलेमान् तेन समं निखिलसमाजश्च

गिबियोने स्मगुस्थानं जग्मुः, यतः परमेश्वरस्य किङ्करेण मूससा प्रान्तरे
निर्म्मितं ईश्वरीयसमाजस्यावासस्तत्राविद्यत, केवलम् ईश्वरीयमञ्जूषा ४
दायूदा किरियत्यियारीमात् स्थानान्तरीकृत्य तदर्थं निर्म्मितं स्थानम्
अर्पिता यिरूशालमे दायूदा तत्कृते यद् दूष्यं स्थापितं तद् दूष्यम् आनी-
ताभवत्। किन्तु हूरस्य पौत्र ऊरेः पुत्रो बित्सलेलो याम् पित्तलमयीं ५
वेदीम् अकरोत् सा तत्र परमेश्वरीयावासस्यान्तिके ऽविद्यत, ततः
सुलेमान् समाजश्च तत्रैवेश्वरं गवेषयामासुः। अपरं सुलेमान् परमेश्वरम् ६
उद्दिश्य समाजावासस्यान्तिकस्थायाम् पित्तलमयवेद्यां बलिदानं
कुर्व्वन् सहस्रं होमबलीन् उदसृजत्।

तस्यां रजन्याम् ईश्वरः सुलेमने दर्शनं दत्त्वा व्याजहार, मया तुभ्यं ७
यो वरो दातव्यस्तं प्रार्थयस्व। ततः सुलेमान् ईश्वरम् उवाच त्वं मम ८
पितरं दायूदं प्रति महानुग्रहं कृत्वा तस्य पदेन मां राजत्वे ऽभ्यषिञ्चः।
इदानीं हे प्रभो परमेश्वर मदीयजनकाय दायूदे त्वया यत् प्रतिश्रुतं ९
तत् सफलं भवतु, यतः पृथिव्या धूलीवद् बहुसंख्यलोकनिवहस्योपरि
त्वं मां राजानम् अकार्षीः। अतो ऽहं यद् एतेषां मानवानाम् अग्रगामी १०
भूत्वा बहिरभ्यन्तरे गमनागमनं कर्त्तुं शक्नुयां तत्कृते मह्यं बुद्धिं ज्ञानञ्च
वितराय, नो चेत् तवैतावत्प्रजानां शासनं केन कर्त्तुं शक्यते?
अनन्तरम् ईश्वरः सुलेमानम् अवादीत्, तव हृदय एतदासीत्, ऐश्वर्य्यं ११
वा सम्पत्तिं वा सम्मानं वा रिपूणां प्राणनाशो वा दीर्घायुस्त्वया न
प्रार्थितः, किन्त्वहं येषाम् उपरि त्वां नरपतिम् अकार्षं तेषां मदीय-
प्रजानां सुशासनार्थं बुद्धिज्ञाने प्रार्थयेथाः। अतस्ते बुद्धिज्ञाने मया १२
तुभ्यम् अदायिषाताम्, अधिकन्तु तुभ्यम् एतावद् ऐश्वर्य्यं धनञ्च वितरि-
ष्यामि यत् तव पूर्व्वं कस्यचित् पृथिवीपतेस्तादृशं नासीत् त्वत्तः पश्चादपि
कस्यचित् तादृशं न भविष्यति।

अनन्तरं गिबियोनीयस्मगुस्थानस्थात् समाजावासात् सुलेमान् यिरू- १३
शालमम् आगत्येस्रायेल उपरि राजत्वं कर्त्तुमारेभे।

अनन्तरं सुलेमान् रथान् अश्वारोहिलोकांश्च संजग्राह। तस्य चतुः- १४
शताधिकं सहस्रं रथा द्वादशसहस्राण्यश्वारोहियाश्चासन्। स तान्
रथनगरेषु यिरूशालमे च राजसन्निधौ स्थापयामास। राजा यिरू- १५
शालमे बहुलत्वकारणाद् दुर्व्वर्णं सुवर्णञ्च पाषाणवत्, एरसकाष्ठानि च
प्रान्तरस्थोडुम्बरेभ्यवत् साधारणं चकार। सुलेमनो घोटका मिसर- १६

देशाद् आनीयन्त, एकतो राजवणिजो निरूपितमूल्यं दत्त्वाश्वानां
१७ निवहम् अक्रीणात्। मिसरत आगतस्य समानीतस्य च रथैकस्य मूल्यं
षट्शतानि रूप्यमुद्राः, एकस्य वाजिनश्च मूल्यं सार्द्धशतं रूप्यमुद्राः।
अनेन प्रकारेण ते हित्तीयानाम् अरामीयानाञ्च महीपतीनां कृते
समानयन्।

---

## २ द्वितीयोऽध्यायः।

१ मन्दिरस्य कर्म्मकारिणां संख्या ३ निपुणलोकस्य कृते हीरमस्य समीपं लोकप्रेषणं ११ तस्य सन्निधिं हीरमेण गुणवतः कस्यचित् मनुजस्य प्रेषणं १७ प्रवासिलोकानां संख्या च।

१ अनन्तरं सुलेमान् परमेश्वरस्य नामधेयमुद्दिश्य मन्दिरमेकं स्वार्थञ्च
२ राजगृहमेकं निर्म्मातुं मतिं चकार। अपरं भारवहनार्थं सप्ततिसहस्राणि लोका गिरिषु काष्ठादीनां छेदनार्थम् अशीतिसहस्राणि लोकास्तेषाम् अधिपतित्वे च षट्शताधिकानि त्रीणि सहस्राणि लोकाः सुलेमना नियोजयाञ्चक्रिरे।
३ अनन्तरं सुलेमान् सोरस्य महीपते र्हीरमस्य सन्निधिं दूतान् प्रहित्य कथयामास, मम तातं दायूदं प्रति त्वया यद्वत् कृतम् अर्थतस्तस्य वासगृहनिर्म्माणार्थं तस्य सन्निधिं यद्वद् दारूणि प्रेषितानि तद्वत् मां
४ प्रति च कुरु। पश्य, इस्रायेलीयलोकै र्यद्वत् सदा कर्त्तव्यं तद्वत् निजप्रभोः परमेश्वरस्य सम्मुखे सुगन्धिधूपदाहार्थं नित्यं दर्शनीयपूपस्थापनार्थं प्रतिप्रातः प्रतिसन्ध्यञ्च विश्रामवारेऽमावस्यासमये प्रभोः परमेश्वरस्य वार्षिकोत्सवेषु च होमबलिदानार्थम् अहं तस्य नामधेयम् उद्दिश्य पावित्र्यं
५ मन्दिरमेकं निर्म्मापयितुम् उद्यतो ऽस्मि। मया यन्मन्दिरं निर्म्मापयिष्यते तद् विशालं भविष्यति यतो ऽस्माकम् ईश्वरो निखिलसुरेभ्यो
६ महान्। परन्तु स्वर्गः स्वर्गोपरिस्थः स्वर्गो ऽपि यं धारयितुं न पारयति तस्य कृते मन्दिरं निर्म्मातुं कः समर्थो भवेत्? अहं वा को यदहं तस्य सम्मुखे धूपज्वालनाभिप्रायाद् अन्याभिप्रायेण तस्य कृते मन्दिरं
७ निर्म्मातुं शक्नुयां? अत इदानीं मम जनकेन दायूदा नियुक्ता ये गुणवन्तो मानवा यिहूदादेशे यिरूशालमे च मम सन्निधौ तिष्ठन्ति तैः समं सुवर्णदुर्व्वर्णारकूटलौहानां धूम्ररक्तनीलवर्णसूत्राणाञ्च कार्य्येषु
८ निपुणं मणिकर्त्तने तत्परञ्चैकं मानवं मम सन्निधिं प्रेषय। अपरं लिबा-

नोनाद् एरसकाष्ठानि देवदारुकाष्ठानि चन्दनकाष्ठानि च मम सन्निधिं
प्रेषय यतो भवतः किङ्कराः लिवानोनस्थकाष्ठानि कर्त्तितुं निपुणा इति
मया बुध्यते। अपरं पश्य भवतः किङ्करैः सार्द्धं ममापि किङ्करा विद्यन्ते।
अतो मत्कृते प्रभूतदारूणि संगृह्यन्तां यतो मया यन्मन्दिरं निर्म्मापयि- ९
ष्यते तेन महताद्भुतेन च भवितव्यं। पश्य मया तव दारुच्छेदकदासेयेभ्यो १०
विंशतिसहस्रपरिमाणा गोधूमा विंशतिसहस्रपरिमाणा यवा विंशति-
सहस्रभाजनपरिमाणा द्राक्षारसा विंशतिसहस्रभाजनपरिमाणानि
तैलानि च वितारिष्यन्ते।

अनन्तरं सोरीयो राजा हीरमः सुलेमानं प्रत्युत्तरमिदं लिखित्वा ११
प्रेषयामास, परमेश्वरो निजप्रजागणे प्रीयते कारणादतस्तेषामुपरि त्वां
राजानम् अकरोत्। हीरमो ऽपरमपि व्याजहार स्वर्गपृथिव्योः सृष्टि- १२
कर्त्ता य इस्रायेलः प्रभुः परमेश्वरः स धन्यो भवतु, यतः परमेश्वरस्य
कृते मन्दिरमेकं राजगृहमेकञ्च यो निर्म्मापयिष्यति तादृशं परिणाम-
दर्शिनं बुद्धिमन्तं ज्ञानिनं तनयमेकं स राज्ञे दायूदे दत्तवान्। इदानीं १३
मया हूरम आविर्नामा गुणवान् धीमांश्च मनुज एकः प्रहीयते। स १४
दानवंशीयायाः नार्य्या आत्मजस्तस्य जनकः सोरराष्ट्रीयमनुजः, जात-
रूपरजतारकूटलोहपाषाणदारूणां कार्य्येषु धूम्रनीलसूक्ष्मवस्त्राणां रक्त-
वर्णवसनानाञ्च कार्य्येषु स निपुणो मणिकर्त्तने ऽपि यत् किमपि कार्य्यं
वा तम् आदिश्यते तस्मिन् स तत्परो ऽस्ति। भवतो गुणवद्भि र्लोकैः समं
मम प्रभु र्यो भवतो जनको दायूद् तस्यापि गुणवद्भि र्लोकैः समं स
कार्य्यं करिष्यति। अपरं मम प्रभुणा यथा प्रतिश्रुतं तथैव भवतः किङ्क- १५
राणां कृते गोधूमयवतैलद्राक्षारसाः प्रेष्यन्तां। भवतो यावतां दारूणां १६
प्रयोजनं भविष्यति वयं लिबानोने तावन्ति दारूणि कर्त्तिष्याम उडू-
पानि बद्ध्वा जलधिमार्गेण याफोनगरं भवतः सन्निधिम् उपस्थापयि-
ष्यामश्च, अनन्तरं भवता तानि यिरूशालममानयिष्यन्ते।

सुलेमान् निजजनकेन दायूदा गणनाकरणात् परम् इस्रायेलीयजन- १७
पदप्रवासिनो विदेशिलोकान् गणयाञ्चकार तत्र षट्शताधिकं त्रिपञ्चा-
शत्सहस्राधिकं लक्षं मनुजा अगण्यन्त। तेषां मध्ये स सप्ततिसहस्राणि १८
लोकान् भारवहनकर्म्मणि, अशीतिसहस्राणि लोकान् शिलोच्चये काष्ठ-
च्छेदनकर्म्मणि षट्शताधिकानि त्रीणि सहस्राणि लोकांश्च तेषां मान-
वानां कार्य्ये प्रवर्त्तनार्थम् अध्यक्षत्वे नियोजयामास।

# ३ तृतीयोऽध्यायः।

१ मन्दिरनिर्म्माणार्थं स्थानसमययो र्निरूपणं ३ मन्दिरस्य भूषणादीनां विवृतिः १४ तिरस्करिण्याः स्तम्भादेश्च विवृतिः।

१ तस्य जनको दायूद् यत् स्थानम् दर्शितो ऽर्यतो यिबूषीयस्यारौणाख्यस्य
शस्यमर्द्दनस्थाने दायूद् यत् स्थानं निरचिनोत् यिरूशालमस्थस्य मोरि-
याख्यगिरेस्तस्मिन्नेव स्थाने सुलेमान् परमेश्वरस्य मन्दिरं निर्म्मापयितुम्
२ आरेभे। स निजाधिकारस्य चतुर्थवत्सरस्य द्वितीयमासस्य द्वितीयदिने
निर्म्मापयितुम् आरब्धवान्।
३ सुलेमान् ईश्वरीयमन्दिरनिर्म्माणमधि यम् उपदेशम् अलभत तदनु-
सारेण हस्तस्य पूर्व्वीयपरिमाणेन मन्दिरस्य दीर्घत्वं षष्टिहस्तान् प्रस्थत्वञ्च
४ विंशतिहस्तान् अकरोत्। अपरं मन्दिरस्याग्रे सो ऽलिन्दमेकं निर्म्ममे
मन्दिरस्य प्रस्थत्वानुसारेण तस्य दैर्घ्यं विंशतिहस्ता उच्चता च विंशत्यधि-
५ कशतं हस्तास्तस्याभ्यन्तरं स निर्म्मलसुवर्णेन मण्डयाञ्चकार। अपरं स
प्रमुखभवनस्य भित्तिम् उत्तमसुवर्णेन मण्डितै र्देवदारुभिराच्छादया-
६ मास, तदुपरि तालतरून् शृङ्खलानाकृतीश्चकार। अपरं शोभा-
निमित्तं भवनं मणिभिरलञ्चकार। अपरं स्वर्णानि पर्व्वयिमदेशीया-
७ न्यासन्। अपरं तद्भवनाभ्यन्तरमर्थतो गेहकाष्ठानि भित्तीः कुड्यानि
कपाटानि च स्वर्णै र्मण्डितवान् अपरं कुड्येषु किरूबाकाराम् चकार।
८ अपरं स यत् महापवित्रं भवनं निर्म्मापयामास तस्य दीर्घत्वं मन्दिरस्य
प्रस्थत्वमिव विंशतिहस्ताः प्रस्थत्वमपि विंशतिहस्ताः, अपरं स षट्शत-
९ किक्करपरिमाणैरुत्तमकाञ्चनैस्तत् प्रयुमवान्। अपरं कीलानां काञ्चनानां
परिमाणं पञ्चाशत्शेकलाः, अपरं स उपरिस्थानि कोष्ठान्यपि काञ्चनैः
१० प्रयुमवान्। अपरं स महापवित्रस्थाने कर्त्तिकाकार्य्येण द्वौ किरूबौ
११ निर्म्मापयाञ्चकार काञ्चनैश्च तौ मण्डयामास। तयोः किरूबयोः पक्षा
विंशतिहस्तदीर्घाः, तयोरेकस्य पञ्चहस्तपरिमित एकः पक्षो भवनस्य
कुड्यम् अस्पृशत् पञ्चहस्तपरिमितस्तस्यान्यः पक्षश्च द्वितीयस्य किरूबस्य
१२ पक्षम् अस्पृशत्। द्वितीयस्य किरूबस्यापि पञ्चहस्तपरिमित एकः पक्षो
भवनस्य कुड्यम् अस्पृशत् पञ्चहस्तपरिमितो ऽपरः पक्षश्च प्रथमस्य कि-
१३ रूबस्य पक्षम् अस्पृशत्। तयोः किरूबयोः पक्षा विंशतिहस्तविस्तारिता
बभूवुः, अपरं तौ पद्भ्युदतिष्ठतां तयो र्वदने आन्तरं प्रत्यवर्त्तेतां।

अपरं स नीलवार्त्ताकीयरक्तवर्णैः सूक्ष्मैश्च सूत्रै र्निर्म्मितम् एकम् १४
आच्छादनवसनं समासादयत् तस्मिन् किरूवाकारान् चकार च। अपरं १५
भवनस्य सम्मुखे पञ्चत्रिंशत्हस्तप्रोच्चौ द्वौ स्तम्भौ चकार तयोरुपरि-
स्थितौ द्वौ मूर्द्धानौ पञ्चहस्तोच्चौ। अपरं स वाक्यस्थाने यादृक् तादृक् १६
[illegible] स्थापयामास, अपरं शतं दाडि[illegible]-
[illegible] तयोः शृङ्खलास्विषु निदधे। अपरं तौ स्तम्भौ मन्दिरस्य १७
सम्मुखे [illegible] चकार, एकं दक्षिणे तदन्यं वामे निदधे, अपरं
[illegible] नामधेयं याखीनः (स्थिरकारक इति) चका[र] वामे
[illegible] नामधेयं बोयसः (बलोति) चकार।

---

## ४ चतुर्थोऽध्यायः।

१ पित्तलस्य वेद्याः कथनं २ सागरस्य तस्य गवाञ्च कथनं ६ प्रक्षालनपात्राणां [illegible]-ह्वयाणां द्वाविंशनानां चत्वरस्य च कथनं ११ पित्तलीयवस्तूनां कथनं १९ क[illegible]-यवस्तूनाञ्च कथनं।

अनन्तरं सुलेमान् पित्तलमयीं वेदिमेकां निर्म्मापयाञ्चकार [illegible]। १
दीर्घत्वं विंशतिहस्ताः प्रस्थता विंशतिहस्ता उच्चता च दशहस्ताः।
अनन्तरं स सिक्तधातुना वर्त्तुलाकारं सागररूपं पात्रं निर्म्मापयाञ्च- २
कार; एकम् अग्रम् आरभ्य द्वितीयम् अग्रं यावत् तस्य परिसरो दश-
हस्तपरिमितस्तस्योच्चत्वञ्च पञ्चहस्तपरिमितं त्रिंशद्धस्तपरिमितं सूत्रञ्च
तद् अवेष्टत। अपरं तस्य चतुर्दिक्षु कर्णस्याध एकैकहस्तपरिमाणान्तरे ३
सागरभाजनवेष्टनकारका दश दश वर्त्तुलाकारा आसन्, पात्रसेचन-
समये ते श्रेणीद्वयेनासिच्यन्त। तत् सागरभाजनं द्वादशानां गवाम् ४
उपरि स्थापितं तासां तिस्र उत्तरमुखास्तिस्रः पश्चिममुखास्तिस्रो दक्षिण-
मुखास्तिस्रः पूर्व्वमुखा बभूवुः। अपरं सागरभाजनं तासामुपरि तस्थौ
तासां गवां पश्चाद्भागा अन्तरे तस्थिरे। तत्पात्रस्य स्थूलत्वं चतुरङ्गुल- ५
परिमाणं तस्य कर्णः कंसकर्णवत् शोशनपुष्पाकारः। त्रीणि सहस्राणि
वाताख्यपरिमाणानि तेन धृतानि।
अपरं स दश प्रक्षालनभाजनानि कारयामास तेषां पञ्च भाजनानि ६
दक्षिणे पञ्च भाजनानि च वामे स्थापयामास। तानि प्रक्षालनार्थकानि
तन्मध्ये होमार्थबलिदानसम्बन्धीयानि वस्तूनि प्राक्षाल्यन्त किन्तु याज-
कानां स्नानार्थं सागरभाजनम् आसीत्। अपरं स उपयुक्ताकारान् ७

काञ्चनमयान् दश दीपाधारान् कृत्वा मन्दिरे स्थापयाञ्चकार तेषां पञ्च
८ दक्षिणे पञ्च च वामे निदधे। अपरं स दश दार्व्वासनानि निर्म्माय
तेषां पञ्च दक्षिणे पञ्च च वामे मन्दिरे निदधे, अपरं स शतं काञ्चन-
मयान् चषकान् निर्म्मापयामास।

९ अपरं स याजकानां चत्वरं वृहत् चत्वरञ्च निर्म्मापयामास, अपरं
चत्वरस्य द्वाराणि निर्म्माय तदीयकवाटानि पित्तलेन मण्डयामास।
१० अपरं पूर्व्वदिशः सम्मुखे निऋदक्षिणे जलधिभाजनं स्थापयाञ्चकार।
११ अपरं हूरमः कटाहान् दर्व्वीश्चुल्लीश्च निर्म्ममे, अनेन प्रकारेण स्वयतः
सुलेमन आज्ञात ईश्वरीयमन्दिरस्य कृते हूरमेण यावन्ति कार्य्याणि
१२ कर्त्तव्यानि तेषां सर्व्वेषां निर्म्माणं समाप्तं। इत्थं द्वौ स्तम्भौ ययोः स्तम्भ-
योरुपरि स्थितौ वर्त्तुलाकारौ द्वौ मूर्द्धानौ स्तम्भद्वयोपरिस्थवर्त्तुलाकार-
१३ मूर्द्धद्वयाच्छादके द्वे जाले तज्जालद्वयवेष्टनार्थं चतुःशतानि दाडिम्बाकारा
अर्थतः स्तम्भद्वयोपरिस्थयो वर्त्तुलाकारमूर्द्धोराच्छादकजालद्वयस्यैकैकस्य
१४ कृते दाडिम्बाकाराणां द्वे श्रेणी चैतानि तेन निर्म्मितानि। अपरं
दश पीठान्यपि निर्म्मितानि पीठोपरिस्थितानि दश प्रक्षालनपात्राणि,
१५ सागररूपं पात्रमेकं तत्सागरपात्रस्याधो द्वादशगावस्तदन्यद् ऋजीषाणि
१६ दर्व्वीत्रिशूलान्येतानि तदन्यानि च यावन्ति भाजनानि सुलेमन आज्ञातः
परमेश्वरीयमन्दिरस्य कृते हूरमेण निर्म्मितानि तानि सर्व्वाणि तेजो-
१७ मयपित्तलैः निर्म्मितानि। राजा यर्द्दनस्य प्रान्तरे सुक्कोतसिरेदयो र्मध्य-
१८ स्थितायां घनमृदि भूमौ विलद्रधातुना तानि निर्म्मापयामास। सुलेमान्
यान्येतान्यतीव बहूनि भाजनानि निर्म्मापयाञ्चकार तेषां पित्तलानां
परिमाणं न ज्ञेयं।

१९ अपरम् ईश्वरीयमन्दिरस्याभ्यन्तरे स्थापनार्थम् एतानि सर्व्ववस्तूनि
२० सुलेमना निर्म्मितानि। स्वर्णवेदी दर्शनीयपूपधारणीयासनानि अभ्यन्तर-
स्थानान्तिके विध्यनुसारेण प्रज्वलितव्या दीपा दीपवृक्षाश्चैतानि निर्म्मल-
२१ सुवर्णमयानि, पुष्पाकाराः प्रदीपा वर्त्तिकाच्छेदनकर्त्तन्यश्चैते सुवर्णमयाः,
२२ कृरिका ऋजीषाणि खेदन्यो वह्निपात्राणि चैतानि निर्म्मलसुवर्णम-
यानि, महापवित्रस्थानस्य मन्दिरस्य चान्तःस्थितयो द्वारयोः कवाटानि
चेमानि सुवर्णमयान्यासन्।

# ५ पञ्चमोऽध्यायः ।

१ निवेदितवस्तूनां भाण्डागारे निधानं २ महापवित्रस्थानाय मञ्जूषाया आनयनं ११ परमेश्वरीयप्रशंसाकरणसमये तत्र तेजसः प्रकाशितत्वं ।

अनन्तरं परमेश्वरीयमन्दिरार्थं सुलेमना कृते सर्व्वस्मिन् कार्य्ये समाप्तिं १
गते तस्य जनकेन दायूदा निवेदितानि वस्तूनि काञ्चनानि रजतानि
सर्व्वाणि भाजनानि च सुलेमना समानीयेश्वरस्य मन्दिरस्य भाण्डा-
गारेषु निदधिरे ।

अपरं सुलेमान् इस्रायेलीयलोकानां प्राचीनान् वंशानां मुख्यनरां- २
श्चार्थत इस्रायेलीयानां प्रधानपितृलोकान् परमेश्वरीयनियममञ्जूषाया
दायूद्नगरात् सियोनात् स्थानान्तरीकरणार्थं यिरूशालमे सञ्जग्राह ।
ततः सप्तममास उत्सवसमय इस्रायेलीयलोकाः सर्व्वे नरपतेः समीपे ३
मिलितवन्तः । अनन्तरम् इस्रायेलीयप्राचीनगणे समुपस्थिते लेवीय- ४
लोका मञ्जूषाम् ऊढः । मञ्जूषा समाजावासस्तदा[illegible]स्यान्तःस्थितानि ५
सर्व्वाणि पवित्रभाजनानि च लेवीययाजकैरूहिरे । अपरं सुलेमान् ६
नरपति र्मञ्जूषायाः सम्मुखे सम्मिलित इस्रायेलीयलोकानां सर्व्वः समा-
जश्च बहुत्वकारणाद् असङ्ख्येयान् अपरिमेयांश्च मेषान् गाश्चोत्ससृजुः ।
अनन्तरं याजका मन्दिरस्यवाक्यस्थानाख्ये महापवित्रस्थाने किरूवयोः ७
पक्षायामधो निरूपितस्थाने परमेश्वरस्य नियममञ्जूषां निदधिरे । तौ ८
किरूवौ सपक्षान् मञ्जूषायाः स्थानोपरि विस्तारयामासतुरतस्तौ कि-
रूवौ मञ्जूषां तदीयवहनदण्डौ चाच्छादयामासतुः । तयो र्दण्डयो ९
र्दीर्घत्वात् मञ्जूषाया अन्तिके वाक्यस्थानस्याग्रभागे तयोरग्रे दृश्ये बभूवतुः
किन्तु वहिर्दृश्ये न बभूवतुः, अद्यापि ते तत्र स्थाने विद्येते । तत्र १०
मञ्जूषायाम् अन्यत् किमपि नासीत्, केवलं मिसरदेशाद् इस्रायेलीय-
वंशानां निर्गमनकाले परमेश्वरस्तैः सार्द्धं यं नियमं कृतवान् तदीयच-
युक्तं प्रस्तरफलकद्वयं तन्मध्य आसीत् यतो होरेवे मूसास्तत् तन्मध्ये
स्थापितवान् ।

ते समागता याजकाः सर्व्वे स्वान् पवित्रीकृतवन्तः, परन्तु पर्य्यायानु- ११
सारेण कार्य्याणि न चक्रिरे । अपरं पवित्रस्थानाद् याजकानां वहि- १२
र्गमनकाले आसफो हेमनो यिदूथूनस्तेषां तनया भ्रातरश्चेत्यादयः सर्व्वे
गायका लेवीयाः परिहितसूक्ष्मवसनाः सन्तः करतालमृदङ्गवल्लकीर्धार-

यन्तश्च वेद्याः पूर्व्वदिश्यतिष्ठन् तूरीवादका विंशत्यधिकशतं याजका अपि
१३ तैः सार्द्धम् अतिष्ठन्। ते तूरीवादका गायकाश्च सर्व्व एकस्वरेण परमे-
श्वरस्य स्तुतिं धन्यवादञ्चाकुर्व्वन्। अपरं यदा ते तूरीकरतालादिभि
र्वाद्ययन्त्रैः समं महाशब्दं कुर्व्वन्तः, परेशः क्षेमदातास्ति चिरस्थायी तदनु-
ग्रहः, इति वाक्येन तस्य स्तुतिम् अकुर्व्वन् तदानीं गृहम् अर्थतः
१४ परमेश्वरस्य मन्दिरं मेघेन तादृक् पर्य्यपूर्य्यत, यद् याजका मेघकारणात्
सेवनम् अनुष्ठातुम् असमर्था बभूवुः, यतः परमेश्वरस्य तेज ईश्वरीय-
मन्दिरं पूरयामास।

---

## ६ षष्ठोऽध्यायः।

१ सुलेमना लोकेभ्य आशीर्व्वादनं परमेश्वरस्य च प्रशंसनं १२ मन्दिरप्रतिष्ठासमय सुलेमनः प्रार्थनञ्च।

१ तदानीं सुलेमन् व्याजहार, परमेश्वरो घोरान्धकारे वसतीति तेन
२ निगदितं। तवाधिष्ठानार्थं मन्दिरमेकं मया निरमायि तव नित्यवासार्थं
३ तन्निवेशनं स्थानं। अपरम् इस्रायेलीयानाम् अखिले समाजे ऽवतिष्ठ-
माने राजा स्वास्यं परावर्त्त्येस्रायेलीयानां कृत्स्नं समाजम् आशिषं
४ जगाद। स कथयामास, इस्रायेलः प्रभुः परमेश्वरो धन्यः, स मम पित्रे
दायूदे स्ववक्त्रेण यत् प्रतिज्ञातवान्, तत् स्वकराभ्यां साधितवान्, यथा,
५ मम प्रजागण इस्रायेलीयवंशो यस्मिन् दिने मिसरदेशात् मया
बहिष्कृतस्तद् दिनम् आरभ्याहम् अत्र स्थाने मम नाम्नो ऽधिष्ठानार्थं
मन्दिरं निर्म्मातव्यमित्यभिप्रायेणेस्रायेलीयानां कस्यापि वंशस्य किमपि
नगरं नाभिरोचितवान् किन्तु मदीयप्रजागणस्येस्रायेलीयवंशस्याधिपति-
६ त्वाय कमपि नरं न वरीतवान्। अधुना मम नामधेयस्य वासस्थानार्थं
यिरूशालमं, मम प्रजागणस्येस्रायेलीयवंशस्याधिपतित्वार्थञ्च दायूदं
७ वरीतवान्। अपरम् इस्रायेलः प्रभोः परमेशस्य नाम्ने मन्दिरमेकं नि-
८ र्म्मातुं मत्तातो दायूद् मनो निदधे। किन्तु परमेश्वरो मम तातं दायूदं
वाक्यमिदं जगाद, त्वं मम नाम्ने मन्दिरं निर्म्मातुं मनो निरधत्था इति
९ तव मनोगतं भद्रमेव। तथापि तन्मन्दिरं त्वया न निर्म्मातव्यं, किन्तु
१० तवौरसात्मजेन मम नामार्थकं तन्मन्दिरं निर्म्मातव्यमिति परमेश्वरेण
यद् वचनं प्रतिज्ञातं तदेव साधितं, ततः परमेश्वरस्य वाक्यादहं पित-

तातस्य दायूदः पदं प्राप्येस्रायेलीयराजसिंहासन उपाविशम् इस्रायेलः
प्रभोः परमेश्वरस्य नाम्ने मन्दिरमिदं निरमापयञ्च। परमेश्वरो ऽस्मत्पूर्व- ११
पुरुषैः सह यं नियमं कृतवान् तदीयपत्रस्याधारो या मञ्जूषा तामपि
तत्र न्यदधां।

अनन्तरं स इस्रायेलः कृत्स्नसमाजस्य साक्षात् परमेश्वरस्य यज्ञवेद्या १२
अन्तिकम् उपस्थाय करौ प्रासारयत्। यतः सुलेमान् पञ्चहस्तदीर्घं पञ्च- १३
हस्तप्रस्थं हस्तत्रयप्रांशुं पित्तलमयं मञ्चमेकं निर्म्माप्य चत्वरमध्ये ऽस्था-
पयत् तस्योपरि तिष्ठन् स इस्रायेलः कृत्स्नसमाजस्य साक्षात् जानुपातं
कृत्वा गगनं प्रति करौ प्रसार्य्य व्याजहार, हे इस्रायेलः प्रभो परमेश्वर, १४
स्वर्गे पृथिव्यां वा तव तुल्यो नापरः कश्चनेश्वर आस्ते। तव यावन्तो
दासाः सर्व्वान्तःकरणैस्तव चक्षुर्गोचरे चरन्ति तान् प्रति स्वनियमं
स्वप्रेम च साधयसि। विशेषतः स्वदासाय मत्ताताय दायूदे त्वं यत् १५
प्रत्यशृणोस्तद् असाधयः स्ववक्त्रोक्तं वचनम् अद्य स्वकरेण सफलम्
अकार्षीश्च। हे इस्रायेलः प्रभो परमेश्वर, स्वदासाय मत्ताताय दायूदे १६
भवता यत् प्रतिज्ञातं तदधुना साध्यतां, यथा, मम चक्षुर्गोचरे त्वं यद्वद्
आचरस्तद्वत् तव सन्तानाश्चेत् स्वस्वमार्गमधि सावधानाः सन्तो मम व्यव-
स्थाम् आचरन्ति तर्हि मम साक्षाद् इस्रायेलीयराजसिंहासनोपवेष्टृ-
पुरुषस्याभावस्तव वंशे कदापि न भविष्यतीति। हे इस्रायेलः प्रभो १७
परमेश्वर, स्वदासाय मदीयजनकाय दायूदे भवता यत् कथितं भवत-
स्तद् वाक्यमिदानीं स्थिरं भवतु। किन्त्वीश्वरो मनुष्यैः सह पृथिव्यां
निवत्स्यतीति किं सत्यं भवेत्? पश्य स्वर्गः स्वर्गोपरिस्थः स्वर्गश्च भवन्तं न
धरति, ततो मन्निर्म्मितं मन्दिरमिदं किं धरेत्? हे मम प्रभो परमेश्वर, १९
त्वं स्वदासस्य प्रार्थनां निवेदनञ्च गृहाण, तव दासेन या काकूक्तिः
प्रार्थना च क्रियते सा भवता श्रूयतां। अत्र स्थाने मम नाम स्थापयि- २०
ष्यामीति वाक्यं यत् स्थानमिदम् अर्थतो यन्मन्दिरमिदमधि भवतोक्तं तत्
प्रति भवतो नयने दिवारात्रम् उन्मीलिते तिष्ठताम् एतत्स्थानोद्देश्या
भवतो दासस्य प्रार्थना च भवता श्रूयतां। एतत् स्थानम् उद्दिश्य २१
प्रार्थयमानेन भवद्दासेन भवत्प्रजाभिरिस्रायेलीयवंशेन च या प्रार्थना
क्रियते, भवान् तां शृणोतु। भवान् स्वकीयवासस्थाने स्वर्गे तिष्ठन् तां
निशामयतु निशम्य च क्षमतां।

केनचित् समीपवासिनः कस्मिंश्चिद् अपराद्धे लोका यदि शपथं २२

निश्चिन्वन् तं शापयन्ति स च शपथे यदि मन्दिरे ऽस्मिन् तव वेद्याः
३३ समीपम् उपतिष्ठति, तर्हि त्वं स्वर्गे निशम्य कर्त्तव्यं कुर्व्वन् निजदासान्
विचारयार्थतो दोषिणे फलं दत्त्वा तस्य कर्म्मणः समुचितं दण्डं तस्य
मस्तके वर्त्तय निर्द्दोषस्य निर्द्दोषं ज्ञात्वा तस्य निर्द्दोषत्वस्य फलं तस्मै
वितराय।

३४ अपरं तव विरुद्धं पातककरणाद् रिपुभिः पराजितास्तवेस्रायेलीय-
प्रजागणा यदि त्वां प्रति परावृत्य तव नाम स्तुवन्तस्तव साक्षात् मन्दिरे
३५ ऽस्मिन् विनयन्ते प्रार्थयन्ते च, तर्हि त्वं स्वर्गे निशम्य तवेस्रायेलीयप्रजा-
नाम् अपराधं क्षमस्व तेभ्यस्तेषां पूर्व्वपुरुषेभ्यश्च यं देशं दत्तवानसि तं
देशं पुनर्व्वारं तान् आनय च।

३६ अपरं तव विरुद्धं तेषां पातककरणाद् गगने रुद्धीभूते यदि वृष्टि
र्न भवति तेन ते यदि स्थानस्यैतस्य दिशि प्रार्थयमानास्तव नाम स्तुवन्ति
३७ त्वया तेषां क्लेशो जात इति विविच्य स्वपापात् परावर्त्तन्ते च, तर्हि त्वं
स्वर्गे निशम्य तव दासानाम् इस्रायेलीयप्रजानाम् अपराधं क्षमस्व गन्तव्यम्
उत्तममार्गञ्च तान् आदिश तव प्रजागणाय यं देशं भोगार्थं दत्तवानसि
तस्मिन् देशे वृष्टिं कारय च।

३८ अपरं देशे दुर्भिक्षे जाते महामार्य्यां वा जातायां शस्यानां वा
शुष्कत्वे म्लानत्वे वा जाते शुककीटादिपतङ्गेषु वा जातेषु देशस्थनगरेषु वा
३९ रिपुभिरवरुध्यमानेषु कस्यांचित् मार्य्यां पीडायां वा बलवत्यां यदि केन-
चित् मानवेन तव कृत्स्नेनेस्रायेलीयप्रजागणेन वा स्वकीयपीडां स्वकीय-
क्लेशञ्च बुद्ध्वा काचित् प्रार्थना किञ्चन निवेदनं वा क्रियते मन्दिरस्यास्य
४० दिशि च करद्वयं प्रसार्य्यते, तर्हि त्वं निजवासस्थाने स्वर्गे निशम्य
क्षमित्वा यस्य मनुष्यस्य यम् आन्तरिकभावं जानासि तदनुसारेण तस्या-
चरणस्य समुचितं फलं तस्मै देहि, यतस्त्वमेव मनुष्यसन्तानानाम् अद्वि-
४१ तीयो ऽन्तर्य्याम्यसि। तथा सति त्वम् अस्मत्पूर्व्वपुरुषेभ्यो यं जनपदं
दत्तवानसि तन्मध्ये ते यावत् जीविष्यन्ति तावत् त्वत्तो भीत्वा तव
मार्गेषु चरिष्यन्ति।

४२ अपरं तवेस्रायेलीयप्रजागणाद् भिन्नजातीयः कश्चिन्नरो यदि तव
महानामकारणात् बलवत्करस्य प्रसारितबाहोश्च हेतुना दूरदेशाद्
४३ आगत्य मन्दिरस्यास्य दिशि प्रार्थनां कुरुते, तर्ह्यपि त्वया स्ववासस्थाने
स्वर्गे निशम्य तस्य भिन्नजातीयस्य नरस्य प्रार्थनानुसारात् कार्य्यं क्रियतां,

तथा कृते पृथिवीस्थजातीयाः सर्व्वे तव नाम्नो ज्ञानं लब्ध्वा तवैस्रायेलीय-प्रजा इव त्वत्तो भेष्यन्ति मन्निर्म्मितस्यास्य मन्दिरस्योपरि तव नाम सङ्कीर्त्तितमेतदपि ज्ञास्यन्ति।

अपरं युद्धयात्रार्थं त्वया प्रेषितास्तव लोका यदि रिपुभिः सह योद्धुं ३४
वहिः गत्वा त्वयाभिरुचितम् एतन्नगरं तव नामार्थं मया निर्म्मितं
मन्दिरञ्चोद्दिश्य तव साक्षात् प्रार्थनां कुर्व्वते, तर्हि त्वं स्वर्गे तेषां प्रार्थनां ३५
विनयञ्च निशम्य तेषां विचारस्य निष्पत्तिं कुरु। अपरं ते यदि तव ३६
विरुद्धं पापं कुर्व्वन्ति (यतः पापं न करोत्येवम्भूतः को ऽपि मानवो
नास्ति) त्वया च तेभ्यः क्रुद्ध्वा रिपूणां करेषु समर्पितास्ते यदि विजेतृभि
र्दूरस्थं निकटस्थं वा देशं नीयन्ते, ततः परं यस्मिन् देशे ते नीतास्तत्र ३७
यदि मनसि स्वदशां चिन्तयित्वा स्वीयप्रवासदेशे त्वाम् उद्दिश्य प्रार्थय-
माना अस्माभिः पापम् अपराधो ऽधर्म्मश्चाकारीति वदन्ति, इत्थं ते ३८
यदि स्वकीयप्रवासस्थाने ऽर्थतः स्वविजेतॄणां देशे सर्व्वान्तःकरणैः सर्व्व-
प्राणैश्च त्वां प्रति परावर्त्तन्ते, तेषां पूर्व्वपुरुषेभ्यस्त्वया दत्तं स्वकीयदेशं
त्वयाभिरुचितं नगरं तव नाम्ने मया निर्म्मितं मन्दिरञ्चोद्दिश्य प्रार्थनां
कुर्व्वते च, तर्हि त्वं स्ववासस्थाने स्वर्गे तेषां प्रार्थनां विनयञ्च निशम्य तेषां ३९
विचारस्य निष्पत्तिं कुरु, तव प्रजागणेन तव विरुद्धं यद्यद् अपराद्धं
तत् सर्व्वं क्षमस्व च। इदानीं हे मदीयेश्वर, स्थाने ऽस्मिन् या प्रार्थना ४०
क्रियते तां प्रति भवतः श्रोत्रे सुगम्ये चक्षुषी चोन्मीलिते भवतां। इदानीं ४१
हे प्रभो परमेश्वर, भवान् भवतः शक्तिस्वरूपा मञ्जूषा च स्वविश्राम
स्थानम् आरोहतु। हे प्रभो परमेश्वर, वसनं त्राणरूपं ते याजकैः
परिधीयतां, पुण्यवन्तश्च ते सर्व्वे नन्दन्तु स्वीयमङ्गले। हे प्रभो परमेश ४२
त्वं स्वाभिषिक्तं न वञ्चय, निजदासस्य दायूदो वरश्च स्मर्य्यतां त्वया।

---

## ७ सप्तमोऽध्यायः।

१ सुलेमनः प्रार्थनातः परम् आकाशाद् वह्नेः पतनं ४ तस्य यज्ञकर्म्म ८ उत्सवकरणात् परं लोकानां विसर्जनं १२ सुलेमानं प्रति परमेश्वरस्य प्रतिज्ञानं।

सुलेमना प्रार्थनायां समापितायां गगनाद् ऊताशो ऽवरुह्य हव्यं १
बलींश्च जघास मन्दिरञ्च परमेश्वरस्य तेजसा परिपूरयाञ्चक्रे। परमे- २
श्वरस्य तेजसा परमेश्वरीयमन्दिरस्य पूर्णत्वाद् याजकाः परमेश्वरस्य

३ मन्दिरं प्रवेष्टुम् असमर्था बभूवुः। इस्रायेलीयवंशाः सर्व्वे तम् अग्निपातं
मन्दिरोपरि परमेश्वरीयतेजश्च विलोक्य पाषाणमयभूमौ न्युब्जीभूय
प्रणम्य भजनं चक्रुः परमेश्वरं स्तुवन्तश्च न्यगदन् स एव क्षेमदातास्ति
नित्यश्च तदनुग्रहः।
४ अनन्तरं नरपतिः सर्व्वे लोकाश्च परमेश्वरस्य सम्मुखे बलिदानम्
५ अकुर्व्वन्। तत्र राज्ञा सुलेमना द्वाविंशतिसहस्राणि गावो विंशति-
सहस्राधिकं लक्षं मेषाश्च बलिरूपेणादीयन्त, अनेन प्रकारेण राज्ञा
६ समस्तलोकैश्चेश्वरीयमन्दिरस्य प्रतिष्ठाकारि। याजकाः स्वीयस्वीयपदस्य
कार्य्याण्यन्वतिष्ठन् लेवीयाश्च स्वकरै दायूदादिष्टं स्तुतिवाद्यं कुर्व्वन्तो
ऽर्थतः परमेश्वरस्यानुग्रहो नित्यस्थायी तत्कारणात् तस्य प्रशंसार्थं राज्ञा
दायूदा निरूपितान् वाद्ययन्त्रान् वादयन्तो ऽतिष्ठन्, अपरं याजकास्तेषां
सम्मुखे तूरीरवादयन्, अपरम् इस्रायेलीया निखिललोका उपातिष्ठन्।
७ तस्मिन् समये परमेश्वरीयमन्दिरस्य सम्मुखस्थप्राङ्गणस्य मध्यदेशः सुले-
मना पवित्रीकृतः, यतो होमार्थका बलयो मङ्गलार्थकबलीनां मेदांसि
च तत्रैव तेनोत्सृष्टानि, यतो हेतोः सुलेमना निर्म्मिता यज्ञवेदी होम-
बलीन् निवेदितवस्तूनि मेदांसि च धर्त्तुं नाशक्नोत्।
८ तस्मिन् समये सुलेमान् तेन सहितो हमातस्य प्रवेशस्थानम् आरभ्य
मिसरदेशीयां सीमास्थसरितं यावत् सर्व्वेषाम् इस्रायेलीयलोकानां
९ महासमाजश्च सह चक्रिरे। किन्त्वष्टमे दिने ते विश्रामम् अकुर्व्वन् यतस्ते
सप्ताहमेकं यावद् वेद्याः प्रतिष्ठाम् अन्यसप्ताहं यावद् उत्सवञ्च
१० चक्रिरे। अनन्तरं परमेश्वरो दायूदं सुलेमानं स्वीयेस्रायेलीयप्रजाश्च
प्रति यानि यानि मङ्गलानि कृतवान् तैरानन्दिता हृष्टचित्ताश्च लोकाः
सप्तममासस्य त्रयोविंशे दिने निजं निजं वासस्थानं यातुं राज्ञा विस-
११ सृजिरे। अनेन प्रकारेण सुलेमान् परमेश्वरीयमन्दिरस्य राजभवनस्य
च निर्म्माणं समापयामास, अपरं परमेश्वरस्य मन्दिरे निजप्रासादे च
यद्यत् कर्त्तुं सुलेमान् अभिलषितवान् तदेव सिद्धमकरोत्।
१२ अपरं परमेश्वरो निशायां सुलेमने दर्शनं दत्त्वा कथयामास, मया
१३ तव प्रार्थना श्रुता यज्ञभवनार्थं स्थानमिदमपि वृतं। मया गगनं बद्धा
वृष्टौ निवारितायां शुककीटेषु जनपदं नाशयितुम् आदिष्टेषु निज-
१४ प्रजानां विरुद्धं वा महामार्य्यां प्रेषितायां यदि मम नाम्ना विख्याता
मदीयप्रजा नम्रीभूय प्रार्थनां मदीयमुखान्वेषणञ्च कुर्य्युः स्वकीयकुमार्ग-

भयञ्च परावर्त्तेरन् तर्हि स्वर्गे तिष्ठता मया तत् श्रुत्वा तेषाम् अपराधाः
क्षमिष्यन्ते तेषां जनपदस्य मङ्गलानि च कारिष्यन्ते। अत्र स्थाने या १५
प्रार्थना भविष्यति तां प्रति मम चक्षुष्युन्मीलिते श्रोत्रे च सुगम्ये भवि-
ष्यतः। इदानीं मदीयनाम्नो नित्यस्थित्यर्थं मन्दिरमिदं मयाभिरुचितं १६
पवित्रीकृतञ्च मम दृष्टि र्मम मनश्च सततं स्थाने ऽस्मिन् स्थास्यतः।
अपरं तव तातो दायूद् यादृक् चरितवान् तादृक् त्वमपि यदि मम १७
साक्षात् चरन् मया यथादिष्टं तथैव कर्म्म करिष्यसि मम विधीन्
राज्यनीतींश्च पालयिष्यसि च, तर्हीस्रायेलीयानां शासनकर्त्तृपुरुषस्या- १८
भावस्तव वंशे कदापि न भविष्यतीति मया तव तातय दायूदे यत्
प्रतिज्ञातं तदनुसारात् तव राजसिंहासनं स्थिरीकारिष्यते। किन्तु १९
यदि यूयं मत्तो ऽपसृत्य ममादिष्टान् विधीन् राज्यनीतींश्च न पालयि-
ष्यथ, यदि च विपथगामिनो भूत्वेतरदेवान् सेविष्यध्वे प्रणंस्यथ च,
तर्हीदं युष्मभ्यं यं मदीयदेशं दत्तवान् तस्माद् युष्मान् उच्छेत्स्यामि यच्च २०
मन्दिरमिदं मम नामार्थं पवित्रीकृतवान् अस्मि तदपि स्वदृष्टिगोचराद्
दूरयिष्यामि सर्व्वजातीयानां गालिपरिहासयोरुदाहरणं करिष्यामि
च। ततो यावन्तो लोका एतस्य प्रांशुमन्दिरस्य सन्निधिना व्रजिष्यन्ति, २१
ते चमत्कृता भविष्यन्ति, देशमेतं मन्दिरमेतञ्च प्रति परमेश्वरः कुत
एतादृशं कृतवान्? इति प्रक्ष्यन्ति च। तेन लोकाः प्रतिवक्ष्यन्ति, लोका- २२
नाम् एतेषां पूर्व्वपुरुषा येन मिसरदेशाद् वहिरानीता इमे स्वेषां तं
पित्र्यं प्रभुं परमेश्वरं विहायेतरदेवान् आश्रित्य तान् प्राणमन् असे-
वन्त च तत्कारणात् स तान् इत्थं विपद्ग्रस्तान् कृतवान्।

---

## ८ अष्टमोऽध्यायः।

१ सुलेमना नगरनिर्म्मापणं ७ अन्यदेशीयानां कराधिनीकरणं ११ प्रासादे निज-जायाया नयनं १२ धर्म्मविधीनां पालनं १४ याजकानां लेवीयानाञ्च निरूपणं १७ ओफीरात् काञ्चनानामानयनञ्च।

परमेश्वरस्य मन्दिरं स्वकीयनिवेशनञ्चैतयोः प्रासादयो र्निर्म्माणेन सुले- १
मना विंशतिवत्सरा यापिताः। अपरं हीरमः सुलेमने यानि नगराणि २
दत्तवान् सुलेमान् तानि निर्म्माप्येस्रायेलीयवंशान् तन्मध्ये वासया-
ञ्चकार। अनन्तरं सुलेमान् हमातसोवां गत्वा तां पराजिगाय। अपरं ३
मरुभूम्यां तद्मोरनगरं हमाते च यानि नगराणि धनरक्षार्थं निरमाप- ४

५ यत् तान्यपि तदानीं निर्म्मापयाञ्चकार । अपरं स ऊर्द्धस्थं वैथोरोणम्
अधःस्थं वैथोरोणञ्चेमे द्वे नगरे दुर्गवत् प्राचीरगोपुरार्गलैर्दृढे चकार ।
६ अपरं सुलेमान् वालतं कोषनगराणि रथनगराणि सादिनां नगराणि
तदन्यद् यिरूशालमे लिवानोने स्वकीयस्य कृत्स्नराष्ट्रस्य सर्व्वत्र च यद्यत्
निर्म्मापयितुम् ऐच्छत् तत् सर्व्वं निर्म्मापयाञ्चकार ।
७ इस्रायेलीयवंशाद् अपरवंशोद्भवा ये हित्तीयेमोरीयपिरिषीयहिव्वीय-
८ यिबूषीयलोका अवशिष्टाः सन्त इस्रायेलीयवंशे विनंष्टुं न शेकिरे तेभ्य
उत्पन्नो देशे चावशिष्टो वंशः सुलेमना संगृहीतोऽद्य यावद् दासत्वापन्न-
९ कारुनिवहोऽकारि । इस्रायेलीयवंशोद्भवाः केऽपि सुलेमना स्वकीयराजत्वे
दासा न चक्रिरे, ते योद्धारो रथिनो रथाधिपतयो ऽग्रयायिनश्च
१० बभूवुः । अपरं तेषां मध्ये पञ्चाशदधिके द्वे शते जनाः सुलेमनो राज्ञः
कारुनिवहाध्यक्षा भूत्वा लोकान् अशिषन् ।
११ अनन्तरं सुलेमान् फिरौणो दुहितु र्निमित्तं यं प्रासादं निरमापयत्
तं प्रासादं दायूदो नगरात् तां मञ्चिषीम् आनिनाय, यतः स गदित-
वान् मम जाया इस्रायेलीयराजस्य दायूदः प्रासादे न वत्स्यति यतो
परमेश्वरीयमञ्जूषा यानि स्थानानि प्राविशत् तानि पवित्राणि सन्ति ।
१२ अपरं सुलेमान् अलिन्दस्य सम्मुखे परमेश्वरीयां यां वेदिं निर्म्मितवान्
१३ तदुपरि परमेश्वराय होमबलीन् दातुम् आरेभे । मूसा यद् आदिष्ट-
वान् तदनुसारेण स विश्रामवारेष्वमावास्यासु त्रिषु वार्षिकमहोत्सवेषु
चार्थात् किण्वशून्यपूपानां महे सप्ताहानां महे उटजनिर्म्माणमहे च
यस्मिन् दिने यथा निरूपितं तस्मिन् दिने तथैव बलिदानम् अकरोत् ।
१४ अपरं स निजजनकस्य दायूदो निरूपणानुसारेण कर्त्तव्यक्रियाणां कृते
याजकानां पर्य्यायान् निरूपयामास अपरं यस्मिन् दिने यथा कर्त्तव्यं
तस्मिन् तथैव स्तुतिं याजकानां सम्मुखे परिचर्य्याञ्च कर्त्तुं लेवीयान्
निरूपयाञ्चकार । अपरं तेषां पर्य्यायानुसारेण द्वारेषु दौवारिकान् नि-
१५ रूपयाञ्चकार यत ईश्वरीयलोको दायूद् तद् आज्ञापयाञ्चकार । अपरं
राजा याजकान् लेवीयांश्चाधि धनागारानधि वा यत् किञ्चनाज्ञापयत्
१६ ते तदन्यथा नाकुर्व्वन् । इत्थं परमेश्वरीयमन्दिरस्य भित्तिमूलकरणम्
आरभ्य तस्य समाप्तिं यावत् सुलेमनो निखिले कार्य्ये निरूपितां सिद्धिं
गते पारमेश्वरीयमन्दिरस्य निर्म्माणं सम्पूर्णं बभूव ।
१७ तदानीं सुलेमान् इदोमजनपदं जलनिधितटस्थम् इत्सियोनगेबरम्

यूशातस्य जगाम। अपरं हीरमो निजदासैस्तस्य सन्निधिं पोतान् निपुणा- १८
नाविकांश्च प्रेषयामास ते च सुलेमनो दासैः समम् ओफीरं समीय
पञ्चाशदधिकचतुःशतकिक्कारपरिमाणानि काञ्चनानि गृहीत्वा तस्मात्
स्थानात् सुलेमनो नरपतेः सन्निधिम् आनिन्युः।

---

## ९ नवमोऽध्यायः।

१ सुलेमनो ज्ञानं श्रोतुं शिवायाः राज्ञा यिरूशालम आगमनं १० सुलेमनः कनकानां कथा १४ सुवर्णफलकानां कथनं १७ दन्तिदन्तमयसिंहासनस्य कथनं २० पात्रादि-कथनम् उपढौकनकथनं २१ रथहयानां कथनं २६ करादीनां कथनं २९ तस्य राजत्वस्य निधनस्य च कथनं।

अपरं शिवादेशस्य राज्ञी सुलेमनः कीर्त्तिं निशम्य प्रवह्लिकाभिस्तं १
परीक्षितुम् अतीवमहाडम्बरेण सुगन्धिद्रव्यप्रचुरस्वर्णमणिवाहिनां महो-
ष्ट्राणां निवहेन चावृता यिरूशालमम् आजगाम, सुलेमनः सन्निधिमेत्य
सर्व्वं स्वमनोगतमधि तं सम्बभाषे च। ततः सा यद्यद् अपृच्छत् तत् २
सर्व्वं सुलेमान् तां जगाद, तन्मध्ये सुलेमनागम्यं किमपि वाक्यं नासीत्
स तां सर्व्वमेव ज्ञापितवान्। अतः सुलेमनो ज्ञानं तन्निर्म्मितं मन्दिरं ३
तस्य भोजनासनस्थभक्ष्यद्रव्याण्यमात्यानां परिषद् परिचारकाणां श्रेणी- ४
वेशौ पानपात्रवाहिनां संख्या वेशश्च परमेश्वरीयमन्दिरारोहणाय
तस्य सोपानश्चैतानि सर्व्वाणि दृष्ट्वा सा शिवादेशस्य महिषी हतज्ञाना
बभूव। सा तु राजानं जगाद, भवतो वाक्यानि ज्ञानञ्चाधि या ५
किंवदन्ती स्वदेशे मयाश्रावि सा सत्यैव। किन्त्वहं यावद् आगत्य स्वने- ६
त्राभ्यां सर्व्वं नापश्यं तावत् तां जनश्रुतिम् असत्याम् अमन्ये किन्तु पश्य
तव महाज्ञानस्यार्द्धमप्यहं न श्रुतवती। भवान् मच्छ्रुतां किंवदन्तीम्
अतिरिच्यते। धन्या इमे भवतो नरा धन्याश्चेमे भवतो भृत्या यत इमे ७
नित्यं भवतः साक्षात् तिष्ठन्तो भवतो ज्ञानालापं शृण्वन्ति। धन्यो ८
भवतः प्रभुः परमेश्वरो यतः स भवति तुष्टा भवतः प्रभोः परमेश्वरस्य
कृते भवन्तं राजसिंहासन उपावेशयत्। भवत ईश्वर इस्रायेल्वंशे
प्रीयमाणो ऽनन्तकालं यावत् तं स्थापयितुम् इच्छत्येतत्कारणाद् भवान्
यन्न्यायं धर्म्मञ्च समाचरेत् तदर्थं भवन्तं तस्योपरि राज्याभिषिक्तम् अक-
रोत्। सा तु राज्ञे विंशत्यधिकशतकिक्कारपरिमितानि सुवर्णानि प्रचु- ९

राणि सुगन्धिद्रव्याणि मणींश्च ददौ। शिबादेशस्य राज्ञी सुलेमने नृपतये यादृशानि सुगन्धिद्रव्याण्यददात् तादृशानि सुगन्धिद्रव्याणि तत् स्थानं पुन र्नानीतानि।

१० अपरं हीरमस्य सुलेमनश्च ये किङ्करा ओफीरात् कनकान्यानयन् ते
११ मलयजकाष्ठानि मणींश्चानयन्। अनन्तरं नरपतिस्तै र्मलयजकाष्ठैः परमेश्वरीयमन्दिरस्य राजप्रासादस्य च निमित्तं सोपानानि गायकानां कृते वल्लकी र्वंशींश्च निर्म्मापयाञ्चकार। तादृशानि काष्ठानि यिहूदादेशे
१२ पूर्व्वं केनापि न दृष्टानि। अनन्तरं सुलेमान् महीपतिः शिबाया महिष्या वाञ्छितं यत् किमप्ययाच्यत तत् सर्व्वं तस्यै ददौ तदन्यत् सा राज्ञः समीपं यद्यद् आनीतवती (तस्य शोधमपि स ददौ), ततः परं सा स्वभृत्यगणेन सार्द्धं निजजनपदं परावृत्य जगाम।

१३ सुलेमनो नरपतेः समीपं प्रतिवर्षं षट्षष्ट्यधिकषट्शतकिक्कारपरिमि-
१४ तानि कनकान्यानीयन्त। तदन्यानि सार्थवाहै र्वाणिग्भिश्च समानीयन्त, अपरम् आरवीयाः सर्व्वे महीपतयो देशाध्यक्षाश्च सुलेमनः सन्निधिं
१५ सुवर्णानि दुर्व्वर्णानि चानयन्। ततः सुलेमान् नरपतिस्ताडितसुवर्णं र्द्वे शते वर्त्तुलाकारफलकानि निर्म्मापयामास तेषाम् एकैकस्मिन् फलके
१६ षट्शतशेकलपरिमितं ताडितं सुवर्णं प्रयुक्तं। अपरं ताडितसुवर्णैस्त्रीणि शतानि चर्म्माणि निर्म्मापयामास तेषाम् एकैकस्मिन् चर्म्मणि त्रिशत-शेकलपरिमितानि कनकानि प्रयुक्तानि। अनन्तरं भूपति र्लिवानोना-रण्यगृहे तानि निदधे।

१७ अनन्तरं राजा दन्तिदन्तमयं महासिंहासनं निर्म्माप्य निर्म्मलकाञ्च-
१८ नेन खचयाञ्चकार। तस्य सिंहासनस्य षट् सोपानान्यासन् सुवर्णमयं पादपीठमेकञ्च तत्र बद्धमासीत्। उपवेशनीयस्थानस्य पार्श्वयोश्च हस्ता-
१९ कारे अवलम्बने आस्तां तयोश्चावलम्बनयोरग्रे द्वौ सिंहावतिष्ठतां। तेषु षट् सोपानेषु पार्श्वयो र्द्वादश सिंहा अतिष्ठन्। एतादृशं सिंहासनं कस्मिंश्चिद् राज्ये न निरमायि।

२० सुलेमनो महीपतेः सर्व्वाणि पानभाजनानि कनकमयान्यासन् तदत् लिवानोनारण्यगृहे स्थितानि सर्व्वाणि भाजनानि निर्म्मलकनकमया-
२१ न्यासन्। सुलेमनो राजत्वसमये रजतानां किमपि मूल्यं नासीत्। यतो हीरमस्य दासैः सह नरपतेस्तर्शीशगामिनः पोता आसन् वर्षत्रयात् परं वारमेकं ते पोता आगच्छन्। ते तर्शीशीयपोताः सुवर्णं दुर्व्वर्णम्

इभदन्तान् कपीन् शिखिनश्चानयन्। अनेन प्रकारेण वित्तविद्याभ्यां २२
सुलेमान् नृपतिः पृथिवीस्थेभ्यो ऽन्यनिखिलराजेभ्यः श्रेष्ठो बभूव।

ईश्वरेण सुलेमनो मनसि यत् ज्ञानं निहितं तस्य तज्ज्ञानस्य वचां- २३
सि श्रोतुं वसुन्धरायाः सर्व्वे महीपतयस्तं साक्षात् कर्त्तुम् अयतन्त। ते च २४
प्रतिवर्षं स्वं स्वम् उपायनम् अर्थतो रजतमयानि कनकमयानि च भाज-
नानि वसनान्यस्त्राणि सुगन्धिद्रव्याणि हयान् अश्वतरांश्च समानयन्।

अपरं वाजिनां स्यन्दनानाञ्च निमित्तं सुलेमनश्चत्वारि सहस्राणि भव- २५
नान्यासन्, अपरं तस्य द्वादशसहस्राणि हयारोहा आसन् ते च तेन
रथनगरेषु यिरूशालमे च राजनिकटे निदधिरे।

स सुलेमान् फरात्तटिनीम् आरभ्य पिलष्टीयानां जनपदं मिसर- २६
देशस्य सीमाञ्च यावत् निखिलभूपतीनाम् उपरि राजत्वं चकार।
अपरं राजा यिरूशालमे प्रभूतत्वकारणाद् रजतानि पाषाणवद् एरस- २७
काष्ठानि प्रान्तरस्थोडुम्बरेन्धनवत् साधारणानि चकार। अपरं मनुजा २८
मिसरदेशात् निखिलजनपदाच्च सुलेमनः कृते वाजिन आनिन्युः।

एतस्य सुलेमन आद्यन्तं निखिलं चरित्रं भविष्यद्वादिनो नाथनस्य २९
पुस्तके शीलोनीयाहियस्य भाविवाक्यग्रन्थे निवाटसुतस्य यारवियामस्य
विरुद्धं यिद्दोःपरिदर्शकस्य यद् दर्शनं तन्मध्ये च लिखितं किं न विद्यते?
स सुलेमान् यिरूशालमे वसन् कृत्स्नेस्रायेल उपरि चत्वारिंशद्वत्- ३०
सरान् यावत् राजत्वं चकार। अनन्तरं सुलेमान् स्वपितृगण इव महा- ३१
निद्रां प्राप्य निजजनकस्य दायूदो नगरे श्मशानं लब्धवान्। ततस्तस्य
सुतो रिहबियामस्तस्य पदे राजत्वं चकार।

---

## १० दशमोऽध्यायः।

१ रिहबियामम् अभिषेक्तुम् इस्रायेलीयलोकानां शिखिमे गमनं तं प्रति लोकानां प्रार्थनं ६ तेषां प्रार्थनमधि प्राचीनमन्त्रिभिः युवलोकैश्च सह मन्त्रणा १२ यूनां मन्त्रणानुसारेणोत्तरप्रदानं १६ इस्रायेलीयलोकानाम् अनाज्ञाग्रहणं कार्य्यनिबद्धाधिपस्य हननञ्च।

अनन्तरम् इस्रायेलीयवंशेषु सर्व्वेषु रिहबियामस्याभिषेकार्थं शिखिमं १
समागतेषु रिहबियामोऽपि शिखिमं जगाम। इत्यनन्तरे मिसरदेश- २
प्रवासी निवाटस्य सुतो यारवियामस्तां वार्त्तां श्रुतवान्। स यारवि-
यामः सुलेमनो राज्ञः सम्मुखात् पलाय्य मिसरदेशे प्रावसत्। ततः परं ३

दूतैराहूतः पुनरागतः। स तु यारबियामः सर्व्व इस्रायेलीयलोकाश्च
४ रिहबियामे वाक्यमेतन्निवेदयामासुः, तव तातो ऽस्मासु गुरु युगम् आ-
रोपितवान्, तव तातेन यत् कठिनं दासत्वं यच्च गुरु युगम् अस्मास्वा-
रोपितं, तद् अधुना त्वया लघुतरं क्रियतां, तथा कृते वयं त्वां सेविष्या-
५ मह इति। ततः स तान् प्रतिजगाद, दिनत्रयात् परं पुन र्ममान्तिकम्
आगच्छतेति। ततो लोकाः प्रस्थिताः।
६ अनन्तरं निजतातस्य सुलेमनो जीवनकाले ये तं पर्य्यचरन् राजा
रिहबियामस्तैः प्राचीनैः सह मन्त्रयन् तान् पप्रच्छ, युष्माकं मन्त्रणया
७ लोका इमे मया किं प्रतिगदितव्याः? ततस्ते तम् ऊचुः, भवान् यदि
लोकान् एतान् अनुगृह्य तोषयति मधुरवचनैश्च तान् प्रत्युत्तरं वदति
८ तर्हि ते सर्व्वदा भवतो दासा भविष्यन्ति। किन्तु स तैः प्राचीनै र्निवे-
दितां तां मन्त्रणां विहाय तस्य समवयस्का ये तरुणास्तं पर्य्यचरन् तैः
९ सह मन्त्रयन् तान् पप्रच्छ, युष्माकं मन्त्रणया लोका इमे ऽस्माभिः किं
प्रतिगदितव्याः? ते मां व्याहरन्, तव तातेनास्मासु यद् युगम् आरो-
१० पितं तत् त्वया लघुतरं क्रियतामिति। ततस्तस्य समवयस्कास्तरुणास्तम्
ऊचुः, तव पित्रा यद् गुरु युगम् अस्मास्वारोपितं तत् त्वया लघुतरं
क्रियतामिति वाक्यं ये भवाम् उक्तवन्तान् लोकान् प्रति भवता यद् उत्तरं
कर्त्तव्यं तदिदं। भवान् तान् वदतु मम तातस्य कटिदेशात् मम कनि-
११ ष्ठाङ्गुलिरपि स्थूलतरः। अतो मम पिता यद् गुरु युगं युष्मास्वारोपित-
वान् तद् युष्मदीययुगं मया गुरुतरं कारिष्यते, मम तातेन यूयं कशाभि
र्दण्डिताः किन्तु मया ग्रन्थियुक्ताभिस्ताडनीभि र्दण्डयिष्यध्व इति।
१२ अनन्तरं तृतीये दिने युष्माभि र्ममान्तिके पुनरागन्तव्यं राज्ञ एतस्माद्
आदेशाद् यारबियामे सर्व्वेषु लोकेषु च तृतीयदिवसे रिहबियामस्य
१३ समक्षम् आगतेषु राजा कठिनवचनै र्लोकान् आबभाषे। राजा रिह-
१४ बियामः प्राचीनानां मन्त्रणां विहाय यूनां मन्त्रणानुसारेण तान् जगाद,
मम तातेन यद् गुरु युगं युष्मास्वारोपितं तन्मया गुरुतरं कारिष्यते;
मम तातेन यूयं कशाभि र्दण्डिताः किन्तु मया ग्रन्थियुक्ताभिस्ताडनीभि
१५ र्दण्डयिष्यध्व इति। अनेन प्रकारेण राज्ञा लोकानां प्रार्थितम् अस्वी-
कृतं। यतो परमेश्वरो निवाटस्य पुत्रं यारबियामं प्रति शीलोनीयाही-
यस्य प्रमुखाद् यद् वाक्यं भाषितवान् तस्य तद्वाक्यस्य सिद्ध्यर्थम् ईश्वर
एतन्निरूपितवान्।

अनन्तरम् अस्माकं निवेदनं राज्ञा न स्वीकृतमितीस्रायेलीयैः सर्व्वै १६
र्दृष्टं। ततो लोका राजानं प्रतिजगदुः, दायूदस्माकं को ऽंश आस्ते?
यिशयस्य पुत्रे ऽस्माकं कोप्यधिकारो नास्ति। हे इस्रायेलीयवंशाः,
युष्माभिः स्वं स्वं गृहं गम्यतां, हे दायूद्, त्वं स्ववंशस्यैवाध्यक्षो भव। तत
इस्रायेलीयवंशाः स्वं स्वं वेश्म जग्मुः। यिहूदादेशस्थनगरेषु य इस्राये- १७
लीयवंशा न्यवसन् केवलं तेषां राजत्वं रिहबियामेन लब्धं। अनन्तरं १८
रिहबियामेन राज्ञा प्रेषितः करनिवहस्याधिपतिरदोरामः सर्व्वैरि-
स्रायेलीयलोकैः पाषाणाघातै र्हतः। ततो राजा रिहबियामो यिरूशा-
लमं पलायितुं त्वरितं रथं समारुरोह। इत्थम् इस्रायेलीयवंशा अद्य- १९
पर्य्यन्तं दायूद्वंशस्याधीनत्ववर्जिता बभूवुः।

---

## ११ एकादशोऽध्यायः।

१ समरं कर्त्तुं रिहबियामस्य परमेश्वरेण निषिद्धत्वं ५ नगराणां दृढीकरणं १३ तस्य सन्निधिं याजकानां लेवीयानाञ्च गमनं १८ तस्य भार्य्यापुत्रादीनां नामानि च।

अनन्तरं राज्यं यद् रिहबियामं प्रति पुन र्वर्त्तेत तत्कृत इस्रायेलीय- १
वंशैः सह योधनार्थं यिहूदावंशीया बिन्यामीनवंशीयाश्च लोका अर्थतो
ऽशीतिसहस्राधिकलक्षसङ्ख्यका अभिरुचिता योद्धारो यिरूशालमं
प्रत्यागतेन रिहबियामेन सम्मेलिताः। तत ईश्वरीयलोकं शिमयियं २
प्रति परमेश्वरस्यैतद् वाक्यम् उपतस्थौ, त्वं यिहूदादेशीयं नृपतिं सुले-
मनस्तनयं रिहबियामं यिहूदाबिन्यामीनदेशनिवासिनश्च सर्व्वान् इस्रा-
येलीयलोकान् वद, परमेश्वरो भाषते, युष्माभि र्यात्रा न कर्त्तव्या, युष्मद्- ४
भ्रातृभिः सह न योद्धव्यं, किन्तु स्वं स्वं गृहं गन्तव्यं यत एतत् मत्तो
ऽभवत्। ततस्ते परमेश्वरस्याज्ञां गृहीत्वा यारबियामस्य विरुद्धं गमनात्
परावृत्य गताः।

अनन्तरं रिहबियामो यिरूशालमे निवसन् यिहूदाजनपदे कति- ५
पयानि नगराणि सुदृढानि चक्रे। विशेषतो बैत्लेहमम् एटमं तिकोयं ६
बैत्सूरं सोखुरदुल्लमं गातं मारेशा सीफम् अदोरयिमं लाखीशम् असेका ९
सरियम् अयालोनं हिब्रोणञ्चैतानि नगराणि तेन दृढीकृतानि। यिहू- १०
दाबिन्यामीनदेशयोरेतानि सुदृढानि नगराणि। अपरं स दुर्गाणि ११
दृढीकृत्य तन्मध्ये सेनापतीन् सञ्चितानि भक्ष्यद्रव्याणि तैलानि द्राक्षा-

११ रसांश्च स्थापयाञ्चकार । अपरं यिहूदाबिन्यामीनवंशयोस्तत्पक्षीभूतयोः
स प्रतिनगरं फलकानि शूलानि च निदधे नगराणि महागाढानि
चकार च ।
१३ अपरं कृत्स्नेस्रायेलीयजनपदे ये याजका लेवियाश्चासन् ते स्वीया-
१४ धिकारात् प्रस्थायागताः । लेवीयाः स्वेषां ग्रामान् भूमीश्च विहाय यिहू-
दादेशं यिरूशालमञ्च समाजग्मुः, यतस्ते यारबियामेन तस्य तनयैश्च
१५ परमेश्वरस्योपासनातो दवयाञ्चक्रिरे । अपरं स भूतस्थानानां भूत-
गणानां स्वनिर्म्मितगोवत्सयोश्च कृते स्वतरान् याजकान् नियोजयाञ्चकार ।
१६ अपरम् इस्रायेलीयानां सर्व्ववंशानां मध्ये यावन्तो लोका इस्रायेलः प्रभुं
परमेश्वरम् ईहितुं मनोभिरुद्यमम् अकुर्व्वन् ते स्वेषां पूर्व्वपुरुषाणां
प्रभुं परमेश्वरम् उद्दिश्य बलीन् प्रदातुं तेषां (लेवीयानां) पश्चाद् आग
१७ च्छन् । ते यिहूदाया राजत्वं गाढं चक्रिरे वत्सरत्रयं यावत् सुलेमनः
सुतं रिहबियामं बलवन्तं विदधिरे च, यतस्ते त्रीन् वत्सरान् यावद्
दायूदः सुलेमनश्च वर्त्मना प्रावर्त्तन्त ।
१८ अनन्तरं रिहबियामो दायूदः पौत्रीं यिरेमोतस्य दुहितरं महलतं
१९ यिशयस्य पौत्रीम् इलीयावस्य दुहितरम् अबीहयिलञ्च व्यवाह । तस्या
२० गर्भे यियूशः शिमरियः सहमश्च त्रयस्ते सुता अजायन्त । अतः परं तेनाब-
शालोमस्य दुहितरि माखायाम् उदूढायां तस्या गर्भे ऽबियो ऽत्तयः
२१ सीषः शिलोमीतश्चाजायन्त । रिहबियामः स्वकीयानां निखिलजायानाम्
उपजायानाञ्च मध्ये ऽबशालोमस्य दुहितरि माखायाम् अधिकम् अप्री-
यत, किञ्च तस्याष्टादश जायाः षष्टिरुपजायाश्चासन् ताभ्यो ऽष्टाविंशतिः
२२ पुत्राः षष्टिः पुत्र्यश्च जज्ञिरे । अनन्तरं रिहबियामो माखाया गर्भजातम्
अबियं मुख्यं कृत्वा भ्रातृनिवहस्य मध्ये ऽधिपं चकार यस्मात् स तमेव
२३ राजानं कर्त्तुं मतिमकरोत् । स बुद्धिं प्रकाशयन् यिहूदाबिन्यामीनजन-
पदयोः सर्व्वेषु स्थानेषु प्राचीरवेष्टितेषु नगरेषु च निजतनयान् नियो-
जयाञ्चकार तेभ्यः प्रभूतानि भक्ष्यद्रव्याणि ददौ तेषां कृते बह्वीः कन्या
अन्विषेष च ।

---

## १२ द्वादशोऽध्यायः ।

१ परमेश्वरत्यागित्वाद् रिहबियामस्य दण्डनं ४ पातकस्य कृते ऽनुतापकरणकारणाद् दण्डस्य ह्रासत्वं १२ तस्य राजत्वनिधनयोः कथनञ्च ।

अनन्तरं रिहवियामेन राजत्वं स्थिरीकृत्य पराक्रमे लब्धे स तेन समं १
निखिलेस्रायेलीयलोकाश्च परमेश्वरस्य व्यवस्थां पर्य्यत्यजन्। अपरं ते पर- २
मेश्वरस्य विरुद्धम् अपराधं कृतवन्त एतत्कारणाद् राज्ञो रिहविया-
मस्याधिकारस्य पञ्चमे वत्सरे मिस्रीयः शीशको नरपति र्यिरूशालमस्य
विरुद्धम् आजगाम। तस्य द्वादश शतानि रथाः षष्टिः सहस्राणि हया- ३
रोहिणो ऽसङ्ख्यका लोकाश्चासन् यतो लूबीयाः सुक्कीयाः कूशीयाश्च
लोकास्तेन सह मिसरदेशाद् आगच्छन्। अपरं स यिहूदादेशस्य ४
प्राचीरवेष्टितानि नगराणि वशे कृत्वा यिरूशालमम् आजगाम।

तस्मिन् समये रिहवियामस्य सन्निधिं शीशकाद् भयेन यिरूशालमे ५
समागतानां यिहूदावंशस्याधिपानां सन्निधिश्च भविष्यद्वादी शिमयिय
आगत्य तान् बभाषे, परमेश्वर इति वाचं वदति यूयं मां पर्य्यत्यजत
तत्कारणात् मयापि यूयं शीशकस्य करे पर्य्यत्यज्यध्वं। तत इस्रायेलीया ६
अधिपा नृपश्च नम्रीभूय कथयामासुः परमेश्वरो न्यायकारी। तदानीं ७
परमेश्वरेण तेषां नम्रतायां दृष्टायां शिमयियस्य समीपं परमेश्वरस्य
वाणियम् उपतस्थौ, ते नम्रा अभवन् एतत्कारणात् मया न विनाशयि-
ष्यन्ते किन्तु स्वल्पकालात् परम् उद्धारिष्यन्ते शीशकस्य करेण यिरूशाल-
मस्योपरि मम कोपः पूर्णत्वेन न वर्षिष्यति। किन्तु मम परिचर्य्या भिन्न- ८
देशीयराज्यानां परिचर्य्या च यत् ते बुध्येत तत्कृते ते तस्य परिचारका
भविष्यन्ति।

अपरं मिसरदेशीयनृपतिः शीशको यिरूशालमस्य विरुद्धम् आगत्य
परमेश्वरीयमन्दिरस्य धनानि राजपुर्य्याश्च धनानि जहार, सर्व्वाण्येव
तेन हृतानि। सुलेमना निर्म्मितानि कनकमयानि फलकान्यपि तेन
हृतानि। अनन्तरं तेषां विनिमयेन पित्तलीयफलकानि रिहवियामेन १०
राज्ञा निर्म्मापितानि राजपूर्य्या द्वारपालकानां पदातीनाम् अध्यक्षाणां
करेषु समर्पितानि च। ततो यतिवारं राजा परमेश्वरीयमन्दिरम् आग- ११
च्छत्, ततिवारं पदातय आगत्य तान्युदधारयन् अनन्तरं पदातिशा-
लायां पुन र्न्यदधुः। रिहवियामे नम्रे जाते परमेश्वरस्य कोपस्तस्मात् १२
निवृत्य तस्य सर्व्वनाशजनको न बभूव। यिहूदायामपि केषाञ्चित्
सद्भावो ऽविद्यत।

अपरं राजा रिहवियामो यिरूशालमे पराक्रमी भवन् राजत्वं १३
चकार। राजत्वप्राप्तिकाले रिहवियामस्य वय एकचत्वारिंशद्वत्सराः।

परमेश्वरो निजनामधेयं स्थापयितुम् इस्रायेलीयानां सर्व्ववंशानां मध्ये
यन्नगरं वरीतवान् तस्मिन् स सप्तदश वत्सरान् यावद् राजत्वं चकार।
१४ तस्य जनन्या अम्मोनीया नयमेति नामासीत्। स कदाचारम् अकरोत्
१५ यतः स परमेश्वरं गवेषयितुं स्वमनो न निदधे। एतस्य रिहबियाम
स्याद्यन्ताः सकलाः क्रियाः श्मियियस्य भविष्यद्वादिन इद्दोः प्रदर्शकस्य
च पुरावृत्तपुस्तके लिखिताः किं न विद्यन्ते? रिहबियामयारबियामयो
१६ र्मध्ये नित्यं युद्धमासीत्। अनन्तरं रिहबियामः स्वपितृगणा इव महानिद्रां
गत्वा दायूद्नगरे श्मशाने स्थापितः। अनन्तरं तस्य तनयो ऽबियस्तस्य
पदेन राजत्वं प्राप्तः।

---

# १३ त्रयोदशोऽध्यायः।

१ यारबियामेन समम् अबियस्य योधनं ४ यारबियामं प्रत्यबियस्य कथनं १३ परमेश्वरे विश्वासाद् अबियस्य जयः २१ अबियस्य भार्य्यापुत्त्रादीनां कथनं।

१ यारबियामस्य नृपस्याष्टादशे राजत्ववत्सरे ऽबियो यिहूदाजनपदे
२ राजा बभूव। तेन त्रीन् वत्सरान् यावद् यिरूशालमे राजत्वम् अक्रि-
यत, गिबियानिवासिन ऊरीयेलस्य मीखायानामिका दुहिता तस्य
३ मातासीत्। अबिययारबियामयो र्मध्ये युद्धम् आसीत्। अबियश्चतुर्लक्षै-
रभिरुचितै र्बलवद्भि र्योद्धृभिः समरसज्जां चकार, किन्तु यारबियामो
ऽष्टभि र्लक्षैरभिरुचितै र्बलवद्भि र्योद्धृभिस्तस्य विरुद्धं रणसज्जां चकार।
४ अपरम् अबिय इफ्रयिमपर्व्वतस्थसिमारयिमाख्यस्य शिलोच्चयस्योपरि
तिष्ठन् व्याजहार हे यारबियाम हे निखिलेस्रायेलीयलोकाः, मदीय-
५ वचनं निशामयत। इस्रायेलः प्रभुः परमेश्वर इस्रायेलीयराजत्वपदं
सदाकालार्थं दायूदे दत्तवान् अर्थाद् अमोघनियमेन तस्मै तस्य वंशाय
६ च दत्तवान् इति युष्माकं परिज्ञानं किमुचितं नहि? तथापि दायूदः
सुतस्य सुलेमन एकः किङ्करो यो निबाटस्य तनयो यारबियामः स
७ उत्थाय निजप्रभोरधीनताम् अस्वीकृतवान्। अपरं चञ्चला दुष्टाश्च लोका-
स्तदीयपक्षे मिलित्वा सुलेमनः सुतस्य रिहबियामस्य विरुद्धं बलवन्तो
बभूवुः। तदानीं रिहबियामस्तरुणः कोमलबुद्धिश्चासीत् तेषां विरुद्धं
८ कठोरो नाभवत्। इदानीं यूयमपि दायूदो वंशस्य हस्तगतं परमेश्वरीय-
राज्यं पराजेतुं मतिं कुरुथ। यूयं बहव आध्वे यौ गोवत्सौ यारबियामेन

युष्माकं देवतार्थं निर्म्मितौ तावपि युष्माभिः सह विद्येते। युष्माभिः पर- ९
मेश्वरीययाजकान् अर्थतो हारोणवंशान् लेवीयांश्च दवयित्वा किम् इतर-
देशस्थजातिभिरिव स्वेषां कृते याजका न नियुक्ताः? यः कश्चित् तरुणम्
एकं वृषभं सप्त मेषांश्च बलित्वेन दत्त्वा पवित्रीकृतो भवितुम् आग-
च्छति स तयोरनीश्वरयो याजको भवति। किन्तु परमेश्वर एवास्माकम् १०
ईश्वरोऽस्ति, वयं तं न पर्य्यत्यजाम, किञ्च परमेश्वरस्य परिचर्य्याकारिणो
हारोणवंशीया याजका लेवीयाश्च निजनिजकार्य्यम् अनुतिष्ठन्ति, परमे- ११
श्वरमुद्दिश्य प्रतिप्रातः प्रतिसन्ध्यञ्च होमार्थकबलिदानं कुर्व्वन्ति सुगन्धिधू-
पान् ज्वालयन्ति च, किञ्च निर्म्मलदार्व्वासनोपरि दर्शनीयपूपान् निदधते
अपरं प्रतिसन्ध्याकालं ज्वालयितुं दीपैः समं कनकमयदीपवृक्षम् आसा-
दयन्ति, यतो वयं स्वेषां प्रभुना परमेश्वरेण निरूपितं कार्य्यं कुर्म्मः, किन्तु
यूयं तं पर्य्यत्यजत। पश्यतास्माकं सहायो मूर्द्धि ईश्वरस्ततः परं तस्य १२
याजका युष्माकं विरुद्धं घोरनादं कर्त्तुं शब्दकारिण्यस्तूर्य्यश्च विद्यन्ते,
तस्माद् हे इस्रायेलीयलोकाः स्वेषां पूर्व्वपुरुषाणां प्रभोः परमेश्वरस्य
विरुद्धं समरं मा कुरुत यतस्तस्मिन् कृते यूयं कृतार्था न भविष्यथ।

अपरं यारवियाम एकं प्रच्छन्नं सैन्यसंघं तेषां पश्चात् प्रेषयामास, १३
तस्य लोका यिहूदावंशीयानाम् अग्र आसन् प्रच्छन्नसङ्घश्च पश्चादासीत्।
अनन्तरं यिहूदाया लोका मुखं परावृत्य स्वेषाम् अग्रे पश्चाच्च समरं १४
विलोक्य परमेश्वरस्य सन्निधौ प्रार्थनां चक्रुः याजकाश्च तूरीं वादयाञ्चक्रुः।
ततो यिहूदाया लोकाः सिंहनादम् अकुर्व्वन् तेषु सिंहनादं कुर्व्वत्स्वीश्वरो १५
ऽवियस्य यिहूदाया लोकानाञ्च सम्मुखे यारवियामं निखिलस्रायेलीय-
वंशाश्च समाजघान। तत इस्रायेलीयवंशीयेषु यिहूदाया लोकानाम् १६
अग्रात् पलायमानेष्वीश्वरस्तान् तेषां करेषु समर्पयामास। तस्माद् १७
अवियस्तस्य लोकाश्च महाहननेन तान् आजघ्नुः। तत इस्रायेलीयानां
पञ्चलक्षाण्यभिरुचिता मनुजा हताः। तस्मिन् समय इस्रायेलीयवंशीया १८
अवनता यिहूदावंशीयास्तु पराक्रमिणो बभूवुः, यतस्ते स्वेषां पितृलो-
कानां प्रभौ परमेश्वरे प्रत्याशाञ्चक्रुः। अनन्तरम् अवियो यारवियामस्य १९
पश्चाद् धावन् तस्य कतिपयनगराण्यर्थतो बैथेलं तदीयग्रामांश्च यिशानां
तदीयग्रामांश्च इफ्रोणं तदीयग्रामांश्च वशीचकार। एतस्याबियस्य जीव- २०
त्काले यारवियामः पुन र्बलवान् न बभूव, शेषे स परमेश्वरेणाहतो
निधनं लेभे।

२१ अनन्तरम् अबिय उत्तरोत्तरं पराक्रमी भवन् चतुर्दश जाया व्युवाह
२२ ततस्तस्य द्वाविंशतिः सुताः षोडश दुहितरश्च जज्ञिरे। एतस्याबियस्या-
वशिष्टाः क्रियास्तस्य चरित्रम् उपदेशकथाश्च भविष्यद्वादिन इद्दो ग्रंथे
लिखितानि किं न विद्यन्ते?

---

## १४ चतुर्दशोऽध्यायः।

१ आसाः सुरपूजानिवारणं ६ दुर्गैः सैन्यैश्च राजत्वस्थिरीकरणं ९ परमेश्वरस्य साहाय्येन रिपूणां पराजयः।

१ अनन्तरम् अबियः स्वपितृगण इव महानिद्रां गतो लोकै र्दायूद्नगरे
श्मशाने स्थापितश्च, तस्य पुत्र आसास्तु तस्य पदे राजा बभूव। अपरं तस्य
२ राजत्वकाले जनपदो दश वत्सरान् यावत् निर्व्विरोधो ऽतिष्ठत्। स
आसा निजप्रभोः परमेश्वरस्य साक्षाद् उत्तमं सरलञ्च कर्म्म समाचरत्।
३ स इतरदेवानां वेदी र्भंगुस्थानानि च दवयाञ्चकार प्रतिमूर्त्ती र्बभञ्ज
४ चैत्यवृक्षान् चिच्छेद च। स यिहूदावंशं निजपितृलोकानां प्रभोः पर-
५ मेश्वरस्यान्वेषणं तस्य व्यवस्थाविधीनां पालनञ्चाज्ञापयामास। अपरं स
यिहूदाया निखिलनगराणां मध्याद् भंगुस्थानान्यादित्यप्रतिमूर्त्तीश्च
दवयाञ्चकार तेन तस्य साक्षाद् देशो निर्व्विरोधो बभूव।
६ परमेश्वरेण तस्मै शान्तौ दत्तायां देशः स्थिर आसीत् तस्मिन् समये
समरो नाभवत् तस्मात् स यिहूदादेशे प्राचीरवेष्टितानि नगराणि नि-
७ र्म्मापयाञ्चकार। अपरं स यिहूदावंशम् अवोचत्, वयम् एतानि नग-
राणि निर्म्मीय चतुर्दिक्षु प्राकारान् दुर्गाणि कपाटान्यर्गलानि च निर्म्मा-
पयामः, यतो वयं स्वेषां प्रभोः परमेश्वरस्यान्वेषणं कृतवन्तस्तस्मात् जन-
पदो ऽद्याप्यस्माकं वशे तिष्ठति, अस्माभिस्तस्यान्वेषणं कृतं तत्कारणात् सो
ऽस्मभ्यं चतुर्दिक्षु शान्तिम् अददात्। अपरं ते नगराणि निर्म्माय कृतार्था
८ बभूवुः। तस्य आसाः सैन्यमध्ये यिहूदावंशस्य त्रीणि लक्षाणि फलक-
शूलधारिणो मानवाः, बिन्यामीनवंशस्य चाशीतिसहस्राधिके द्वे लक्षे
चर्म्मचापधारिणो मानवा आसन् सर्व्व इमे वीर्य्यवन्तो नराः।
९ अनन्तरं कूशदेशीयः सेरहस्तेषां विरुद्धं दशलक्षाणि सैन्यानि त्रीणि
१० शतानि स्यन्दनांश्च सङ्गिनः कृत्वागत्य मारेशायाम् उपस्थितः। तत
आसा तस्य विरुद्धं युद्धयात्रायां कृतायां तौ मारेशाया निकटस्थायां

सिफाथाख्योपत्यकायां व्यूहरचनां चक्रतुः। अपरम् आसा निजप्रभोः ११
परमेश्वरस्य सन्निधौ निवेदयन् जगाद, हे परमेश्वर बलवतो बलही-
नस्य वा साहाय्यकरणे तव कोऽपि प्रभेदो नास्ति। हे अस्माकं प्रभो
परमेश्वर, अस्माकं साहाय्यं कुरु; वयं त्वयि प्रत्याशां कुर्व्वन्तस्तव नाम
गृहीत्वा जनताया एतस्याः प्रतिकूलम् आगच्छाम, त्वमेवास्माकं प्रभुः
परमेश्वरो ऽसि, तव विरुद्धं मर्त्त्याः पराक्रमिणो न भवेयुः। ततः १२
परमेश्वर आसा यिहूदावंशस्य च सम्मुखे तान् कूशीयान् आजघान,
कूशीयाश्च पलायनं चक्रुः। अपरम् आसास्तस्य सङ्गिनो लोकाश्च १३
गिरारं यावत् तेषां पश्चाद्धावन्तो वव्रजुः, ततः कूशीयानाम् एतादृशो
निपातो ऽभवद् यत् ते पुन र्जीवितुं नाशक्नुवन्, यतो हेतोस्ते परमे-
श्वरस्य तदीयसैन्यानाञ्च सम्मुखे भग्नाः। अपरं तेषां बहूनि द्रव्याणि
लुण्ठितानि। अनेन प्रकारेण निखिलानां मानवानां परमेश्वरात् १४
साध्वसे संजाते ते गिरारस्य चतुर्दिक्स्थानि नगराणि सर्व्वाण्याहत्य
लुण्ठयामासुः। तत्र स्थाने प्रभूतं लोठनं बभूव। अपरं ते तेषां पशूनां १५
शाला अपि विनाश्य प्रभूतान् मेषान् महाङ्गांश्चापहृत्य यिरूशालमं
प्रत्याजग्मुः।

---

## १५ पञ्चदशोऽध्यायः।

१ प्रदर्शकस्याजरियस्य वाक्यं ८ तस्य वचनकारणात् मनुजै र्नियमस्य शपथस्य च करणं १६ सुरपूजनकरणकारणाद् राज्ञ्याः पदच्युतिः १८ निवेदितवस्तूनां मन्दिर आनयनञ्च।

अनन्तरम् ओदेदस्य तनयो ऽसरिय ईश्वरस्यात्मनाविष्टो भूत्वा आसां १
साक्षात् कर्त्तुं वहिर्भूय तं बभाषे, हे आसा हे यिहूदाविन्यामीनवंशयोः २
सर्व्वे लोकाः, यूयं मम वचनं निशामयत, यूयं यावत् परमेश्वरस्य सन्निधौ
स्थास्यथ, तावत् स युष्माकं सहायो भविष्यति, अपरं यदि तं गवेषयध्वे
तर्हि स युष्माभिः प्राप्यो भविष्यति किन्तु यदि युष्माभिः स त्यज्येत तर्हि
तेनापि यूयं त्यक्ष्यध्वे। पूर्व्वम् इस्रायेलवंशा बहुकालं सत्येश्वरहीनाः शि- ३
क्षकयाजकहीना व्यवस्थाहीनाश्च स्थित्वा स्वदुर्दशासमये यदेस्रायेलः प्रभुं ४
परमेश्वरं प्रति परावृत्य तम् अन्वैच्छन्, तदा स तैः प्रापे। तस्मिन् ५
समय वहिरभ्यन्तरञ्च गमनागमनकारिणां किञ्चन मङ्गलं नाभवत्
किञ्च सर्व्वदेशवासिनां बहुविधः क्षोभो ऽजायत। एका जातिरपरां ६

आतिम् एकञ्च नगरम् अन्यत् नगरं व्यनाशयत्। यत ईश्वरः सर्व्ववि-
७ धविपत्त्या तान् अक्लिश्नात्। किन्त्विदानीं यूयं साहसिनो भवत युष्माकं
हस्ता दुर्ब्बला न भवन्तु यतो युष्माकं कार्य्याणि सफलानि सन्ति।
८ भविष्यद्वादिन ओदेदस्यैतानि भविष्यद्वाक्यान्यासा निशम्य साहसं
लब्ध्वा यिहूदाबिन्यामीनवंशयो र्निखिलदेशाद् इफ्रयिमपर्व्वते च यानि
नगराणि वशीकृतवान् तेभ्यो घृणार्हाः प्रतिमूर्त्ती र्दूरयाञ्चकार, परमेश्व-
रीयालिन्दस्य सम्मुखस्थायाः परमेश्वरीयाया वेद्या जीर्णोद्धारं कार-
९ यामास च। अनन्तरं स यिहूदाबिन्यामीनवंशयोः सर्व्वान् मनुजान्
इफ्रयिममिनशिशिमियोनवंशेभ्यः समागतांश्च तेषां प्रतिवासिनः सम्मे-
लयामास, यतस्तस्य प्रभुः परमेश्वरस्तस्य सहायो विद्यत इति विलोक्य
१० बहवो लोका इस्रायेल्देशाद् आगत्य तस्य पक्षा बभूवुः। आसा राज-
११ त्वस्य पञ्चदशवत्सरस्य तृतीये मासे ते यिरूशालमे समभिलन्। अपरं
तैरानीतलोठितद्रव्याणां मध्यात् सप्तशतानि वृषभाः सप्तसहस्राणि
१२ मेषाश्च परमेश्वरमुद्दिश्य तस्मिन् समये बलिरूपेण ददिरे। अपरं तेषां
निखिलान्तःकरणै र्निखिलमनोभिश्च तेषां पितृलोकानां परिहर्टं पर-
१३ मेश्वरं गवेषयितुं तै र्नियमो ऽकारि। अपरं महान् क्षुद्रो वा पुरुषो
नारी वा भवेत् येन केनचिद् इस्रायेलः प्रभुः परमेश्वरो न गवेषयिष्यते
१४ स हन्तव्य एष नियमो ऽकारि। त उच्चैःस्वरेण सिंहनादं कुर्व्वन्तस्तूरीः
१५ शृङ्गाणि च वादयन्तः परमेश्वरस्य साक्षात् शपथं चक्रिरे। एतस्मिन्
शपथे यिहूदाः सकलमनुजा आनन्दं चक्रिरे यतः सर्व्वान्तःकरणैः समं
शपथं कृत्वा सम्पूर्णाकाङ्क्षया च तं गवेषयित्वा स तैः प्रापे। अपरं पर-
मेश्वरश्चतुर्दिक्षु तेभ्यो विश्रामं ददिवान्।
१६ अपरम् आसा नृपस्य पितामही माखापि तेन राज्ञीपदाद् भ्रंशिता,
यतः सा चैत्यवृक्षस्य मूले प्रतिमूर्त्तिमेकां स्थापयाञ्चकार, अपरम् आसा-
स्तस्याः प्रतिमूर्त्तिम् उच्छिद्य चूर्णयामास किद्रोणतटिन्यास्तटे दाहया-
१७ मास च। भग्नस्थानानीस्रायेलो मध्यात् न दूरीकृतानि, तथाप्यासा
यावज्जीवनं सरलमना आसीत्।
१८ अपरं तस्य जनको यानि पावितवान्, स स्वयञ्च यानि पावितवान्
तानि रजतकनकानि भाजनानि चेश्वरस्य मन्दिरे तेन निहितानि।
१९ एतस्यासा राज्ञो ऽधिकारस्य पञ्चत्रिंशं वत्सरं यावत् समरो नाभवत्।

# १६ षोडशोऽध्यायः।

१ अरामीयाणाम् उपकाराद् आसा राज्ञा बाशा भूपतेः पराजयः ७ तिरस्कारिप्रदर्शकस्य तेन कारागेहे निधानं ११ पादरोगसमये तेनेश्वरं विहाय वैद्यानां गवेषणं १२ तस्य निधनं श्मशाने स्थापनञ्च।

अनन्तरम् आसा राज्ञो ऽधिकारस्य षट्त्रिंशवत्सरे इस्रायेलीयो नर- १
पति बाशा यिहूदा विरुद्धं गत्वा, कश्चिन्निर्गत्य यिहूदादेशीयभूपतेरा-
साः पक्षीयो भवितुं यन्न पारयेत् तदर्थं रामतनगरं दृढयितुम् उपच-
क्रमे। तत आसाः परमेश्वरीयमन्दिरस्य राजनिवेशनस्य च भाण्डागारेभ्यो २
रजतकनकानि बहिष्कृत्य दम्मेषकनिवासिनो ऽरामीयनरपते र्विन-
हददस्य सन्निधिं प्रेषयित्वा जगाद, त्वया सह मम त्वत्पित्रा च सह ३
मत्पितु र्नियमो विद्यते, पश्याहं तव समीपं रजतहेमानि प्रहिणोमि,
अत इस्रायेलीयनृपति बाशा यन्मत्तो ऽपसरेत् तदर्थं तेन सह तव
यो नियम आस्ते स त्वयागत्य भज्यतां। ततो बिनहदद आसाराजस्य ४
वाक्यं गृहीत्वा निजबलानाम् अध्यक्षान् इस्रायेलीयदेशस्थनगराणां वि-
रुद्धं प्रेषयामास, ते इय्योनं दानम् आबेलमयिमं नप्तालिदेशस्थवित्तनग-
राणि च वशीचक्रिरे। वार्त्तामिमां निशम्य बाशा रामतनिर्म्माणात् निवृत्य ५
स्वराष्ट्रे तस्थौ। अनन्तरम् आसा नरपति र्यिहूदादेशीयान् सर्व्वान् ६
सङ्गिनश्चकार, ततो बाशा यत् रामतनगरं निरमापयत् तस्य पाषाण-
काष्ठेषु तैरपहृतेषु स तद्द्वारा गेबां मिस्पाञ्च निर्म्मापयामास।

तस्मिन् समये प्रदर्शको हनानि र्यिहूदादेशस्य राज्ञ आसाः सन्निधिम्
आगत्य कथयामास त्वं निजप्रभौ परमेश्वरे प्रत्याशाम् अकुर्व्वन् अरामी-
यनरपतौ प्रत्याशामकरोः तत्कारणाद् अरामीयनरपते र्बलानि तव
हस्ताद् उद्धारं प्रापुः। कूशीया लूबीयाश्च मनुजा रथानाम् अश्वारो- ८
हिणाञ्चातीव बाहुल्यात् किं महासैन्यानि नासन्? तथापि त्वया परमे-
श्वरे प्रत्याशाकरणात् स तान् तव हस्ते समर्पयाञ्चकार। यतः परमेश्वरं ९
प्रति सरलान्तःकरणाम् मानवानाम् बलवतः कर्त्तुं तस्य दृष्टि र्वसुन्धरायाः
सर्व्वस्थानं पर्य्यटति। अत्र त्वयाज्ञानस्य कर्म्म कृतं यत इतः परं त्वां प्रति
युद्धानि समुपस्थास्यन्ति। तदानीम् आसास्तस्मै प्रदर्शकाय प्रकुप्य तं १०
कारागृहे स्थापयाञ्चकार यतः स तद्वचनात् कोपयुक्तो बभूव। अपरं
तस्मिन् समये आसाः प्रजानाम् अपरान् कतिपयलोकान् प्रति दौ-
रात्म्यं चचार।

११ एतस्यासा आद्यन्तं कर्म्म यिहूदादेशीयानाम् इस्रायेल्देशीयानाञ्च
१२ नरपतीनां पुरावृत्तपुस्तके लिखितं विद्यते । एतस्यासा अधिकारस्योन-
चत्वारिंशवत्सरे तस्य पादरोगे जाते ऽतीव पीडा बभूव तथापि स
रोगस्य समये ऽपि परमेश्वरस्य गवेषणम् अकृत्वा वैद्यानां गवेषणं चकार ।
१३ अनन्तरम् आसा स्वपितृगणेन सह महानिद्रां गतः । राज्याधिका-
१४ रस्यैकचत्वारिंशवत्सरे तस्य प्राणवियोगो बभूव । ततः स दायूदो नगरे
स्वार्थं यं श्मशानागारम् अखनत् तन्मध्ये मनुजास्तं निदधिरे । तत्र गन्ध-
वणिजां क्रियया कृतैस्तैलादिसुगन्धिद्रव्यैः परिपूर्णायां शय्यायां तं शाय-
यामासुस्तस्य कृते महाधूपदाहं चक्रुश्च ।

---

## १७ सप्तदशोऽध्यायः ।

१ यिहोशाफटस्य सुराजत्वं ७ यिहूदीयमनुजानां शिक्षार्थं लेवीयानां याजकानाञ्च प्रेषणं १० अपरदेशलोकानाम् उपायनदानं १२ तस्योत्कृष्टसेनापतीनां सैन्यानाञ्च कथनं ।

१ अनन्तरम् आसाः पदेन तस्य सुतो यिहोशाफटो राजत्वं प्राप्येस्राये-
२ लीयानां विरुद्धम् आत्मानं बलवन्तं चकार । स यिहूदादेशस्य सर्व्वेषु
प्राकारवेष्टितनगरेषु सैन्यानि स्थापयाञ्चकार, अपरं यिहूदाजनपदे
तस्य जनकेनासा वशीकृतेष्विफ्रयिमदेशस्थनगरेषु च सेनिवासान् अस्था-
३ पयत् । अपरं परमेश्वरो यिहोशाफटस्य सहायो बभूव, यतः स निज-
पूर्व्वपुरुषस्य दायूदः पुरातनमार्गेऽचरत् । स बाल्देवान् न गवेषयाञ्च-
४ कार, किन्तु निजपूर्व्वपुरुषस्येश्वरं गवेषयन् तस्य विधीन् समाचरत्,
५ स इस्रायेलीयलोकानां क्रियानुरूपम् आचारं न चकार । तस्मात्
परमेश्वरस्तस्य करे राजत्वं दृढयाञ्चकार, तेन यिहूदादेशीयाः सर्व्वे
यिहोशाफटायोपायनम् अददुः । इत्थं तस्यैश्वर्य्यं गौरवञ्च भूयं ववृधे ।
६ अपरं परमेश्वरीयवर्त्मनि तस्यान्तःकरणम् आसज्यत ततो ऽपि स
उच्चस्थानानि चैश्वरकुञ्जांश्च यिहूदादेशमध्याद् दूरयाञ्चकार ।
७ अनन्तरं तस्य राजत्वस्य तृतीयवत्सरे स यिहूदादेशस्थनगरेषूपदेष्टुं
बिनहयिल ओबदियः सिखरियो निथनेलो मीखायश्चैतेषां स्वकीयलो-
८ काध्यक्षाणां समीपं निदेशं प्रेषयाञ्चकार । अपरं शिमयियो निथनियः
सिबदियो ऽसाहेलः शिमीरामोतो यिहोनाथनो ऽदोनियः टोबियः
टोबादोनियश्चैते लेवीयास्तेषां सङ्गिनाविलीशामायिहोरामौ याजकौ

च तेषां सहाया बभूवुः। ततस्ते यिहूदावंशम् उपादिशन्। परमेश्वरस्य ९
व्यवस्थापुस्तकम् आदाय ते यिहूदादेशस्य सर्व्वनगराणि पर्य्यटन्तो मनु-
जान् उपादिशन्।

ततो यिहूदादेशस्य चतुर्दिक्स्थराष्ट्रनिवासिनः परमेश्वरेण त्रासिता १०
यिहोशाफटेन सार्कं समरं न चक्रुः। परन्तु पिलेष्टीयानां कतिपयलोका ११
यिहोशाफटस्य सन्निधिम् उपायनं राजकरार्थकं रजतञ्चानिन्युः। आर-
बीयाश्च तस्य सन्निधिं पशुनिवहम् अर्थतः सप्तशताधिकसप्तसहस्राणि
मेषान् सप्तशताधिकसप्तसहस्राणि छागांश्चानिन्युः।

अनेन प्रकारेण यिहोशाफटो नित्यं वर्द्धमानो महामहिमा भवन् १२
यिहूदादेशे दुर्गाणि भाण्डागारार्थनगराणि च निरमापयत्। अपरं १३
यिहूदादेशस्थनगरेषु तस्य प्रभूता सम्पद आसन् यिरूशालमे च तस्य
योद्धारो वीरमनुजाश्चातिष्ठन्। तेषां पितृवंशानुसारेण तेषामियं १४
सङ्ख्या, यिहूदावंशीयसहस्रपतीनां मध्ये मुख्यो वाहिनीपतिरद्नः, तेन
सार्कं त्रीणि लक्षाणि महाबलवन्तो योद्धार आसन्। तस्य न्यग् यिहो- १५
हाननो वाहिनीपतिरासीत् तेन साकम् अशीतिसहस्राधिके द्वे लक्षे
मनुजा आसन्। तस्य न्यग् आत्मदानेन परमेश्वराय निवेदितः सिख्रेः १६
सुतो ऽमसियो वाहिनीपतिरासीत् तेन सार्कं द्वे लक्षे महाबलवन्तो
मनुजा आसन्। विन्यामीनवंशमध्य इलीयादानामको महाबलवान् १७
एको वाहिनीपतिरासीत् तेन सार्कं द्वे लक्षे धनुःफलकधरा मनुजा
आसन्। तस्य न्यग् यिहोषावदो वाहिनीपतिरासीत् तेन सार्कं सम- १८
रार्थं सुसज्जा अशीतिसहस्राधिकं लक्षं मनुजा आसन्। क्षितिपतिः १९
सर्व्वयिहूदादेशस्य प्राकारवेष्टितेषु नगरेषु यान् निदधे तान् विना
लोका इमे क्षितिपतेः परिचर्य्याम् अकुर्व्वन्।

---

## १८ अष्टादशोऽध्यायः।

१ आहाबेन सह यिहोशाफटस्य मैत्र्यं ९ तेन सार्कं रामोतगिलियदे गमनं मीखायस्य
भविष्यद्वादिनः कारायां निधानं २८ समरे आहाबस्य पतनं।

अपरं यिहोशाफटो महैश्वर्य्यवान् महामहिमा च भूत्वाहाबेन सार्कं १
मैत्री चकार।

कतिपयवत्सरेभ्यः परं स शोमिरोणे आहाबस्य सन्निधिं जगाम, २

तत आहावस्तस्य तत्सङ्गिनां मनुष्याणाञ्च निमित्तं बहून् मेषान् वृषभांश्च मारयाञ्चकार रामोतगिलियदं युद्धयात्रायाञ्च तं प्रवर्त्तयामास च।
३ इस्रायेलीयः क्षितिपतिराहाबो यिहूदादेशीयनरपतिं यिहोशाफटं पप्रच्छ, त्वं किं मया समं रामोतगिलियदं गमिष्यसि? ततः स आजगाद त्वम् अहञ्च समानौ तव लोका मम लोकाश्च समानास्ततो वयं समरे
४ तव सहाया भविष्यामः। अनन्तरं यिहोशाफट इस्रायेलीयं महीपतिम् उवाच, विनये ऽहम् एतस्मिन् परमेश्वरस्योक्तिः का साद्य त्वया
५ पृच्छ्यतां। तत इस्रायेलीयो राजा चतुःशतानि भविष्यद्वादिनः संगृह्य पप्रच्छ युद्धार्थं रामोतगिलियदं किम् आवाभ्यां गन्तव्यं किं वा ततो मया निवर्त्तितव्यं? तदानीं त ऊचुः, भवता गम्यताम् ईश्वरो नृपते र्हस्ते तत्
६ समर्पयिष्यति। अनन्तरं यिहोशाफटः पप्रच्छ यो ऽस्माभिः प्रष्टुं शक्यते
७ तादृशः परमेश्वरस्यापरः को ऽपि भविष्यद्वादी किमत्र न विद्यते? तदानीम् इस्रायेलीयो नृपो यिहोशाफटं जगाद वयं येन परमेश्वरं प्रष्टुं पारयामस्तादृशो ऽपर एको जनो विद्यते, किन्त्वहं तम् ऋतीये यतः स मामभ्यशुभवचनं विना शुभवचनं कदाच न वदति, यिम्लस्य पुत्रो मीखाय इति तस्य नाम। ततो यिहोशाफटो व्याजहार, नरपतिनैता-
८ दृशं वाक्यं न गद्यतां। तदानीम् इस्रायेलीयो नृपः अग्रचम्वाध्यक्षमेकम्
९ आहूय समादिदेश यिम्लस्य तनयं मीखायं त्वरितम् आनय। अपरम् इस्रायेलीयो राजा यिहूदादेशीयो यिहोशाफटो राजा च राजकीयपरिच्छदभूषितौ शोमिरोणस्य पुरद्वारनिकटस्थे समानस्थाने स्वसिंहासनयोरुपविष्टावास्तां ते सर्व्वे भविष्यद्वादिनश्च तयोः सम्मुखे भविष्यद्वचनम्
१० अकथयन्। विशेषतः खिनानाख्यस्य सुतः सिदिकियो लोहमये शृङ्गे निर्म्माय कथयामास, परमेश्वर इमां वार्त्तां वदति, एताभ्यां त्वम् अरा-
११ मीयान् निःशेषं यावद् आहनिष्यसि। अपरे सर्व्वे भविष्यद्वादिनोऽपि तथैव भविष्यद्वाक्यमाकथयन् त्वं रामोतगिलियदं गत्वा कृतार्थो भव
१२ परमेश्वरेण तत् नृपतेः करगतं कारिष्यते। अपरं यो दूतो मीखायम् आह्वातुं गतवान स तं बभाषे पश्य सर्व्वे भविष्यद्वादिन एको मुख इव नरपतेः शुभवचनं वदन्ति, अतो मया विनीयते त्वमपि तेषामेकजन इव
१३ वचो ब्रूहि शुभवाक्यं भाषस्व च। ततो मीखायो ऽवदत्, अहं परमेश्वरस्यामरत्वस्य शपथं कृत्वा वदामि, मदीयेश्वरो मां यद् आदेक्ष्यति, तदेव
१४ मया कथयिष्यते। अनन्तरं तस्मिन् नरपतेः सविधमागते नृपस्तं पप्रच्छ

हे मीखाय युद्धार्थम् आवाभ्यां रामोतगिलियदं गन्तव्यं किं वा ततो
निवर्त्तितव्यं? ततः स बभाषे, युवां गत्वा कृतार्थौ भवतं तत्रत्यलोका
युवयोः करेषु समर्पयिष्यन्ते। अनन्तरं राजा तं जगाद त्वं परमेश्वरस्य १५
नाम्ना सत्यं विनापरं किमपि मां न वदिष्यस्येतदर्थं कतिवारान् मया
शपथं कारयिष्यसे? ततः स कथयामास, अहम् इस्रायेलीयान् १६
सकललोकान् अरक्षकान् मेषानिव शिलोच्चयोपरि विकीर्णान् अपश्यं,
ततः परमेश्वर उक्तवान् एतेषां स्वामी नास्ति, एकैको जनः स्वं स्वं निवे-
शनं कुशलेन परावृत्य व्रजतु। अनन्तरम् इस्रायेलीयः क्षितिपो यिहो- १७
शाफटं व्याजहार, स मामध्यशुभवचनं विना शुभवचनं न वदिष्यतो-
त्यहं किं पूर्व्वं तुभ्यं नाकथयं? अनन्तरं मीखायो बभाषे युवाभ्यां १८
पारमेश्वरं वचो निशम्यतां। अहं सिंहासनोपविष्टं परमेश्वरं तस्य
दक्षिणवामपार्श्वयो दण्डायमानं स्वर्गीयं सकलसैन्यञ्चापश्यं। परमेश्वर १९
उदितवान्, इस्रायेलीयो नरपतिराहाबो यथा रामोतगिलियदं गत्वा
पतेत् तथा कस्तं भ्रमयिष्यति? तत एको जन एकं प्रकारम् अपरो
जनश्चान्यं प्रकारं कथितवान्। अनन्तरम् एक आत्मा समागत्य परमे- २०
श्वरस्य समक्षं तिष्ठन् कथितवान्, अहं तं भ्रमयिष्यामि। परमेश्वर
उदितवान्, केन? स जगाद, अहं गत्वा तस्य निखिलभविष्यद्वादिनां २१
वदनेषु मृषावादक आत्मा भविष्यामि। तदानीं तेन गदितं त्वं तं
भ्रमयित्वा जयी भविष्यसि, वहि निर्य्याय तदेव कुरु। अनेन प्रकारेण २२
पश्य परमेश्वरस्तवैतेषां भविष्यद्वादिनां वदनेषु मृषाभाषकम् आत्मानं
निहितवान् किन्तु परमेश्वरेण त्वामध्यमङ्गलं निश्चितं। तदानीं किना- २३
नाहस्य सुतः सिदिकियो निकटम् आगत्य मीखायस्य गण्डम् आहत्य
जगाद, परमेश्वरीय आत्मा त्वां सम्भाषितुं मम समीपात् केन मार्गेण
गतवान्? मीखायो गदितवान् पश्य यस्मिन् दिने त्वं प्रच्छन्नत्वार्थं गर्भा- २४
गारं प्रवेक्ष्यसि तस्मिन् दिने तद् भोत्स्यसे। अनन्तरम् इस्रायेलीयो नर- २५
पतिरादिदेश यूयं मीखायं धृत्वा नगराध्यक्षस्यामोनस्य राजपुत्रस्य योया-
शस्य च समीपं नयत। अपरं ताभ्यां कथयत, भूपतिरिमां वाचं वदति, २६
एनं कारागारे बध्नीत यावच्चाहं क्षेमेण परावृत्य नागमिष्यामि तावद्
एनं दुःखरूपमन्नं भोजयत दुःखरूपं तोयं पाययतञ्च। ततो मीखायो २७
जगाद यदि त्वं क्षेमेण परावृत्यागमिष्यसि, तर्हि परमेश्वरो मया न भा-
षते। अनन्तरं स उदितवान्, हे लोकाः सर्व्वे यूयम् अत्र मनांसि निधत्तं।

८ अनन्तरम् इस्रायेलीयो नृपो यिहूदादेशीयो यिहोशाफटो नृपश्च
९ रामोतगिलियदं जग्मतुः। ततः परम् इस्रायेलीयक्षितिपो यिहोशा-
फटम् आचचक्षे अहं छद्मवेशं धारयन् समरं प्रविशामि त्वन्तु निजं
परिच्छदं परिधेहि। अनन्तरम् इस्रायेलीयभूपतिना छद्मवेशे धारिते
० तौ समरं प्रविविशतुः। ततः पूर्व्वम् अरामीयो महीपतिः स्वकीयान्
रथाध्यक्षान् इत्याज्ञापयामास यूयं केवलम् इस्रायेलीयनरपतिं विना
१ क्षुद्रेण महता वापरेण केनापि समं न युध्यत। ततस्ते रथाध्यक्षा यिहो-
शाफटं निरीक्ष्योक्तम् एष एवेस्रायेलीयो नृपतिरिति, ते तु तेन समं
योद्धुम् उपाक्राम्यन्, किन्तु यिहोशाफटेन प्रोच्चैःस्वरे कृते परमेश्वरस्तम्
२ उपकृतवान्, अपरम् ईश्वरस्तस्य सन्निधितस्तान् निवर्त्तयामास। स
इस्रायेलीयो भूपतिर्नहीति दृष्ट्वा रथाध्यक्षास्तस्यानुगमनात् निववृतिरे।
३ अनन्तरम् एकेन जनेन लक्ष्यं विना धनुर्गुणमाकृष्येस्रायेलीयो नर-
पति र्वर्म्मणः सन्धिस्थाने शरेणाहतः। ततः स निजं सारथिं बभाषे
४ त्वं करौ परावर्त्य एतन्नामध्यात् मां नय, व्यथितो ऽहमभवं। तस्मिन्
दिवसे तुमुलं समरं बभूव, इस्रायेलीयो नृपश्चारामीयानां विरुद्धं
सन्ध्याकालं यावत् स्यन्दने तस्थौ, किन्तु सूर्य्ये ऽस्तं गते स निधनं प्राप।

---

## १९ ऊनविंशोऽध्यायः।

१ यिहोशाफटे स्वीयराष्ट्रं प्रत्यागते भविष्यद्वादिना येहूना तस्य भर्त्सना ४ विचारयितृन् प्रति तस्योपदेशनं ८ लेवीयान् याजकांश्च प्रति तस्योपदेशकथनञ्च।

१ अनन्तरं यिहूदादेशीयनृपतौ यिहोशाफटे क्षेमेण यिरूशालमे
२ निजभवनं गतवति हनानेः सुतः प्रदर्शको येहूस्तं साक्षात् कर्त्तुं व्रजित्वा
नरपतिं यिहोशाफटं आजगाद त्वया किं दुष्टस्य उपकर्त्तव्यः? पर-
मेश्वरद्वेषिषु वा प्रेम कर्त्तव्यं? एतत्कारणात् परमेश्वरस्य कोपस्त्वयि
३ वर्त्तते। तथापि तव कानिचित् सत्कर्म्माण्यभवन् त्वं जनपदात् चैत्यतरून्
दूरितवान् ईश्वरस्यान्वेषणार्थं मानसं सुस्थिरं कृतवांश्च।
४ अनन्तरं यिहोशाफटो यिरूशालमे वसतिं चकार, अपरं बेर्शेबाम्
आरभ्येफ्रयिमधराधरं यावत् प्रजानां मध्ये पुनः पुनः पर्य्यटन् तेषां
५ पूर्व्वपुरुषाणां प्रभुं परमेश्वरं प्रति मानवान् परावर्त्तयामास। अपरं
जनपदे प्रतिनगरम् अर्थतो यिहूदादेशस्य प्राचीरवेष्टितेषु सर्व्वेषु नगरेषु

विचारयितुं नियुयुजे। स तान् विचारयितृन् जगाद युष्माभि र्यत् ६
क्रियते तत्र सावधाना भवत, यतो युष्माभि र्मनुजानां कृते विचारो
न कारिष्यते किन्तु परमेश्वरस्य कृते, विचारकर्म्मणि स युष्माकम्
अधिष्ठाता। अतो हेतो र्यूयं परमेश्वराद् भीतिं विधाय सावधाना ७
भवन्तः कर्त्तव्यं कुरुध्वं, यतो ऽस्माकं प्रभोः परमेश्वरस्य सन्निधावन्यायो
मुखापेक्षणम् उत्कोचग्रहणञ्च न सम्भवति।

अनन्तरं यिहोशाफटो यिरूशालमे ऽपि परमेश्वरीयविचारार्थं वि- ८
वादभञ्जनार्थञ्च लेवीयानां याजकानाम् इस्रायेलीयपितृप्रधानानाञ्च
कतिपयान् मनुजान् नियुयुजे। तेषु यिरूशालमम् उपागतेषु स तान् ९
इत्थमादिदेश यूयं परमेश्वरस्य भीत्या विश्वास्यत्वेन सरलान्तःकरणैश्च
प्रकारेणानेन कर्त्तव्यं कुरुध्वं, शोणितपाते शास्त्राज्ञाविधिव्यवस्थासु च यः १०
कश्चन विवादो युष्माकं नगरनिवासिभि र्भ्रातृभि र्युष्मदन्तिकम् उपनी-
यते तेन ते यथा परमेश्वरस्य सन्निधौ दोषिणो न भवेयुः, युष्मान्
युष्माकं भ्रातृंश्च प्रति यथा क्रोधो न वर्त्तेत तथैव तान् उपदिशत। इत्थं
कृते दोषिणो न भविष्यथ। पश्यत सर्व्वस्मिन् परमेश्वरीयविचारे या- ११
जको ऽमरियः सर्व्वस्मिन् राजकीयविचारे च यिहूदावंशस्याधिपति-
रिस्मायेलस्य सुतः सिवदियो युष्माकं मूर्द्धि स्थास्यतः। लेवीया अध्यक्षा
अपि युष्माकं प्रत्यक्षा भविष्यन्ति। यूयं साहसेन कर्त्तव्यं कुरुध्वं परमे-
श्वरश्च सज्जनस्य सहायो भविष्यति।

---

## २० विंशतितमोऽध्यायः।

१ भयाकुलेन यिहोशाफटेनोपवासप्रचारणं ५ तस्य प्रार्थना १४ यहसीयेलस्य भविष्यद्वचनं २० यिहोशाफटेन गायकानां नियोजनं २२ रिपूणां पराजयः २६ जयिलोकानां प्रत्यागमनं ३१ यिहोशाफटस्य सुराजत्वकरणं ३५ इलीयेषरस्य भविष्यद्वचनानुसारात् पोतानां भग्नत्वञ्च।

अनन्तरं मोयाबवंशा अम्मोनवंशास्तैः समं कतिपया मायोनीयमनु- १
जाश्च यिहोशाफटस्य विरुद्धं समरं कर्त्तुम् आगताः। तदानीं केचित् २
जना आगत्य यिहोशाफटं जगदुः, अरामदेशाद् ह्रदस्य पारस्थमार्गेण
विपक्षो लोकनिवहस्तव विरुद्धम् आगतः, ते हत्ससोन्तामरे ऽर्थत
एनगिद्यां विद्यन्ते। ततो यिहोशाफटो बिभीय परमेश्वरं गवेषयितुम् ३
उद्योगं चक्रे यिहूदादेशे सर्व्वत्रोपवासं घोषयामास च। ततो यिहूदा- ४

वंशस्य निखिला लोकाः परमेश्वराद् उपकारं याचितुं मिलिताः, विशेषतो
यिहूदादेशस्य सर्व्वनगरेभ्यो मनुजाः परमेश्वरं गवेषयितुम् आगच्छन्।
५ अनन्तरं यिहोशाफटः पारमेश्वरमन्दिरीयनूतनप्राङ्गणस्य सम्मुखे
६ यिहूदा यिरूशालमस्य च मध्येसभम् उत्तिष्ठन् बभाषे, हे अस्माकं
पूर्व्वपुरुषाणां प्रभो परमेश्वर, त्वं किं स्वर्गस्य ईश्वरो नासि? त्वम् अन्य-
देशीयानां राज्यानां शास्ता, तव करे शक्तिः पराक्रमश्च विद्येते तव विरु-
७ द्धम् उत्थातुं केनापि न शक्यते। हे अस्माकम् ईश्वर, त्वया किं निजेस्रा-
येलीयप्रजानां सम्मुखाद् एतद्देशीयमनुजा न दूरीकृताः? अनयद् एव
८ च किं स्वीयमित्रस्येब्राहीमो वंशाय चिरकालार्थं न दत्तः? तस्मात्
ते जनपदे ऽस्मिन् वसन्तस्तन्मध्ये तव नाम्ने पवित्रं स्थानमेकं निर्म्माय
९ कथयामासुः, यदि खङ्गहासो वा विचारदण्डो वा महामारी वा
दुर्भिक्ष इत्यादिदुःखम् अस्मान् आक्राम्येत्, तर्हि मन्दिरे ऽस्मिन् त्वदीय-
नाम्नः स्थितिकारणाद् वयम् एतन्मन्दिरस्यान्तिके तव साक्षात् तिष्ठन्तो
दुर्दशाकारणात् त्वाम् उद्दिश्य प्रार्थनां करिष्यामहे, तदा श्रुत्वा त्वम्
१० अस्माकं प्रार्थनां श्रुत्वास्मान् उपकरिष्यसि। साम्प्रतम् अम्मोनवंशीया
मोयाबवंशीयाः सेयीरपर्व्वतीयाश्च लोकास्त्वया दृश्यन्तां। मिसरदेशाद्
आगमनकाले इस्रायेलीयलोकास्तेषां मध्येन गमनात् त्वया निवारिता-
११ स्तेषां विनाशं न कुर्व्वन्तो ऽपरेण मार्गेण यात्रां विदधिरे। पश्य तत्परि-
शोधार्थं तव भूमितो ऽर्जितस्वम् अस्मभ्यं यस्या अधिकारं दत्तवान् ततो
१२ ऽस्मान् दूरयितुं त आगच्छन्ति। हे अस्माकम् ईश्वर, त्वं किं तेषां विचारं
न करिष्यसि? अस्मत्प्रतिकूलम् आगतस्यैतस्य विशालजननिवहस्य निवा-
रणार्थम् अस्माकं कापि शक्ति र्नास्ति, किं कर्त्तव्यं तदपि न जानीमः, केवलं
१३ त्वां प्रति दृष्टिं कुर्म्मः। अनेन प्रकारेण बालवनितापुत्रैः सहिता यिहूदा-
वंशीयाः सर्व्वे लोकाः परमेश्वरस्य साक्षाद् दण्डायमाना बभूवुः।
१४ तत आसफवंशीयो मत्तनियस्य प्रपौत्रो यियूयेलस्य पौत्रो बि-
नायस्य पौत्रः सिखरियस्य पुत्रो यिहसियेलनामको लेवीयो मध्येसमाजं
१५ परमेश्वरस्यात्मनाविष्टो भूत्वा जगाद, हे यिहूदीयलोकाः, हे यिरूशा-
लमनिवासिनो मनुजाः, हे राजन् यिहोशाफट, यूयं सर्व्वे मम वचो
निशामयत। परमेश्वरेण युष्मभ्यं वाक्यमिदं कथ्यते, यूयम् एतस्माद् महा-
निवहात् मा बिभीत व्याकुलाश्च मा भवत, यतः समरो ऽयं न युष्माकं
१६ किन्त्वीश्वरस्य जायते। अतः श्वो यूयं तेषां विरुद्धम् अवरोहत, पश्यत

ते सीसाख्येन मार्गेणारोक्ष्यन्ति यिरूयेलप्रान्तरस्यान्तिकस्थोपत्यकायाः
प्रान्तभागे यूयं तान् प्राप्स्यथ । अत्र युष्माभि र्न योद्धव्यं केवलं सुसज्जी- १७
भूतैः स्थातव्यं, तदा युष्माकं सहायेन परमेश्वरेण करिष्यमाणम् उद्धारं
वीक्षिष्यध्वे । हे यिहूदीया यिरूशालमनिवासिनश्च मनुजाः सर्व्वे, सा-
ध्वसं प्रत्राशं न विधाय श्वस्तेषां विरुद्धं यात्रां कुरुत, परमेश्वरो युष्माकं
सहायो भविष्यति । ततो यिहोशाफटः शिरो नमयन् भुवि प्रणनाम १८
अपरं यिहूदीया यिरूशालमनिवासिनश्च मनुजाः परमेश्वरस्य सम्मुखे
दण्डवद् भवन्तः परमेश्वरम् अभजन्त । अपरं किहातवंशीयाः कोर- १९
हवंशीयाश्च लेवीया उत्थायात्युच्चैःस्वरैरिस्रायेलः प्रभुं परमेश्वरं प्रशंसि-
तुम् आरेभिरे ।

अनन्तरं ते प्रत्यूष उत्थाय तिकोयप्रान्तरं जग्मुः । गमनसमये यिहो- २०
शाफट उत्तिष्ठन् व्याजहार, हे यिहूदीया यिरूशालमनिवासिनश्च
मनुजाः, मम गिरं निशामयत, यूयं निजे प्रभौ परमेश्वरे विश्वसित तेन
सुस्थिराः स्थास्यथ, तस्य भविष्यद्वादिषु विश्वसित तेन कृतकार्य्या भवि-
ष्यथ । इत्थं लोकान् आमन्त्र्य स परमेश्वरीयगायकान् पवित्रशोभा- २१
भूषितान् स्तावकांश्च नियुज्य एतनानाम् अग्रे गमनं, तथा 'ब्रूत परेश्वरं
धन्यं यन्नित्यस्तदनुग्रहः' इति कथनम् आदिदेश ।

अनन्तरं ते गाने स्तुतिवादे चारब्धे परमेश्वरो यिहूदाः प्रतिकूलम् २२
आगतानाम् अम्मोनमोयाववंशीयानां सेयीरपर्व्वतनिवासिनाञ्च विरुद्धं
समरं कर्त्तुं दस्यून् प्रवर्त्तयामास तेन त आहता बभूवुः । अपरम् अम्मो- २३
नवंश्या मोयावीयलोकाश्च ध्वंसार्थं विनाशार्थञ्च सेयीरपर्व्वतनिवासिनां
विरुद्धम् उत्तस्थिरे, अपरं सेयीरनिवासिनो व्यापाद्य ते परस्परम् वि-
नाशयितुम् आरेभिरे । अनन्तरं यिहूदीयमनुजैः प्रान्तरस्थं प्रहरिस्थानं २४
प्राप्य जननिवहं प्रति दृष्टिपाते कृते तेषां लोकानां क्षितौ पतितानि
कुणपानि ददृशिरे, उद्धृतः को ऽपि न दृष्टः । तदानीं यिहोशाफटस्तदीय- २५
मनुजाश्च तेषां लोप्त्राणि वस्तूनि सङ्ग्रहीतुं प्रगत्य तेषां कुणपैः समं प्रभूतानि
वित्तानि महामूल्याभरणानि च लेभिरे । ते स्वेषां कृते तान्यादाय
वहनशक्त्यतीतं भारं संगृहीतवन्तः । तेषां लोप्त्रवस्तूनां बाहुल्यकारणात्
तत्सङ्ग्रहणेन दिनत्रयं तै र्यापितं ।

चतुर्थे दिवसे ते बिराखाभिधानायां निम्नभूमौ मिलितवन्तः । तस्मिन् २६
स्थाने ते परमेश्वरं धन्यम् अवदन् एतत्कारणात् तत् स्थानम् अद्यापि

२७ यिरालसार्थनो धन्यवाद इतिनाम्ना विख्यातं विद्यते। अनन्तरं यिहूदा
यिरूशालमस्य च सर्व्वे लोकास्तेषाम् अग्रगामी यिहोशाफटश्च परावृत्य
सानन्दं यिरूशालमं प्रत्यागच्छन्, यतः परमेश्वरस्तेषां रिपूणां पराज-
२८ येन तान् आनन्दितान् चकार। अपरं ते सुरजवल्लकीतूरीणां वाद्यै
२९ र्यिरूशालमं प्रविश्य परमेश्वरीयं मन्दिरं जग्मुः। इत्थं परमेश्वर इस्रा-
येल्वंशस्य रिपुभिः सह समरं कृतवान् श्रुत्वा सर्व्वदेशीयराज्य-
निवासिभिः सकलमनुजैरार्जिता ततश्च ईश्वरात् साध्वसं गताः।
३० इत्थं यिहोशाफटस्य राजत्वं निष्कण्टकं बभूव चतुर्दिक्षु चेश्वरेण तस्मै
शान्तिरदायि।
३१ यिहोशाफटो यिहूदा राजत्वं चकार, स वयसः पञ्चत्रिंशे वत्सरे
राजत्वं प्राप्य पञ्चविंशतिवत्सरान् यिरूशालमे राजत्वं चकार, असूबा-
३२ नामिका शिल्हे दुहिता तस्य प्रसूरासीत्। स निजतातस्य आसा
वर्त्मनि चरन् तस्मात् न निवृत्य परमेश्वरस्य दृष्टिगोचरे यदुत्तमं तदेवा-
३३ करोत्। तथापि उच्चस्थानानि न दूरयाञ्चक्रिरे लोकाश्च तदानीमपि
३४ तेषां पूर्व्वपुरुषाणाम् ईश्वरं प्रति मनांसि न निवेशयाञ्चक्रुः। एतस्य
यिहोशाफटस्याद्यन्तक्रियाणाम् इतिहास इस्रायेलीयनरपतीनां पुराव-
त्तपुस्तकान्तर्गते हनानेः सुतस्य येहोः पुस्तके लिखितो विद्यते।
३५ अनन्तरं यिहूदादेशीयो यिहोशाफटो भूपतिरिस्रायेलीयनरपतिना
३६ दुष्टक्रियाचारिणा अहसियेन सार्द्धं मैत्र्यं चकार। ततस्तस्मिन् तर्शीशगामियो-
तानां निर्म्माणार्थं तं सहायं कृतवति ताविलियोनगेबरे पोतान् नि-
३७ र्म्मापयाञ्चक्रतुः। तदानीं मारेशानिवासी दोदावाहस्य सुत इलीयेषरो
यिहोशाफटस्य विरुद्धम् इदं भविष्यद्वचनं व्याजहार, त्वम् अहसियेन
सहायो जातस्तस्मात् परमेश्वरस्तव कर्म्म विनाशयिष्यति। अनन्तरं
ते पोता भग्नास्तर्शीशं गन्तुं न पारयामासुः।

---

## २१ एकविंशोऽध्यायः।

१ यिहोशाफटस्य निधनम् राज्याभिषिक्तेन यिहोरामेण भ्रातॄणां हननं ५ तस्य कुरा-
चारं ८ इदोमदेशस्य लिब्नानाथाय नगरस्य विद्रोहविवरणं १२ तस्य विरुद्धम्
एलियस्य भविष्यद्वचनं १६ पिलेष्टीयैरारवीयैश्च तस्य क्लेशनं १८ व्याधिनान्त्रपीडया
तस्य निधनं मृत्यावे निधानञ्च।

१ अनन्तरं यिहोशाफटः स्वपितृगणैः सह महानिद्रां गत्वा पितृगणेन

सह दायूद्नगरे श्मशाने लेभे। अनन्तरं तस्य तनयो योरामस्तस्य पदे
राजत्वं प्राप। असरियो यिहीयेलः सिखरियो ऽसरियो मीखायेलः २
शिफटियश्चैत इस्रायेलीयभूपस्य यिहोशाफटस्य सुता योरामस्य भ्रातर
आसन्। तेषां जनकेन तेभ्यो रजतानि सुवर्णानि बहुमूल्यद्रव्याणि ३
यिहूदाजनपदस्थानि प्राकारवेष्टितानि नगराणि च दानानि वितीर्णानि
किन्तु राजत्वं योरामाय ददे यतः स एव ज्येष्ठ आसीत्। अनन्तरं ४
योरामो निजजनकस्य राजत्वं प्राप्य बलवान् भूत्वा स्वकीयान् सर्व्वान्
सहजान् इस्रायेलीयानां कतिपयान् अध्यक्षांश्च चन्द्रहासेन न्यवधीत्।

योरामो द्वात्रिंशद्वत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरूशा- ५
लमे ऽष्टवत्सरान् यावद् राजत्वं चकार। स आहाबीयवंशवद् इस्रा- ६
येलीयभूपतीनां वर्त्मनि चचार, यतः स आहाबस्य दुहितरं व्युवाह
तेन परमेश्वरस्य साक्षात् कुत्सिताचारं चकार। तथापि परमेश्वरो ७
दायूदा सह यं नियमं कृतवान् अर्थतस्तस्मै तस्य वंशाय च चिरकालं
प्रदीपदानस्य यां प्रतिज्ञां कृतवान् तन्निमित्तं स दायूदो वंशं विनाश-
यितुं नैच्छत्।

तस्य राजत्वसमय इदोमीयलोका यिहूदा अधीनत्वं विहाय स्वेषाम् ८
उपरि राजानमेकं नियुयुजिरे। अतो योरामो निजाध्यक्षै र्निखिलर- ९
थैश्च सह प्रगत्य रजन्यामुत्थाय स्वान् वेष्टकान् इदोमीयान् तेषां रथिनश्च
विनाशयामास। तथापीदोमीयलोका अद्यापि यिहूदावंशस्यानधीना १०
विद्यन्ते। तस्मिन्नेव समये लिब्नाया लोका अपि तस्याधीनत्वं तत्यजुः,
यतः स स्वीयपूर्व्वपुरुषाणां प्रभुं परमेश्वरं तत्याज। अधिकन्तु स यिहू- ११
दादेशस्य गिरोच्चयेषु उच्चस्थानानि कृत्वा यिरूशालमनिवासिनो व्यभि-
चारं यिहूदावंशञ्च विपथगमनं कारयामास।

अनन्तरं भविष्यद्वादिन एलियस्य समीपात् तस्य सन्निधिम् एतद्वचः- १२
सूचकं पत्रमेकम् आजगाम, तव पूर्व्वपुरुषस्य दायूदः प्रभुः परमेश्वर
इति वाचं वदति, यस्मात् त्वं निजतातस्य यिहोशाफटस्य वर्त्मनि यि-
हूदादेशीयभूपस्यासाश्च वर्त्मनि न चरितवान्, किन्त्विस्रायेलीयनर- १३
पतीनां वर्त्मनि चरन् आहाबवंशस्य व्यभिचारानुसारेण यिहूदावंशं
यिरूशालमनिवासिनश्च व्यभिचारं कारितवान् अपरं त्वत्त उत्तमान्
त्वदीयपितृवंशजान् भ्रातॄन् अवधीस्तस्मात् पश्य परमेश्वरस्तव प्रजास्तव १४
बालकान् भार्याश्च तव निखिलसम्पत्तीश्च महाघातेन प्रहरिष्यति।

१५ अपरम् अन्त्रपीडया तवातीव यन्त्रणा भविष्यति, तया पीडया बहुदि-
नानि यावत् तावकीनमन्त्रं पुनः पुन र्निपतिष्यति ।
१६ अनन्तरं परमेश्वरेण योरामस्य प्रातिकूल्ये कूषीयानां समीपवासिनां
१७ पिलेष्टीयानाम् आरबीयानाञ्च मनःसु प्रवर्त्तितेषु ते यिहूदाजनपदम्
आगत्य यिरूशालममाक्रम्य प्रविश्य च राज्ञो निवेशने विद्यमाना
निखिलसम्पत्तीस्तस्य तनयान् जायाश्च निन्युः, ततस्तस्य कनिष्ठपुत्रम्
अहसियं विना तस्य तनय एको ऽपि नावाशिष्यत ।
१८ एताभ्यो घटनाभ्यः परं परमेश्वरस्तम् अप्रतिकार्य्येणान्त्ररोगेणाभि-
१९ ग्नात् । ततो बहुदिनानि यावद् वारं वारं विशेषतो वत्सरद्वयस्यान्ते
तया पीडया तस्यान्त्रं निपपात, तस्मात् सो ऽतीव यन्त्रणया ममार, तस्य
प्रजाश्च पूर्व्वपुरुषाणां रीत्यनुसारेण तस्य कृते धूपदाहं न विदधुः ।
२० स द्वात्रिंशद्वत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरूशालमे ऽष्टौ
वत्सरान् राजत्वं चक्रवान् । तस्य निधनात् लोकानां शोको न बभूव,
ते च दायूद्नगरे तं श्मशाने निदधिरे किन्तु नृपतीनां श्मशाने न
निदधिरे ।

---

## २२ द्वाविंशोऽध्यायः ।

१ अहसियस्य कुराजत्वं ७ येहूना तस्य घातनं १० अथलियया योयाशं विना निखिल-राजवंशं घातयित्वा राजत्वप्राप्तिः ।

१ अनन्तरं यिरूशालमनिवासिनस्तस्य कनिष्ठतनयम् अहसियं तस्य
पदे राजत्वे नियोजयामासुः, यत आरबीयायां शिविरयुक्तो यः सङ्घ
आगमत् तेन तस्य ज्येष्ठा भ्रातरो जघ्निरे । अतो यिहूदीयनृपस्य योरा-
२ मस्य सुतो ऽहसियो राजत्वं लेभे । सो ऽहसियो द्वाविंशतिवत्सरवयस्कः
सन् राजत्वं कर्त्तुम् आरभ्य यिरूशालमे वत्सरमेकं राजत्वं चक्रवान् ।
३ अम्रे र्दुहिताथलिया तस्य प्रसूरासीत् । सो ऽप्याहाबवंशस्य वर्त्मना
४ चरितवान् यतस्तस्य जननी दुराचारार्थं तस्य मन्त्रयित्री बभूव । स
आहाबवंशीया इव परमेश्वरस्य साक्षात् कुत्सिताचारं चक्रवान् यतस्तस्य
जनकस्य निधनात् परं त एव तस्य विनाशार्थं तस्य मन्त्रिण आसन् ।
५ तेषामेव मन्त्रणाम् आचरन् स इस्रायेलीयनृपतेराहाबसुतस्य यिहो-
रामस्य सहायो भूत्वारामीयनरपतिना हसायेलेन सार्द्धं समरं कर्त्तुं

रामोतगिलियदं जगाम, तत्रैवारामीया मनुजा यिहोरामम् आजघ्नुः।
अनन्तरम् अरामीयहसायेलेन नरपतिना साकं योधनसमये यिहो- ६
रामे रामोते यद्यत् क्षतं प्राप्नोत् तच्चिकित्सार्थं यदा स यिस्रियेलं
प्रत्यागमत् तदा यिहूदीयक्षितिपतिर्यिहोरामस्य तनयो ऽहसिय आहाव-
सुतस्य यिहोरामस्य पीडाकारणात् तं वीक्षितुं यिस्रियेलं जगाम।
किन्तु यिहोरामस्य सन्निधिगमनेन परमेश्वराद् अहसियस्य निपातो ७
बभूव, यतस्तत् स्थानं गत्वा स यिहोरामेण सार्द्धम् आहाववंशस्य लो-
पार्थं परमेश्वरेणाभिषिक्तं निम्शेः सुतं येहूं साक्षात् कर्त्तुं प्रययौ।
अनन्तरं यस्मिन् समये येहूराहावस्य वंशम् अदण्डयत् तस्मिन् समये स ८
यिहूदा अध्यक्षान् अहसियस्य परिचारकान् भ्रातृपुत्रांश्च दृष्ट्वावधीत्।
अनन्तरं तेनाहसिये गवेषिते मनुजाः शोमिरोणे प्रच्छन्नम् अहसियं ९
धृत्वा येहोः समीपम् आनीय जघ्नुः, तथापि तं श्मशाने निदधिरे यतो
हेतोस्ते ऽब्रुवन् यो यिहोशाफटः सर्व्वान्तःकरणेन परमेश्वरम् अगवेष-
यत् तस्य वंशो ऽसौ। ततः परं राज्यशासनार्थम् अहसियवंशस्य कापि
शक्ति र्नातिष्ठत्।

अनन्तरम् अहसियस्य जनन्यथलिया यदा निजं तनयं मृतम् अपश्यत् १०
तदा सा समुत्थाय कृत्स्नं यिहूदीयराजवंशं व्यापादयामास। तथापि ११
नृपस्य दुहिता यिहोशेबाहसियस्य तनयं योयाशं गृहीत्वा हन्यमानानां
राजकुमाराणां मध्यात् चोरयित्वा तं तस्य धात्रीञ्च कस्मिंश्चित् शय्या-
गृहे निदधे। अनेन प्रकारेण योरामस्य नृपस्य दुहिताहसियस्य भगिनी
या यिहोशेबा यिहोयादायस्य याजकस्य भार्य्यासीत् सा तम् अथलि-
यायाः सन्निधितो गोपयामास तस्मात् स तया न जघ्ने। अनन्तरं १२
योयाशः षड्वत्सरान् यावत् तैः साकम् ईश्वरस्य मन्दिरे प्रच्छन्नस्तस्थि-
वान् अथलिया च जनपदस्य राजत्वं चकार।

---

## २३ त्रयोविंशोऽध्यायः।

१ याजकेन यिहोयादायेन सैन्यनिवहं नियुज्य योयाशस्य राज्याभिषेकः १२ अथलियाया हननं १६ सुरार्चातः पुनर्म्मारम् ईश्वरं प्रति यिहोयादायेन लोकानां परावर्त्तनं।

अनन्तरं सप्तमे वत्सरे यिहोयादाय आत्मानं बलवन्तं विधाय शतप- १
तीन् अर्थतो यिरोहमस्य सुतम् असरियं यिहोहाननस्य सुतम् इश्मा-

ऐथम् ओबेदस्य सुतम् असरियम् अदायास्य सुतं मासेयं सिख्रेः सुतम्
२ इलीशाफटञ्चात्मना समं नियमेन जग्राह। अनन्तरं ते यिहूदादेशं
पर्य्यटन्तो यिहूदाः सर्व्वेभ्यो नगरेभ्यो लेवीयान् इस्रायेलीयपितृवंशानां
३ प्रमुखांश्च लोकान् संगृह्य यिरूशालमम् आजग्मुः। अपरं निखिलसमाज
ईश्वरीयमन्दिरे नरपतिना सार्द्धं नियमं चकार। अपरं यिहोयादास-
तान् जगाद, पश्यतायं राजपुत्रः, दायूदो वंशमधि परमेश्वरेण यद्
४ उक्तं तदनुसाराद् अनेन राजत्वं कर्त्तव्यं। यूयं कर्म्मेदं करिष्यथ, विश्रा-
मवारे युष्माकम् अर्थतो याजकानां लेवीयानाञ्चैकतृतीयभाग आगत्य
५ द्वारपालो भविष्यति। अपरस्तृतीयांशो राजनिवेशने स्थास्यति, शेषश्च
तृतीयांशो भित्ते द्वारे स्थास्यति लोकाश्च सर्व्वे परमेश्वरीयमन्दिरस्य
६ प्राङ्गणेषु स्थास्यन्ति। अपरं याजकान् लेवीयानां मध्ये परिचारकलोकांश्च
विना कमप्यपरं परमेश्वरस्य मन्दिरं प्रवेष्टुं वारयत, त एव प्रवेक्ष्यन्ति
यतस्ते पवित्राः। परन्तु निखिला अन्यमनुजा परमेश्वरस्य निरूपितं
७ कर्म्म करिष्यन्ति। अपरं लेवीया अस्त्रहस्ताः सन्तो राजानं वेष्टन्तां।
यः कश्चित् मन्दिरस्याभ्यन्तरम् आयास्यति स घानिष्यते। अपरं नृपति
र्यदा बहि र्यास्यत्यभ्यन्तरम् आगमिष्यति वा तदानीं यूयं तेन सार्द्धं
८ स्थास्यथ। इत्थं यिहोयादायेन याजकेन यद्यद् आदिष्टं तदेव लेवीयै
र्निखिलयिहूदीयमनुजैश्चाकारि। तेषाम् एकैको जनो विश्रामवारे प्रवे-
शिनो विश्रामवारे निर्गामिनश्च स्वान् स्वान् लोकान् जग्राह, यतो
९ याजको यिहोयादायस्तेषां पर्य्यायाणां लोकान् न विससर्ज। अपरं
याजको यिहोयादाय ईश्वरस्य मन्दिरे स्थितानि नृपते र्दायूदः शूलचर्म्म-
१० चक्राणि शतसेनापतिषु समर्पयाञ्चकार। अपरं तान् अस्त्रधारिणो
निखिलमनुजान् मन्दिरस्य दक्षिणं पार्श्वम् आरभ्य मन्दिरस्य वामं पार्श्वं
यावद् यज्ञवेद्या मन्दिरस्य च समीपे नृपस्य चतुर्दिक्षु स्थापयामास।
११ अनन्तरं ते राजतनयं बहिरानीय तस्य शिरसि किरीटं निधाय तस्मै
साक्ष्यपुस्तकं दत्त्वा राजानं चक्रिरे, अपरं यिहोयादायेन तस्य पुत्रैश्च
तस्मिन् अभिषिक्ते सति ते बभाषिरे, राजा चिरजीवी भूयात्।
१२ अपरम् अथलिया द्रुतगामिनां राजस्तावकानाञ्च लोकानां कोलाहलं
१३ निशम्य परमेश्वरस्य मन्दिरे लोकानां समीपम् आजगाम। अपरं
प्रवेशस्थाने राजा निजस्तम्भस्य समीपे तिष्ठति, अध्यक्षास्तूरीवादकाश्च
राज्ञः समीपे विद्यन्ते जनपदस्य निखिललोकाश्चानन्दं कुर्व्वन्ति तूरी

वादयन्ति च गायकाश्च वाद्यैः समं गायन्ति स्तुवन्ति चेति निरीक्ष्याथ-
लिया निजवसनं छित्त्वा राजद्रोहो राजद्रोह इति जगाद। ततो १४
याजको यिहोयादायो बलेषु नियुक्तान् शतसेनापतीन् समादिशन्
बभाषे, एषा युष्माभिः श्रेणीमध्याद् बहिष्क्रियतां, यः कश्चिद् एताम्
अनुव्रजिष्यति, स खड्गेन हन्यतामेवेति, यतो याजको ऽब्रवीत् परमेश्वरस्य
गेहमध्ये सा न हन्तव्या। अतो लोकास्तां हस्ते धृत्वा राजधान्या हयद्वा- १५
रस्य प्रवेशस्थानं नीत्वा तत्रैव जघ्नुः।

अनन्तरं लोकाः परमेश्वरस्य प्रजा भविष्यन्ति यिहोयादाय आत्मना १६
सह नृपतिं लोकांश्चैतादृशं नियमं कारयामास। अनन्तरं लोकाः सर्व्वे १७
बालो गेहं गत्वा तद् बभञ्जुस्तस्य वेदीरपि प्रतिमाश्च चूर्णयाञ्चक्रुः, वेदीनां
सम्मुखे बालो याजकं मत्तनम् अवधिषुश्च। अपरं दायूदो रीत्यनुसारे- १८
णानन्दगीताभ्यां समं मूससो व्यवस्थायां लिखितविधितः परमेश्वराय
होमार्थकर्म्मनिर्व्वाहाय ये लेवीया याजका दायूदा नियोजयाञ्चक्रिरे
तेषां करेषु यिहोयादायः परमेश्वरीयमन्दिरस्य कर्म्मणाम् अध्यक्षत्वं स-
मर्पयामास। अपरं कथञ्चिद् अशुचिमनुजा यन्न प्रविशेयुस्तत्कृते स १९
परमेश्वरीयमन्दिरस्य द्वारेषु दौवारिकान् नियोजयामास। अनन्तरं २०
शतपतिषु मान्यमनुजेषु लोकशासकेषु जनपदस्य सर्व्वेषु लोकेषु च तेन
समागतेषु स राजानं परमेश्वरीयमन्दिराद् बहिरानिनाय, ते च
प्रोच्चद्वारेण राजनिवेशनं प्रविश्य राजानं राजसिंहासन उपवेशया-
ञ्चक्रुः। तदा जनपदस्य निखिलमनुजा आननन्दुः नगरमपि निरुपद्रवं २१
बभूव, केवलम् अथलिया तैः खड्गेन जघ्ने।

---

## २४ चतुर्विंशोऽध्यायः।

१ यिहोयादायस्य यावज्जीवनं योयाशस्य सुराजत्वकरणं ४ ईश्वरीयमन्दिरस्य जीर्णोद्धारार्थं तदाज्ञा १५ यिहोयादायस्य निधनं श्मशाने निधानं १७ देव-पूजायां प्रवृत्तेन योयाशेन यिहोयादायसुतस्य सिखरियस्य हननं २३ अरामीय-सैन्य पराजयो दासाभ्याञ्च तस्य वधः २७ योयाशस्य विवृतिः।

योयाशः सप्तवर्षवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरूशालमे १
चत्वारिंशद् वत्सरान् यावद् राजत्वं चकार। बेर्शेबानिवासिनी
सिबिया तस्य प्रसूरासीत्। इत्थं योयाशो याजकस्य यिहोयादायस्य २

२ यावज्जीवनं परमेश्वरस्य साक्षात् सदाचारम् अकरोत्। अपरं यिहो-
यादायस्तं द्वे कन्ये विवाहयामास, ततस्तस्य तनया दुहितरश्चाजायन्त।
४ अनन्तरं परमेश्वरीयमन्दिरस्य जीर्णोद्धारं कर्त्तुं योयाशस्य मानसे
५ जाते स याजकान् लेवीयांश्च संगृह्य कथयामास, यूयं यिहूदादेशस्य
नगराणि गत्वा प्रतिवत्सरं निजेश्वरस्य मन्दिरस्य जीर्णोद्धारार्थम् इस्रा-
येलीयनिखिलमनुजेभ्यो ऽर्थान् संगृह्णीत कर्म्मैतत् त्वरितं कुरुत। किन्तु
६ लेवीयास्तत्र त्वरां न चक्रुः। अनन्तरं नरपतिस्तेषां मुख्यं यिहोया-
दायम् आहूय कथितवान् साक्ष्यदूष्यस्य कृते ईश्वरस्य दासेन मूससेस्रा-
येलीयसमाजेन च निरूपितो यः करस्तं यिहूदातो यिरूशालमश्च
७ तस्यानयनार्थं लेवीयान् कुतो नादिशः? यतस्तस्या दुष्टाया अथलियायाः
पुत्रा ईश्वरस्य मन्दिरम् अभञ्जन् परमेश्वरीयमन्दिरे निवेदितानि नि-
८ खिलवस्तूनि च बाले ऽददुः। अनन्तरं नृपतेराज्ञया ते मञ्जूषामेकां
९ निर्म्माय परमेश्वरीयमन्दिरस्य द्वारसमीपे बहिः स्थापयाञ्चक्रुः। अपरम्
ईश्वरस्य दासो मूसाः प्रान्तरे इस्रायेलां यं करम् आज्ञापितवान् पर-
मेश्वरस्य सन्निधौ तस्यानयनं यिहूदादेशे यिरूशालमि च घोषयाञ्चक्रुः।
१० ततः सर्व्वे ऽध्यक्षाः प्रजाश्चानन्दं गत्वा करम् आनीय पूर्णतां यावत् तस्यां
११ मञ्जूषायां निचिक्षिपुः। अपरम् उपयुक्ते समये लेवीयै र्निजहस्तेन
मञ्जूषां राजभाण्डागारम् आनीय तन्मध्ये बहुमुद्रासु दृष्टासु राजलेखको
महायाजकेन नियुक्त एको जनश्चागत्य मञ्जूषां शून्याम् अकुरुताम् अपरं
सा तैः पुनर्व्वारम् उत्थाप्य स्वस्थानम् आनीयत। प्रतिदिनम् इत्थं कृत्वा
१२ ते प्रभूतानि वित्तानि समगृह्णन्। अनन्तरं नृपो यिहोयादायश्च तानि
परमेश्वरीयमन्दिरस्य कर्म्माधिपतिभ्यो ऽदत्तां ते च परमेश्वरीयमन्दि-
रस्य जीर्णोद्धारार्थं तक्षभ्यः स्थपतिभ्यश्च वेतनानि प्राददन् अपरं पर-
मेश्वरीयमन्दिरस्य जीर्णोद्धारार्थम् आयसकर्म्मकर्तृभ्य आरकूटीयकर्म्म-
१३ कर्तृभ्यश्च वेतनानि प्राददुः। इत्थं कर्म्मकारिलोकैः क्रियमाणे कर्म्मणि
तेषां श्रमैः सिद्धिं गते तैरीश्वरीयमन्दिरस्य जीर्णोद्धारं विधाय तत्
१४ पूर्व्ववद् दृढितं। कर्म्मणि समाप्ते ते ऽवशिष्टमुद्रा नृपस्य यिहोयादायस्य च
समक्षम् आनिन्युः, ततस्ता ताभि र्मुद्राभिः परमेश्वरीयमन्दिरस्योपास-
नार्थभाजनानि विशेषतो होमपात्राणि लेदनीचषकादीनि हेममयानि
रजतमयानि च भाजनानि निर्म्मापयाञ्चक्रुः। अनन्तरं यिहोयादायस्य
यावज्जीवनं नित्यं परमेश्वरस्य मन्दिरे ते होमार्थबलयो ऽदीयन्त।

अनन्तरं यिहोयादायः स्थविरः सम्पूर्णायुश्च भूत्वा निधनं लेभे। नि- १५
धनसमये तस्य द्वात्रिंशदधिकं शतं वत्सरा वयो ऽभवत्। स इस्रायेलो १६
मध्य ईश्वरमधि तदीयमन्दिरमधि चोत्तमं कर्म्माकरोत् तत्कारणात्
मनुजा दायूद्नगरे राजनिवहस्य मध्ये तं श्मशाने निदधिरे।

यिहोयादायस्य निधनात् परं यिहूदा अध्यक्षा आगत्य राजानं प्रा- १७
णमन्। ततो राजा तेषां वचांसि जग्राह। ते तु स्वेषां पितृलोकानां १८
प्रभोः परमेश्वरस्य मन्दिरं परित्यज्य चैत्यवृक्षान् प्रतिमाश्च पूजयितुम्
आरेभिरे, एतदपराधकारणाद् यिहूदां यिरूशालमञ्च प्रति क्रोधो
ऽवर्त्तत। तथापि परमेश्वरं प्रति तान् परावर्त्तयितुं तेषां सन्निधिं १९
परमेश्वरेण प्रेषिता भविष्यद्वादिनस्तेषां विरुद्धं साक्ष्यम् अददुः किन्तु
तथापि ते मनांसि न निदधिरे। अनन्तरं परमेश्वरस्यात्मनि याजकस्य २०
यिहोयादायस्य सुतं सिखरियम् आविष्टवति स लोकानाम् उपरिष्ठात्
संस्थाय तान् अब्रवीत्, ईश्वरो युष्मान् इति वाचं गदति, यूयं कुतः
परमेश्वरस्य निदेशान् लङ्घध्वे? अनेन कृतार्था भवितुं न पारयिष्यथ।
युष्माभिः परमेश्वरः परित्यक्तस्तस्माद् यूयमपि तेन परित्यक्ष्यध्वे। ततो २१
मनुजा नृपतेराज्ञानुसारेण तस्य विरुद्धं द्रोहं विधाय परमेश्वरीयमन्दि-
रस्य प्राङ्गणे तं पाषाणाघातैरवधिषुः। तस्य जनको यिहोयादायो २२
नृपतिं प्रति यं सदाचारं कृतवान् नृपति र्योयाशस्तं न संस्मृत्य तस्य
तनयं जघान। निधनकाले स बभाषे परमेश्वरेणैतत् प्रति दृष्टिं विधा-
यैतस्य समुचितं फलं दायिष्यते।

अनन्तरम् एकस्मिन् वर्षे ऽतीते ऽरामीयपृतनानिवहस्तस्य विरुद्धम् २३
आजगाम। ते यिहूदां यिरूशालमञ्च समागत्य लोकानां प्रमुखनरान्
अवधिषु निखिलानि लोठितवस्तूनि दम्मेषकस्य क्षितिपतेः सन्निधिं
प्रेषयाञ्चक्रुश्च। यद्यप्यरामीयाणाम् अल्पसैन्यं बलम् आगच्छत् तथापि २४
परमेश्वरस्तेषां करेष्वतीव महासैन्यानि समर्पयाञ्चकार यतो हेतो र्मनु-
जाः स्वेषां पूर्व्वपुरुषाणां प्रभुं परमेश्वरम् अत्यजन्। इत्थम् अरामीया
योयाशं दण्डयामासुः। अपरं तं प्रभूताघातैर्विक्षतं विहाय तैस्तस्य २५
सन्निधितो यात्रायां कृतायां तस्य द्वौ दासौ याजकस्य यिहोयादायस्य
सुतानां हननकारणात् तस्य विरुद्धं मन्त्रणां विधाय शय्यागतं तं
जघ्नतुः। इत्थं तस्मिन् निधनं गते लोका दायूद्नगरे तं श्मशाने निदधिरे
किन्तु राजनिवहस्य श्मशाने न निदधिरे। अम्मोनीयाशिमियत्तनयः २६

सावदो मोयाबीयाशिम्रीतस्तनयो यिहोषाबदश्चैतौ तस्य विरुद्धं मन्त्रयामासतुः।

२७ अपरं तस्य तनयानां कथा तस्य दत्तकरस्य भार ईश्वरीयमन्दिरस्य जीर्णोद्धारश्चैतानि लिखितानि नरपतीनां पुरावृत्तपुस्तके लिखितानि सन्ति। अनन्तरं तस्य तनयो ऽमत्सियस्तस्य पदे राजत्वं प्राप।

---

## २५ पञ्चविंशोऽध्यायः।

१ अमत्सियस्य राजत्वकरणं ३ राजघातकयोः हननं ५ इस्रायेलीयसैन्यानां निसर्जनं ११ इदोमीयलोकानां हननं १३ इस्रायेलीयलोकैः विसर्जनं प्राप्य यिहूदादेशस्याक्रमणं १४ अपरेदोमीयानां देवानामर्चनं भविष्यद्वादिना भर्त्सनाश्रवणं १७ तस्य दण्डनं २५ तस्य राजत्वनिधनयोः कथनञ्च।

१ अमत्सियः पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्तुम् आरभ्य
यिरूशालमि ऊनत्रिंशद्वत्सरान् यावद् राजत्वं चकार। यिरूशालम-
२ निवासिनी यिहोयद्दना तस्य प्रसूरासीत्। स परमेश्वरस्य गोचरे सदा-
चारम् अकरोत् किन्तु सरलान्तःकरणेन नाकरोत्।
३ अनन्तरं राज्ये तस्य सम्यग् वशीभूते तस्य याभ्यां दासाभ्यां तस्य तातो
४ राजा जघ्ने स तावबधीत्। किन्तु तयोरपत्यानि नावधीत् यतो मूससो
व्यवस्थाग्रन्थे परमेश्वरीयैषाज्ञा लिखितास्ते, यथा, तनयानाम् अपराधेन
जनका न हन्तव्याः, जनकानाञ्चापराधेन तनया न हन्तव्याः। एकैको
जनः स्वस्वपापात् हन्तव्य इति।
५ अनन्तरम् अमत्सियो यिहूदावंशं संग्रह्य यिहूदा निखिलजनपदे
बिन्यामीनस्य निखिलजनपदे च पितृवंशानुसारेण शतपतीनां सहस्र-
पतीनाञ्च निघ्नत्वे तान् नियुयुजे, किञ्च विंशतिवत्सरवयस्कान् ततो ऽधि-
कवत्सरवयस्कांश्च मनुजान् गणयित्वा त्रीणि लक्षाणि शूलचर्मधारिणः
६ समरसमर्थान् अभिरुचितान् मनुजान् अलभत। अपरं किक्करशतैक-
परिमाणं रजतं वेतनं विधायेस्रायेल्देशीयान् लक्षवीरान् आनि-
७ नाय। किन्त्वीश्वरीयः कश्चिल्लोकस्तस्य सन्निधिं समेत्य व्याजहार हे रा-
जन् इस्रायेलीया पृतना त्वया समं न यातु, यतः परमेश्वर इस्रायेल्-
८ वंशेन सह न विद्यते, इफ्रयिमवंशेन सहापि न विद्यते। किन्तु त्वमेव
गत्वा समरं कर्तुं साहसिको भव, नोचेद् ईश्वरः शत्रूणां समक्षं त्वां
निपातयिष्यति यतो हेतोरुपकर्तुम् अधःपातयितुञ्चेश्वरस्य शक्ति र्विद्यते।

तदनन्तरम् अमत्सियस्तम् ईश्वरीयलोकं जगाद, इस्रायेलीयसैन्याय ९
मया यत् किक्करशतप्रमाणं रजतम् अदायि तदधि किं कर्त्तव्यं? ईश्व-
रीयलोक उदितवान् परमेश्वरेण ततोऽपि प्रभूतं तुभ्यं दातुं शक्यते।
ततोऽमत्सियस्तान् अर्थत इफ्रयिमाद् आगतं तं सेनानिवहं स्वस्थाने १०
गमनार्थं विससर्ज। अतो यिहूदा विरुद्धं तेषां महाक्रोधानले प्रज्वलिते
सति ते महाकोपेन स्वं स्वं स्थानं परावृत्य वव्रजुः।

अनन्तरम् अमत्सिय आत्मानं बलवन्तं कृत्वा स्वीयलोकान् वहिरा- ११
नीय लवणप्रान्तरं व्रजित्वा सेयीरवंशस्य दशसहस्राणि मनुजान् अव-
धीत्। अपरा दशसहस्राणि लोका जीवन्तो यिहूदावंशै र्वन्दीकृताः १२
शैलशृङ्गं निन्यिरे तस्मात् शैलशृङ्गाद् अधो निक्षिप्ताः सर्व्वे चूर्णा बभूवुः।

किन्त्वमत्सियो यं एतनानिवहं स्वेन समं समराय न नीत्वा परावर्त्त्य १३
प्रेषितवान् ते शोमिरोणम् आरभ्य वैथोरोणं यावद् यिहूदादेशस्य नग-
राण्याक्रम्य तेषां त्रीणि सहस्राणि मनुजान् अवधिषुः प्रभूतानि लोठित-
वस्तूनि च जगृहुः।

इदोमीयानां हननात् प्रत्यागमनात् परम् अमत्सियः सेयीरवंशीयानां १४
सुरान् आनीय निजेष्टदेवानिव स्थापयित्वा तेषां सम्मुखे प्रणन्तुं तान्
उद्दिश्य धूपान् ज्वालयितुञ्चोपचक्रमे। तस्माद् अमत्सियं प्रति परमेश्व- १५
रस्य क्रोधे प्रज्वलिते स कञ्चन भविष्यद्वादिनं तस्य सन्निधिं प्रेषयामास।
स तम् आचचक्षे, तेषां लोकानां ये सुरास्तव कराभ्यां निजप्रजा उद्धर्त्तुं
नापारयन् कुतस्तान् गवेषयसि? तेनैतस्मिन् वाक्ये उदिते राजा तं
जगाद, त्वं किं राजमन्त्रिपदे न्ययुज्यथाः? निवर्त्तस्व, कुतो हनिष्यसे?
तेन भविष्यद्वादी निवर्त्तमानो बभाषे त्वया कर्म्मैतत् कृत्वा मम मन्त्रणा
न गृहीता तस्माद् ईश्वरस्तव विनाशं निश्चितवान् इत्यहं जानामि।

अपरं यिहूदावंशीयो नरपतिरमत्सियो मन्त्रणां गृहीत्वेस्रायेलीय- १७
नृपं येहोः पौत्रं यिहोयाहसस्य पुत्रं योयाशं प्रति दूतान् प्रहित्य कथ-
यामास, आगच्छावां परस्परं साक्षात् कुर्व्वः। तत इस्रायेलीयो योयाशो १८
नृपो यिहूदादेशस्यामत्सियं नरपतिं प्रति दूतान् प्रहित्य कथयामास,
लिवानोनस्थं शृगालकण्टकं लिवानोनस्थस्यैरसवृक्षस्य सन्निधिं दूतं
प्रहित्य कथयामास, मम तनयस्य विवाहार्थं तव दुहितरं देहीति।
अनन्तरं लिवानोनस्थो वन्यपशुः समीप शृगालकोलिं बभञ्ज। त्वं कथ- १९
यसि, इदोमीया मया अनाश्यन्त, तेन त्वदीयं मनस्त्वां गर्व्वे प्रवर्त्तयति।

त्वं निजनिवेशने तिष्ठ। स्वामङ्गलाय कुतो ऽनधिकारचर्चां करिष्यसि?
२० तव त्वया सार्द्धं यिहूदावंशस्य च पतनं कुतो भविष्यति? किन्त्वमत्सियेन
तद् वचनं नाग्राहि यत इदोमीयदेवानाम् अनुगमनात् ते यद् रिपूणां
२१ करेषु पतेयुस्तदर्थम् एतत् सर्व्वम् ईश्वराद् बभूव। अनन्तरम् इस्रायेलीयो
योयाशो नरपतिराजगाम, तस्मात् स यिहूदानरपतिरमत्सियश्च यिहू-
२२ दादेशस्थे बैतशेमशे परस्परं साक्षाच्चक्रतुः। तत इस्रायेलवंशानां सम्मुखे
यिहूदा मनुजाः पराजिताः सन्तः सर्व्वे स्वीयं स्वीयं वासस्थानं पलाया-
२३ ञ्चक्रिरे। तत्र बैतशेमशे इस्रायेलीयो राजा योयाशो ऽहसियस्य पौत्रं
योयाशस्य सुतं यिहूदा अमत्सियं महीपतिं धृत्वा यिरूशालमम् आनि-
नाय, अपरम् इफ्रयिमीयगोपुरम् आरभ्य कोणस्थगोपुरं यावद् यिरू-
२४ शालमीयप्राचीरस्य चतुःशतीहस्तमितं खण्डं बभञ्ज। अपरम् ईश्वरीय-
मन्दिरे ओवेदेदोमस्य हस्तगतानि सकलकनकरजतानि सकलभाजनानि
च राजनिवेशनस्थं कोषञ्चादाय बन्धकत्वेन लोकान् सङ्गिनः कृत्वा च
शोमिरोणं प्रत्याजगाम।
२५ तस्येस्रायेलीयभूपते र्यिहोयाहसपुत्रस्य योयाशस्य निधनात् परं
यिहूदा भूपति र्योयाशस्य सुतो ऽमत्सियः पञ्चदशवत्सरान् अजीवत्।
२६ एतस्यामत्सियस्याद्यन्तम् अवशिष्टं चरित्रं किं यिहूदा इस्रायेलश्च मही-
पतीनां पुरावृत्तपुस्तके लिखितं न विद्यते?
२७ परमेश्वरस्यानुगमनाद् अमत्सियस्य निवृत्तिकालम् आरभ्य मनुजा
यिरूशालमे तस्य विरुद्धं कुमन्त्रणां चक्रुस्तदा स लाखीशं पलायाञ्चक्रे।
किन्तु ते तस्य पश्चात् लाखीशं लोकान् प्रहित्य तस्मिन् स्थाने तं घातया-
२८ मासुः। अनन्तरं ते हयैस्तं समानीय यिहूदादेशस्य प्रधाननगरे तस्य
पितृलोकानां सन्निधौ तमपि श्मशाने निदधिरे।

---

## २६ षड्विंशोऽध्यायः।

१ सिखरियस्य विद्यमानसमय उषियस्य सुराजत्वकरणं १६ याजकानां कर्म्मसु प्रवर्त्त-नात् तस्य कुष्ठरोगित्वं २१ तस्य निधनञ्च।

१ तदानीं यिहूदा निखिललोकाः षोडशवत्सरवयस्कम् उषियम् आ-
२ दाय तस्य जनकस्यामत्सियस्य पदे राजत्वे ऽभिषिषिचुः। राजनि
पितृगण इव महानिद्रां गतवति सं एलोतनगरं निर्म्माप्य पुनर्व्वारं

यिहूदा अधीनौ चकवान्। उषियः षोडशवत्सरवयस्कः सन् राजत्वं ३
कर्त्तुं प्रारभ्य यिरूशालमे द्विपञ्चाशद्वत्सरान् यावद् राजत्वं चकवान्।
यिरूशालमनिवासिनी यिखलिया तस्य प्रसूरासीत्। स निजपितुरम- ४
त्सियस्य सर्व्वकार्य्यानुसारेण परमेश्वरस्य साक्षात् सदाचारं चकार।
अपरम् ईश्वरीयदर्शने बुद्धिमान् यः सिखरियस्तस्य यावज्जीवनं स ईश्व- ५
रम् अन्वगच्छत्। स यतिकालान् परमेश्वरम् अन्वगच्छत् ततिकालान्
ईश्वरस्तं कृतकार्य्यम् अकरोत्। विशेषतः स यात्रां विधाय पिलेष्टीयैः ६
समं समरं कृत्वा गातं यव्निरसदोदश्चैतेषां नगराणां प्राचीराणि बभञ्ज।
अपरम् असदोदस्य सीमायां पिलेष्टीयानां सीमायाञ्च नगराणि निर्म्मा- ७
पयाञ्चकार। अपरम् ईश्वरः पिलेष्टीयानां गूर्वालनिवास्यारवीयाणां
मियूनीयानाञ्च विरुद्धं तस्य साहाय्यं चकवान्। अम्मोनीयैरप्युषियायो- ८
पायनं ददे, इत्थम् अतीव पराक्रमात् तस्य यशो मिसरं प्रविश्य व्या-
नशे। अपरम् उषियो यिरूशालमे कोणद्वार उपत्यकाद्वारे प्राकारस्य ९
कोणेषु च दुर्गाणि निर्म्माप्य तानि दृढयाञ्चकार। तद्वत् स प्रान्तरेऽपि १०
दुर्गाणि निर्म्मापयामास बहून् प्रहींश्च चखान यतो निम्नभूमौ प्रान्तरे
च तस्य प्रभूताः पशव आसन्, अपरं पर्व्वतेषु कर्म्मिले च तस्य कृषीवला
द्राक्षाक्षेत्राजीवाश्चासन्, यतः स कृषिकर्म्मणि प्रीतवान्। अपरं लेख- ११
कस्य यियूयेलस्य शासकस्य मासेयस्य च हस्ते लिखितसंख्यानुसारेण सङ्घं
सङ्घं युद्धे गमनकृद् य उषियस्य पृतनानिवह आसीत् स राजकीय-
सेनापते र्हनानीयस्याधीन आसीत्। महावीरलोकानां पितृप्रधान- १२
समुदाये षट्शताधिके द्वे सहस्रे मनुजा आसन्। रिपूणां विरुद्धं नरपतेः १३
साहाय्यार्थं तेषाम् आज्ञाधीनाः पराक्रमेण समरकारिण्यः सार्द्धसप्त-
सहस्राधिकानि त्रीणि लक्षाणि पृतना आसन्। अपरम् उषियः सर्व्व- १४
पृतनानां निमित्तं फलकानि शूलानि शिरस्त्राणि वर्म्माणि धनूंषि पाषा-
णक्षेपणगुणांश्च निर्म्मापयामास। अपरं दुर्गेभ्यः प्राकारेभ्यश्च शरहृहत्पा- १५
षाणानां प्रक्षेपार्थं निपुणशिल्पकानां कल्पनया कृतानि यन्त्राणि यिरू-
शालमे कारयाञ्चकार। एतादृगाश्चर्य्यरूपेणोपकृतो भूत्वा स महापरा-
क्रमी बभूव ततस्तस्य यशो दूरदेशं व्यानशे।

किन्तु पराक्रमप्राप्तेः परं तस्य मनसि विनाशोत्पादकेन गर्व्वेण ग- १६
र्व्विते सति स निजप्रभोः परमेश्वरस्य विरुद्धम् अपराधं चकार, फलतो
धूपवेद्यां धूपं ज्वालयितुं परमेश्वरस्य मन्दिरं प्रविवेश। ततो याजको १७

ऽसरियस्तेन समं परमेश्वरस्य याजका अशीतिजना बलवन्तो लोका-
१८ स्तस्य पश्चात् प्रविविशुः। ते नरपतेरुषियस्य प्रतिकूलं सन्तिष्ठमानास्तं
बभाषिरे, हे उषिय परमेश्वरोद्देशे धूपदाहस्त्वया न कर्त्तव्यः किन्तु
धूपज्वालनार्थं पाविते हारोणवंशजाते र्याजकैरेव। त्वं पवित्रस्थानात्
बहिः र्याहि यतस्त्वयापराधः क्रियते तेन प्रभुपरमेश्वरात् तव सम्मानं न
१९ जनिष्यते। तदानीम् उषियः प्राकुप्यत् तस्य हस्ते च धूपज्वालनार्थं धूपा-
धार एको ऽविद्यत, किन्तु तस्मिन् याजकेभ्यः क्रुध्यति याजकानां समक्षं
परमेश्वरस्य मन्दिरे धूपवेद्या अन्तिके कुष्ठरोगस्तस्य भाले प्रचकाशे।
२० तदानीं प्रधानयाजकेनासरियेण निखिलयाजकैश्च तं प्रति मुखं परावर्त्य
तस्य ललाटे कुष्ठरोगे दृष्टे ते तस्मात् तं दूरयाञ्चक्रुः, अपरं स स्वयमपि
२१ बहिर्गन्तुं त्वरां विदधौ यतः परमेश्वरेण स आजघ्ने। ततो नृपति-
रुषियो मरणदिनं यावत् कुष्ठी तस्थौ कुष्ठित्वाच्च चिकित्साभवने निव-
सन् परमेश्वरस्य मन्दिराच्छिन्नस्तस्थौ। अपरं तस्य तनयो योथमो राज-
निवेशनस्याधिपति र्भूत्वा जनपदीयमनुजानां शासनम् अकरोत्।
२२ एतस्योषियस्याद्यन्ता अवशिष्टाः क्रिया आमोसस्य तनयेन यिशायियेन
२३ भविष्यद्वादिना लिलिखिरे। अनन्तरम् उषियः स्वीयपितृलोका इव
महानिद्रां जग्मिवान् ततो मनुजा न्टपतीनां शवनिधानक्षेत्रे तदीय-
पितृलोकानां सन्निधौ तं श्मशाने निदधिरे, यस्मात् ते कथयामासुः स
कुष्ठीति। अपरं तस्य तनयो योथमस्तस्य पदे राजत्वं चकार।

---

## २७ सप्तविंशोऽध्यायः।

१ योथमस्य सुराजत्वकरणं ५ अम्मोनीयानां पराजयः ७ तस्य राजत्वस्य कथनं निधनञ्च।

१ योथमः पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुं प्रारभ्य यिरू-
शालमे षोडशवत्सरान् राजत्वं चकृवान्। सादोकस्य दुहिता यिरूशा
२ तस्य प्रसूरासीत्। स निजपितुरुषियस्य कर्म्मानुसारेण परमेश्वरस्य
गोचरे सदाचारं चकार, तथापि स परमेश्वरस्य मन्दिरं न प्रविवेश
३ मनुजाश्च तदानीमपि दुष्टत्वम् आचेरुः। स परमेश्वरीयमन्दिरस्य
प्रोच्चद्वारं निर्म्मापयाञ्चकार तद्वद् ओफलस्थप्राकारस्याधिकांशं निर्म्माप-
४ याञ्चकार। अपरं यिहूदाः पर्व्वतीयदेशे नगराणि वनभूमौ च दुर्गाण्यु-
च्चगृहाणि च निर्म्मापयाञ्चकार।

सो ऽम्मोनवंशीयानां महीपतिना समं समरं विधाय तान् जिगाय ५
तस्माद् अम्मोनवंशीयास्तस्मिन् वत्सरे किक्करशतं रजतं दशसहस्रकोर-
परिमितान् गोधूमान् दशसहस्रकोरपरिमितान् यवांश्च तस्मै ददुः,
द्वितीये तृतीये च वत्सरे ऽप्यम्मोनवंशीयास्तस्मै तावन्ति ददुः। अनेन ६
प्रकारेण योथमो निजप्रभोः परमेश्वरस्य साक्षाद् ऋजुमार्गगामी सन्
प्रतापयुक्तो बभूव।

एतस्य योथमस्यावशिष्टाः क्रियास्तस्य निखिलसमरा निखिलव्यवहा- ७
राश्चेस्रायेलो यिहूदाश्च भूपतीनां पुरावृत्तपुस्तके लिखिता आसते। स ८
पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुं प्रारभ्य यिरूशालमे षोडश-
वत्सरान् राजत्वं चकृवान्। अनन्तरं योथमो निजपितृलोका इव महा- ९
निद्रां गतो लोकै र्दायूद्नगरे श्मशाने निहितश्च, ततस्तस्य तनय आह-
सस्तस्य पदे राजा बभूव।

---

## २८ अष्टाविंशोऽध्यायः।

१ आहसस्य कुराजत्वकरणं तन्निदानाद् अरामीयै र्दण्डप्रापणं ६ इस्रायेलीयलोकैरपि दण्डप्राप्ति र्बन्दिलोकानां मोचनं १६ अशूरीयलोकैस्तस्य वञ्चितत्वं २२ सुरार्चनं तद्न्यमहापापकरणञ्च २६ तस्य निधनञ्च।

आहसो विंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुं प्रारभ्य यिरूशालमे १
षोडशवत्सरान् यावद् राजत्वं चकार। स परमेश्वरस्य साक्षात्
निजपूर्व्वपुरुषो दायूदिव सदाचारं न चकार। किन्त्विस्रायेलीयमही- २
पतीनां मार्गेषु चरन् द्रवीभूतधातुना वालः प्रतिमूर्त्ती र्निर्म्मापयाञ्चकार।
अपरं स हिन्नोमसुतस्योपत्यकायां धूपान् प्राज्वालयत् किञ्च परमेश्वर ३
इस्रायेलीयवंशस्य सम्मुखाद् यान् भिन्नजातीयान् दवयाञ्चकार तेषां
घृण्यक्रियानुसारेण स निजात्मजान् वह्निना दाहयाञ्चकार। अपरं भृगु- ४
स्थानेषु पर्व्वतेषु सर्व्वेषां हरिद्वर्णानां तरूणाम् अधश्च बलिदानं धूपदा-
नञ्च चकार। तत्कारणात् तस्य प्रभुना परमेश्वरेण तस्मिन् अरामी- ५
याणां नरपतेः करे समर्पिते सति ते तं प्रहृत्य तस्य प्रभूतलोकान् बन्दी-
कृत्य दम्मेषकं निन्युः। तदधिकम् इस्रायेलीयनरपतेः करे तस्मिन् सम-
र्पिते सो ऽपि तं महाप्रहारेणाजघान।

अपरं रिमलियस्य तनयः पेकहो यिहूदावंशीयान् विंशतिसहस्रा- ६

धिकं लक्षं बलवतो लोकान् एकस्मिन्नेव दिने मारयामास यस्मात् ते स्वेषां
७ पितृलोकानां प्रभुं परमेश्वरं त्यक्तवन्तः। अपरं सिखिनामक इफ्रयिमीयो
वीरो राजतनयं मासेयं निवेशनाध्यक्षम् अस्रीकामं मुख्यराजपुरुषम्
८ इल्कानाञ्च जघान। अपरम् इस्रायेलीयवंशाः स्वेषां भ्रातृणां द्वे लक्षे
जायापुत्रदुहितृन् बन्दीकृत्य निन्युः, तेषां बहूनि वस्तूनि च लोठया-
९ ञ्चक्रुः, अपरं तानि निखिललोठितवस्तूनि शोमिरोणं निन्युः। तस्मिन्
स्थाने ओदेदनामा परमेश्वरस्य भविष्यद्वादी कश्चिद् आसीत् स शोमि-
रोणे समागतं तं सैन्यनिवहं साक्षात् कर्त्तुं व्रजित्वा तान् सैन्यीयलोकान्
जगाद, पश्यत युष्माकं पितृलोकानां प्रभुः परमेश्वरो यिहूदावंशेभ्यः क्रुध्यन्
तान् युष्माकं करेषु समार्पयत् ततो यूयं गगनस्पर्शिक्रोधाग्निना तान्
१० अवधिष्ट। इदानीं यूय यिहूदा यिरूशालमस्य च लोकान् वशीकृत्य
दासान् दासीश्च कर्त्तुं मतिं कुरुध्वे। युष्मत्प्रभोः परमेश्वरस्यापराधाः
११ किं युष्माभिरपि न कृताः? अत इदानीं मम वाक्यं शृणुत। यूयं स्वकी-
यभ्रातृणां समीपाद् यं बन्दिनिवहम् आनीतवन्तस्तं मुक्तीकुरुत यतः
१२ परमेश्वरस्य प्रचण्डकोपो युष्मासु वर्त्तते। तत इफ्रयिमवंशानां कतिपयाः
प्रधानलोका अर्थतो यिहोहाननस्य तनयो ऽसरियो मिशिल्लेमोतस्य
तनयो बेरिखियः शल्लमस्य पुत्रो यिहिष्किया हद्लयस्य तनयो ऽमासा-
१३ श्चैते रणात् प्रत्यागतानां लोकानां सम्मुख उत्तिष्ठन्तस्तान् जगदुः, बन्दिनो
लोका युष्माभिरेतत् स्थानं नानेतव्याः, यतो युष्माकं मन्त्रणा परमेश्वरस्य
साक्षाद् अस्माकम् अपराधस्य हेतुः, सास्माकं पापस्यापराधस्य च
वृद्धिजनिका। अस्माकम् अपराधो गुरुतरः परमेश्वरस्य च क्रोध इस्रा-
१४ येलं प्रति प्रज्वलित आस्ते। ततो ऽस्त्रधारिणो लोकास्तान् बन्दिनस्तानि
लोठितवस्तूनि चामीयाध्यक्षाणां निखिलसमाजस्य च साक्षात् निद-
१५ धिरे। अनन्तरं येषां नामानि लिलिखिरे ते नरा उत्थाय बन्दिनो
लोकान् आदाय तेषां मध्ये यावन्तो लोका नग्ना आसन् तान् लोठित-
वस्तुभ्यः परिच्छितवस्त्रान् चक्रुः, ते तेभ्यो वस्त्राणि पादुका भक्ष्याणि पेयानि
मर्द्दनीयतैलानि च ददुः, तेषाञ्च यावन्तो लोका दुर्बला अभवन् तान्
गर्दभान् आरोह्य तेषां भ्रातृणां समीपं तालवृक्षनगरम् अर्थतो यिरीहं
निन्युः, ततः परं ते शोमिरोणं पुनराजग्मुः।
१६ तस्मिन् समये भूपतिराहसः साहाय्ययाचनायाशूरदेशीयभूपतीनां
१७ समीपं दूतान् प्रेषयामास। यत इदोमीयाः कदाचिदप्यागत्य यिहूदा-

जनपदम् आक्राम्यन् लोकांश्च बन्दीकृत्यानयन्। पिलेष्टीयलोका अपि १८
निम्नभूमे र्यिहूदादक्षिणजनपदस्य च नगराण्याक्रम्य वैतशेमशम् अया-
लोनं गिदेरोतं सोखुं तदीयशाखानगराणि तिम्नायां तदीयशाखानग-
राणि गिम्सुं तदीयशाखानगराणि च वशीकृत्य तत्र न्यूषितवन्तः।
यत इस्रायेलीयभूपतेराहसस्य हेतुना परमेश्वरो यिहूदावंशं खर्व्वी- १९
चकार यतः स राजा यिहूदावंशम् अत्याचारिणं कृत्वा परमेश्वरस्य
विरुद्धम् अतिशयमपराधं कारयामास। अनन्तरं तिग्लत्पिलेषरनामको २०
ऽश्शूरीयमहीपतिस्तस्य सन्निधिम् आजगाम किन्तु तस्य साहाय्यमकृत्वा
तं भृशं क्लेशयामास। यद्यप्याहसः परमेश्वरस्य मन्दिरं राजनिवेशनम् २१
अधिपतींश्चार्थहीनान् कृत्वा सर्व्वस्वम् अश्शूरीयराजाय ददौ तथापि
तस्मात् तस्योपकारो नाजायत।

एष नरपतिराहसः क्लेशस्य समये परमेश्वरस्य विरुद्धम् अधिकाप- २२
राधं चकार। स स्वप्रहारकान् दम्मेषकीयान् देवान् उद्दिश्य बलीन् २३
ददौ। यतः स उक्तवान् इमे ऽरामीयनृपतीनाम् इष्टदेवाः, इमे तेषां
सहायाः। अतो ऽहम् एतेभ्यो बलीन् दास्यामि तथा कृत एतैरुपकारिष्ये।
किन्तु त एव तस्य निखिलेस्रायेलश्च निपातकारिणो बभूवुः। अनन्तरम् २४
आहस ईश्वरीयमन्दिरस्य भाजनानि संगृह्य तानि सर्व्वाणीश्वरीय-
मन्दिरस्य पात्राणि कर्त्तयामास परमेश्वरीयमन्दिरस्य कवाटे बबन्ध च।
अपरं स यिरूशालमस्य सर्व्वेषु कोणेषु स्वार्थं वेदी र्निर्म्मापयामास।
अपरम् इतरदेवानां कृते धूपदाहार्थं यिहूदादेशस्यैकैकस्मिन् नगरे २५
भृगुस्थानानि निर्म्मापयाञ्चकार। अनेन प्रकारेण स निजपितृलोकानां
प्रभुं परमेश्वरं क्रोधयाञ्चकार।

तस्यावशिष्टाः क्रिया आद्यन्तं चरित्रञ्च यिहूदा इस्रायेलश्च नृपतीनां २६
पुरावृत्तपुस्तके लिखितानि विद्यन्ते। अपरम् आहसो निजपितृगण इव २७
महानिद्रां गतो लोकैरिस्रायेलीयमहीपतीनां श्मशाने न निहितः किन्तु
यिरूशालमनगरस्य श्मशाने निहितः। ततः परं तस्य तनयो हिष्किय-
स्तस्य पदे राजत्वं लेभे।

---

## २९ ऊनत्रिंशोऽध्यायः।

१ हिष्कियस्य पुराणकरणं ३ परमेश्वरस्य मन्दिरं परिष्कर्तुं निदेशनं १२ मन्दिरस्य परिष्करणकथनं २० हिष्कियस्य बलिदानादीनां कथनञ्च।

१ हिष्कियः पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुं प्रारभ्य ऊनत्रिं-
शद्वत्सरान् यावद् यिरूशालमे राजत्वं चकार। अबियानामिका
२ सिखरियस्य दुहिता तस्य प्रसूरासीत्। स निजपूर्व्वपुरुषस्य दायूदः
कर्म्मानुसारेण परमेश्वरस्य गोचरे सदाचारं चकार।

३ स निजराजत्वस्य प्रथमवत्सरस्य प्रथमे मासे परमेश्वरीयमन्दिरस्य
४ कपाटे मोचयित्वा तयो र्जीर्णोद्धारं कारयामास। अपरं स याजकान्
५ लेवीयांश्च प्रवेश्य पूर्व्वदिक्स्थे महाप्राङ्गणे मेलयित्वा तेभ्यः कथयामास, हे
लेवीयाः, मदीयं वचो निशामयत। इदानीं स्वान् पवितान् कुरुत, येषां
पितृलोकानां प्रभोः परमेश्वरस्य मन्दिरं पवित्रीकुरुत पवित्रस्थानाद्
६ अवकरान् बहिष्कुरुत च। यतो ऽस्माकं पितृलोका अपराधिनो जाता
अस्माकं प्रभोः परमेश्वरस्य गोचरे दुराचारम् अकुर्व्वन् ते तम् अत्य-
७ जन् परमेश्वरस्य वासस्थानात् पराङ्मुखा भूत्वा तं पृष्ठतो ऽकुर्व्वन्। अपरं
अलिन्दस्य कपाटे अबध्नन् प्रदीपान् निरवापयन् पवित्रे स्थाने इस्रायेल-
८ वीयेश्वरस्य कृते धूपान् नाज्वालयन् होमार्थकबलींश्च नाददुः। एतत्-
कारणाद् यिहूदां यिरूशालमञ्च प्रति परमेश्वरस्य कोपो ऽवर्त्तत, तेन
यादृशं स्वलोचनैः पश्यथ तादृशं स तान् त्रासे विस्मये शीडायाञ्च समार्प-
९ यत्। पश्यत तत्कारणाद् अस्माकं पितृलोकाः खड्गघातैर्न्यपात्यन्त, अस्माकं
१० तनया दुहितरो भार्य्याश्च वन्दीभूताः स्थानान्तरम् अनीयन्त। तस्माद्
अस्मत्तस्तस्य कोपाग्नि र्यन्निवर्त्तेत तदर्थम् इस्रायेलः प्रभुना परमेश्वरेण
११ समं नियममेकं कर्त्तुम् इदानीं मम मानसं जातं। हे मम तनयाः,
यूयम् इतःपरं शिथिलमनसो मा भवत, यतो यूयं यत् परमेश्वरस्य
सम्मुखे तिष्ठन्तस्तस्योपासनां कुर्य्यात तस्य परिचारका धूपज्वालयितारश्च
भवेत, तदर्थं स युष्मान् वरीतवान्।

१२ तदानीं किहातवंशीयानाम् अमासयस्य तनयो महतो ऽसरियस्य
तनयो योयेलश्च, मिरारिवंशीयानाम् अब्देः पुत्रः कीशो यिहलिलेलस्य
तनयो ऽसरियश्च, गेर्शोनवंशीयानां सिम्मस्य तनयो योयाहो योयाहस्य
१३ तनय एदनश्च, इलीषाफनवंशीयानां शिम्रि यियूयेलश्च, आसफवंशी-
१४ यानां सिखरियो मत्तनियश्च, हेमनवंशीयानां यिहीयेलः शिमियिश्च,
१५ यिदूथूनवंशीयानां शिमयियः उषीयेलश्चैते सर्व्वे लेवीया उत्थाय स्वेषां
भ्रातॄन् संगृह्य स्वान् पवितान् चक्रिरे। अपरं परमेश्वरस्य वाक्येन
राज्ञा यथादिष्टं तथा परमेश्वरस्य मन्दिरं परिष्कर्त्तुं प्रविविशुः।

याजकाः परिष्कारकरणार्थं परमेश्वरीयमन्दिरस्याभ्यन्तरं प्रविश्य तत्र १६
परमेश्वरीयप्रासादे यान् अवकरान् प्रापुस्तान् सर्व्वान् वहिष्कृत्य परमे-
श्वरीयमन्दिरस्य प्राङ्गणम् आनिन्युः, अनन्तरं लेवीयास्तान् सङ्गृह्य कि-
द्रोणस्रोतो निन्युः। ते प्रथममासस्य प्रथमे ऽहनि तत्पावनं प्रारभ्य मास- १७
स्याष्टमे दिने परमेश्वरस्यालिन्दम् आजग्मुः, ततः परम् अष्टाहमध्ये
परमेश्वरीयं मन्दिरं पावयामासुः, प्रथममासस्य षोडशदिने कर्म्म समा-
पयाञ्चक्रुः। अनन्तरं ते हिष्कियस्य नरपते र्भवनं व्रजित्वा कथयामासुः, १८
परमेश्वरस्य कृत्स्नं मन्दिरं होमवेदी तदीयनिखिलभाजनानि च दर्शनी-
यपूपानां दार्वासनं तदीयनिखिलभाजनानि चैतान्यस्माभिः परिष्कृ-
तानि। अपरम् आहसो नृपति र्निजराजत्वकाले ऽपराधं कुर्व्वन् यानि १९
भाजनान्यमेध्यानि कृतवान् तानि सर्व्वाण्यस्माभिः संस्थापितानि पावि-
तानि च, पश्य तानि परमेश्वरस्य वेद्याः सम्मुखे विद्यन्ते।

अपरं हिष्कियो महीपतिः प्रत्यूष उत्थाय नगराधिपतीन् संगृह्य पर- २०
मेश्वरस्य मन्दिरं जगाम। अपरं ते राष्ट्रस्य पवित्रस्थानस्य यिहूदा- २१
वंशस्य च निमित्तं प्रायश्चित्तार्थं सप्त वृषभान् सप्तावीन् सप्त मेषशावकान्
सप्त छागांश्चोपानिन्युः, अपरं स परमेश्वरस्य वेद्यां होमार्थकबलित्वेन
तेषां दानं हारोणवंशीयान् याजकान् आज्ञापयामास। अतस्तै र्वृषभेषु २२
छेदितेषु याजका रुधिरम् आदाय वेदिप्रोक्षणं कृतवन्तः, अपरम्
अविषु छेदितेषु तेषां रुधिरेण वेदिप्रोक्षणं चक्रुः, अपरं मेषशावकेषु
छेदितेषु तेषां रुधिरेण वेदिप्रोक्षणं चक्रुः। अपरं प्रायश्चित्तार्थकेषु २३
छागेषु नृपस्य समाजस्य च साक्षाद् उपानीतेषु ते तेषाम् उपरि
हस्तान् अर्पयामासुः। अपरं याजकास्तान् छेदित्वा तेषां रुधिरै र्नि- २४
खिलेस्रायेलो निमित्तं वेद्यां प्रायश्चित्तं चक्रुः, यतो राजा निखिलेस्रा-
येलो निमित्तं होमं प्रायश्चित्तञ्च कर्त्तुम् आदिदेश। अपरं स राज्ञो २५
दायूदः प्रदर्शकस्य गादस्य भविष्यद्वादिनो नाथनस्य चाज्ञानुसारेण
करतालमुरजवल्लकीहस्तान् लेवीयान् परमेश्वरस्य मन्दिरे स्थापया-
मास, यस्मात् परमेश्वरो निजभविष्यद्वादिभिरिदम् आदिदेश। अतो २६
दायूदा निरूपितानि वाद्ययन्त्राणि धारयन्तो लेवीयास्तूरीवक्ता याज-
काश्च समतिष्ठन्त। अनन्तरं वेद्यां होमकरणार्थं हिष्कियेणाज्ञापिते २७
यदा होमस्यारम्भो ऽभवत् तदानीम् इस्रायेलीयेन दायूदा महीपेन
निरूपितैस्तूरीप्रभृतिभि र्वाद्यैः परमेश्वरीयगीतस्यारम्भो बभूव। ततो २८

होमस्य समाप्तिं यावत् तत्समाजो भजनं चकार गायकाश्च गानं
चक्रुस्तूरीवादकाश्च तूरी र्वादयाञ्चक्रुः। अनन्तरं होमे बलिदाने च
समाप्यमाने नृपतिस्तत्समीपवर्त्तिनो मनुजाश्च सर्व्वे जानूनि पातयित्वा
भजनं चक्रुः। अपरं हिष्कियो नरपतिरधिपतयश्च दायूदः प्रदर्शक-
स्यासफस्य च वचोभिः परमेश्वरमुद्दिश्य प्रशंसार्थकगानं लेवीयान्
आज्ञापयामासुः, ततस्ते सानन्दाः प्रशंसार्थकगीतं जगुः शिरांसि नम-
३१ यन्तो भजनं चक्रुश्च। तदानीं हिष्कियो व्याजहार यूयं परमेश्वरस्य
निमित्तं स्वान् प्रयत्नान् कृतवन्तः। इदानीम् उपस्थाय मङ्गलार्थकान्
प्रशंसार्थकांश्च बलीन् परमेश्वरस्य मन्दिरम् उपानयत, ततः समाजो
मङ्गलार्थकान् प्रशंसार्थकांश्च बलीन् समानिनाय दानशीलाश्च मनुजाश्च
३२ होमार्थकान् बलीन् समानिन्युः। समाजेन समानीतानां होमार्थकब-
लीनाम् इयं संख्या, सप्तति र्वृषभाः शतं मेषा द्वे शते मेषशावकाश्च सर्व्वे
३३ एते परमेश्वरोद्देश्या होमार्थकबलयः। अपरं पवित्रीकृताः षट्शतानि
३४ वृषभास्त्रीणि सहस्राणि मेषाश्चासन्। किन्तु याजकानाम् अल्पत्वकार-
णात् ते सर्व्वेषां होमार्थकबलीनां चर्म्माण्युन्मोचयितुं न पारयामासुः।
अतो यावत् तत् कर्म्म समाप्तिं नाप्नोत् यावच्चापरे याजकाः स्वान्
नैध्यान् नाकुर्व्वन् तावत् तेषां भ्रातरो लेवीयास्तान् उपचक्रुः, यतो
लेवीयाः स्वान् प्रयत्नान् कर्त्तुं याजकेभ्योऽपि सरलान्तःकरणा आसन्।
३५ अपरं मङ्गलार्थकबलीनां मेदोभिः समं होमसम्बन्धीयैः पेयनैवेद्यैश्च समं
बहवो होमार्थकबलयो ददिरे। अनेन प्रकारेण परमेश्वरीयमन्दिर-
३६ स्योपासनाया रीति र्निश्चिता बभूव। ईश्वरो लोकान् स्थिरीकृतवान्
एतस्मात् हिष्कियः सकलमनुजाश्चानन्दुः, यतस्तत् कार्य्यं सहसा बभूव।

---

## ३० त्रिंशोऽध्यायः।

१ हिष्कियेण निस्तारोत्सवपालनस्य निरूपणं १३ लोकानां सुरमूर्त्तिभञ्जनं चतुर्दश-दिनानि तदुत्सवस्य पालनं २७ याजकानां लेवीयानाञ्च लोकेभ्य आशीर्दानञ्च।

१ अनन्तरं मनुजा यद् इस्रायेलः प्रभुं परमेश्वरम् उद्दिश्य निस्तारो-
त्सवं पालयितुं यिरूशालमे परमेश्वरस्य मन्दिरम् आगच्छेयुस्तत्कृते
हिष्कियो निखिलस्येस्रायेल्वंशस्य यिहूदावंशस्य च समीपं दूतान् प्रेष-
यामास, इफ्रयिमवंशस्य मिनशिवंशस्य च सन्निधिं पत्राण्यपि प्रेषया-

माय। राजा तदीयाध्यक्षा निखिलसमाजश्च द्वितीये मासि यिरूशालमे २
निस्तारोत्सवं कर्त्तुं मन्त्रयाञ्चक्रुः। यतो हेतो र्याजकाः प्रयोजनीयसङ्ख्यया ३
स्वान् पावितान् न कृतवन्तो मनुजाश्च यिरूशालमं न समागताः,
तस्मात् स उत्सवः स्वसमये तैः कर्त्तुं नाशक्यत। अपरं तत् कर्म्म राज्ञः ४
सर्व्वसमाजस्य च दृष्ट्या तोषजनकं बभूव। अतो लोका यद् यिरू- ५
शालमम् आगत्येस्रायेलः प्रभुं परमेश्वरम् उद्दिश्य निस्तारोत्सवं कुर्य्यु-
स्तत्कृते ते बेर्शेबाम् आरभ्य दानं यावद् इस्रायेलः सर्व्वत्र घोषयितुं
नियमं चक्रुः, यतस्ते चिरकालात् लिखितविध्यनुसारेण तं नाकुर्व्वन्।
अनन्तरं दूता नृपस्य तदीयाध्यक्षाणाञ्च हस्तेभ्यः पत्राण्यादायेस्रायेलो ६
यिहूदायाश्च सर्व्वत्र गत्वा नरपते राज्ञानुसारेण वच इदं जगदुः, हे
इस्रायेलवंश्याः, यूयम् इब्राहीम इस्हाक इस्रायेलश्च प्रभुं परमेश्वरं प्रति
परावर्त्तध्वं, तेनास्सूरीयनरपतीनां हस्तेभ्यो ऽवशिष्टा युष्माकं ये मानवा
रक्षां प्राप्तास्तान् प्रति स परावर्त्तिष्यते। युष्माकं पितरो भ्रातरश्च ७
येषां पूर्व्वपुरुषाणां प्रभोः परमेश्वरस्य विरुद्धम् अपराधं कृतवन्तस्तस्मा-
दस्मात् तेन विनाशे समर्पिता अभवन् युष्माभिरेतद् दृश्यते, ततो यूयं
तेषां सदृशा मा भवत। इदानीं यूयं स्वेषां पितृलोका इव स्वां स्वां ८
ग्रीवां न कठयत, किन्तु परमेश्वरेण सह सन्धत्त, स च नित्यकालार्थं
यत् स्थानं पवित्रम् अकरोत् तदीयं तद् धर्म्मधामागत्य युष्मत्पूर्व्वपुरुषाणां
प्रभुं परमेश्वरं सेवध्वं; तथा कृते तस्य कोपाग्नि र्युष्मत्तो निवर्त्तिष्यते।
यदि यूयं परमेश्वरं प्रति परावर्त्तध्वं तर्हि युष्माकं भ्रातरो युष्माकम् ९
अपत्यानि च ये र्वन्दीकृत्य देशान्तरं निन्यिरे तैरनुकम्पिता जनपदमिमं
प्रत्यागमिष्यन्ति यतो युष्माकं प्रभुः परमेश्वरो ऽनुग्राहको दयालुश्च,
यदि यूयं तं प्रति परावर्त्तध्वं तर्हि स युष्मत्तः पराङ्मुखो न भविष्यति।
अपरं दूतेष्विफ्रयिमदेशस्य मिनशिदेशस्य च निखिलनगराणि सिबूलू- १०
नदेशस्य मध्यस्तु मनुजास्तान् प्रति परिहासं कुर्व्वाणा अकारयन्।
तथाप्याशेरमिनशिसिबूलूनदेशेभ्यः कतिपयलोकाः स्वान् नम्रान् कुर्व्वाणा ११
यिरूशालमम् आजग्मुः। अपरं परमेश्वरस्य वाक्यानुसारेण नृपस्याधि- १२
पतीनाञ्चाज्ञापालनार्थम् ईश्वरः साहाय्यं कुर्व्वन् यिहूदाजनपदीयान्
एकचित्तान् चकार।

अनन्तरं द्वितीये मासि किण्वशून्यपूपानाम् उत्सवकरणार्थं मनुजा- १३
नाम् अतीव महासमाजो यिरूशालमं समाजगाम। अपरं स उत्थाय १४

यिरूशालमस्थाः सुरवेदीः समस्ता दूरयाञ्चक्रुः धूपज्वालनार्थकाः सर्व्वा
वेदीरप्यपसार्य्य किद्रोणस्रोतसि निचिक्षिपुः। अनन्तरं द्वितीयमासस्य
चतुर्दशे दिवसे ते निस्तारोत्सवीयबलीन् छेदयामासुः, ततो याजका लेवी-
याश्च लज्जमानाः स्वान् प्रयतान् कृत्वा परमेश्वरस्य मन्दिरे होमार्थक-
१६ बलीन् उत्ससृजुः। ईश्वरीयलोकस्य मूससो व्यवस्थानुसारेण ते यथा-
विधि स्वीयस्वीयस्थाने समतिष्ठन्त याजकाश्च लेवीयानां करेभ्यो रुधिरम्
१७ आदाय सिषिचुः। समाजस्य मध्ये बहवो लोका अप्रयता आसन्
तन्निदानाद् यः कश्चित् प्रयतो नासीत् परमेश्वरस्य कृते तं प्रयतं कर्त्तुं
१८ लेवीयास्तेषां कृते निस्तारोत्सवीयबलिच्छेदने न्ययुज्यन्त। अपरम् इफ्रयिम-
मिनशीयायिषाखरसिबूलूनदेशेभ्य आगता बहवो मनुजाः स्वान् प्रयतान् न
कृत्वा लिखितविधेर्वैपरीत्येन निस्तारोत्सवीयबलिं बुभुजिरे। हिष्किय-
१९ स्तेषां कृते प्रार्थनां विधाय कथयाञ्चकार, ये जना प्रयतस्थानस्य विध्य-
नुसारेण प्रयता न सन्तोऽपि निजपितृलोकानां प्रभोः परमेश्वरस्य गवे-
षणे निजान्तःकरणानि प्रावर्त्तयन् अनुग्राहकः परमेश्वरस्तान् क्षमतां।
२० तेन परमेश्वरो हिष्कियस्य वचसि मनो निधाय मनुजान् सुस्थान्
२१ अकरोत्। अनन्तरं यिरूशालमं समागता इस्रायेलीयवंशाः सप्तदि-
नानि यावत् महानन्देन किण्वशून्यपूपानाम् उत्सवं चक्रिरे। अपरं
लेवीया याजकाश्च प्रतिदिनं परमेश्वरस्य स्तवार्थकै र्वादनैः परमेश्वरं
२२ प्रशशंसुः। अपरं ये सर्व्वे लेवीयाः परमेश्वरोद्देश्यधर्म्मज्ञाने पारदर्शिन
आसन् हिष्कियस्तैः मधुरं संललाप। अनेन प्रकारेण त उत्सवस्य सप्त-
दिनानि यावत् मङ्गलार्थकान् बलीन् भुञ्जानाः स्वेषां पूर्व्वपुरुषाणां प्रभुं
२३ परमेश्वरं प्रशशंसुः। अनन्तरं निखिलसमाजः पुनः सप्तदिनान्युत्सवं
२४ कर्त्तुं सम्मन्त्र्य तानि सप्तदिनान्यानन्देन यापयामासुः। अपरं यिहूदीय-
नरपति र्हिष्कियः समाजाय सहस्रं वृषभान् सप्तसहस्राणि मेषांश्च
ददौ, अधिपतयश्च समाजाय सहस्रं वृषभान् दशसहस्राणि मेषांश्च
ददुः, अपरं याजकानां मध्योया बहवः स्वान् प्रयतान् चक्रुश्च।
२५ अपरं याजकै र्लेवीयैश्च समं यिहूदावंशस्य निखिलसमाज इस्रायेल्-
वंशस्य मध्याद् आगतो निखिलसमाज इस्रायेल्देशात् समागताः प्रवा-
२६ सिनो यिहूदादेशनिवासिनश्च सर्व्व आनन्दं चक्रिरे। अनेन प्रकारेण
यिरूशालमे महान् आनन्दो बभूव, यत इस्रायेलीयनृपस्य दायूदीय-
सुलेमनः समयमारभ्य यिरूशालम एतादृङ् नाभवत्।

अनन्तरं याजका लेवीयाश्च प्रोत्थाय लोकेभ्य आशिषं ददुः, तेषां शब्दाश्चाश्रूयन्त, अर्थतस्तेषां प्रार्थना तस्य पवित्रं वसतिस्थानं स्वर्गं प्राप ।

---

## ३१ एकत्रिंशोऽध्याय ।

१ पुत्तलिकादीनां विनाशः २ हिष्कियेण याजकानां पर्य्यायनिरूपणं ५ लोकैः प्रभूत नैवेद्यानाम् आनयनं ११ याजकेभ्योऽंशदाने हिष्कियेणाध्यक्षाणां नियोजनं २ हिष्कियस्य सत्कर्म्म तस्य फलप्राप्तिश्च ।

एतेषु समाप्तिं गतेषु तत् स्थानं समागता निखिलेस्रायेलीया लोका यिहूदादेशस्थनगराणि प्रविशन्तः प्रतिमानिवहं बभञ्जुश्चैत्यवृक्षांश्चिच्छिदुः, यावच्च सर्व्वथा सर्व्वेषां निःशेषं नाभवत् तावत् निखिलयिहूदादेशे विन्यामीनदेशे इफ्रयिमदेशे मिनशिदेशे च भ्रगुस्थानानि वेदीश्च बभञ्जुः। अनन्तरम् इस्रायेलवंशीयाः सर्व्वे स्वं स्वं विषयं स्वं स्वं नगरञ्च पुनर्जग्मुः।

अपरं हिष्कियः परमेश्वरीयशिविरस्य द्वारेषु होमार्थकानां मङ्गलार्थकानाञ्च बलीनां दानार्थं परिचर्य्यार्थं धन्यवादार्थं प्रशंसार्थञ्च याजकानां लेवीयानाञ्चोपासनकर्म्मण्येकैकस्यांशानुसारेण याजकानां लेवीयानाञ्च पर्य्यायान् नियुयुजे। अपरं होमार्थम् अ[illegible] परमेश्वरीयशास्त्रस्य लेखनानुसारेण प्रातःकालिकानां सन्ध्याकालिकानां होमानां च विश्रामवारेष्वमावस्यासु वार्षिकोत्सवेषु च कर्त्तव्यानां होमानां कृते नृपस्य सम्पत्तितो दातव्यम् अंशं निरूपयाञ्चकार। अपरं याजका लेवीयाश्च यत् परमेश्वरीयशास्त्रे समासक्ता भवेयुरिति कृते स तेभ्योऽंशदानार्थं यिरूशालमनिवासिनो मनुजान् आदिदेश।

एतस्य निदेशस्य प्रचारमात्राद् इस्रायेलीयवंशाः प्रथमजाता शस्यद्राक्षारसतैलमध्वादीनि भूम्युत्पन्नद्रव्याण्यतिबाहुल्येन समानिन्युः निखिलद्रव्याणां दशमांशानपि प्रभूतत्वेन समानिन्युः। अपरं यिहूदादेशस्थनगरेषु वसन्त इस्रायेलवंशीया यिहूदावंशीयाश्च लोका अपि गोमेषाणां दशमांशं निजप्रभोः परमेश्वरस्य कृते पवित्रीकृतानां पवित्रद्रव्याणां दशमांशञ्चानीय राशीश्चक्रुः। तृतीयमासे ते तेषां राशीनां सञ्चयनम् आरभ्य सप्तमे मासि समापयामासुः। अनन्तरं हिष्कियोऽध्यक्षाश्च समागत्य तान् राशीन् विलोक्य परमेश्वरं तस्य प्रजा इस्रा

९ लोयलोकांश्च धन्यान् जगदुः। अपरं हिष्किय्स्तान् राशीनधि याज-
१० कान् लेवीयांश्च पप्रच्छ। ततः सादोकस्य वंशजातो ऽसरियनामा प्रधान-
याजकस्तं प्रतिजगाद, यदवधि लोकाः परमेश्वरस्य मन्दिरं नैवेद्यम्
आनेतुम् आरेभिरे तदवधि भोज्यं वस्तु प्रभूतं समभवत् प्रभूतञ्चाति-
रिच्यते यतः परमेश्वरः स्वीयलोकेभ्य आशिषं ददौ तेनैष धनराशिरव-
शिष्टो ऽभवत्।
११ अनन्तरं हिष्कियः परमेश्वरस्य मन्दिरे ऽगाराणां निर्म्माणायाज्ञा-
१२ पयाञ्चकार तेन ते ऽगाराणि निर्म्ममिरे। अपरं नैवेद्यानि दशमांशान्
पवित्रीकृतानि वस्तूनि च विश्वास्यत्वेन तन्मध्यम् आनिन्युः, तेषाम्
अध्यक्षाणां मध्ये लेवीयः कानानियो मुख्यस्तस्य भ्राता शिमियिश्च द्वितीय
१३ आसीत्। अपरं यिहियेलो ऽसिसियो नहतो ऽसाहेलो यिरेमोतो योषा-
बद इलीयेलो यिष्मखियो माहतो विनायश्चैमे हिष्कियस्य नृपस्येश्वरी-
यमन्दिराध्यक्षस्यासरियस्य च निदेशात् कानानियस्य तदीयभ्रातुः शि-
१४ मियेश्चाधीना अधिपतयो ऽभवन्। अपरं यिम्नाः सुतो लेवीयः कोरिः
प्राच्या दिशो द्वारपाल आसीत् स परमेश्वरोद्देशेन निवेदितवस्तूनां
महापवित्रवस्तूनाञ्चांशनार्थम् ईश्वरोद्देशेन स्वेच्छया निवेदितवस्तूनाम्
१५ अध्यक्ष आसीत्। तस्याज्ञाधीन एदनो बिन्यामीनो येशूयः शिमयियो
ऽमरियः शिखनियश्चेमे याजकानां नगरेषु स्वेषां क्षुद्रमहद्भ्यो भ्रातृभ्यो
१६ विश्वास्यत्वेनांशवितरणे नियुक्ता आसन्। तदतिरिक्तं वत्सरत्रयवयस्का-
त्ततो ऽधिकवयस्का वा ये पुरुषा वंशावल्यां लिखिता आसन् ये च नि-
जपर्य्यायक्रमात् परिचर्य्यार्थं कार्य्यकरणार्थं वा दिने दिने परमेश्वरस्य
१७ मन्दिरं प्राविशन्, अपरं निजपितृवंशानुसारेण वंशावल्यां लिखिता
विंशतिवत्सरवयस्कात्ततो ऽधिकवयस्का वा ये याजका लेवीयाश्च स्वीये
१८ स्वीये कार्य्ये पर्य्याये च नियुक्ता आसन्, वंशावल्यां लिखितास्तेषां परि-
जनाश्चार्थं तत्तेषां जायाः पुत्रा दुहितरश्चैतेषां सम्पूर्णसमूहाय तैरंशा
१९ अदीयन्त, यतस्ते विश्वास्यत्वेन स्वान् पवित्रान् अकुर्व्वन्। अपरं हारोण-
वंशीययाजकानां कृते तेषां नगराणां सीमान्तःपातिक्षेत्रेषु प्रतिनगरं
निर्द्दिष्टनामानो मानवा याजकानाम् एकैकस्मै पुरुषायांशवितरणार्थं
लेवीयानां मध्ये वंशावल्यां लिखितेभ्यः सर्व्वेभ्यश्चांशवितरणार्थं नियुक्ता
आसन्।
२० हिष्कियो यिहूदाः सर्व्वस्मिंस्तादृशं चकार स निजप्रभोः परमेश्वरस्य

साक्षाद् उत्तमं तुष्टिजनकं सत्यञ्च कर्म्म चकृवान्। स निजेश्वरस्यान्वेष- ११
णार्थम् ईश्वरीयमन्दिरस्य परिचर्य्यां शास्त्रं विधिञ्चाधि यस्मिन् कर्म्मणि
प्रावर्त्तत तत् निजनिखिलान्तःकरणेन समं कृत्वा प्रोन्नतो बभूवान्।

---

# ३२ द्वात्रिंशोऽध्यायः।

१ सन्हेरीबेन यिरूशालमस्य हिष्कियस्य च रोधनं ९ ईश्वरस्य वैपरीत्येन सन्हेरीबस्य कथनं २० हिष्कियस्य प्रार्थनं परमेश्वरस्योत्तरं २४ हिष्कियस्य पीडायाः प्रतीकारः २७ तस्य धनस्य कथनं ३२ तस्य निधनञ्च।

एतेभ्यः कर्म्मभ्यः सत्यतातश्च परम् अश्शूरीयो नरपतिः सन्हेरीब १
आगत्य यिहूदाजनपदं प्रविवेश प्राकारवेष्टितानां नगराणां विरुद्धं
शिविरं स्थापयित्वा तानि पराजयितुं मतिं चकार च। ततो हिष्कियः २
सन्हेरीबस्यागमनं यिरूशालमस्य विरुद्धं सङ्ग्रामार्थं तस्य मनश्च
विज्ञाय नगरस्य बहिःस्थितानां प्रस्रवणानां सलिलानि रोद्धुं निजाध्यक्षैः ३
पराक्रमिलोकैश्च समं मन्त्रणाञ्चकार ततस्ते तस्य साहाय्यं चक्रुः। अपरम ४
अश्शूरीया नृपतय आगत्य कुतो बहु सलिलं प्राप्नुयुरिति गदित्वा बह-
वो लोकाः समेत्य सर्व्वाणि प्रस्रवणानि देशमध्येन वहत् स्रोतश्च रुरुधुः।
अपरं हिष्कियः स्वं बलवन्तं विधाय भग्नप्राकाराणां सर्व्वेषां जीर्णोद्धारं ५
कृत्वा तान् प्राचीं दुर्गसमानान् चकृवान् तस्य बहिश्चापरमेकं प्राकारं
निर्म्मापयामास दायूद्नगरस्थमिल्लुनामकस्य स्थानस्य जीर्णोद्धारं चकार
प्रभूतान्यस्त्राणि फलकानि च सञ्चिचाय। अपरं लोकानाम् उपरि ६
सेनापतीन् नियोज्य नगरद्वारस्थसन्निवेशे स्वसम्मुखे तान् संगृह्याश्वास-
जनकं वच इदं जगाद, यूयं बलवन्तः साहसिनश्च भवत, अश्शूरीय- ७
नृपात् तस्य सहचरात् लोकनिवहाच्च मा बिभीत व्याकुला वा मा
भवत। यस्मात् तस्य सहायेभ्यो ऽस्माकम् अधिकाः सहाया विद्यन्ते।
अपरं यस्मात् मांसमयो बाहुस्तस्य सहायः किन्त्वस्माकम् उपकाराया- ८
स्माकं युद्धसाधनाय चास्माकं प्रभुः परमेश्वरो ऽस्माकं सहायो विद्यते।
ततो लोका यिहूदीयनरपतेर् हिष्कियस्य वचसि विश्वासं चक्रिरे।

अनन्तरम् अश्शूरीयो नरपतिः सन्हेरीबो लाखीशस्य विरुद्धं स्वबला- ९
भिः समं स्थितिकाले यिहूदीयनरपतेर् हिष्कियस्य समीपं यिरूशालमे
विद्यमानानां सर्व्वेषां यिहूदीयलोकानां समीपञ्च निजदासान् यिरूशा-

मन्दिरं प्रविष्टे तदीयात्मजा तस्मिन्नेव स्थाने खड्गेन तम् अवधिषुः। अनेन २२
प्रकारेण परमेश्वरो हिष्कियं यिरूशालमनिवासिनश्चाशूरीयन्टपतेः
सन्हेरीवस्य हस्तात् अपरेषामपि सर्व्वेषां हस्तात् उद्धारयाञ्चकार
सर्व्वतो दिशो ररक्ष च। तस्मात् बहवो यिरूशालमम् आगत्य परमे- २३
श्वराय नैवेद्यानि यिहूदीयन्टपतये हिष्कियाय चोपायनानि ददुः, स
च ततः परं सर्व्वासां जातीनां दृष्ट्या महान् बभूव।

तस्मिन् समये हिष्कियो मृतप्रायः पीडितः सन् परमेश्वरं प्रति २४
प्रार्थनां चकार, ततः स तं प्रतिजगाद आश्चर्य्यक्रियाञ्च दर्शयामास। किन्तु २५
हिष्कियो यादृग् उपकृतस्तादृक् कृतज्ञो न भूत्वा गर्व्वितमना बभूव,
तत्कारणात् तं प्रति यिहूदां यिरूशालमञ्च प्रति क्रोध उद्भूव। तथापि २६
हिष्किये यिरूशालमनिवासिषु च मनोगर्व्वं विहाय नम्रेषु भूतेषु हि-
ष्कियस्य जीवनसमये तान् प्रति क्रोधो न प्राकाशत।

एतस्य हिष्कियस्यातीव प्रभूतम् ऐश्वर्य्यं सम्मानञ्चासीत् स च स्वार्थं २७
रजतकाञ्चनमणीनां सुगन्धिद्रव्याणां फलकानां सर्व्वप्रकाराणां मनोहर-
भाजनानाञ्च भाण्डागाराणि निर्म्मापयामास। अपरं भूम्युत्पन्नानां शस्य- २८
द्राक्षारसतैलानामपि भाण्डागाराणि नानाविधपशूनां कृते गोष्ठानि
मेषव्रजानां कृते शालाश्च निर्म्मापयामास। अपरं स स्वस्य कृते नग- २९
राणि चकार गोमेषादीनाञ्च व्रजान् सञ्चिचाय यस्मात् ईश्वरस्तस्मै
प्रभूतं धनं प्रादात्। एष हिष्किय ऊर्द्धस्थगीहोनाभिधान[illegible]यानां ३०
धारां बद्धा भूम्यध ऋजुमार्गेण दायूद्नगरस्य पश्चिमपार्श्वम् आनि-
नाय, अपरं हिष्कियः सर्व्वकार्य्येषु कृतार्थो बभूव। किन्तु जनपदे कृत- ३१
स्याश्चर्य्यकर्म्मणो विवृतिं प्रष्टुं बाबिलीयाध्यक्षैस्तं प्रति दूतेषु प्रेषित-
वत्स्वीश्वरस्तं परीक्षितुं तस्य मनसः सर्व्वभावं प्रकाशयितुमेच्छन् तं
परितत्याज।

हिष्कियस्यावशिष्टं चरित्रं तस्य धर्म्मकर्म्माणि चामोससुतस्य भवि- ३२
ष्यद्वादिनो यिशायियस्य दर्शनपुस्तके यिहूदीयानाम् इस्रायेलीयानाञ्च
क्षितिपतीनां पुरावृत्तपुस्तके च लिखितानि विद्यन्ते। अनन्तरं हिष्किये ३३
निजपितृलोकैः सार्द्धं महानिद्रां गते मनुजा दायूद्वंशस्य प्रोच्चस्थाने
तं निदधिरे, अपरं यिहूदीया यिरूशालमनिवासिनश्च मनुजास्तस्य
निधनकाले तस्य सम्मानं चक्रिरे। ततः परं तस्य तनयो मिनशिस्तस्य
पदे राजत्वं प्राप।

# ३३ त्रयस्त्रिंशोऽध्यायः।

१ मिनशेः कुराजत्वं ९ नानाविधदेवपूजनं ११ तस्य बन्दीभवनं पुनः स्वदेशागमनं परमेश्वरस्य परिचरणं १८ तस्य विहृतिः २० तदीयतनयस्यामोनस्य निधनञ्च।

१ मिनशि द्वादशवत्सरवयसि राजत्वं कर्त्तुम् आरभ्य यिरूशालमे पञ्च-
२ पञ्चाशद्वत्सरान् राजत्वं चकार। किन्तु परमेश्वर इस्रायेलीयवंशस्य
सम्मुखाद् यान् अन्यजातीयान् दवयाञ्चकार, तेषां घृणार्हाचारसमानं
कुत्सिताचारं स परमेश्वरस्य साक्षात् चकार।
३ तस्य जनको हिष्कियो यानि उच्चस्थानानि विनाशितवान् स तानि
पुनर्व्वारं निर्म्मापयाञ्चकार, अपरं बालो निमित्तं वेदी निर्म्मापयाञ्चकार
चैत्यवृक्षान् स्थापयाञ्चकार इत्थम् आकाशीयनक्षत्रगणं प्रणनाम सिषेवे
४ च। अपरं यिरूशालमे मम नाम सदाकालार्थं स्थास्यतीति वाक्यं पर-
मेश्वरो यन्मन्दिरमधि कथयामास तस्मिन् परमेश्वरीयमन्दिरे स वेदी
५ निर्म्मापयामास, अपरं परमेश्वरीयभवनस्य द्वयोः प्राङ्गणयोः स गगनी-
६ यतारकाणां कृते वेदी निर्म्मापयाञ्चकार। अपरं स हिन्नोमीयत्यकायां
निजात्मजान् वह्निं प्रवेशयाञ्चकार गणकत्वं मोहनत्वञ्चाचचार माया-
विनां भूतविदां गुणिनाञ्च कर्म्म चकार इत्थं स परमेश्वरं क्रोधयितुं
७ तस्य गोचरे बहूनि कुत्सितकर्म्माणि चकार। अपरं स स्वनिर्म्मितां
प्रस्तरमयीं प्रतिमां मन्दिरे स्थापयामास, किन्तु तन्मन्दिरम् अधीश्वरो
दायूदे तदीयसुताय सुलेमने च वच इदं कथितवान् एतस्मिन् मन्दिरे
सर्व्वेषाम् इस्रायेलीयवंशानां मध्यात् मयाभिलषिते यिरूशालमे च निजं
८ नाम नित्यं मया स्थापयिष्यते। किञ्चाहं तान् यद्यद् आज्ञापितवान्
मूससः करेण च यां व्यवस्थां यान् विधीन् याश्च राजनीतीस्तेभ्यो ऽददां
ताः सर्व्वाः पालयितुं यदि ते यतन्ते, तर्हि यो जनपदस्तेषां पूर्व्वपुरुषाणां
कृते मया न्यरूप्यत, तस्य जनपदस्य मध्याद् इस्रायेलीयवंशस्य पदम-
९ पम् इतः परं नापसरिष्यामीति। अनेन प्रकारेण मिनशि यिहूदीय-
लोकान् यिरूशालमनिवासिनश्च भ्रमयन् इस्रायेलीयवंशानां सम्मुखात्
परमेश्वरेणोच्छिन्नानाम् अन्यजातीयानां क्रियाभ्यो ऽप्यधमाः क्रियाः
१० कारयामास। अनन्तरं परमेश्वरो मिनशिं तदीयप्रजाश्चोपदेशभारतीम्
आजहार किन्तु ते तत्र मनांसि न निदधिरे।
११ अनन्तरं परमेश्वरस्तेषां प्रतिकूलम् अशूरीयमहीपतेः सेनापतीन्

आनिनाय तेन ते कण्टकानां मध्ये मिनशिं धृत्वा रक्तूटीयशृङ्खलै र्बद्ध्वा
बाबिलं निन्युः। तत्र सो ऽत्यन्तं क्लिष्टः सन् निजप्रभुं परमेश्वरं प्रसा- १२
दयाञ्चक्रे स्वीयपूर्व्वपुरुषाणाम् ईश्वरस्य गोचरे आत्मानम् अतिशयं नम्रं
चकार च। इत्थं तस्य सन्निधौ तेन प्रार्थनायां कृतायां स प्रसन्नो १३
भूत्वा तस्य प्रार्थनां निशम्य तं पुन र्यिरूशालमम् आनीय प्राप्तराज्यं
चकार, ततो यिहोवा एवेश्वरो ऽस्तीति मिनशिः परिज्ञातवान्।
तदनन्तरं स दायूद्नगरस्य बहिःस्थप्राकारं गीहोनस्य पश्चिमपार्श्वे १४
उपत्यकायाः सन्निधौ मत्स्यद्वारं यावत् निर्म्माप्यातीवोच्चं कृत्वा विस्तार्य्य
ओफलाख्यगिरिणा सह संयोजयामास। अपरं यिहूदादेशस्य प्राकार-
वेष्टितेषु निखिलनगरेषु वाहिनीपतीन् नियोजयामास। अपरं स १५
इतरान् देवान्, विशेषतः परमेश्वरस्य मन्दिरस्थां प्रतिमां परमेश्वरीय-
मन्दिरस्य शिलोच्चये यिरूशालमे च तेन निर्म्मिता निखिला वेदी
र्दूरयित्वा नगराद् बहि र्निचिक्षेप। अपरं परमेश्वरस्य वेदीं संस्थाप्य १६
तस्यां मङ्गलार्थकान् प्रशंसार्थकांश्च बलीन् ददौ, अपरं यिहूदावंशम्
इस्रायेलः प्रभोः परमेश्वरस्य परिचरणम् आदिदेश। तथापि मनुजा- १७
स्तदानीमपि भजुस्थानेषु बलिदानम् अकुर्व्वन् किन्तु केवलं तेषां प्रभुं
परमेश्वरम् उद्दिश्य तद् अकुर्व्वन्।

एतस्य मिनशेरवशिष्टं चरित्रं निजेश्वरस्य सन्निधौ प्रार्थनम् इस्राये- १८
लीयप्रभोः परमेश्वरस्य नामधेयेन ये प्रदर्शकास्तेन सह सम्भाषितवन्त-
स्तेषां वचांसि चेस्रायेलीयक्षितिपतीनां पुरावृत्तपुस्तके लिखितानि वि-
द्यन्ते। अपरं तस्य प्रार्थना तस्यानुगृहीतत्वं तस्य निखिलं पापम् अत्या- १९
चारश्च, अपरं तस्य नम्रीभवनात् प्राक् स्थाने स्थाने भजुस्थानचैत्यवृक्ष-
खनितप्रतिमूर्त्तीनां स्थापनञ्चैतेषां सर्व्वेषां विवृतिः प्रदर्शकानां ग्रन्थेषु
लिखिता विद्यते।

अनन्तरं मिनशिः स्वीयपितृलोकैः सह महानिद्रां जगाम ततो मनुजा- २०
स्तस्य निजगेहे तं श्मशाने निदधिरे, अपरं तस्य तनय आमोनस्तस्य
पदे राजत्वं प्राप। आमोनो द्वाविंशवत्सरवयस्कः सन् राजत्वं कर्त्तुम् २१
आरभ्य यिरूशालमे द्वौ वत्सरौ राजत्वं कृतवान्। तस्य जनको मिनशि २२
र्यादृक् कृतवान्, सो ऽपि तादृक् परमेश्वरस्य साक्षात् कुत्सिताचारं
चकार। तस्य तातो मिनशि र्या याः खनितप्रतिमूर्त्तीः कृतवान् ता
उद्दिश्यामोनो बलिदानं कृतवान् तासां परिचरणञ्च चकार। किन्तु २३

तस्य जनको मिनशिः परमेश्वरस्य सन्निधौ यादृग् आत्मानं नम्रम् अकरोत्
स तथा न चकार, किन्त्वामोनः क्रमशो ऽधिकम् अपराधं चकार।
२४ अनन्तरं तस्य भृत्यास्तं प्रति द्रोहं विधाय तस्य भवने तम् अवधिषुः।
२५ अपरं देशीयलोका आमोनस्य नरपतेर्द्रोहकान् सर्व्वान् हत्वा तस्य पुत्रं
योशियं तस्य पदे राजत्वे ऽभिषिषिचिरे।

---

## ३४ चतुस्त्रिंशो ऽध्यायः।

१ योशियस्य सुराजत्वं ३ सुरार्चाया दूरीकरणं ८ मन्दिरस्य जीर्णोद्धारार्थं लोकानां नियोजनं १४ व्यवस्थापुस्तकस्य प्रापणं राज्ञः सन्निधौ प्रेषणञ्च २१ हुल्दाया भविष्यद्वचनं २९ व्यवस्थापुस्तकस्य पठनम् ईश्वरेण साकं नियमकरणञ्च।

१ योशियो ऽष्टवत्सरवयस्कः सन् राजत्वं कर्त्तुम् उपक्रम्य यिरूशालमि
२ एकत्रिंशद्वत्सरान् राजत्वं चकृवान्। स परमेश्वरस्य समक्षं सत्कर्म्माणि
चकार निजपूर्व्वपुरुषस्य दायूदो वर्त्मनि चचार तस्य दक्षिणं वामं वा
प्रति न परावृत्ते।
३ तस्य राजत्वस्याष्टमे वत्सरे स तरुणः सन्नपि निजपूर्व्वपुरुषस्य दायूद
ईश्वरं गवेषयितुम् उपचक्रमे। अपरं द्वादशे वत्सरे स भृगुस्थानानि
चैत्यवृक्षान् खनितान् गलितधातुनिर्म्मितान् वा विग्रहांश्च दूरयित्वा
४ यिहूदादेशं यिरूशालमञ्च परिष्कर्त्तुम् आरेभे। मनुजास्तस्य समक्षं
बालो वेदी र्बभञ्जुः, तदुपरि स्थापिता रवेः प्रतिमाश्च तेन छेदया-
ञ्चक्रिरे, चैत्यवृक्षाः खनिता गलितधातुनिर्म्मिता वा विग्रहास्तेन भंक्त्वा
धूलिवत् चूर्णयाञ्चक्रिरे, अपरं ये तान् उद्दिश्य मखम् अकुर्व्वन् तेषां
५ श्मशानोपरिष्टात् तानि चूर्णानि व्यकीर्य्यन्त। याजकानाम् अस्थीनि च
तेषां यज्ञवेदीनाम् उपरिष्टात् तेन दाहयाञ्चक्रिरे। इत्थं स यिहूदा-
६ देशं यिरूशालमञ्च परिचस्कार। अपरं मिनशेरिफ्रयिमस्य शिमियोनस्य
७ च नगरेषु नप्तालिं यावत् स सर्व्वत्र लोकानां भवनान्यनुसन्दधे। वेदीश्चै-
त्यवृक्षांश्च भञ्जयामास खनितविग्रहान् धूलिवत् चूर्णयामास कृत्स्न
इस्रायेलीयजनपदे सूर्य्यप्रतिमाश्छेदयामास च, ततः परं यिरूशालमं
पुनराजगाम।
८ अपरं तस्य राजत्वस्याष्टादशे वत्सरे जनपदस्य निवेशस्य च परिष्कर-
णात् परं स परमेश्वरीयमन्दिरस्य जीर्णोद्धारार्थम् अत्सलियस्य तनयं

शाफनं नगराध्यक्षं मासेयं योयाहसस्य तनयं योयाहं पुरावृत्तलेख-
कञ्च प्रेषयामास। ततस्तेषु महायाजकस्य हिल्कियस्य समीपम् उपस्थि- ९
तेषु परमेश्वरस्य मन्दिरम् आनीतानि रजतान्यर्थतो मिनशिवंशस्ये-
फ्रयिमस्य इस्रायेलवंशस्यावशिष्टेस्रायेल्वंशस्य कृत्स्नस्य यिहूदावंशस्य विन्या-
मीनवंशस्य यिरूशालमनिवासिनाञ्च करेभ्यो लेवीयद्वारपालैः सङ्गृही-
तानि रजतानि तेभ्यो ऽदीयन्त। अपरं ये परमेश्वरीयभवनाध्यक्षाः १०
कार्य्यम् असाधयन् तेषां करेषु ते तानि समर्पयामासुः। ते तु मन्दिरस्य
जीर्णोद्धारं कर्त्तुं तद् दृढयितुञ्च परमेश्वरीयमन्दिरे नियुक्तेभ्यः कर्म्मका-
रिभ्यस्तानि ददुः। अर्थतः सूत्रधारस्थपतीनां वेतनार्थं खनितपाषाणानां ११
बन्धनकाष्ठानाञ्च क्रयार्थं यिहूदीयनृपै विनष्टानाम् अगाराणां गृहका-
ष्ठस्थापनार्थञ्च तानि ददुः। ते मनुजा विश्वास्यत्वेन कर्म्म चक्रवांसः। १२
अपरं तेषाम् अध्यक्षत्वे यहत ओवदियश्चैतौ मिरारिवंशीयौ लेवीयौ
सिखरियो मिशुल्लमश्चेतिनामानौ किहातीयौ तदन्यलेवीयाश्चार्थतो
वाद्यवादने निपुणाः सर्व्वे नियुक्ता आसन्। ते भारवाहकानां सर्व्व- १३
प्रकारकर्म्मकारिणाञ्चाप्यध्यक्षा आसन्। अपरं लेवीयानां मध्ये के ऽपि
लेखका अधिपतयो द्वारपालाश्चासन्।

अनन्तरं परमेश्वरस्य मन्दिरम् आनीतानां मुद्राणां बहिरानयनकाले १४
याजको हिल्कियो मूससो हस्तेन लिखितं परमेश्वरीयव्यवस्थापुस्तकं
लेभे। अनन्तरं हिल्किय उत्तरं कुर्व्वन् लेखकं शाफनं जगाद, मया पर- १५
मेश्वरस्य मन्दिरे व्यवस्थापुस्तकम् अलम्भि। अनन्तरं हिल्कियस्तत् पुस्तकं
शाफनाय ददौ। अपरं शाफनस्तत् पुस्तकं राज्ञः समीपं समानीय पुन- १६
र्व्वारं नरपतेः समक्षम् इति निवेदयामास, स्वदासान् प्रति भवता समा-
दिष्टानि निखिलकर्म्माणि तैः क्रियन्ते। परमेश्वरस्य मन्दिरे लब्धा निखि- १७
ला मुद्रास्तैः सङ्गृहीताः कर्म्माध्यक्षाणां कर्म्मकारिणाञ्च करेषु समर्पया-
ञ्चक्रिरे। अनन्तरं लेखकः शाफनो नरपतिं वच इदं विज्ञापयामास, १८
याजको हिल्कियो मह्यमिदं पुस्तकम् अददात्। अनन्तरं शाफनो महो-
पतेः साक्षात् तत् पपाठ। तदानीं राजा तस्य व्यवस्थापुस्तकस्य वचांसि १९
निशम्य निजं वसनं चिच्छेद। अपरं राजा हिल्कियं शाफनस्य तनयम् २०
अहीकामं मीखायस्य तनयम् अब्दोनं लेखकं शाफनम् असायनामकं
राज्ञ एकं दासञ्चेत्यादिदेशाज्ञापयाञ्चकार, यूयं गत्वा मम कृत इस्रायेल्वंशस्य २१
यिहूदावंशस्य चावशिष्टलोकानाञ्च निमित्तं तस्य लब्धस्य पुस्तकस्य

वाक्यान्यधि परमेश्वरं पृच्छत, यत एतस्मिन् पुस्तके यच्च लिखितम् आस्ते
तदाचरणायास्माकं पूर्व्वपुरुषाः परमेश्वरस्य वाक्यं न गृहीतवन्त एत-
स्मात्कारणाद् अस्माकं विरुद्धं परमेश्वरस्य महाक्रोधः प्रज्वलित आस्ते।
२२ अनन्तरं हिल्कियो राज्ञा नियुक्ता लोकाश्च हर्हसपौत्रस्य तिक्वाच-
तनयस्य शल्लुमाख्यस्य वस्त्ररक्षकस्य भार्य्याया हुल्दाभिधानाया भवि-
ष्यद्वादिन्याः समीपं जग्मुः। सा यिरूशालमस्य पाठशालायाम् अवसत्।
अनन्तरं ते तद्वचनं तस्यै कथयामासुः।
२३ सा तु तान् आचचक्षे, इस्रायेलः प्रभुः परमेश्वर इदं वचो वदति,
२४ यो मनुष्यो युष्मान् मम समीपं प्राहिणोत् तस्मै वच इदं कथयत। पर-
मेश्वर इति वाचं ब्रवीति, पश्याहम् एतत् स्थानं तन्निवासिनश्च प्रत्यमङ्ग-
लम् अर्थतो यिहूदीयनृपस्य साक्षात् पठिते पुस्तके लिखितानां निखि-
२५ लशापानां फलं घटयिष्यामि। यतस्ते निजनिजहस्तानां क्रियाभि र्मां
कोपयितुं मां परित्यज्येतरदेवान् उद्दिश्य धूपान् अज्वालयन् एतत्कार-
णाद् एतस्य स्थानस्य विरुद्धं मम कोपाग्निः प्रज्वलितवान् न च निर्व्वा-
२६ स्यते। परमेश्वरं परिप्रष्टुं युष्मान् प्राहिणोत् यो यिहूदीयनरपतिस्तम्
इदं वचो ब्रूत, त्वं यानि वचनान्याकर्णयस्तान्यधीस्रायेलः प्रभुः पर-
२७ मेश्वर इति भारतीं भाषते, एतस्य स्थानस्य तन्निवासिनाञ्च विरुद्धं
मम वाक्येषु त्वया श्रुतेषु त्वदीयम् अन्तःकरणं कोमलम् अभवत्, त्वमी-
श्वरस्य साक्षात् नम्रोऽभवः, मम गोचरे नम्रीभूय निजवस्त्राणि छित्त्वा
मम सम्मुखे ऽक्रन्दश्च तन्निदानात् परमेश्वरो ब्रवीति मयापि त्वदीयं वच
२८ आकर्णितं। पश्याहं त्वदीयपितृलोकैः समं त्वां संग्रहीष्यामि त्वं शान्त्या
निजश्मशाने संग्राहीष्यसे किञ्चाहम् एतत् स्थानं तन्निवासिनश्च प्रति
यान्यशुभानि घटयिष्यामि तानि तव चक्षुर्षि न भविष्यन्ति। अन-
न्तरं ते राजानं तां वार्त्तां जगदुः।
२९ अनन्तरं राजा दूतान् प्रहित्य यिहूदादेशस्य यिरूशालमस्य च
३० निखिलान् प्राचीनलोकान् संजग्राह। अपरं नरपतिः परमेश्वरस्य
मन्दिरं जगाम, यिहूदादेशीयाः सर्व्वे नरा यिरूशालमनिवासिनो
लोका याजका लेवीया महान्तः क्षुद्राश्च निखिलमनुजास्तेन सह
वव्रजुः। अपरं स परमेश्वरस्य मन्दिरे लब्धस्य नियमपुस्तकस्य लिखि-
३१ तानि वचांसि तेषां कर्णगोचरे पाठयामास। अपरं नरपतिः स्वीय-
स्थाने तिष्ठन् परमेश्वरस्य साक्षात् नियमम् इमं चकार, वयं परमेश्वरम्

अनुगमिष्यामो निखिलमनोभि र्निखिलान्तःकरणैश्च तस्याज्ञाः प्रामाण्य-
वचनानि विधींश्च समाचरिष्यामः पुस्तके ऽस्मिन् लिखितानि सर्व्वाणि
नियमितवाक्यानि पालयिष्यामश्चेति। अपरं यिरूशालमे बिन्यामीन- ३२
देशे च विद्यमानाः सर्व्वे मनुजास्तस्याज्ञया तं नियमम् अङ्गीचक्रिरे यि-
रूशालमनिवासिनश्चेश्वरस्यार्थतः तेषां पूर्व्वपुरुषाणाम् ईश्वरस्य निय-
मानुसारेण कर्त्तुम् आरेभिरे। अपरम् इस्रायेलवंशस्याधीना यावन्तो ३३
जनपदास्तेभ्यो देशेभ्यो योशियो निखिलानि घृणार्हवस्तूनि दवयाञ्चकार,
इस्रायेल्मध्ये विद्यमानान् सर्व्वान् मनुजान् परिचर्य्याम् अर्थतस्तेषां प्रभोः
परमेश्वरस्य परिचर्य्यां कारयाञ्चकार च। तस्य यावज्जीवनं ते तेषां
पूर्व्वपुरुषाणां प्रभोः परमेश्वरस्यानुगमनात् न निववृतिरे।

---

## ३५ पञ्चत्रिंशोऽध्यायः।

१ निस्तारोत्सवकरणं २० रणे योशियस्य पतनं तस्य मरणविधानञ्च २५ तस्य कृते लोकानां शोचनं विलपनञ्च।

अनन्तरं योशियो यिरूशालमे परमेश्वरम् उद्दिश्य निस्तारोत्सवं १
चकार। मनुजाः प्रथममासस्य चतुर्द्दशदिने निस्तारोत्सवस्य बलीन्
चिच्छिदुः। अपरं स याजकान् तेषां पदेषु न्ययुङ्क्त, परमेश्वरीयमन्दिरस्य २
सेवनार्थं तान् आश्वासीच। अपरं स निखिलेस्रायेलः कृष्णाकान् ३
ईश्वरार्थपवित्रान् लेवीयान् आजहार, इस्रायेलीयनृपस्य दायूदस्तनयः
सुलेमान् यन्मन्दिरं निरमापयत् तन्मध्ये यूयं पवित्रां मञ्जूषां स्थापयत
तदीयभारो युष्माकं स्कन्धेषु न भविष्यति, इदानीं यूयं निजप्रभोः
परमेश्वरस्य तदीयप्रजानामिस्रायेलीयलोकानां सेवनं कुरुत। अपरम् ४
इस्रायेलीयनृपस्य दायूदो लिखनानुसारेण तदीयतनयस्य सुलेमनो
लिखनानुसारेण च यूयं तेषां पितृवंशेषु स्वपर्य्यायेषु नियुक्ता भवत।
अपरं युष्मदीयभ्रातृणाम् अर्थतो लोकानां पितृवंशरूपशाखागणानुसा- ५
रेण लेवीयानां पितृवंशस्य विभागानुसारेण च पवित्रस्थाने तिष्ठत।
अपरं मूससा दत्तस्य परमेश्वरीयनिदेशस्य प्रचारार्थं निस्तारोत्सवीय- ६
बलीन् छिन्दत स्वान् पवित्रीकृत्य निजभ्रातृणां कृत उपकल्पयत। अपरं ७
योशियस्तत्र विद्यमानेभ्यः सर्व्वेभ्यो निस्तारपर्व्वीयबलिदानार्थं त्रिंशत्
सहस्राणि मेषशावकान् छागवत्सांश्च ददौ, तद्भिन्नं त्रीणि सहस्राणि

८ वृषभानपि ददौ। सर्व्वाण्येतानि नृपस्य सम्पत्तेर्दीयन्त। अपरं तस्या-
धिपतयः स्वेच्छया लोकेभ्यो याजकेभ्यो लेवीयेभ्यश्च दानं ददिवांसः, वि-
शेषतो हिल्कियः सिखरियो यिहीयेलश्चैते परमेश्वरीयमन्दिरस्याध्यक्षा
निस्तारोत्सवीयबलिदानार्थं षट्शताधिके द्वे सहस्रे मेषशावकान् तद्भिन्नं
९ त्रीणि शतानि वृषभान् याजकेभ्यो ददिवांसः। अपरं कोनानियः शिम-
यियनिथनेलनामकौ तस्य भ्रातरौ हशबियो यियूयेलो योषाबदश्चैते
लेवीयानाम् अध्यक्षा निस्तारोत्सवीयबलिदानार्थं पञ्चसहस्राणि मेषशा-
१० वकान् तद्भिन्नं पञ्चशतानि वृषभान् लेवीयेभ्यो ददिवांसः। अनेन प्रकारेण
परिचर्य्यायाम् उपकल्पितायां नृपतेराज्ञानुसारेण याजकाः स्वस्वस्थानेषु
११ लेवीयाश्च निजनिजनिरूपितपर्य्यायेषु तस्थिवांसः। अपरं ते निस्तारम-
होत्सवीयबलीन् चिच्छिदुः, याजकाश्च स्वहस्ते रुधिरं विचकरुः, लेवी-
१२ याश्च पशूनां चर्म्माणि प्रोत्तोलयाञ्चक्रुः। अपरं ते होमार्थकबलीन्
लोकानां पितृवंशशाखागणानुसारेण तेभ्यो दानार्थं मूससः पुस्तके लेख-
नानुसारेण परमेश्वरम् उद्दिश्योत्सर्जनार्थञ्च पृथक् चक्रुः, तद्वद् वृषभा-
१३ नपि पृथक् चक्रुः। अनन्तरं ते विधिवत् निस्तारोत्सवीयबलीन् वह्निना
बभञ्जुः, किन्त्वन्यान् पवित्रमांसान् पाकस्थालीषु पैत्तलपात्रेषु कटाहेषु
१४ च पेचुः, निखिललोकेभ्यः शीघ्रं परिवेषयाञ्चक्रुश्च। अनन्तरं ते स्वेषां
याजकानाञ्च कृते उपकल्पयामासुः यतो हारोणवंशीया याजका रजनीं
यावत् होमेन मेदोदाहेन च व्यस्ता आसन् तस्मात् लेवीयाः स्वेषां
१५ हारोणवंशीययाजकानाञ्च निमित्तम् उपकल्पयामासुः। अपरं दायूद
आसफस्य हेमनस्य राजकीयदर्शकस्य यिदूथूनस्य चाज्ञानुसाराद्
आसफवंशीयगायकाः स्वेषां स्थानेष्वतिष्ठन् दौवारिकाश्च प्रतिद्वारम्
अतिष्ठन् ते स्वेषां कार्य्याणि न तत्यजुः, यस्मात् तेषां भ्रातरो लेवीया-
१६ स्तेषां कृते उपाकल्पयन्। अनेन प्रकारेण नृपते र्योशियस्याज्ञानुसारेण
निस्तारोत्सवकरणार्थं परमेश्वरस्य वेद्यां होमीयबलिदानार्थञ्च तस्मिन्
१७ दिने परमेश्वरस्य निखिला परिचर्य्या कल्पिता। समुपस्थिता इस्रायेलीय-
वंशास्तस्मिन् समये निस्तारोत्सवं ततः परं सप्तदिनानि यावत् किण्व-
१८ शून्यपूपानाम् उत्सवञ्च चक्रिरे। भविष्यद्वादिनः शिमूयेलस्य समयमार-
भ्यैतादृङ्निस्तारोत्सव इस्रायेलि कदापि नाकारि। अपरं तदानीं योशियो
याजका लेवीया निखिलयिहूदावंश इस्रायेलीयानाम् उपस्थिता लोका
यिरूशालमनिवासिनश्च यादृशं निस्तारोत्सवम् अकुर्व्वन् तादृशम् इस्रा-

यिरूशालम्निवासिनो ऽपि न चक्रुवान्। योशियस्य राजत्वस्याष्टादशे वत्सरे १९
एष निस्तारोत्सवो ऽकारि।

एतत्सर्व्वस्मात् परं योशियेन मन्दिरे स्थिते मिस्रीयो नृपति र्निखुः २०
फरातसरितः समीपे कर्किमीशे योद्धुमर्थम् आजगाम ततो योशिय-
स्तस्य विरुद्धं जग्मिवान्। किन्तु स दूतान् प्रहित्य वच इदं कथयामास २१
हे यिहूदीयराज त्वया सह मम किं कार्य्यं? अहमद्य तव विरुद्धं
नागमं किन्तु येन वंशेन सार्द्धं मम समर आस्ते तस्य विरुद्धम् आगतवा-
नहम् ईश्वरश्च मां त्वरयितुं स्वीकृतवान्। अतो मम सहायाद् ईश्वरात्
निवर्त्तस्व, न चेत् स त्वां व्यापादयिष्यति। तथापि योशिय ईश्वरीय २२
वदनान्निःसृतेषु निखो वचनेषु मनो न निधाय तस्मात् पराङ्मुखो न
भवन् तेन समं समरं कर्त्तुं परवेशं धारयामास मगिद्दोनामिकायां
निम्नभूमौ रणं कर्त्तुं जगाम च। ततो धनुर्द्धरै र्नृपते र्योशियस्य गात्रे २३
शरेषु निक्षिप्तेषु नृपतिः स्वीयदासान् जगाद, अहम् अतीव व्यथितो
ऽस्मि, मां स्थानान्तरं नयत। ततस्तस्य दासास्तस्माद् रथात् तं बहि- २४
ष्कृत्य तस्य द्वितीये रथे आरोप्य यिरूशालमं निन्युः, तदा स ममार
निजपितृलोकानां श्मशाने निदधे च। अनन्तरं यिहूदावंशीया इस्रा-
येल्वंशीयाश्च सर्व्वे लोका योशियस्य निमित्तं महाशोकं चक्रवांसः।

अपरं यिरिमियो योशियस्य निमित्तं विलापगीतानि रचयामास २५
तस्माद् गायका गायिकाश्चाद्यापि निजनिजविलापगानेषु योशियम्
उपगायन्ति लोकाश्च विधिमिव तानीस्रायेल्वंशम् आदिशन्। पश्य
तानि विलापपुस्तके लिखितानि विद्यन्ते। एतस्य योशियस्यावशिष्टं २६
चरितं परमेश्वरीयशास्त्रस्य लिखनानुयायीनि तस्य धर्म्मकर्म्माणि तस्या- २७
द्यन्ता निखिला वित्ततिश्चैतानि सर्व्वाणीस्रायेलीयानां यिहूदीयानाञ्च
नृपतीनां पुरावृत्तपुस्तके लिखितानि विद्यन्ते।

---

## ३६ षट्त्रिंशो ऽध्यायः।

१ यिहोयाहसस्य राजत्वं पदच्युतत्वञ्च ५ कुराजत्वकारणाद् यिहोयाकीमस्य बाबिले प्रवासः ९ कुराजत्वनिदानाद् यिहोयाखीनस्यापि बाबिले प्रवासः ११ सिदिकियस्य राज्यप्राप्तिः पातककरणञ्च १४ पातकनिदानाद् यिरूशालमस्य ध्वंसनं विनाशनञ्च २२ कोरसस्य घोषणञ्च।

अनन्तरं देशीयमनुजा योशियस्य तनयं यिहोयाहसं गृहीत्वा तस्य १

२ जनकस्य पदे यिरूशालमे राजानं चक्रुः। यिहोयाहसस्त्रयोविंशति-
वत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य यिरूशालमे त्रीन् मासान्
३ राजत्वं चकार। अनन्तरं मिसरीयनरपति र्यिरूशालमे तं पदच्युतं
कृत्वा देशे शतकिक्काररूप्यपरिमितं कनकं किक्कारैकपरिमितं चायनय दण्डं
४ निरूपयामास। अनन्तरं मिसरीयो राजा तस्य भ्रातरम् इलियाकीमं
यिहूदायिरूशालमयो राजानं चकार तदीयं नाम यिहोयाकीम इति
चकार च। अपरं निखुस्तस्य भ्रातरं यिहोयाहसं मिसरं निनाय।
५ यिहोयाकीमः पञ्चविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य
यिरूशालमि एकादश वत्सरान् राजत्वं चकार, स निजप्रभोः परमे-
६ श्वरस्य गोचरे कुत्सिताचारं चकार। ततः परं बाबिलीयनृपति र्निबू-
खद्नित्सरस्तस्य विरुद्धम् आगत्य तं पित्तलीयशृङ्खलै र्बद्ध्वा बाबिलं नेतुम्
७ उद्यतवान्। अपरं निबूखद्नित्सरः परमेश्वरीयमन्दिरस्य कतिपयानि
८ भाजनान्यपि बाबिलं नीत्वा बाबिलस्थे निजप्रासादे निदधे। एतस्य यि-
होयाकीमस्यावशिष्टं चरितं तेन कृतानि घृणार्हकर्म्माणि तदीया निखि-
लदोषाश्चैतानि सर्व्वाण्यिस्रायेलीयानां यिहूदीयानाञ्च भूपतीनां पुरा-
वृत्तपुस्तके लिखितानि विद्यन्ते। अनन्तरं तस्य तनयो यिहोयाखीनस्तस्य
पदे राजा बभूव।
९ यिहोयाखीनो ऽष्टादशवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्य त्रीन्
मासान् दश दिनानि च यिरूशालमे राजत्वं चकृवान्। स परमेश्वरस्य
१० गोचरे कुत्सिताचारं चकृवान्। तद्वत्सरान्ते महीपति र्निबूखद्नित्सरो
लोकान् प्रहित्य तं परमेश्वरस्य मन्दिरस्थितानि वाञ्छनीयानि भाज-
नानि च बाबिलं नीतवान्। अपरं तस्य पितृव्यं सिदिकियं यिहूदा यि-
रूशालमस्य च राजत्वे नियोजयामास।
११ सिदिकिय एकविंशतिवत्सरवयस्कः सन् राजत्वं कर्त्तुम् आरभ्यैकादश-
१२ वत्सरान् यावद् यिरूशालमे राजत्वं चकार। स निजप्रभोः परमेश्व-
रस्य गोचरे कुत्सिताचारं चकृवान् परमेश्वरीयवाक्यप्रकाशकस्य भवि-
१३ ष्यद्वादिनो यिरिमियस्य सम्मुख आत्मानं न नम्रीचकार। अपरं यो
निबूखद्नित्सरो नरपतिस्तम् ईश्वरस्य नाम्ना शपथं कारयामास तस्य
विश्वासघातको भूत्वा स ग्रीवां कठिनयित्वा निजम् अन्तःकरणं कठोरं
विधायेस्रायेलः प्रभुं परमेश्वरं प्रति न परावर्त्तते।
१४ अपरं प्रधानयाजका देशीयलोकाश्चान्यजातीयानां घृणार्हकर्म्मानुसा-

देशा बहून् अपराधान् चक्रवांसः। अपरं परमेश्वरो यिरूशालमे यन्म-
न्दिरं पवित्रीकृतवान् तद् अशुचि चक्रुः। तेषां पितृलोकानां प्रभुः पर- १५
मेश्वरो निजप्रजाः स्वीयवासस्थानञ्च कम्पयित्वा महायत्नेन निजदूतान्
तेषां समीपं प्रेषयामास। किन्तु तदीश्वरस्य दूतान् प्रति परिहासं १६
विदधिरे तस्य वचनानि तुच्छीचक्रुस्तदीयभविष्यद्वादिन आकारयामा-
सुश्च तन्निदानात् स्वप्रजानां प्रतिकूलम् ईश्वरस्य कोपः समभवत् स
केनापि प्रतिकर्त्तुं नाशक्यत। ततः स तेषां विरुद्धं कसदीयानां नर- १७
पतिम् आनिनाय स तेषां धर्म्मधाम्नि तेषां तरुणजनान् चन्द्रहासेन
जघान तरुणान् तरुणीः स्थविरान् पलितान् वा प्रति कृपां न चकार,
ईश्वरः सर्व्वमेव तस्य हस्ते समर्पयामास। स ईश्वरीयमन्दिरस्य क्षुद्राणि १८
महान्ति च निखिलभाजनानि परमेश्वरीयमन्दिरस्य वित्तानि राज्ञो
ऽध्यक्षाणाञ्च वित्तानि च सर्व्वमेव बाबिलं निनाय। अपरं तदीयलोका १९
ईश्वरीयं मन्दिरं दाहयामासु यिरूशालमस्य प्राचीरं बभञ्जुस्तत्रत्या
निखिला अट्टालिका दाहयामासुः सर्व्वाणि मनोरम्यभाजनानि विनाश-
यामासुश्च। अपरम् असिनावशिष्टान् लोकान् स बाबिलं नीत्वा प्रवा- २०
सयामास। ततो यावत् पारसीकं राजत्वं नास्थाप्यत तावत् ते तस्य
तदीयवंशस्य च दासा बभूवुः। अपरं यिरिमियेणोक्तं परमेश्वरस्य २१
वाक्यं यत् सिद्धिं गच्छेत् तदर्थं यावत् जनपदः स्वीयं निरूपितं विश्रामं
न बुभोज तावद् अर्थतः सप्ततिवत्सरान् यावत् तेषां देशो ऽनधितिष्ठन्
विश्रामं चकार।

अपरं यिरिमियेण प्रोक्तस्य परमेश्वरीयवचनस्य सिद्ध्यर्थं पारसीक- २२
नृपतेः खुषस्य राजत्वस्य प्रथमे वत्सरे परमेश्वरः पारसीकनरपतेः खुषस्य
मनः प्रवर्त्तयामास ततः स निजराष्ट्रस्य सर्व्वत्र घोषणया पत्रिकया च
वच इदं प्रचारयामास, पारसीकनृपतिः खुष इमां भारतीं कथयति, २३
स्वर्गीयः प्रभुः परमेश्वरः पृथिव्या निखिलानि राज्यानि मह्यम् अददात्,
अपरं यिहूदाजनपदस्थे यिरूशालमे तदीयमन्दिरस्य पुनर्निर्म्माणाय
माम् आज्ञापयत्। अतो युष्माकं मध्ये तस्य लोकः को विद्यते? तस्य
प्रभुः परमेश्वरस्तस्य सहायो भूयात्, स यात्रां विदधातु।

---

# इष्रायस्य पुस्तकं।

## १ प्रथमोऽध्यायः।

१ कोरसा नृपते घोषणं ५ यिरूशालमं प्रति गमनाय मनुजानां प्रवर्त्तनं ७ कोरसेन नृपतिना यिहूदीयलोकेभ्यो मन्दिरस्य भाजनानां वितरणञ्च।

१ अपरं यिरिमियेन प्रोक्तस्य परमेश्वरीयवचनस्य सिद्ध्यर्थं पारसीक-
नरपतेः कोरसस्य राजत्वस्य प्रथमे वत्सरे परमेश्वरः पारसीकनृपतेः
कोरसस्य मनः प्रवर्त्तयामास, ततः स निजराज्यस्य सर्व्वत्र घोषणया पत्रि-
२ कया च वच इदं प्रचारयामास, पारसीकनृपतिः कोरस् इमां भारतीं
कथयति, स्वर्गीयः प्रभुः परमेश्वरः पृथिव्या निखिलानि राज्यानि मह्यम्
अददात्, अपरं यिहूदाजनपदस्थे यिरूशालमे तदीयमन्दिरस्य पुनर्नि-
३ र्म्माणाय माम् आज्ञापयत्। अतो युष्माकं मध्ये तस्य लोकः को विद्यते?
तस्य प्रभुः परमेश्वरस्तस्य सहायो भूयात्। स यिहूदाजनपदस्थं यिरू-
शालमं व्रजित्वा तत्र यिरूशालम इस्रायेलः प्रभोः परमेश्वरस्य मन्दिरं
४ पुनर्निर्म्मातु यतः स एव सत्य ईश्वरः। अपरं तादृशोऽवशिष्टः कश्चिज्जनो
यत्र कुत्रचित् स्थाने प्रवसति तत्स्थाननिवासिनो मनुजा यिरूशालम-
स्थस्य परमेश्वरीयमन्दिरस्य कृते स्वेच्छानैवेद्यैः सार्द्धं रजतकाञ्चनादीनां
वित्तानां पशूनाञ्च दानेन तम् उपकुर्व्वन्तु।
५ ततो यिरूशालमे परमेश्वरीयमन्दिरस्य पुनर्निर्म्माणार्थं यिहूदावंशस्य
बिन्यामीनवंशस्य च प्रधानमनुजा याजका लेवीयाश्चेत्यादीनां यावतां
६ लोकानां मनांसीश्वरेण प्रावर्त्त्यन्त ते सर्व्वे यात्रां प्रचक्रिरे। चतुर्दिक्स्था
निखिलमनुजाश्च स्वेच्छानैवेद्यैः सार्द्धं रजतमयभाजनानि काञ्चनानि
तदन्यवित्तानि पशून् बहुमूल्यद्रव्याणि च तेभ्यो दत्त्वा तान् उपचक्रिरे।
७ अपरं परमेश्वरीयमन्दिरस्य यानि भाजनानि निबूखद्नित्सरेण यिरू-
शालमत आनीय स्वीयदेवमन्दिरे निहितानि नृपतिः कोरस् तानि बहि-
८ श्चकार। पारसीकनृपतिः कोरस्तानि कोषाध्यक्षस्य मिथ्रिदातस्य करात्
गृहीत्वा शेश्बसरनाम्नो यिहूदाः शासकस्य सन्निधौ तानि गणयित्वा

समर्पयामास। तेषां द्रव्याणाम् इयं संख्या। सुवर्णमयानि त्रिंशत् पा- ९
त्राणि रजतमयानि सहस्रभाजनानि, ऊनत्रिंशत् क्षुरिकाः, त्रिंशत् १०
काञ्चनमयानि पानभाजनानि दशाधिकानि चतुःशतानि रजतमयानि
मध्यमपात्राणि तदन्यपात्राणाञ्च सहस्रं, साकल्येन चतुःशताधिकानि ११
पञ्चसहस्राणि सुवर्णमयानि रजतमयानि च भाजनान्यासन्। एतानि
सर्व्वाणि बाबिलतो यिरूशालमं प्रति प्रवासितानां पुनरानयनकाले शेश्-
वसर आदाय जग्मिवान्।

---

# २ द्वितीयोऽध्यायः।

१ यिरूशालम आगतानां बन्दिलोकानां संख्या ३६ याजकानां संख्या ४० लेवीयानां संख्या ४१ गायकानां संख्या ४२ द्वारपालानां संख्या ४३ निथीनीयानां संख्या ५५ शुलेमनो दासवंशीयानां संख्या ६१ याजकवंशीयानां संख्या ६४ सर्व्वेषां संख्या तेषां द्रव्याणि च ६८ उत्सृष्टद्रव्याणां कथनञ्च।

बाबिलीयनृपेण निबूखद्नित्सरेण बाबिलं प्रवासिता जनपदस्य ये १
बन्दिलोका यिरूशालमं यिहूदादेशीयानि निजनगराणि वा प्रत्यागन्तुं
यात्रां विधाय सिरुब्बाबिलो येशूयो निहिमियः सिरायो रियेलायो २
मर्दिखयो बिल्शनः मिस्परो बिग्वयो रिहूमो बानाहश्चैतैः समं परा-
वृत्य जग्मुस्तेषाम् इस्रायेलीयलोकानां संख्या। परियोशवंशस्य शताधिके ३
द्वे सहस्रे द्विसप्ततिजनाः। शिफटियवंशस्य शतत्रयद्विसप्ततिजनाः। ४
आरहवंशस्य सप्तशतानि पञ्चसप्ततिजनाः। पहतमोयाबवंशस्य येशूय- ६
योयाबवंशीया अष्टशताधिके द्वे सहस्रे द्वादशजनाः। एलमवंशस्य द्वि- ७
शताधिकसहस्रं चतुःपञ्चाशज्जनाः। सत्तूवंशस्य पञ्चचत्वारिंशदधिकानि ८
नवशतानि जनाः। सक्कीयवंशस्य षष्ट्यधिकानि सप्तशतानि जनाः। बानि- १०
वंशस्य द्विचत्वारिंशदधिकानि षट्शतानि जनाः। बेबयवंशस्य त्रयोविं- ११
शत्यधिकानि षट्शतानि जनाः। अस्गदवंशस्य द्विशताधिकसहस्रं द्वा- १२
विंशतिजनाः। अदोनीकामवंशस्य षट्षष्ट्यधिकानि षट्शतानि जनाः। १३
बिग्वयवंशस्य षट्पञ्चाशदधिके द्वे सहस्रे जनाः। आदीनवंशस्य चतुःप- १५
ञ्चाशदधिकानि चत्वारि शतानि जनाः। अपरं आटेर्वंशस्य हिष्कियवंशी- १६
या अष्टनवतिजनाः। वेत्सयवंशस्य त्रयोविंशत्यधिकानि त्रिशतानि जनाः। १७
योराहवंशस्य द्वादशाधिकशतं जनाः। हशूमवंशस्य त्रयोविंशत्यधिके द्वे १८
शते जनाः। गिब्बरवंशस्य पञ्चनवतिजनाः। अपरं बैतलेहमवंशस्य त्रयो- २१

२३ विंशत्यधिकं शतं जनाः। निटोफानिवासिनो षट्पञ्चाशत् जनाः। अना-
२४ थोतनिवासिनाम् अष्टाविंशत्यधिकं शतं जनाः। असमावतवंशस्य द्वि-
२५ चत्वारिंशज्जनाः। किरियतयियारीमवंशस्य किफीरावंशस्य बेरोतवंशस्य
२६ च त्रयश्चत्वारिंशदधिकानि सप्त शतानि जनाः। रामतवंशस्य गेबावंशस्य
२७ चैकविंशत्यधिकानि षट् शतानि जनाः। मिक्मसनिवासिनो द्वाविंशत्य-
२८ धिकं शतं जनाः। बैथेलनिवासिनाम् अयनिवासिनाञ्च त्रयोविंशत्यधिके
३० द्वे शते जनाः। निबोवंशस्य द्विपञ्चाशत् जनाः। मग्बीशवंशस्य षट्प-
३१ ञ्चाशदधिकं शतं जनाः। अन्यैलमवंशस्य चतुःपञ्चाशदधिकशतद्वयाधिकं
३२ सहस्रं जनाः। हारीमवंशस्य विंशत्यधिकानि त्रीणि शतानि जनाः।
३३ लोदवंशस्य हादीदवंशस्य ओनोवंशस्य च पञ्चविंशत्यधिकानि सप्त श-
३४ तानि जनाः। यिरीहोवंशस्य पञ्चचत्वारिंशदधिकानि त्रीणि शतानि
३५ जनाः। सिनायावंशस्य त्रिंशदधिकषट्शताधिकानि त्रीणि सहस्राणि
जना आसन्।

३६ याजकानां संख्येयं। येशूयवंशजयिदयियवंशस्य त्रिसप्तत्यधिकानि न-
३७ वशतानि जनाः। इम्मेरवंशस्य द्विपञ्चाशदधिकं सहस्रं जनाः। पश्हूर-
३८ वंशस्य सप्तचत्वारिंशदधिकशतद्वयाधिकं सहस्रं जनाः। हारीमवंशस्य
सप्तदशाधिकं सहस्रं जना आसन्।

४० लेवीयानां संख्येयं। होदवियवंशे येशूयस्य कद्मीयेलस्य च वंशस्य
चतुःसप्ततिजना आसन्।

४१ गायकानां संख्येयं। आसफवंशस्याष्टाविंशत्यधिकं शतं जना आसन्।

४२ द्वारपालानां संख्येयं। शल्लूमवंशस्याटेरवंशस्य टल्मोनवंशस्याक्कूब-
वंशस्य हटीटावंशस्य शोबयवंशस्य च साकल्येन ऊनचत्वारिंशदधिकं
शतं जना आसन्।

४३ निथीनीयलोकानां संख्येयं। सीहो हसूफाः टब्बायोतः केरोसः सीयः
४७ पादोनो लिबानाहो हगाबो अक्कूबो हागबः शल्मयो हाननो गिद्देलो
५० गहरो राया रत्सीनो निकोदो गसम उषः पासेहो बेसयो अस्नो
५२ मियूनीयो निफूषीयो बक्बूको हकूफा हर्हूरो बसलूतो मिहीदा
५४ हर्षा बर्कासः सीषिराः तेमहो नित्सीहो हटीफाश्चैतेषां सर्व्वेषां वंश-
निवह आसीत्।

५५ सुलेमनो दासानां सन्तानानिवहस्य संख्येयं। सोटयः सोफेरतः पि-
५७ रूदाः यालाहो दर्कोनो गिद्देलः शिफटियो हटीलः पोखेरतहत्सीबा-

यीम आमिरश्चैतेषां सर्व्वेषां सन्तानिवत्र आसीत्। निथीनीयाः सुलेमनो ५८
दासानां सन्तानाश्च साकल्येन द्विनवत्यधिकानि त्रीणि शतानि जना
आसन्। अपरं तेलमेलहात् तेलहर्षातः किरूवाद् अद्दनाद् इम्मेराच्चा- ५९
गता एते सर्व्वे लोका इस्रायेलीयवंशा भवन्ति नवेति निश्चयार्थं निज-
निजपितृवंशस्य गोत्रस्य च प्रमाणं दातुं न पारयामासुः, दिलायः ६०
टोबियो निकोदश्चैतेषां वंशानां द्विपञ्चाशदधिकानि षट् शतानि जनाः।
अपरं याजकवंशस्य मध्ये हवायस्य कोसस्य बर्सिल्लयस्य च सन्तानाः। ६१
एष बर्सिल्लयो गिलियदीय बर्सिल्लयस्य दुहितरमेकां व्यूह्य तस्य नाम्ना
विख्यातो ऽभवत्। वंशावल्यां गणितलोकानां मध्य इमे स्वेषां वंशपत्रं ६२
गवेषयित्वा न लेभिरे तन्निदानाद् अशुचयः सन्तो याजकपदाद् भ्रष्टा
बभूवुः। अपरं शासकस्तान् जगाद यावद् ऊरीमतुम्मीमयोरधिकारी ६३
याजक एको न भविष्यति तावत् प्रयतं वस्तु युष्माभि र्न भोक्तव्यं।

अपरं मिलिताः कृत्स्नसमाजीयाः षष्ट्यधिकशतत्रयाधिकानि द्वाचत्वा- ६४
रिंशत्सहस्राणि जना आसन्। तदन्ये तेषां दासा दास्यश्च सप्तत्रिंशद- ६५
धिकशतत्रयाधिकानि सप्त सहस्राणि जना आसन्। अपरं तेषां मध्ये
द्वे शते गायना गायन्यश्चासन्। तेषां हयाः षट्त्रिंशदधिकानि सप्त श- ६६
तान्यासन् अश्वतराश्च पञ्चचत्वारिंशदधिके द्वे शते आसन् [illegible] उष्ट्राश्च ६७
पञ्चत्रिंशदधिकानि चतुःशतानि गर्दभाश्च विंशत्यधिकस[illegible]ाधिकानि
षट्सहस्राण्यासन्।

अनन्तरं तेषु परमेश्वरीयमन्दिरस्य स्थानं यिरूशालममागतेषु पितृ- ६८
वंशानां कतिपय मुख्यलोकास्तस्य मन्दिरस्य स्वस्थाने निर्म्माणार्थं स्वेच्छया
दानानि ददिवांसः। ते निजनिजशक्त्यनुसारेण तस्य कर्म्मणो भाण्डागारे ६९
एकषष्टिसहस्रादर्कोनपरिमाणानि काञ्चनानि पञ्च सहस्राण्यर्द्धशेटक-
रजतानि याजकानां कृते शतं वसनानि च ददिवांसः। अनन्तरं याजका ७०
लेवीया अन्यलोकाश्चापरं गायका द्वारपाला निथीनीयाश्च निजे निजे
नगरे निखिलेस्रायेललोका निजे निजे नगरे वासं कर्त्तुम् आरेभिरे।

---

## ३ तृतीयोऽध्यायः।

१ ईश्वरस्य वेद्याः पुनर्निर्म्माणं ७ आनन्देन क्रन्दनेन च परमेश्वरीयमन्दिरस्य भित्ति-
मूलस्थापनं।

१　अनन्तरं सप्तमे मासे समुपस्थिते इस्रायेलीयजनाः स्वनिवासेभ्यो मनुष्या
२ एको जन इव यिरूशालमे मिलितवन्तः। अपरं यिहोषादकस्य तनयो
येशूयस्तस्य याजका भ्रातरश्च शल्टीयेलस्य सुतः सिरुब्बाबिलस्तस्य भ्रा-
तृनिवहश्च समुत्थायेश्वरीयलोकस्य मूससो व्यवस्थानुसारेण होमार्थव-
३ लीनाम् उत्सर्गार्थम् इस्रायेलीयेश्वरस्य होमवेदिं पुनर्निर्ममिरे। ते
देशीयलोकानां भयात् तां वेदिं स्वस्थाने स्थापयाञ्चक्रिरे, अपरं परमेश्व-
रमुद्दिश्य तस्यां होमं चक्रिरे, अर्थतः प्रातःकाले सन्ध्याकाले च होमं
४ चक्रिरे। अपरं लिखितव्यवस्थानुसारेण उटजानाम् उत्सवं पालयाञ्च-
क्रिरे विधिवत् यस्मिन् दिने यथा कर्त्तव्यं तस्मिन् तथैव निरूपितसङ्ख्यकं
५ होमार्थकबलिदानं चक्रिरे। अनन्तरं ते प्रत्यहम् अमावस्यासु परमेश्वरस्य
पवित्रीकृतेषु वार्षिकोत्सवेषु कस्यचिल्लोकस्य परमेश्वरमुद्दिश्य स्वेच्छया
६ नैवेद्यकरणसमये च कर्त्तव्यं होमं कर्त्तुम् आरेभिरे। सप्तममासस्य प्रथमं
दिनमारभ्य ते परमेश्वरम् उद्दिश्य होमं कर्त्तुम् आरेभिरे किन्तु तदानीं
परमेश्वरीयमन्दिरस्य भित्तिमूलं निर्म्मितं नाभवत्।
७　अपरं पारसीकस्थपतिः खोरो यद्दानम् आज्ञापयत् तस्मात् ते तक्षकेभ्यो
निचायकेभ्यश्च मुद्रा ददिवांसः। अपरं लिबानोनाद् याफोः सागरस्य
तीरं यावद् एरसकाष्ठानाम् आनयनार्थं ते सीदोनीयेभ्यः सोरीयेभ्यश्च
८ लोकेभ्य भक्ष्यपेयद्रव्याणि तैलानि च ददिवांसः। अनन्तरं तेषु परमेश्वरीय-
मन्दिरं यिरूशालमम् आगतेषु द्वितीयवत्सरस्य द्वितीये मासि शल्टीये-
लस्य तनयः सिरुब्बाबिलो यिहोषादकस्य तनयो येशूयश्च तयोरवशिष्टो
भ्रातृनिवहो ऽर्थतो याजका लेवीया बन्दिदशातो यिरूशालमम् आगता
अपरे मनुजाश्च कर्म्मण आरम्भं चक्रिरे। अपरं परमेश्वरीयमन्दिरस्य
कार्य्याध्यक्षत्वार्थं विंशतिवत्सरवयस्कान् ततोऽधिकवत्सरवयस्कांश्च लेवी-
९ यान् न्ययुञ्जत। तदानीं येशूयस्तस्य पुत्त्रनिवहो भ्रातृनिवहश्चापरं यि-
हूदावंशीयः कद्मीयेलस्तस्य तनयनिवहश्चापरं लेविवंशीयहेनादकस्य
पुत्त्रनिवहस्तेषां पुत्त्रा भ्रातरश्चैको जन इवेश्वरीयमन्दिरस्य कर्म्मकारि-
१० णाम् अध्यक्षत्वार्थं समतिष्ठन्त। तेन निचायका यदा परमेश्वरीयमन्दि-
रस्य भित्तिमूलं निरमिमत तदानीम् इस्रायेलीयराजस्य दायूदो निरूप-
णानुसारेण परमेश्वरस्य प्रशंसनार्थं परिच्छदै र्विभूषिताः तूरीवादकाश्च या-
११ जकाः करतालवादका आसफवंशीया लेवीयाश्चोपातिष्ठन्। ते परमेश्वरस्य
प्रशंसां धन्यवादञ्च कुर्व्वन्तः पर्य्यायानुसारेण मिलित्वा समगायन्, यथा,

क्षेमङ्करः स एवास्ति प्रसादश्च तदीयकः।
इस्रायेलीयवंशेषु सर्व्वकालं भविष्यति॥

अपरं परमेश्वरीयमन्दिरस्य भित्तिमूलनिर्म्माणसमये परमेश्वरस्य प्रशंसां
कुर्व्वन्तो निखिललोका उच्चैःस्वरेणानन्दध्वनिं चक्रिरे। किन्तु याजकानां १२
लेवीयानां पितृवंशेषु मुख्यलोकानाञ्च मध्ये ये बहवः स्थविरा मनुजाः
पूर्व्वमन्दिरं दृष्टवन्तस्तेषां समक्षम् एतस्य मन्दिरस्य भित्तिमूले निर्म्मी-
यमाणे त उच्चैःस्वरेण क्रन्दितवन्तः परन्त्वपरे बहवः सानन्दं हर्षनादं
चक्रिरे। ततो हेतोरानन्दयुक्तसिंहनादः क्रन्दनस्य च रवो लोकै र्वि- १३
विच्य निश्चेतुं नाशक्यत, यतो लोकैरुच्चध्वनिरक्रियत, स च रवो दूराद्
अश्रूयत।

---

# ४ चतुर्थोऽध्यायः।

१ विपक्षै र्यिहूदीयानां निचायनात् निवर्त्तनं ११ नरपतेः समीपं तैः प्रेषितस्याभियोग-
पत्रस्यानुरूपपत्रं १७ तान् प्रति राज्ञ आज्ञाप्रेरणं २२ निचायनस्य निवृत्तिश्च।

अनन्तरं वन्दिनो मनुजा इस्रायेलः प्रभुं परमेश्वरम् उद्दिश्य मन्दि- १
रस्य पुनर्निर्म्माणं कुर्व्वन्तीति वचो निशम्य यिहूदाबिन्यामीनयो रिपवः
सिरुब्बाबिलस्य समीपं पितृप्रधानानां समीपञ्च गत्वा तान् जगदुः, २
युष्माभिः समं वयमपि निचेष्यामो यतो यूयमिव वयमपि युष्माकं
ईश्वरं भजामहे। येनाश्शूरीयस्पेर्षाबरहद्दोनेन वयम् एतत् स्थानम् आ-
नीतास्तस्य राजत्वकालम् आरभ्य युष्माकम् ईश्वरम् उद्दिश्य बलिदानं
कुर्म्महे। ततः सिरुब्बाबिलो येशूय इस्रायेल इतरे निखिलाः पितृप्रधा- ३
नाश्च तान् अवदन् अस्माकम् ईश्वरस्य निमित्तम् अस्माभिः समं मन्दि-
रनिर्म्माणं युष्माभि र्न कर्त्तव्यं। पारसीकभूपतिः खसो ऽस्मान् यादृग् आ-
ज्ञापयत् तदनुसारेण केवलं वयम् इस्रायेलः प्रभोः परमेश्वरस्य मन्दिरं
निर्म्मास्यामहे। तेन देशीया मनुजा यिहूदीयलोकानां हस्तान् दुर्व्वलान् ४
कर्त्तुं निर्म्माणे तान् क्लेशयितुञ्चारेभिरे। अपरं पारसीकभूपतेः खसस्य ५
राजत्वम् आरभ्य पारसीकनरपते र्दारा राजत्वं यावत् तेषाम् अभि-
प्रायं निरर्थकं कर्त्तुं तेषां विरुद्धं मन्त्रिणां उत्कोचं ददिवांसः। विशे- ६
षतो ऽक्ष्वेरस्य राजत्वस्य प्रथमे ते यिहूदायिरूशालमयो र्निवासिनां
विरुद्धम् एकम् अभियोगपत्रं लिलिखुः। अपरं अर्तक्षस्तस्य राजत्वकाले ७

विश्लमो मिथ्रिदातः टावेलस्तेषां सहायनिवहश्च पारसीकनरपतिम्
अर्तंसस्तं प्रति यत् पत्रं लिलिखुस्तद् अरामीयाक्षरै र्लिखितम् अरा-
८ मीयभाषया बोधितञ्चासीत्। शासिता रिहूमो लेखकः शिमशयश्च
यिरूशालमस्य विरुद्धं अर्तंसस्तं नृपतिं प्रति तत् पत्रं लिलिखतुः।
९ तदानीं शासिता रिहूमो लेखकः शिमशयश्च तयोरपरे सहाया दीनीया
अफर्सथिया टर्पिलीया अफर्सीया अर्किवीया बाबिलीयाः शूशनीया
१० देहीया एलमीया महामहिमाश्नप्परेणानीताः शोमिरोणनगरे स्थापि-
ताश्च जातयः फरातसरितो ऽपारस्था इतरा निखिला जातयश्च तादृशं
पत्रं लिलिखुः।
११  ते नरपतिम् अर्तंसस्तं प्रति यत् पत्रं प्रेषयाञ्चक्रिरे तस्यानुरूपं
पत्रमित्थं। फरातसरितः पारस्था भवतो दासप्रभृतयः पत्रं लिखन्ति।
१२ नरपतेः सन्निधौ निवेदनमिदं यिहूदीया भवतः समीपाद् अस्माकं स्था-
नमिदं यिरूशालमम् आगत्य राजद्रोहिनगरं पुनर्निर्मिमते भित्तिमूलं
१३ निर्म्माय प्राकारं कर्त्तुम् उद्यमं कुर्व्वन्ति च। अतो नरपतये निवेदन-
मिदम्, एतस्मिन् नगरे पुनर्निर्म्मिते तस्य प्राकारे च स्थापिते सत्येते
लोका करं राजस्वं शुल्कं वा पुन र्न दास्यन्ति तेन नृपते राजस्वस्य क्षति
१४ र्भविष्यति। वयं राजधान्या लवणभोक्तारस्तन्निदानात् नरपतेः क्षति-
१५ दर्शनम् अस्माभिरसह्यम् अतो हेतो र्दूतेन राजानं ज्ञापयामहे। निज-
पितृलोकानां पुरावृत्तपुस्तकम् अनुसन्धाय भवता दृश्यताम् इदं नगरं
राजद्रोहि नृपाणां जनपदस्य च हानिजनकम् एतन्नगरनिवासिनश्च
पूर्व्वकालम् आरभ्य कलहिनः सन्ति तन्निदानात् तद् अनाश्यत, एतत्
१६ तस्मात् पुरावृत्तपुस्तकात् निश्चितम् अवगमिष्यते। यदि नगरमिदं
पुनर्निर्म्मीयते तस्य प्राकारश्च सम्पाद्यते तर्हि तेन सरितो ऽपारे तव
कुत्राप्यधिकारो न स्थास्यति।
१७  अनन्तरं राजा शासकं रिहूमं लेखकं शिमशयं शोमिरोणनिवासि-
नस्तेषाम् अपरान् सहायान् सरितो ऽपारस्थान् इतरलोकांश्च समुद्दिश्य
१८ प्रत्युत्तरं लिलेख, यूयं सर्व्वे मम नमस्कारं ज्ञास्यथ। मां प्रति यत् पत्रं
१९ युष्माभिः प्रहितं तत् मम सम्मुखे सुस्पष्टम् अपाठि, तेनाहम् आज्ञाप्या-
नुसन्धाय ज्ञातवान् पुरातनकालमारभ्य तन्नगरं राजद्रोह्यासीत् तन्मध्ये
२० राजद्रोह आन्दोलनञ्चाभवत्। यिरूशालमे ये पराक्रमिणो राजान
आसन् ते सरितः पारस्थितानां सर्व्वेषाम् उपरिष्टाद् राजत्वम् अकुर्व्वन्

अपरं तेभ्यो राजस्वं राजकरः शुल्कश्चादीयत। अतस्ते यावत् मत्तः कोऽपि निदेशो न लभ्यते तावत् तन्नगरं २१
कर्म्मणो निवर्त्तितव्यं यावच्च मत्तः कोऽपि निदेशो न लभ्यते तावत् तन्नगरं
पुन र्न निर्म्मातव्यमित्याज्ञापयत। सावधानम् एतस्मिन् कर्म्मणि युष्मा- २२
कम् उपेक्षा न जायतां। राजगणस्य हानिरपचयश्च कुतो भविष्यति ?
अनन्तरं रिहूमस्य लेखकस्य शिम्शयस्य तयोः सहायानाञ्च साक्षाद् २३
अर्त्तक्षत्रस्य पत्रे पठिते ते तूर्णं यिरूशालमे यिहूदीयानां समीपं गत्वा
बाहुबलेन तान् तस्मात् कर्म्मणो निवर्त्तयामासुः। ततो यिरूशालमस्थ- २४
स्येश्वरीयमन्दिरस्य कार्य्यं निवृत्तं बभूव, पारसीकनृपते र्दारा राजत्वस्य
द्वितीयं वत्सरं यावत् तत् निवृत्तं तस्थौ।

---

## ५ पञ्चमोऽध्यायः।

१ यिहूदीयानां पुनर्व्वारं निचयनारम्भः ३ तान् निवारयितुं विपक्षाणां यतनं ६ दारां नरपतिं प्रति विपक्षाणाम् अनुरूपपत्रं।

अनन्तरं भविष्यद्वादी हगय इद्दोः सुतो भविष्यद्वादी सिखरियश्च १
यिहूदायिरूशालमस्थान् यिहूदीयान् प्रतीस्रायेल ईश्वरस्य नाम्ना भवि-
ष्यद्वचनं प्रचारयाञ्चक्रतुः। तेन शल्टीयेलस्य तनयः सिरुब्बाबिलो यिहो- २
षादकस्य तनयो येशूयश्च प्रोत्थाय यिरूशालम ईश्वरीयमन्दिरं पुनर्नि-
र्म्मापयितुम् आरेभाते, अपरम् ईश्वरस्य भविष्यद्वादिनौ तयोः साहाय्यं
कुर्व्वन्तौ तावुपचक्रतुः।
अनन्तरं सरितोऽवारस्थो देशाध्यक्षस्तत्नयः सेथरबोषिनयश्च तयोः ३
सहायलोकाश्च तेषां समीपम् आगत्य तान् अवदन्, एतन्मन्दिरस्य
निर्म्माणार्थं प्राकारस्य सम्पादनार्थञ्च युष्मान् क आज्ञापयत्? तदानीं ४
यैरिदं निचयनं क्रियते तेषां कानि नामानीति वयं तेषां प्रश्नानुसारेण
कथितवन्तः। किन्तु यिहूदीयानां प्राचीनलोकेष्वीश्वरस्य कृपादृष्टौ सत्यां ५
वैरिणो दारा नृपतेराज्ञां विना तान् न निवारयामासुः। अनन्तरम्
एतत् कर्म्माधि ते पत्रं लिखित्वा प्रेषयाञ्चक्रिरे।
अनन्तरं सरितोऽवारस्थो देशाध्यक्षस्तत्नयः सेथरबोषिनयो नद्या ६
अवारस्थास्तेषां सहाया अफर्सिखीया लोकाश्च नरपतिं दारां प्रति यत्
पत्रं प्रेषयाञ्चक्रिरे तस्यानुरूपं पत्रमेतत्। ते पत्रेण अनिवेदनं ज्ञापय- ७
न्तस्तं प्रत्येतानि वचांसि लिलिखुः, दारानरपतेः सर्व्वत्र मङ्गलं भूयात्।

८ नरपतेः सन्निधौ निवेदनमस्माकं। वयं यिहूदादेशे महत ईश्वरस्य
मन्दिरम् अगच्छाम, तत् तक्षितपाषाणैः कुड्येषु स्थापितैः काष्ठैश्च नि-
९ र्म्मीयते। तत् कर्म्म त्वरितं क्रियते तेषां करैरतिशयं वर्द्धते च। ततो
वयं तान् प्राचीनलोकान् अपृच्छाम, एतन्मन्दिरनिर्म्माणार्थं प्राकारनि-
१० चयनार्थञ्च युष्मान् क आज्ञापयत्? अपरं वयं तेषां प्रमुखलोकानां ना-
११ मानि लिखित्वा त्वां ज्ञापयितुं तेषां नामान्यपि पृष्टवन्तः। तेन तैरस्मान्
प्रतिगदितं वयं द्यावापृथिव्योरीश्वरस्य दासाः, इदञ्च यन्मन्दिरम् अस्मा-
भिः पुन र्निर्म्मीयते तद् बहुवत्सरेभ्यः पूर्व्वं निरमायि, तत् केनचिद्
१२ इस्रायेलीयेन भूपतिना निर्म्माय स्थापितमासीत्। किन्त्वस्माकं पूर्व्वपुरुषैः
स्वर्गीय ईश्वरे क्रोधिते सति स तान् बाबिलीयनरपतेः कस्दीयनिबु-
खद्नित्सरस्य हस्ते समार्पयत् तेनैवेदं मन्दिरं भग्नं लोकाश्च बाबिलं
१३ नीताः। किन्तु बाबिलीयनरपतेः कोरसः राजत्वस्य प्रथमे वत्सरे कोरसो
१४ नृप एतस्येश्वरीयमन्दिरस्य पुन र्निर्म्माणम् आज्ञापयत्। अपरं निबुख-
द्नित्सर ईश्वरीयमन्दिरस्य यानि कनकरजतमयानि भाजनानि यिरू-
शालमस्थमन्दिरात् समादाय बाबिलस्थप्रासादे न्यधत्त, तानि निखिल-
भाजनानि नृपतिः कोरसो बाबिलस्थप्रासादाद् गृहीत्वा शेषबसरनाम-
१५ कस्य शासकस्य करे समार्पयत्। अपरं तम् आचष्ट, त्वम् एतानि भा-
जनान्यादाय यिरूशालमस्थं मन्दिरं गत्वेश्वरस्य मन्दिरं निजस्थाने पुन
१६ र्निर्म्मापय। तेन शेषबसर आगत्य यिरूशालमस्थमन्दिरस्य भित्तिमूलं
चकार तं कालमारभ्य यावदद्य तस्य निचयनं भवति समाप्ति र्नाभवत्।
१७ अत इदानीं यदि राज्ञे रोचते तर्हि नरपतिः कोरसो यिरूशालमस्थस्ये-
श्वरीयमन्दिरस्य पुन र्निर्म्माणम् आज्ञापयत् न वेतस्यानुसन्धानं बाबि-
लस्थे राजकीयधनागारे क्रियताम्। एतस्मिन् विषये नृपतिरस्मान् प्रति
निजाज्ञां प्रेषयतु।

---

## ६ षष्ठोऽध्यायः।

१ मन्दिरस्य निर्म्माणार्थं दारा नृपस्य निदेशः १५ मन्दिरस्य कर्म्मसमापनं १६ मन्दिरस्य प्रतिष्ठापनं १९ निस्तारोत्सवस्य समाचरणञ्च।

१ अनन्तरं दारा नृपतेराज्ञया बाबिलस्थधनागारस्य लिपिशालायां
२ तस्य पत्रस्य गवेषणे कृते मादीयजनपदस्थाक्मथानाम्नि राजनिवेशने

पत्त्रमेकम् अलभ्भि तत्र स्मरणार्थकं वच इदं लिखितमासीत्। नरपतेः ३
खसस्य प्रथमवत्सरे खसो नृपो यिरूशालमस्थम् ईश्वरीयमन्दिरमधि
समाज्ञापयत्, मनुजा यत्र स्थाने बलिदानम् अकुर्व्वन् तन्मन्दिरं पुन
र्न्निर्म्मीयतां तस्य भित्तिमूलञ्च क्रियतां, अपरं तस्योर्द्धत्वं षष्टिहस्ताः
प्रस्थत्वञ्च षष्टिहस्ता भविष्यति। अपरं तदर्थं पृथुलपाषाणानां तिस्रः ४
पङ्क्तयो नवीनकाष्ठानाञ्चैका पङ्क्ति र्न्निचीयतां राजनिवेशनाच्च तस्य धन-
व्ययो भवतु। अपरं निबुखन्नित्सरो यानि यानि काञ्चनमयानि रज- ५
तमयानि च भाजनानि यिरूशालमस्थमन्दिराद् गृहीत्वा बाबिलम्
आनयत् तानि सर्व्वाणि पुन र्दातव्यानि, तानि यिरूशालमस्थमन्दिरे
निजं स्थानं नायिष्यन्ते तत्रेश्वरस्य गृहे निधास्यन्ते च। इदानीं हे ६
नद्याः पारस्थदेशाध्यक्ष तत्नय, हे शेथरबोषिनय, युवाभ्यां नद्याः पारस्थै
र्युवयोः सहायैरफर्सिखीयैश्च तस्माद् दूरे स्थातव्यं। ईश्वरीयमन्दिरस्य ७
कार्य्यं किञ्चिदपि मा बाधध्वं यिहूदीयानाम् अध्यक्षो यिहूदीयानां
प्राचीनलोकाश्चेश्वरीयमन्दिरं तदीयस्थाने निर्म्मापयन्तु। अपरं तस्येश्व- ८
रीयमन्दिरस्य निचयनाय यिहूदीयानां प्राचीनलोका युष्माभिः कीदृग्
उपकर्त्तव्यास्तद् आज्ञापयामि तेषां यद् बाधा न जायते तत्कृते राजको-
षाद् अर्थतो नद्याः पारस्थदेशीयकरेभ्यो ऽर्थास्तेभ्यो दातव्याः। अपरं ते यत् ९
स्वर्गीयेश्वरम् उद्दिश्य सुगन्धियज्ञान् कुर्व्वन्ति यच्च नृपस्य तदीयपुत्त्राणाञ्च
जीवनं प्रार्थयन्ते तन्निमित्तं यिरूशालमस्थानां याजकानां निरूपणानु- १०
सारेण यानि वस्तूनि तेषामावश्यकानि तान्यर्थतः स्वर्गीयेश्वराय होमा-
र्थकबलिदानार्थं युववृषभा मेषा मेषशावकाश्चापरं गोधूमलवणद्राक्षा-
रसतैलान्यबाधं दिने दिने तेभ्यो दातव्यानि। अपरम् आज्ञापयामि ११
यः कश्चिद् इमाम् आज्ञां लङ्घति तस्य गृहात् नीतं काष्ठं भूमौ स्थाप्यतां
स च तस्मिन् बद्धो म्रियतां तस्य गृहञ्चावकराणां राशि र्भवतु। राजा १२
वा प्रजा यः कश्चिद् आज्ञालङ्घी भूत्वा यिरूशालमस्थस्येश्वरीयमन्दिरस्य
विनाशार्थं हस्तं प्रसारयिष्यति स तत्रैव स्वनामस्थापयित्रेश्वरेण विना-
श्यतां। अहं दारा निदेशं करोमि तूर्णमेतत् क्रियतां।

अपरं नद्या अवारस्थो देशाध्यक्षस्तत्नयः शेथरबोषिनयस्तयोः सहा- १३
यलोकाश्च नृपस्य दारा निदेशप्रेरणात् तत् त्वरितम् अकुर्व्वन्। ततो १४
यिहूदीयानां प्राचीनमनुजा निर्म्मितिम् अकुर्व्वन् भविष्यद्वादिनो हग-
यस्येद्दोः पुत्त्रस्य सिखरियस्य चेश्वरीयवाण्या ते कृतार्था अभवन्। इस्रा-

येन ईश्वरेण प्रचिताज्ञानुसारेण पारसीकराजस्य कोरसः दारा अर्त-
सक्षस्य च निर्देशानुसारेण च ते निर्म्मितिं कृत्वा सम्पूर्णताम् अकुर्व्वन्।
१५ तदपरं दारा राजत्वस्य षष्ठे वत्सरे ऽदरमासस्य तृतीयदिने मन्दिरस्य
निर्म्माणं समाप्तिं प्राप्नोत्।

१६ अनन्तरम् इस्रायेलीयवंशा याजका लेवीया अन्ये मुक्तदासा मनु-
१७ जाश्च सानन्दम् ईश्वरीयमन्दिरं प्रतिष्ठापयामासुः। ईश्वरीयमन्दिरस्य
प्रतिष्ठायाः समये ते शतं वृषभान् द्वे शते मेषान् चतुःशतानि मेषवत्सांश्च
बलित्वेन ददिवांसः। अपरं निखिलेस्रायेलीयानां पातकप्रायश्चित्तबलि-
दानार्थम् इस्रायेलीयवंशानां संख्यानुसारेण द्वादश छागांश्चैवददन्त।
१८ अपरं मूससो ग्रन्थे यल्लिखितं तदनुसारेण यिरूशालमे ईश्वरस्य परि-
चर्य्यार्थं याजकान् स्वीयपदेषु लेवीयांश्च स्वीयपर्य्यायेषु न्ययुंक्त।

१९ अनन्तरं प्रथममासस्य चतुर्दशदिने मुक्तदासानां सन्ताना निस्तारो-
२० त्सवम् अकुर्व्वन्। यतो याजका लेवीयाश्चैकस्मिन् समये स्वान् अपावयन्
सर्व्वे शुचयो ऽभवन्। अपरं मुक्तदासानां स्वकीयभ्रातृणां याजकानां स्वे-
२१ षाञ्च कृते निस्तारोत्सवीयबलीन् अच्छिन्दन्। अपरं बन्दित्वात् पुनरागता
इस्रायेलवंशा अपरम् इस्रायेलः प्रभोः परमेश्वरस्य भजनार्थं तेषां पक्षीया
भवितुं यावन्तो लोकास्तद्देशस्थानाम् इतरजातीयलोकानाम् अशुचित्वात्
२२ स्वान् विभिन्नान् अकुर्व्वन् ते निखिलास्तान् बलीन् बुभुजिरे। अपरं
ते सप्तदिनानि यावत् सानन्दं किण्वशून्यानां पूपानाम् उत्सवम् अकु-
र्व्वन्। यतो हेतोः परमेश्वरस्तान् आनन्दयुक्तान् अकरोत् इस्रायेलीये-
श्वरस्य मन्दिरीयकार्य्ये तेषां हस्तानां सबलत्वकरणार्थम् अश्शूरीयनरपते-
र्मनस्तान् प्रत्यनुकूलं कृतवांश्च।

---

## ७ सप्तमोऽध्यायः।

१ इष्रायस्य यिरूशालमं प्रति गमनं ११ इष्रायं प्रत्यर्तक्षस्तस्य निदेशः २७ इष्रा-
येण परमेश्वरस्य धन्यवाद प्रणमनं।

१ तदनन्तरं प्रधानयाजकस्य हारोणस्य तनय इलियासरः, इलियास-
रस्य तनयः पीनिहसः, पीनिहसस्य तनयो ऽबीशूयः, अबीशूयस्य तनयो
४ बुक्किः, बुक्केस्तनय उषिः, उषेस्तनयः सिरहियः, सिरहियस्य तनयो मि-
३ राथोतः, मिराथोतस्य तनयो ऽसरियः, असरियस्य तनयो ऽमरियः, अम-
२ रियस्य तनयो ऽहीटूवः, अहीटूवस्य तनयः सादोकः, सादोकस्य तनयः

अबुमः, अबुमस्य तनयो विक्किः, विक्किस्य तनयोऽसरियः, असरि- ५
यस्य तनयः सिरायः, सिरायस्य तनय इम्राहः, एष इम्राहः पारसीकनर-
पतेरर्तक्षस्तस्य राजत्वसमये बाबिलत आजगाम। स मूससो व्यवस्थायां ६
अर्थत इस्रायेलः प्रभुना परमेश्वरेण दत्तायां व्यवस्थायां पारदर्श्यध्यापक
आसीत्। अपरं तदीयप्रभोः परमेश्वरस्य साहाय्येन राजा तस्य सर्व्वं
प्रार्थनीयम् अदात्। अपरं नरपतेरर्तक्षस्तस्य राजत्वस्य सप्तमे वत्सर ७
इस्रायेलीयसन्तानानां याजकानां लेवीयानां गायकानां द्वारपालानां
निथीनीयानाञ्च कतिपयलोका यिरूशालमं प्रस्थितवन्तः। अपरं नृपस्य ८
तस्य सप्तमवत्सरस्य पञ्चमे मासि स इम्राहो यिरूशालमम् उपस्थितो
ऽभवत्। यतः प्रथममासस्य प्रथमे दिने स बाबिलतो गन्तुं प्रारेभे, अपरं ९
तं प्रतीश्वरस्य मङ्गलदायकसाहाय्यात् पञ्चममासस्य प्रथमे दिने स यि-
रूशालमम् उपस्थितवान्। यत इम्राहः परमेश्वरस्य शास्त्रम् अध्येतुम् १०
आचरितुञ्चेस्रायेल्वंशीयांश्चाज्ञां विधिञ्च शिक्षयितुं निजान्तःकरणं दृढं
प्रावर्त्तयत्।

परमेश्वरेणादिष्टानां वाक्यानाम् इस्रायेलं प्रत्याज्ञापितानां विधीना- ११
ञ्चाध्यापको यो याजक इम्राहो नाम लेखकस्तस्मै नरपतिरर्तक्षस्तो यत्
पत्रं दत्तवान् तस्य विवृतिरियं। राजाधिराजोऽर्तक्षस्तः स्वर्गीयेश्वरस्य १२
सिद्धव्यवस्थाध्यापकं याजकम् इम्राहं प्रति पत्रमिदं लिलेखेत्यादि।
अहम् इमं निदेशं करोमि मम राष्ट्रनिवासिनो यावन्त इस्रायेलीया १३
लोका याजका लेवीया वा त्वया समं यिरूशालमं गन्तुम् इच्छन्ति ते
यान्तु। यतस्तव हस्ते स्थितस्य त्वदीयेश्वरस्य शास्त्रस्यानुसारेण यिहूदां १४
यिरूशालमञ्चाध्यनुसन्धानार्थम्, अपरं यिरूशालमनिवासिनम् इस्रा- १५
येल ईश्वरम् उद्दिश्य नृपेण तदीयमन्त्रिभिश्च यानि रजतानि कनकानि
च स्वेच्छया दत्तानि, अपरं यिरूशालमस्थस्य तेषाम् ईश्वरस्य मन्दिरस्य १६
कृते मनुजै र्याजकैश्च स्वेच्छया दत्तै र्दानैः समं यावन्ति रजतानि कन-
कानि च बाबिलस्य निखिलजनपदे त्वया प्राप्तुं शक्यन्ते, तेषां तत्र वहनार्थं
त्वं नृपेण तदीयसप्तमन्त्रिभिश्च प्रहीयसे। तेन धनेन त्वं वृषभान् मेषान् १७
मेषशावकांश्च तदुपयुक्तनैवेद्यपेयद्रव्याणि चाविलम्बेन क्रीत्वा यिरूशालम-
स्थस्य युष्माकम् ईश्वरस्य मन्दिरे वेद्याम् उत्सर्गं करिष्यसि। अपरम् अव- १८
शिष्टै रजतैः सुवर्णैश्च तुभ्यं तव भ्रातृभ्यश्च यत् कर्त्तुं रोचते तत् स्वेषाम् ईश्व-
रस्येच्छानुसारेण कुरुध्वं। अपरं तवेश्वरस्य मन्दिरस्य परिचर्य्यार्थं यानि १९

नृपस्यार्तक्षस्तस्य राजत्वसमये ये प्रमुखपितृलोका मया समं बाबि- १
लतो यात्राम् अकुर्व्वन् तेषां वंशावलिः। पीनिहसवंशे गेर्शोमः, ईथा- २
मरवंशे दानियेलः, दायूद्वंशे हटूशः। शिखनियवंशे परियोशवंशीयः ३
सिखरियः, तेन समं वंशानुसारेण सार्द्धशतं पुरुषा गणिता अभवन्।
अपरं पहतमोयाबवंशे सिरहियस्य तनय इलीहो-एनयस्तेन समं द्वे शते ४
पुरुषा आसन्। अपरं शिखनियवंशे यहसीयेलस्य तनयस्तेन समं त्रीणि ५
शतानि पुरुषा आसन्। अपरम् आदीनवंशे योनाथनस्य तनय एबदस्तेन ६
समं पञ्चाशत् पुरुषा आसन्। अपरम् एलमवंशे ऽथलियस्य तनयो यि- ७
शायियस्तेन समं सप्ततिः पुरुषा आसन्। अपरं शिफटियवंशे मीखा- ८
येलस्य तनयः सिबदियस्तेन समम् अशीतिः पुरुषा आसन्। अपरं योया- ९
बवंशे यिहीयेलस्य तनय ओबदियस्तेन समम् अष्टादशाधिके द्वे शते
पुरुषा आसन्। अपरं शिलोमीतवंशे योषिफियस्य तनयस्तेन समं षष्ट्य- १०
धिकं शतं पुरुषा आसन्। अपरं बेबयवंशे बेबयस्य तनयः सिखरिय- ११
स्तेन समम् अष्टाविंशतिः पुरुषा आसन्। अपरम् अस्गदवंशे हक्काट- १२
नस्य पुत्रो योहानस्तेन समं दशाधिकं शतं पुरुषा आसन्। अपरम् १३
अदोनीकामस्यापरस्मिन् वंशे इलीफेलटो यियूयेलः शिमयियश्च तैः
समं षष्टिः पुरुषा आसन्। अपरं बिग्वयवंशे ऊथयः सब्बुदश्च ताभ्यां १४
समं सप्ततिः पुरुषा आसन्।

अनन्तरम् अहम् अहवागामिन्याः सरितः समीपे तान् सम[illegible], १५
तस्मिन् स्थाने वयं त्रीणि दिनानि शिविरे न्यवसाम। अपरम् अहं
लोकान् याजकांश्च निरीक्ष्य तत्र स्थाने लेविवंशस्य कञ्चन नालभे। तदा- १६
नीम् अहं दूतैरिलियेषरो ऽरीयेलः शिमयिय इल्नाथनो यारिब
इल्नाथनो नाथनः सिखरियो मिशुल्लमश्चैतान् प्रमुखलोकान् अपरं
योयारीब इल्नाथनश्चैतौ बुद्धिमन्तौ जनौ चाह्वयं। अनन्तरं कासि- १७
फियानामकस्य स्थानस्य प्रमुखजनस्येद्दोः समीपं तान् प्रेषयम् अस्माकम्
ईश्वरस्य मन्दिरस्य कृते सेवकान् अस्माकम् अन्तिकम् आनयतेति वचः
कासिफियास्थानवासिनम् इद्दं तस्य भ्रातॄन् निथीनीयांश्च गदितुं तान्
आज्ञापयं। ततो ऽस्माकं मङ्गलदायकेनेश्वरस्य साहाय्येन त इस्रायेलः १८
पौत्रस्य लेवेः सुतस्य महलेर्वंशोद्भवम् एकं बुद्धिमन्तं नरम् अस्माकम्
अन्तिकम् आनयन्, अपरं शेरेबियं तदीयतनयान् भ्रातॄंश्च साकल्यतो
ऽष्टादशजनान्, अपरं हशबियं तेन समं मिरारिवंशीयं यिशायियं १९

२० तदीयभ्रातृन् पुत्रांश्च साकल्यतो विंशति जनान्, अपरं दायूद् लोकाध्य-
क्षाश्च लेवीयानां परिचर्य्यार्थं यान् निरूपयाञ्चक्रिरे एताहृशानां निथी-
नीयानां मध्याद् विंशत्यधिके द्वे शते जनान् आनयन्, एतेषां सर्व्वेषां
नामानि लिखितान्यभवन्।
२१ अनन्तरं वयं स्वेषां निजनिजबालकानां सम्पत्तीनाञ्च निमित्तं शुभ-
यात्रां प्रार्थयितुं यत् स्वेषाम् ईश्वरस्य साक्षात् स्वान् क्लिश्नीयाम तदर्थम्
२२ अहम् अहवासरितः सन्निधावुपवसनस्य वचः प्राचारयं। यतो मार्गे
रिपुभ्यो ऽस्माकं रक्षार्थं नरपतिं एतनां अश्वारोहिणश्च याचितुम् अहं
लज्जितस्तस्माद् वयं राजानम् अवोचाम, अस्माकम् ईश्वरो ये भजन्ते
तेषां मङ्गलजनकं साहाय्यं स करोति किन्तु स ये त्यजन्ते तेषां विरुद्धं
२३ तस्य पराक्रमः क्रोधश्च समुपतिष्ठति। एतन्निदानाद् वयम् उपवासम्
अकुर्म्मायरम् अस्माकम् ईश्वरस्य सन्निधौ प्रार्थयामहि स चास्माकं
प्रार्थनां समग्रहीत्।
२४ अनन्तरम् अहं याजकानां मध्याद् द्वादश प्रमुखलोकान् अर्थतः
शेरेबियं हशबियञ्च ताभ्यां समं तयो र्दश भ्रातॄंश्च पृथग् अकरवं।
२५ अपरं नरपतिस्तस्य मन्त्रिणो ऽध्यक्षाश्च तत्र विद्यमाना निखिलेस्राये-
लीयलोकाश्चास्माकम् ईश्वरस्य मन्दिरस्य निमित्तं यानि रजतानि का-
ञ्चनानि भाजनानि च ददिवांसस्तानि तेषां समक्षं तोलयित्वा समार्पयं।
२६ अर्थतः पञ्चाशदधिकषट्शतकिक्कारपरिमितानि रूप्याणि शतकिक्कार-
२७ परिमितानि रौप्यभाजनानि, शतकिक्कारपरिमितानि काञ्चनानि, अपरं
सहस्रादर्कोणमूल्यानि विंशतिकनकमयभाजनानि, अपरं काञ्चनवद्
बहुमूल्यस्योत्तमस्य परिष्कृतस्य ताम्रस्य भाजनद्वयं तोलयित्वा तेषु समा-
२८ र्पयं। अपरं तान् समवोचं यूयं परमेश्वरार्थं पूयता विद्यध्वे, एतानि
भाजनान्यपि पूयतानि विद्यन्ते, अपरम् एतानि रजतानि सुवर्ण-
तानि च युष्माकं पितृलोकानां प्रभोः परमेश्वरस्य कृते स्वेच्छया दत्तानि
२९ नैवेद्यानि च विद्यन्ते। अतो हेतो र्यूयं यिरूशालमे परमेश्वरीयमन्दि-
रस्य कोष्ठेषु मुख्यानां याजकानां लेवीयानाम् इस्रायेलीयप्रधानपितॄणाञ्च
सन्निधौ यावत् तानि तोलयित्वा न समर्पयिष्यथ तावत् सतर्काास्तिष्ठन्तो
३० रक्षत। अनन्तरं याजका लेवीयाश्च रजतानां शातकुम्भानां भाजनानाञ्च
तत्परिमाणं भारं यिरूशालमे ऽस्माकम् ईश्वरस्य मन्दिरं नेतुम् अगृह्णन्।
३१ अनन्तरं वयं यिरूशालमं गमनार्थं प्रथममासस्य द्वादशदिने ऽहवा-

नदीतः प्रस्थितवन्तः। तत ईश्वरो ऽस्माकं साहाय्यं कुर्व्वन् वर्त्ममध्ये रि-
पूणां दस्यूनाञ्च कराद् अस्मान् उदधरत्। अनन्तरं वयं यिरूशालमं ३२
प्राप्य तत्र स्थाने त्रीणि दिनानि व्यश्राम्याम।

अनन्तरं चतुर्थे दिने तानि रजतानि शातकुम्भानि पात्राणि चास्मा- ३३
कम् ईश्वरस्य मन्दिरे याजकस्योरियतनयस्य मिरेमोतस्य करे ऽस्माभि-
स्तोलयित्वा समर्पितानि। तेन समं पीनिहसस्य तनय इलीयासर आ-
सीत्। ताभ्यां समं येशूयस्य तनयो योषावदो बिन्नूयेस्तनयो नोयदिय-
श्चैतौ लेवीयावास्तां। सर्व्वस्मिन् गणनया तुलनया च समर्पिते तस्मिन्नेव ३४
समये तस्यास्तुलायाः कृत्स्नं परिमाणं लिखितमभवत्। अपरं वन्दित्वा- ३५
वस्थात आगता युद्धदासा निखिलस्येस्रायेलो निमित्तम् इस्रायेलीयेश्वरम्
उद्दिश्य होमार्थकबलिरूपेण द्वादशवृषभान् प्रायश्चित्तार्थञ्च षण्णवतिं
मेषान् सप्ताधिकसप्ततिं मेषशावकान् द्वादशच्छागान् एतान् परमेश्वर-
मुद्दिश्य होमं बलिदानञ्च चक्रिरे।

अनन्तरं ते राजप्रतिनिधिभ्यः सरितो ऽवारस्थेभ्यः शासकेभ्यश्च राजा- ३६
ज्ञापत्राण्यददुः, ततस्ते लोकानाम् ईश्वरीयमन्दिरस्य कार्य्यस्य चोपकारं
चक्रिरे।

---

## ९ नवमोऽध्यायः।

१ अन्यजातीयनारीभिः समं यिहूदीयानां मिश्रताकरणकारणाद् इष्रास्य विलापः ५ तस्य प्रार्थना च।

तस्मिन् कर्म्मणि समाप्ते ऽध्यक्षा मम समीपम् आगत्य कथामिमाम् १
अकथयन्, इस्रायेलीया लोका याजका लेवीयाश्चैतद्देशीयलोकेभ्य
स्वान् पृथक् नाकुर्व्वन्। ते किनानीयानां हित्तीयानां पिरिषीयाणां यिबू-
षीयाणाम् अम्मोनीयानां मोआबीयानां मिस्रीयाणाम् इमोरीयाणां घृणा-
र्हक्रियाः समाचरन्ति। विशेषतः तेषां निमित्तं निजनिजपुत्राणाञ्च २
निमित्तं तेषां कन्या अगृह्णन् अनेन प्रकारेण पवित्रवंशजाता लोका इत-
रदेशीयैः समं मिश्रिता अभवन् अपरम् अध्यक्षाः शासकाश्च दोषस्यास्य
मूलम् अभवन्। इत्थं वाचं निशम्याहं निजपरिधेयम् उत्तरीयञ्च वसनम् ३
अच्छिनदं निजशिरसः श्मश्रुकेशान् छित्वा विस्मयापन्नो भवन् उपावि-
शञ्च। तदानीं युद्धदासानाम् आज्ञालङ्घनमधीकृत्येश्वरस्य निदेशेन ४

यावन्तो लोकाः कम्पिता अभवन् ते मम सन्निधौ मिलितवन्तः। अपरम्
अहं सन्ध्याकालीयबलिदानसमयं यावद् विस्मयापन्नो भवन् उपाविशम्।
५ अनन्तरं सन्ध्याकालीयबलिदानसमये ऽहं शोकादुत्थाय छिन्नपरिधेय-
छिन्नोत्तरीयवसनश्च सन् जानुनी पातयित्वा निजप्रभोः परमेश्वरस्य
६ साक्षात् करौ प्रसार्य्य कथितवान्, हे मदीश्वर, हे मदीश्वर, अहं त्वां प्रति
निजं वदनम् उत्थापयितुं त्रोडितो विवर्णश्च भवामि, यतो बाहुल्याद्
अस्माकं पातकान्यस्माकं शिरसाम् ऊर्द्ध्वम् उदतिष्ठन् अस्माकम् अप-
७ राधश्च गगनस्पर्शी जातवान्। अस्माकं पूर्व्वपुरुषाणां समयमारभ्याद्य
यावद् वयं महत्यपराधे मग्ना आस्महे। अस्माकम् अपराधकारणाद्
वयम् अस्माकं राजानो याजकाश्चाद्यतनदशानुसारेण वदनानां व्याकु-
लतायां लोठने वन्दित्वे खड्गाघाते ऽन्यदेशीयनरपतीनां हस्तेषु समर्पिता
८ अभवाम। किन्त्वधुनास्माकं कियतो ऽवशिष्टान् मनुजान् रक्षितुं भवतो
धर्म्मधामन्यस्मभ्यम् आश्रयं दातुम् अस्माकं लोचनानीश्वरेण दीप्तिमन्ति
कर्त्तुं वन्दित्वदशायां विश्रामं दातुञ्चास्माकं प्रभुः परमेश्वरः क्षणैककालं
९ प्रसन्नो ऽभवत। वयं यद्यपि दासा आस्मस्तथाप्यस्माकम् ईश्वरो वन्दित्वा-
वस्थायामप्यस्मान् न पर्य्यत्यजत् किन्त्वस्माकम् ईश्वरस्य मन्दिरं स्थापयितुं
तस्य जीर्णोद्धारं कर्त्तुञ्च यिहूदादेशे यिरूशालमे चास्मभ्यं प्राकारं दातुम्
अस्मान् जीवयितुञ्च सो ऽस्मान् प्रति पारसीकनृपतीनां प्रसादम् अवर्त्त-
१० यत्। इदानीं हे अस्माकम् ईश्वर, इतः परं वयं किं वदिष्यामः? यतो
११ वयं भवतो निदेशान् पर्य्यत्यजाम। भवान् निजदासै र्भविष्यद्वादिभि
र्वच इदं गदयामास, यूयं यं जनपदम् अधिकर्त्तुं प्रवेक्ष्यथ स एतद्दे-
शीयलोकानाम् अशुचिक्रियाभिरर्थतो याभि र्घृणार्हक्रियाभिस्ते निज-
१२ मालिन्यात् तस्य दिगदिगन्तरम् अपूरयन् ताभिरमेध्यो विद्यते। अतो
हेतो र्यूयं तेषां तनयेभ्यो युष्माकं दुहितृन् मा दत्त युष्माकं पुत्राणाञ्च
विवाहार्थं तेषां दुहितृन् मा गृह्णीत, अपरं तेषां मङ्गलं सौभाग्यञ्च क-
दापि न चेष्टध्वं तेन यूयं बलवन्तो भविष्यथ जनपदीयानि उत्तमवस्तूनि
भोक्ष्यध्वे निजवंशस्य निमित्तं नित्याधिकारमिव तं निधाय यास्यथ च।
१३ किन्त्वस्माकं कुक्रियाभि र्महापराधेन चैतावत्समङ्गले ऽस्मासु वर्त्तिते ऽपि,
हे अस्माकम् ईश्वर, त्वम् अस्माकं कलुषेभ्यो ऽल्पतरं दण्डम् अददा अधि-
१४ कन्त्वस्माकं कतिपयान् जनान् इत्थम् उदधरः। एतद्दशायामपि यदि वयं तव
निदेशान् लङ्घित्वा पुनर्व्वारं घृणार्हकर्म्मकारिभिरेतै र्जातीयैः सार्द्धं मि-

ष्ठतां कुर्म्मस्तर्हि यावद् अस्माकं कश्चिद् रक्षितो ऽवशिष्टो वा न तिष्ठति
तावत् त्वम् अस्मभ्यं कुपित्वा किम् अस्मान् निःशेषं न नाशयिष्यसि? हे १५
इस्रायेलः प्रभो परमेश्वर त्वं धर्म्मस्वरूपः, यतो वयम् अद्य यावद् रक्षां
प्राप्यावशिष्टा विद्यामहे, पश्य वयं तव समक्षम् अपराधे मग्ना आस्महे
तत्कारणात् तव समक्षं स्थातुं न पारयामः।

---

## १० दशमोऽध्यायः।*

१ शिखनियेनेष्राहस्याश्वसनं ६ शोकान्वितेनेष्राहेण लोकानां संग्रहणं ९ लोकैरपराधं स्वीकृत्य तं त्यक्तुम् अङ्गीकरणं १५ अन्यजातीययोषितां दूवनार्थं लोकानां नियोजनं १८ अपराधिलोकानां नामानि।

अनेन प्रकारेणेश्वरीयमन्दिरस्यान्तिक इष्राहे प्रार्थनां कलुषस्वीकारं १
क्रन्दनं प्रणामञ्च कुर्व्वतीस्रायेलीयलोकानां मध्यात् स्त्रीपुरुषबालानाम्
अतीव महासमाजस्तस्य समीपे मिलितो बभूव, अपरं लोका अतीव
चक्रन्दुः। तदानीम् एलमवंशीयो यिहीयेलस्य तनयः शिखनिय इष्राहं २
वाचमिमां जगाद, वयं स्वेषाम् ईश्वरस्य विरुद्धम् अपराधिनो भूत्वै-
तद्देशीयानां मध्याद् इतरजातीयाः कन्या व्यवहाम, तथापि विषये
ऽस्मिन् इस्रायेलि प्रत्याशा विद्यते। मत्प्रभो भवतो मन्त्रणानुसारेणा- ३
स्माकम् ईश्वरस्य निर्द्देशात् कम्पितानां मनुजानां मन्त्रणानुसारेण च ता
योषितस्तासु जाता बालकाश्चास्माभिः परित्यक्ष्यन्त इति नियमो ऽस्मा-
कम् ईश्वरेण समं क्रियतां तत् कर्म्म व्यवस्थानुसारेण भवतु। उत्तिष्ठ ४
यतः कर्म्मैतत् त्वया कर्त्तव्यं वयमपि तव साहाय्यं करिष्यामः, त्वम्
उत्सुको भूत्वा कर्म्म कुरुष्व। तदानीम् इष्राहः समुत्थाय तद्वाक्यानुसा- ५
रेण करणार्थं प्रमुखयाजकान् लेवीयान् इस्रायेलीयनिखिललोकांश्च शपथं
कारयामास तेन ते शपथं चक्रवांसः।

अनन्तरम् इष्राह ईश्वरीयमन्दिरस्य सम्मुखाद् उत्थायेलियाशीबस्य ६
तनयस्य योहाननस्य कोष्ठं प्राविशत् तत् स्थानं गत्वा किञ्चन भक्ष्यं नाभुङ्क्त
पानीयञ्च नापिबत् यतो बन्धनस्थात आगतानां मनुजानाम् अपराधात्
सो ऽशोचत्। अनन्तरं युद्धदासा मनुजा यिरूशालमे समागमिष्यन्ति, ७
परन्तु यः कश्चनाधिपानां प्राचीनानाञ्च मन्त्रणानुसारेण दिनत्रयमध्ये ८
नागमिष्यति तदीयं सर्व्वस्वम् अपहारिष्यते, अपरं बन्धनस्थात आग-

तात् समाजात् स वहि र्भविष्यत्येतद् यिहूदाबिन्यामीनयोः सर्व्वत्र
घोषयाञ्चक्रे ।
९ अनन्तरं यिहूदाबिन्यामीनयो र्निखिलमनुजा दिनत्रयमध्ये यिरू-
शालमे मिलितवन्तः । तदानीं नवममासस्य विंशतितमं दिनमासीत् ।
मनुजा गुरुतरकार्य्यनिदानात् महावृष्टिनिदानाच्च प्रकम्पमाना ईश्वरी-
१० यभवनस्य महाप्राङ्गणे उपविविशुः । ततः परं याजक इष्रायः समुत्थाय
तान् जगाद युष्माभि रिस्रायेलो दोषस्य वृद्धये ऽन्यजातीयाः कन्या व्यूढा
११ अनेनापराद्धं । अतो हेतोरिदानीं युष्माकं पितृलोकानां प्रभोः परमेश्व-
रस्य सन्निधौ तत् स्वीकुरुध्वं तस्य तुष्टिजनकं कर्म्म कुरुध्वञ्च, अपरं देशीय-
१२ मनुजेभ्य इतरजातीययोषिद्भ्यश्च स्वान् पृथक् कुरुध्वं । तदानीं निखिलः
समाजः प्रोच्चैः स्वरैः प्रत्युवाच, भवता यादृशं गदितं तदनुसारेणा-
१३ स्माभिः कारिष्यते । परन्तु लोका अनेके, वर्षाकालश्चोपस्थितवान्,
वयं वहिस्थाने स्थातुं न पारयामहे किञ्च कर्म्मेदं दिनैकेन दिनद्वयेन वा
१४ साध्यं नहि, यस्माद् वयमनेके एतेन कर्म्मणापराधिनो जाताः । अतः
कृत्स्नसमाजस्य कृते ऽस्माकम् अधिपतय एतस्मिन् नियुज्यन्ताम् अपरम्
अस्माकं नगरेषु यावन्तो लोका इतरजातीयाः कन्या व्यवहन् तैः सार्द्धम्
एकैकस्य नगरस्य प्राचीनलोका विचारयितारश्च निरूपितसमये समाग-
च्छन्तु तेन विषयेऽस्मिन् अस्माकम् ईश्वरस्य कोपाग्निरस्मत्तो निवर्तिष्यते ।
१५ एतस्या मन्त्रणाया वैपरीत्येन केवलम् असाहेलस्य तनयो योनाथन्-
स्तिक्वाहस्य तनयो यहसियश्चोदतिष्ठतां किञ्च मिशुल्लमो लेवीयः सब्बि-
१६ थयश्च तयोः साहाय्यम् अकुरुतां । तथापि बन्दीकृता मनुजा विधिवद्
आचारम् अकुर्व्वन् याजक इष्रायः प्रधानपितृकाः कियन्तो लोकाश्च
निजनिजपितृवंशानुसारेण निजनिजनामानुसारेण च पृथक्कृताः सन्तो
१७ दशममासस्य प्रथमदिवसे तत्कार्य्यस्य विचारं कर्त्तुम् उपविविशुः । अपरं
प्रथममासस्य प्रथमे दिवसे त इतरजातीययोषिद्व्याहिपुरुषाणां वि-
चारं समापयामासुः ।
१८ याजकवंशानां मध्य इतरजातीयकन्याग्राहिण एते मनुजा अविद्यन्त,
यिहोषादकस्य सुतस्य येशूयस्य तनयानां भ्रातृणाञ्च मध्ये मासेय इली-
१९ येषरो यारिबो गिदलियश्च । इमे निजा निजा जायाः परित्यक्तुं स्वाक्षरं
लिलिखुः, अपरम् अपराधित्वकारणात् मेषमेकं दोषार्थकबलिं ददुः ।
२० अपरम् इम्मेरवंशे हनानिः सिबदियश्च । अपरं हारीमवंशे मासेय

इलियः शिमयियो यिहीयेल उषियश्च। अपरं पश्हूरवंशे इलियो- २२
ऐनयो मासेय इस्मायेलो निथनेलो योषावद इलियासाश्च। अपरं २३
लेवीयानां मध्ये योषावदः शिमियिः किलायाहः (सएव किलीटः) पि-
थाहियो यिहूदा इलियेषरश्च। अपरं गायकानां मध्य इलियाशीवः। २४
द्वारपालानां मध्ये शल्लुमः टेलम ऊरिश्च। अपरम् इस्रायेलीयानां मध्ये २५
परियोशवंशे रिमायो यिषियो मल्कियो मियामीन इलियासरो
मल्कियो विनायश्च। अपरम् एलमवंशे मत्तनियः सिखरियो यिही- २६
येलो ऽब्दि यिरेमोत एलियश्च। अपरं सत्तुवंशे इलियो-ऐनय इलिया- २७
शीवो मत्तनियो यिरेमोतः सावदो ऽसीसाश्च। अपरं बेवयवंशे यि- २८
होहाननो हननियः सव्वयो ऽत्लयश्च। अपरं वानिवंशे मिशुल्लमो २९
मल्लूको ऽदायाहो याशूवः शालो रामोतश्च। अपरं पहतमोयाववंशे ३०
ऽद्नः किललो विनायो मासेयो मत्तनियो वित्सलेलो विन्नूयि मिनशिश्च।
अपरं हारीमवंशे इलियेषरो यिशियो मल्कियः शिमयियो शिमियोनो ३१
विन्यामीनो मल्लूकः शिमरियश्च। अपरं हस्मूमवंशे मत्तनयो मत्तत्तः ३३
सावद इलीफेलटो यिरेमयो मिनशिः शिमियिश्च। अपरं वानिवंशे ३४
मादयो ऽम्राम ऊयेलो विनायो वेदियाहः किलूह वनियो मिरेमोत ३६
इलियाशीवो मत्तनियो मत्तिनयो यासयो वानि विन्नूयिः शिमियिः ३८
श्येलिमियो नाथनो ऽदायाहो मखद्नयः शाशयः शारयो ऽसरेलः शेलि- ४१
मियः शिमरियः शल्लूमो ऽमरियो यूषफश्च। अपरं निवुवंशे यिधूयेलो ४३
मत्तथियः सावदः सिवीनो यादयो योयेलो विनायश्च। इमे इतरजाती- ४४
यकन्या अवहन् कतिपयानाञ्च तासु जायासु सन्ताना अजायन्त।

---

# निहिमियस्य पुस्तकं।

## १ प्रथमोऽध्यायः।

यिरूशालमस्य दुर्दशाया वार्त्तां निशम्य निहिमियस्य शोचनमुपवसनञ्च तदीया प्रार्थना च।

हखलियस्य तनयस्य निहिमियस्य कर्म्माणि। विंशतितमवत्सरस्य १
किस्लेवमासि शूशन्राजधान्यामहमासम्। तदानीं हनानिनामा मम २

भ्रातृणामेको जनो यिहूदादेशीयाः कतिपया मनुजाश्च तत् स्थानमाग-
मन् तदा ते रक्षितान् अर्थतो युद्धदासत्वाद् अवशिष्टान् यिहूदीयलो-
३ कानधि यिरूशालमश्चाधि मया समपृच्छ्यन्त। तेन ते माम् अभाषन्त ते
ऽवशिष्टा लोका अर्थतो दासत्वाद् उच्छिष्टा मानवा महता दुःखेनापमा-
नेन च तत्र देशे निवसन्ति किञ्च यिरूशालमस्य प्राकारो भग्नो पुरद्वा-
राणि च वह्निदग्धानि विद्यन्ते।
४ तेषामेतानि वाक्यानि निशम्याहं कतिपयदिवसान् उपविश्य क्रन्दन्
५ शोकं स्वर्गीयेश्वरस्य च गोचर उपवासं प्रार्थनाञ्चाकरवं। इत्थं
भारतीञ्चाकथयं हे स्वर्गीय प्रभो परमेश्वर, त्वमेव महान् भयङ्करश्चेश्वरः,
ये त्वयि प्रीयन्ते तवाज्ञा रक्षन्ति च तान् प्रति त्वं नियमम् अनुकम्पाञ्च
रक्षसि। इदानीं भवतो ऽस्य दासस्य प्रार्थनाम् आकर्णयितुं भवतः
६ श्रोत्रे अवहिते लोचने चोन्मीलिते भवतां। अहं भवदीयदासानाम्
इस्रायेलीयलोकानां निमित्तं दिवानिशं भवतो गोचरे प्रार्थये, इस्राये-
लीयलोकानां कलुषाणि स्वीकरोमि च, यतो भवतो विरुद्धम् अस्माभिः
७ पापम् अकारि, मयापि मम पितृवंशेन च पापम् अकारि। वयं भवतो
विरुद्धं कुकर्म्माण्यकुर्म्महि, किञ्च स्वदासेन मूससाज्ञापिता भवत आदेशा
८ विधयो राज्यनीतयश्चास्माभि र्नाचरिताः। तथापि युष्माभिराज्ञाल-
ङ्घनात् मयि भिन्नजातीयानां मध्ये युष्मान् विकीर्णवति यदि यूयं मां
प्रति परावृत्य मदीयान् निदेशान् रक्षायात तदनुसारेण कर्म्माणि
९ कुर्व्वीध्वञ्च, तर्हि युष्माकं केषुचित् गगनस्य प्रान्तपर्य्यन्तं दवितेष्वपि ते
तस्मात् स्थानादपि मया संग्राहिष्यन्ते निजनाम्नो वासार्थं मयाभिवाञ्छितं
स्थानम् आनेष्यन्ते च, यामिमां भारतीं भवान् मूससाज्ञापितवान्
१० विनयेऽहं तामिदानीं स्मरतु। त एव भवतो दासा प्रजाश्च सन्ति,
भवान् निजेन महापराक्रमेण बलवता करेण च तान् परिक्रीतवान्।
११ हे मत्प्रभो, विनयेऽहम् इदानीं स्वीयदासस्य प्रार्थनायां ये च भवतो
नाम्नो भक्त्यां तुष्यन्ति भवदीयानां तेषां दासानां प्रार्थनायां मनो निद-
धातु। अपरं विनयेऽहम् अद्य स्वीयदासस्य कर्म्म सिद्धं करोतु पुमांश्च
एतस्य समक्षञ्च माम् अनुकम्पितं विदधातु।

# २ द्वितीयोऽध्यायः।

१ निहिमियस्य विवर्णवदनताया निदानं विदित्वा स्वपेक्षातसत्त्वेन तस्य यिरूशालमं प्रति प्रेषणं ९ तस्मिन् तत्रोपस्थिते तदीयवैरिणां मनस्तापः ११ चन्द्रायां भग्नप्राकारस्यालोकनं १७ प्राकारस्य पुन र्निर्म्माणे यिहूदीयेभ्यः प्रवृत्तिदानं।

अहं महीपतेः पानभाजनवाट् आसं किन्तु नरपतेरर्तक्षस्तस्य राज- १
त्वस्य विंशतितमवत्सरस्य नीसने मासि महीपतेः सम्मुखे द्राक्षारसे
तिष्ठति मया स द्राक्षारस आदाय नरपतये व्यतारि। पूर्व्वमहं तस्य
समक्षं कदापि विषण्णो नाभवम्। एतन्निदानात् नरपति मामपृच्छत् त्वं २
निरामयोऽसि तथापि त्वदीयं वदनं कुतो विवर्णमभूत्? एतत् मनः-
पीडां विनान्येन केनापि हेतुना न जायते। एतेनाहम् अतीवोद्विजन् ३
नरनाथमवादिषं, राजा चिरजीवी भूयात्। किन्तु मदीयपूर्व्वपुरुषाणां
श्मशानस्थं यन्नगरं तदधुनोच्छिन्नं विद्यते तदीयगोपुराणि चाग्निदग्धानि
सन्त्येतेन मदीयं वदनं कथं विवर्णं न भवेत्? तदानीं महीपति ४
र्मामप्राक्षीत् त्वं किं प्रार्थयसे? ततोऽहं स्वर्गीयेश्वरम् उद्दिश्य प्रार्थनां
विधाय राजानम् ऊचिवान्, यदि नरपतेरभिमतं जायेत यदि च ५
भवतो दासो भवतः साक्षादनुगृह्णीत तर्हि निवेदनमिदं कुर्व्वेऽहं भवान्
मां यिहूदानीवृतं मदीयपितृलोकानां श्मशानस्थं नगरं प्रेषयतु तेन मया
तत् पुनर्निर्म्मायिष्यते। ततो महीपतिः स्वीयपार्श्वे समुपविष्टा महिषी च ६
मामप्राक्षीत्, त्वदीययात्रायां कति दिनानि भविष्यन्ति? कदा च त्वं पुन-
रावर्त्तिष्यसे? इत्थं मां प्रेषयितुं भूपतेरभिमते जाते मया तस्य सन्निधौ
समयो निरूपितः। अधिकन्तु मया महीपतिर्वदितः, यदि क्षितिपतेर- ७
भिमतं जायेत तर्हि यिहूदानीवृते ममोपस्थितिं यावद् यत् सरितः पा-
रस्था देशाधिपतयो मदीयव्रजनस्य साहाय्यं कुर्व्वीरन् कारणादतस्तान्
प्रति लिखितानि पत्राणि मह्यं दीयन्ताम्। अपरं भूभृतो वनरक्षक आ- ८
सफो यत् मन्दिरपार्श्वस्थस्य दुर्गस्य गोपुराणां नगरीयप्राकारस्य मदीय-
वेश्मनश्च गृहकाष्ठानां कृते मह्यं दारूणि देयात् तन्निमित्तं तं प्रति पत्रमेकं
वितरतु। तेन माम्प्रतीश्वरस्यानुग्रहेण नरपति र्मह्यं तत् सर्व्वं दत्तवान्।
अपरं नरनाथो मया समं वाहिनीपतीन् हयारोहिणश्च प्राहिणोत्। ९
अनन्तरम् अहं सरितो ऽपारस्थानां देशाधिपतीनाम् उपकण्ठम् उप-
स्थाय नृपतेः पत्राणि तेभ्यो ऽददाम्। तदानीम् होरोणीयसनबल्लट- १०

चेष्टार्थं मानुष एक आगमदिति निशम्य होरोणीयसन्वल्लटम्याम्मो
नीयदासस्य टोवियस्य च महती मनःपीडा जाता।
११ अनन्तरमहं यिरूशालमम् उपस्थाय तत्र स्थाने दिनत्रयं प्रोषितवान्।
१२ ततो ऽहं मम सङ्गिनः कतिपयलोकाश्च रजन्यामुदतिष्ठाम। किन्त्वीश्वरो
यिरूशालमस्य कृते यस्मिन् कार्य्ये मम मानसं प्रावर्त्तयत् तदहं कञ्चन न
ज्ञापितवान्। अपरमहं यं वाजिनम् आरोहं तं विना कोप्यन्यः पशुः
१३ सार्कं मया नासीत्। अहं निशायां निम्नभुवो द्वारेण वहिर्गत्य नागकूपं
सारद्वारञ्च यावद् गच्छन् यिरूशालमस्य भग्नं प्राकारं वह्निदग्धानि
१४ पुरद्वाराणि च समलोकयम्। अपरम् अहं प्रस्रवणस्य द्वारं राजकीय-
पुष्करिणीञ्च यावद् व्रजितवान् तत्र मदीयवाहनस्य पथो गमनीये
१५ वर्त्मनि न सति क्षपायामहं स्रोतसो मध्येन व्रजन् प्राकारं समपश्यम्
१६ अनन्तरं पुनर्व्वारं निम्नभूमे र्द्वारेण प्रविश्य परावृत्यागच्छम्। किन्तु
मया यद्यत् स्थानम् अगम्यत यद्यच्चाक्रियत तद् अधिपतयो नाविदुः
किञ्च तं कालं यावद् अहं यिहूदीयलोकान् याजकान् प्रमुखनरान्
अधिपतीन् कर्म्मकारिणश्च तन्न ज्ञापितवान्।
१७ अनन्तरमहं तेभ्यो ऽकथयं, वयं कीदृग् दुर्दशापन्ना आस्महे तद्
युष्माभि र्दृश्यते यिरूशालमम् उच्छिन्नं तदीयगोपुराणि च वह्निदग्धानि,
तस्माद् आगच्छत, वयम् अद्यारभ्य यन्निन्दास्पदं न भवेम कारणादस्माद्
१८ यिरूशालमस्य प्राकारं पुन र्निर्म्मिमीमहे। अनन्तरं मां प्रतीश्वरस्य मङ्ग-
लदायको ऽनुग्रहो मां प्रति गदितानि नरपते र्वचनानि चैतानि तेषां
समक्षं मया वर्णितानि, तेन ते समभाषन्त भद्रं वयम् उत्थाय पुन
र्निर्म्माणं कुर्म्महे। अनेन प्रकारेण ते एतस्योत्तमस्य कार्य्यस्य निमित्तं
१९ स्वान् बलवतो ऽकुर्व्वन्त। परन्तु होरोणीयः सन्वल्लटो ऽम्मोनीयदासः
टोविय आरवीयो गेशमश्च वार्त्तामिमां निशम्यास्मान् प्रति परिहासम्
अवज्ञाञ्च विधाय गदितवन्तः, यूयं यदिदं कार्य्यं कुरुथ तत् किं? यूयं
२० किं राजद्रोहं करिष्यथ? तदानीमहम् उत्तरम् अददाम्, स्वर्गीय ईश्वरो
ऽस्माकं कार्य्यं सिद्धं करिष्यति। वयं तस्यैव दासास्तस्माद् अस्माभिरुत्थाय
निर्म्माणं करिष्यते। परन्तु यिरूशालमे युष्माकं को ऽपि भागो वाधि-
कारो वा स्मारकं चिह्नं न विद्यते।

---

# ३ तृतीयोऽध्यायः।

प्राकारो यैः पुन र्निरमायि तेषां नामानि स्थानानां निर्णयश्च।

अनन्तरं प्रधानयाजक इलियाशीवस्तस्य याजका भ्रातरश्च समुत्थाय १
मेषद्वारं पुन र्निर्म्ममिरे तस्य कवाटे स्थापयित्वा तत् पावयाञ्चक्रिरे,
अर्थतो मेयादुर्गमारभ्य हननेलस्य दुर्गं यावत् तत् पवित्रयाञ्चक्रिरे।
तस्य सन्निधौ यिरीहो मानवाः प्राकारं पुन र्निर्म्ममिरे। तेषामुपकण्ठ २
इम्रेस्तनयः सक्कूरः पुन र्निर्म्ममे। अपरं सिनायाहस्य पुत्रा मत्स्यद्वारं ३
पुन र्निर्म्ममिरे तस्य वृहत्काष्ठानि चोत्थापयाञ्चक्रिरे किञ्च तस्य कवाटे
कुञ्चिका अर्गलानि च स्थापयाञ्चक्रिरे। तेषामुपकण्ठे कोसस्य पौत्र ४
ऊरियस्य पुत्रो मिरेमोतः पुन र्निर्म्ममे। तस्य सन्निधौ मिश्रेषवेलस्य पौत्रो
बेरिखियस्य पुत्रो मिशुल्लमः पुन र्निर्म्ममे। तस्यान्तिके बानाहस्य पुत्रः
सादोकः पुन र्निर्म्ममे। तस्य समीपे तिकोयीया मनुजाः पुन र्निर्म्ममिरे ५
परन्तु तेषां प्रमुखमानवाः स्वेषां परिवृढस्य कार्य्ये न प्रववृतिरे। अन- ६
न्तरं पासेहस्य पुत्रो यिहोयादायो बिषोदियाहस्य पुत्रो मिशुल्लमश्च
पुरातनं द्वारं पुन र्निर्म्ममाते, तौ तस्य तिर्य्यक्काष्ठान्युत्थापयाञ्चक्राते तदी-
यकवाटे कुञ्चिका अर्गलानि च स्थापयाञ्चक्राते। तयोरुपकण्ठे गिबियो- ७
नीयो मिलटियाहो मिरोणोथीयो यादोनश्चापरं गिबियोनीया मिस्पा-
हीयाश्च मनुजाः सरितो ऽपारस्थदेशाधिपस्य सिंहासनं यावत् पुन
र्निर्म्ममिरे। तस्य सन्निधौ नाडीन्धमानां मध्यीयो हर्हयस्य तनय ८
उषीयेलः पुन र्निर्म्ममे। तस्योपकण्ठे गन्धवणिग्वंशीयो हनानियः पुन र्नि-
र्म्ममे किञ्च ते दीर्घप्राकारं यावद् यिरूशालमं दृढयाञ्चक्रिरे। तेषां समीपे ९
यिरूशालमप्रदेशस्यार्द्धभागस्याधिपति हूरस्य तनयो रिफायः पुन र्नि-
र्म्ममे। तस्य सन्निधौ हरूमफस्य तनयो यिदायाहो निजभवनस्य सम्मु- १०
खस्थं प्राकारं पुन र्निर्म्ममे। तस्य समीपे हशब्नियस्य तनयो हट्टूशः पुन
र्निर्म्ममे। अपरं हारीमस्य पुत्रो मल्कियः पहतमोयाबस्य तनयो ११
हश्शूबश्च तदन्यभागं चुल्लिदुर्गञ्च पुन र्निर्म्ममाते। तदुपकण्ठे यिरूशाल- १२
मप्रदेशस्यार्द्धस्याधिपो हलोहेशस्य तनयः शल्लूमस्तदीयदुहितरश्च पुन
र्निर्म्ममिरे। अनन्तरं हानूनो सानोहनिवासिनश्च लोका निम्नभूमे र्द्वारं १३
पुन र्निर्म्ममिरे। ते तस्य निचयनं चक्रिरे किञ्च तस्य कवाटे कुञ्चिका
अर्गलानि च स्थापयाञ्चक्रिरे, अपरं सारद्वारं यावत् प्राकारस्य सहस्रं

१४ स्तम्भान् पुन र्निर्म्ममिरे। अपरं बैथक्केरमप्रदेशस्याधिपती रेखबस्य पुत्रो
मल्कियः सारद्वारं निर्म्ममे, स तस्य निचयनं चक्रिवान् किञ्च तस्य
१५ कवाटे कुञ्चिका अर्गलानि च स्थापयाञ्चक्रे। अपरं मिस्पाप्रदेशस्याधि-
पतिः कल्होषेस्तनयः शल्लूनः प्रस्रवणस्य द्वारं पुन र्निर्म्ममे, स तत्
निर्म्माय तदीयाच्छादनं चक्रवान् अपरं तस्य कवाटे कुञ्चिका अर्गलानि
च स्थापयाञ्चक्रे किञ्च दायूदो नगराद् अवरोहणार्थकं सोपानं यावत्
राज उद्यानस्य सम्मुखस्थायाः शीलोहपुष्करिण्याः प्राकारं पुन र्निर्म्ममे।
१६ तस्योपकण्ठे बैतसूरप्रदेशस्यार्द्धभागस्याधिपतिरस्बूकस्य तनयो निहि-
मियो दायूदः श्मशानागाराणां सम्मुखे खनितायाः पुष्करिण्या अभ्यर्णं
१७ यावत् वीरलोकानां भवनानि च यावत् पुन र्निर्म्ममे। तस्य सन्निधौ
लेवीयानाम् अन्तर्गतो बानेस्तनयो रिहूमः पुन र्निर्म्ममे। तस्य सन्निधौ
कियीलाप्रदेशस्यार्द्धभागस्याधिपति र्हशबियः स्वीयभागं पुन र्निर्म्ममे।
१८ तस्य समीपे तेषां भ्रातृनिवहो ऽर्थतः कियीलाप्रदेशस्यार्द्धभागस्याधिपति
१९ र्हेनाददस्य तनयो बवयः पुन र्निर्म्ममे। तस्योपकण्ठे मिस्पाया अधिपति
र्येशूयस्य तनय एसरः प्राकारस्य वक्रभागे स्थितस्यास्त्रागारस्य वर्त्मस-
२० म्मुखे स्थानमपरं पुन र्निर्म्ममे। तस्योपकण्ठे सब्बयस्य तनयो बारूको
यत्नं कृत्वा प्राकारस्य वक्रभागात् प्रधानयाजकस्येलियाशीवस्य गेहद्वारं
२१ यावत् स्थानमन्यत् पुन र्निर्म्ममे। तस्य समीपे कोसस्य पौत्र ऊरियस्य
पुत्रो मिरेमोत इलियाशीवस्य गेहद्वारम् आरभ्येलियाशीवस्य गेहस्य
२२ प्रान्तं यावत् स्थानमपरं पुन र्निर्म्ममे। तस्य सन्निधौ समभूमे र्याजकलोकाः
२३ पुन र्निर्म्ममिरे। तदुपकण्ठे बिन्यामीनो हश्शूबश्च स्वीयगेहयोः सम्मुखे
पुन र्निर्म्ममाते। तत्सन्निधावननियस्य पौत्रो मासेयस्य पुत्रो ऽसरियः
२४ स्वीयगेहस्य सम्मुखे पुन र्निर्म्ममे। तस्योपकण्ठे हेनाददस्य पुत्रो बिन्नूयि-
रसरियस्य भवनमारभ्य प्राकारस्य वक्रम् अर्थतः कोणं यावत् स्थानम-
२५ परं पुन र्निर्म्ममे। अनन्तरम् ऊषयस्य तनयः पाललो वक्रस्य सम्मुखस्थ-
प्राकारस्य सम्मुखे बन्धनालयस्य चत्वरस्य समीपस्थस्य राज ऊर्द्ध्वप्रासा-
दाद् बहिर्वर्त्तिदुर्गस्य सम्मुखे च प्राकारं पुन र्निर्म्ममे। तस्य सन्निधौ
२६ परियोशस्य तनयः पिदायः पुन र्निर्म्ममे। निथीनीयलोका ओफले ऽर्थतो
नीरद्वारस्य पूर्व्वदिशः सम्मुखस्थं स्थानं बहिर्वर्त्तिदुर्गञ्च यावद् ऊषुः।
२७ तत्सन्निधौ तिकोयीया बहिर्वर्त्ति बृहद् दुर्गम् आरभ्य ओफलस्यप्राकारं
२८ यावद् अपरं स्थानमेकं पुन र्निर्म्ममिरे। हयद्वारस्य परदिशम् आरभ्य

याजकानाम् एकैको जनो निजगेहस्य सम्मुखं प्राकारं पुन र्निर्म्ममे।
तत्सन्निधाविम्मेरस्य तनयः सादोको निजगेहस्य सम्मुखं पुन र्निर्म्ममे। २९
तस्योपकण्ठे पूर्व्वद्वाररक्षकः शिखनियस्य तनयः शिमयियः पुन र्निर्म्ममे।
तस्योपकण्ठे शेलिमियस्य तनयो हनानियः सालफस्य षष्ठः पुत्त्रो हानूनश्च ३०
स्थानमपरमेकं पुन र्निर्म्ममाते। तत्समीपे बेरिखियस्य तनयो मिशुल्लमो
निजप्रकोष्ठस्य सम्मुखं पुन र्निर्म्ममे। तस्य सन्निधौ नाडोन्धमस्य तनयो ३१
मल्कियो निथीनीयानां वणिजाञ्च स्थानं यावत् मिप्कदद्वारस्य सम्मुखस्थं
प्राकारं कोणस्य वर्त्म यावत् पुनर्निर्म्ममे। अपरं कोणस्थमार्गस्य मेष- ३२
द्वारस्य च मध्ये नाडोन्धमा वणिजश्च पुन र्निर्म्ममिरे।

---

# ४ चतुर्थोऽध्यायः।

१ रिपूणां निन्दायाः कथनं ७ वैरिणां विरुद्धं रक्षकाणां स्थापनं १२ कर्म्मकारिणां हस्तेष्वस्त्रसमर्पणं १९ मानवान् प्रति निहिमियस्य मन्त्रणाकथनञ्च।

अपरं वयं प्राकारं पुन र्निर्म्मिमीमहे वाचमिमाम् आकर्ण्य सन्ब- १
ल्लटश्चुकोप महाक्रोधान्वितः सन् यिहूदीयान् तिरस्कृतवांश्च। अपरं २
निजभ्रातृणां शोमिरोणीयबलानाञ्च साक्षात् वाचमिमां व्याहरत्, एते
जीर्णा यिहूदीयाः किं करिष्यन्ति? इमे कदा निवर्त्तिष्यन्ते? इमे किं
यज्ञं करिष्यन्ति? एकस्मिन् दिने किं कर्म्मैतत् साधयिष्यन्ति? अस्मी-
भूतान् पाषाणान् धूलिराशिभ्य उत्थाप्य किं सजीवान् करिष्यन्ति? तेन ३
तस्य समीपस्थो ऽम्मोनीयटोबियः कथयामास, ते यत् निचयनं कुर्व्वन्ति
तत्र यदि शृगाल आरोहति तर्हि स पाषाणनिर्म्मितः प्राकारो भिद्य-
मानः पतिष्यति। हे अस्माकम् ईश्वर श्रवणं कुरु, वयं निन्दिता अभ- ४
वाम। एतैः कृतम् अपमानम् एतान् प्रति परावर्त्तय। अपरं दासा-
गाररूपे देशे लोठितवस्तूनीवैतान् स्थापय। एतेषां कलुषं न गोपय, ५
एतेषाम् अधर्म्मं भवतः सम्मुखान्न लुप्यतां, यतस्ते निचायकानां सम्मुखे
तव कोपम् अजनयन्। तथापि वयं प्राकारं निरमिमीमहि, ततः स ६
कृत्स्नः प्राकार उच्चतयार्द्धं यावत् सम्पन्नो ऽभूत्। यतो लोकानां मनः
कर्म्मण्यासक्तम् आसीत्।

अनन्तरं यिरूशालमस्थप्राकारस्य पुनर्निर्म्माणं प्रवर्त्तते तस्य भग्न- ७
स्थानानां जीर्णोद्धार आरभ्यते चैतन्निशम्य सन्बल्लटः टोबिय आरबीया

८ अम्मोनीया अस्दोदीयाश्च भृशं क्रुद्धाः सन्तो यिरूशालमस्य विघ्नं चेष्ट-
९ नार्थं तन्नगरस्य युद्धे बोधनार्थञ्च सर्व्वे यात्रां कर्त्तुम् ऐक्यमतं चक्रिरे। तेन
वयं स्वेषाम् ईश्वरस्य सन्निधौ प्रार्थयामहि दिवानिशं तेषां विघ्नं
१० रक्षकान् अस्थापयामहि च। अपरं यिहूदीयाः कतिपयलोका अवदन्
भारवाहका दुर्ब्बला जाता इदानीमपि बहु जीर्णं विद्यते, वयं प्राकारं
११ पुनर्निर्म्मातुं न पारयामः। अस्माकं वैरिणो ऽप्यकथयन् वयम् एतैरवि-
दिता अदृष्टाश्चैतेषां मध्यं प्रविश्यैतान् हनिष्यामस्तत् कर्म्म निवर्त्तयि-
१२ ष्यामश्च। अपरं तेषां समीपवासिनो यिहूदीया येभ्यः स्थानेभ्यो ऽस्मत्स-
मीपं गमनागमने अकुर्व्वन्, तेभ्यः सर्व्वेभ्यः स्थानेभ्यो दशवारान् अस्माकं
सन्निधिम् आगत्य तद् वचो ऽवदन्।
१३ अपरम् अहं तेषां स्थानानाम् अधः प्राकारस्य पश्चाद् अनावृतस्थानेषु
लोकान् नियुक्तवान् खड्गतच्छक्तिशूलधनुर्धारिणो लोकान् वंश-
१४ क्रमेण नियुक्तवान्। अनन्तरम् अहम् अवालोकयं किञ्च प्रोत्थाय प्रमुख-
लोकान् अध्यक्षान् तदन्यनिखिललोकांश्च गदितवान् यूयं तेभ्यो मा
बिभीत, महान्तं भयङ्करं परमेश्वरं स्मरत, स्वेषां भ्रातृणां पुत्रपुत्रीणां
१५ जायानां गेहानाञ्च निमित्तं समरं कुरुत। अनन्तरं तेषाम् अभिप्रायो
ऽस्माभि र्बुद्ध ईश्वरेण तेषां मन्त्रणा व्यर्थीकृता चेतिवार्त्तायाम् अस्माकं
रिपुभिः श्रुतायां वयं सर्व्वे पुनः प्राकारं गत्वा स्वीये स्वीये कार्य्ये प्रावर्त्ता-
१६ महि। तदेव दिनमारभ्य मम दासानाम् अर्द्धमनुजाः कार्य्यम् अकुर्व्वन्
अन्यार्द्धलोकाश्च शूलफलकधनुर्वर्म्माणि धारयन्तो ऽतिष्ठन् अपरं शास्तारो
१७ यिहूदावंशस्य पश्चात् सैन्याध्यक्षा अभवन्। ये प्राकारस्योपरिष्टात् नि-
चयनम् अकुर्व्वन् ये च भारान् अवहन् आरोपयन् वा ते सर्व्वे एके-
१८ नैकेन कर्म्माकुर्व्वन् तदन्यहस्तेन च शूलम् अधारयन्। निचायकाश्च
सर्व्वे कटिषु बद्धखड्गा अचाययन् तूरीवादकश्च मम सन्निधावतिष्ठत्।
१९ अनन्तरम् अहं प्रमुखलोकान् अधिपतीन् तदन्यनिखिललोकांश्च
अवदं, कार्य्यमिदं सुमहत् सुविततञ्च वयमपि प्राकारस्योपरिष्टाद् वि-
२० कीर्णा मिथो दूरवर्त्तिनश्च। तस्माद् यत्र कुत्रापि स्थाने युष्माभिस्तूरीशब्दः
श्रोष्यते तत्रैवास्मत्समीपं समागन्तव्यम्। अस्माकम् ईश्वरो ऽस्माकं नि-
२१ मित्तं समरं करिष्यति। अनेन प्रकारेण वयं तस्मिन् कार्य्ये परिश्रमम्
अकुर्म्म, अस्माकम् अर्द्धमनुजाश्चारुणोदयमारभ्य तारकोदयं यावत्
२२ शूलानि धारयन्तः समतिष्ठन्त। तस्मिन् समये मया लोकाः पुनरु-

हिता एकैको जनः स्वदासेन समं यिरूशालमस्य मध्ये निशां यापयतु, तथा सति ते निशायाम् अस्माकं रक्षोपकारका दिने च कार्य्योपकारका भविष्यन्ति। तस्मात् मया मम भ्रातृभि र्मम दासै र्मम रक्षकानुचरैश्च ११
वसनानि न मोचितानि, एकैकस्य स्नानमेव स्नानम् अभवत्।

---

# ५ पञ्चमोऽध्यायः।

१ लोकानां कष्टकथनं ६ कुसीदग्राहिणो लोकान् तिरस्कृत्य कुसीदस्य प्रतिदानाय निहिमियस्य निदेशनं १४ अध्यक्षत्वपदस्य वेतनं न गृहीत्वा निजवित्तेन बहुलोकानां भरणं।

अनन्तरं निजभ्रातॄणां यिहूदीयानां विरुद्धं साधारणलोकानां तदीय- १
योषितास्च महाकलह उदतिष्ठत्। केचिद् अवदन् अस्माकं बहवः पुत्रा २
दुहितरश्च सन्ति तस्माद् वयं यथा भुञ्जाना जीवेम तदर्थं शस्यानि
ऋणत्वेन गृहीतवन्तः। अपरे केचिद् अगदन् वयं स्वेषां शस्यक्षेत्राणि ३
द्राक्षाक्षेत्राणि गृहाणि च न्यासीकृत्य दुर्भिक्षसमये शस्यानि ऋणत्वेन
गृहीतवन्तः। अपरे केचिद् व्यवहरन् राजकरस्य निमित्तं वयं स्वेषां ४
भूमिद्राक्षाक्षेत्राणि न्यासीकृत्य मुद्रा ऋणत्वेनागृह्णीम। अस्माकं वपूंष्य- ५
स्मदीयभ्रातॄणां वपुषां तुल्यानि किञ्चास्माकं सन्तानास्तदीयसन्तानानां तुल्याः। किन्तु पश्यत तनया दुहितरश्चास्माभि र्दासत्वाधीनीकर्त्तव्याः, अस्माकं दुहितॄणां मध्ये काश्चिद् इदानीमपि दासत्वाधीनाः सन्ति तासां मोचनञ्चास्माकं न साध्यं यतोऽस्माकं शस्यक्षेत्राणि द्राक्षाक्षेत्राणि चापरेषां लोकानाम् अधिकारित्वे विद्यन्ते।

तदानीम् अहं तेषाम् एतादृशं कातरत्वशब्दम् एतानि वाक्यानि च ६
निशम्य भृशं कुपितवान्। अपरं निजे मानसे विविच्य प्रमुखलोकान् ७
अधिपतींश्च भर्त्सयन् तेभ्योऽवादिषं, यूयं निजनिजभ्रातृभ्यः कुसीदं
गृह्णीथ। अपरं तेषां विरुद्धं महासमाजं कृत्वागदं, अस्माकं भ्रातरो ये ८
यिहूदीयलोका इतरदेशीयेषु विक्रीता आसन् ते यथासाध्यम् अस्माभिः प्रत्यक्रीयन्त, इदानीं यूयमपि किं स्वेषां सहजान् विक्रीणीथ? ते किम् अस्माभिः क्रेतव्याः? तेन ते लोका नीरवाः सन्तोऽतिष्ठन् किमपि
प्रतिभाषितुं नाशक्नुवन्। अपरं मया गदितं युष्माभि र्यत् क्रियते तन्न ९
भद्रम्। अस्माकं वैरिणाम् इतरजातीयलोकानां निन्दाभयाद् अस्मदीये-
श्वरस्य भक्तिः किं युष्माभि र्नाचरितव्या? अहं मदीयभ्रातरो मम दा- १०

तेषाञ्च वयमपि मुद्राणां शस्यानाञ्च दानेन तेषाम् उत्तमर्णाः, किन्तु मया
११ विनीयते, एतत् कुसीदग्रहणम् अस्माभिस्त्यक्तव्यं। मया विनीयते
तेषां शस्यक्षेत्राणि द्राक्षाक्षेत्राणि जितवृक्षा गेहानि चास्माभिः पुन
र्दीयन्तां, युष्माभिश्च तेभ्यो यानि मुद्राशस्यद्राक्षारसतैलानि ऋणत्वेन
१२ दत्तानि तेषां शतकुसीदमपि पुन र्दीयतां। तदानीं ते कथितवन्तः, वयं
तानि प्रतिदास्यामस्तान् किञ्चन न याचिष्यामहे त्वया यद् गद्यते तदेव
करिष्यामहे। तदानीम् अहं याजकान् आहूय तद्वाक्यानुसारेणास्माभिः
१३ कारिष्यत इति तान् अशपथयम्। अपरं मया वस्त्राञ्चलम् आस्फाल्य
गदितं, यो जन एतां प्रतिज्ञां न समाचरति, ईश्वरस्तस्य गृहाद् उपा-
र्ज्जितविषयाच्च तम् इत्थम् आस्फाल्य क्षिपतु स चेत्थम् आस्फालितो
ऽकिञ्चनश्च भवतु। ततः कृत्स्नः समाजस्तथास्त्वित्युक्ता परमेश्वरं धन्यम्
अवदत्। अनन्तरं मनुजास्तद्वाक्यानुयायिनम् आचारम् अकुर्व्वन्।
१४ यिहूदादेशस्याधिपतित्वपदे मम नियोगस्य दिनमारभ्यार्त्तक्षत्रनृपते-
र्त्तंसक्षस्य राजत्वस्य विंशतितमं वत्सरमारभ्य द्वात्रिंशत्तमं वत्सरं या-
वद् एताम् द्वादशवत्सरान् मया मम भ्रातृनिवहेन च देशाध्यक्षस्य भक्ष्यं
१५ नाभुज्जि। मत्पूर्व्ववर्त्तिनो ऽधिपतयो लोकेषु भारम् अर्पयन्तस्तेभ्यश्चत्वा-
रिंशच्छेकलपरिमितानि रौप्याणि तदन्यद् भक्ष्यं द्राक्षारसञ्च गृहीत-
वन्तः, अपरं तेषां दासेया अपि लोकानां शासकत्वम् अकुर्व्वन्, परमेश्व-
१६ राद् बिभ्यता मया तन्नाक्रियत। एतस्य प्राकारस्य कार्य्ये ममासक्ति-
हेतुना वयं किमपि क्षेत्रं नाक्रीणीम किञ्च मदीयाः सर्व्वे दासास्तस्मिन्
१७ स्थाने कर्म्मणि मिलितवन्तः। अपरं यिहूदीयानाम् अधिपतीनाञ्च सार्द्ध-
शतं जना अस्मच्चतुर्दिक्स्थानां भिन्नजातीयानां मध्याच्चास्माकम् उपकण्ठं
१८ आगता लोकाश्च मदीयभोजनासने समुपाविशन्। तस्मिन् समये मन्नि-
मित्तं प्रतिदिनम् एको वृषभः षट् उत्तममेषाश्चापच्यन्त पक्षिणो ऽप्य-
पच्यन्त। अपरं दशदिवसानां मध्ये वारमेकं यथेष्टो नानाविधो द्राक्षा-
रसश्चानीयत। तथापि लोकानां दासत्वभारस्य गरिष्ठत्वाद् अधिपति-
१९ त्वस्य वेतनं नायाचे। हे मदीयेश्वर, एतेषां लोकानां निमित्तं मया
यानि कर्म्माणि कृतानि तदनुसारेण कल्याणाय मां स्मर।

---

## ६ षष्ठोऽध्यायः।

१ सन्बल्लटस्य भूतेता गेशमरबो गेशमप्रभृतिना मदीयशत्रुणा निहिमियं चाचषितु

तस्य वेष्टनं १५ कर्म्मणः समाप्तिप्राप्तत्वात् वैरिणाम् उद्वेजनं १७ रिपुभिः सह प्रमुखयिहूदीयानां गुप्तमन्त्रणायाः प्रकटीभवनं।

अनन्तरं मया प्राकारः पुनर्निर्म्मितस्तस्य मध्ये किञ्चन जीर्णं स्थानं १
न विद्यते केवलं द्वारैः कवाटानां संयोगस्तदानीमपि न कृत एतस्यां
वार्त्तायां सन्बल्लटेन टोबीयेनारबीयगेशमेनास्माकम् अन्यै वैरिभिश्च
श्रुतायां सन्बल्लटो गेशमश्च मां हिंसितुं मतिं विधाय दूतेन माम् प्रति २
वच इदं प्राहिणुताम्, आगच्छ वयम् ओनुप्रान्तरस्थेषु ग्रामेषु परस्परं
साक्षात् कुर्म्महे। ततो मया दूतैरिदं प्रतिवचनं तौ प्रति प्रहितम्, ३
अहम् एकं महत् कर्म्मानुतिष्ठामि, तत्रावरोढुं न पारयामि। मयि
शैथिल्यं विधाय युष्माकं सन्निधिं गते कर्म्म कुतो निवर्त्तिष्यते? इत्थं ४
चतुर्व्वारं तै र्ममोपकण्ठं लोका प्रहिता मयापि ताम् प्रति तादृशं प्रत्यु-
त्तरं कृतं। अनन्तरं सन्बल्लटस्तेन प्रकारेण पञ्चमं वारं मम सन्निधिं ५
निजं दासेयं प्राहिणोत्। तस्य करे मुक्तं पत्रमेकमासीत् तन्मध्य एतादृ- ६
शानि वाक्यानि लिखितान्यविद्यन्त, त्वं यिहूदीयाश्च राजद्रोहं विधातुं
मतिं कुरुथ तन्निदानात् प्राकारं पुन र्निर्म्मिमीषे पश्चात् त्वं तेषां राजा
भविष्यसीति किंवदन्ती भिन्नजातीयानां मध्ये श्रूयते गेशमेनापि तदेवो-
च्यते। अपरं यिहूदीयानां न्यपतिरेको विद्यते त्वं स्वस्य कृते यिरूशालमे ७
वच इदं घोषयितुं भविष्यद्वादिनो न्ययुङ्क्थाः। इदानीम् एतद्वा-
क्यानुयायिनी वार्त्ता न्यपेण श्रोष्यते तस्माद् आगच्छावां मिलित्वा
मन्त्रयावः। तदानीम् अहं दूतेन तं प्रति वाचमिमामवादिषं त्वया ८
यद्यद् वचो गदितं तद् यथार्थं नहि, तत् तवैव मनसा कल्पितम्।
एतस्मिन् कर्म्मणि तेषां हस्ता दुर्ब्बला भवन्तु तेन तन्न सेत्स्यतीत्याशया ९
ते सर्व्वेऽस्मान् अत्रासयन्, अतो हे परमेश्वर त्वं मम हस्तौ बलिनौ
कुरु। अनन्तरं मिहेटबेलस्य पौत्रो दिलायस्य पुत्रो यः शिमयियो १०
ऽवरुद्ध आसीत् मयि तस्य निवेशनं गते सोऽवादीत्, ईश्वरस्य गेहे
ऽर्थतो मन्दिरस्य मध्यस्थाने मिलित्वास्माभि र्मन्दिरस्य द्वाराणि बध्यन्तां
यतस्ते त्वां व्यापादयितुमागमिष्यन्ति क्षपदायामस्यामेव त्वां व्यापाद-
यितुम् आगमिष्यन्ति। तेनाहम अभाषे मत्तुल्यो मनुजः किं पलायि- ११
ष्यते? मत्तुल्यो मानवः प्राणरक्षार्थं किं मन्दिरम् आश्रयिष्यते? मया
तन्न प्रवेक्ष्यते। अनन्तरम् ईश्वरस्तं न प्राहिणोत् स मम वैरित्वात् तद् १२
भविष्यद्वचनम् अभाषत किन्तु टोबीयः सन्बल्लटश्च तस्मै वेतनं प्राय-

१३ कृतां मया विविच्यैतद् अबोधि। अहं यद् बिभ्यत् तत् कर्म्म कुर्य्यां पात-
कञ्चाचरेयमित्थं तयोरभिमतात् कुख्यातिं गत्वा ताभ्यां निन्दनीयो
१४ भवेयम् एतदर्थं तौ तस्मै वेतनं व्यतरताम्। हे मदीश्वर टोबियः सन-
बल्लटो भविष्यद्वादिनी नोयदिया तदितरे च ये भविष्यद्वादिनो माम्
अभीषयन् ते निजक्रियानिदानात् त्वया स्मर्य्यन्ताम्।
१५ अनन्तरं द्विपञ्चाशद् दिवसानां मध्य इलूलमासस्य पञ्चविंशे दिवसे
१६ प्राकारः समाप्तिम् अगमत्। तदानीम् अस्माकं शत्रुभिः परिपन्थि-
भिस्तस्यां वार्त्तायां श्रुतायाम् अस्मच्चतुर्दिक्स्थभिन्नजातीयैश्च तस्मिन्
कर्म्मणि दृष्टे तेऽतीव विवर्णवदना अभवन् यत एतत् कर्म्मास्माकम्
ईश्वराद् अभवदिति तैरबोधि।
१७ तस्मिन् समये यिहूदावंशस्य प्रमुखमानवाः टोबियस्य सन्निधिं बहूनि
पत्राणि प्राहिण्वन् तथा टोबियस्य पत्राण्यपि तेषां सन्निधिम् आग-
१८ च्छन्। यतः स आरहतनयस्य शिखनियस्य जामातासीत् किञ्च तस्य
तनयो यिहोहाननो बेरिखियतनयस्य मिशुल्लमस्य दुहितरं व्यूढवान्
एतन्निदानाद् यिहूदामध्ये बहवो मानवाः शपथेन तस्य वशा आसन्।
१९ ते मम समक्षं तस्य नुतिम् अकुर्व्वन् अपरं मदीयवार्त्तामपि तस्य समक्षं
अगदन्, किञ्च टोबियो मां त्रासयितुं मां प्रति पत्राणि प्राहिणोत्।

---

## ७ सप्तमोऽध्यायः।

१ हनानेर् हनानियस्य च हस्तेषु यिरूशालमस्य समर्पणं ४ बाबिलाद् आगतानां वन्दिमनुजानां संख्या ३९ याजकानां लेवीयानां गायकानां द्वारपालानां निथी-नीयानां सुलेमनो दासवंशीयानाम् अविदितवंशयाजकानाञ्च कथनं ६६ मिलित-लोकानां संख्या पश्वादीनां संख्या प्रधानलोकानां दानानि च।

१ अनन्तरं प्राकारे निर्म्मिते मया द्वारेषु कवाटान्ययुज्यन्त, अपरं द्वार-
२ पालका गायका लेवीयाश्च नियुक्ताः। अनन्तरं मया निजभ्राता हनानि
दुर्गाधिपति हनानियश्च यिरूशालमस्याध्यक्षत्वे नियुक्तौ यतो हनानियो
३ विश्वास्यः पुमान् ईश्वरभक्त्या बहुभ्यो विशिष्टश्चासीत्। अपरम् अहं
तौ समादिशं यावत् सूर्य्यरश्मिः सतापो न भवति तावद् यिरूशालमस्य
द्वाराणि युवाभ्यां न मोचयितव्यानि। अपरं मनुष्येषु समेतानि न
प्रविष्टेषु द्वाराणि रोद्धव्यान्यर्गलैश्च बद्धव्यानि। किञ्च यिरूशालमनि-
वासिनो युवाभ्यां रक्षकवर्गेषु नियोक्तव्याः, एकैको जनः स्वीयरक्षकवर्गे

स्वीयगेहसम्मुखे च नियुज्यतां। यतो नगरं सुविततं सुमहच्चास्ति किन्तु ४
तन्मध्ये स्तोकलोका विद्यन्ते गेहनिर्म्माणञ्च न प्रवर्त्तते।

अपरम् अहं यत् प्रमुखलोकान् अधिपतीन् तदन्यलोकांश्च गणनार्थं ५
सङ्गृह्णीयाम् इत्यस्मिन् अर्थे मदीयेश्वरो मम मनः प्रावर्त्तयत् किञ्च मया
बाबिलाद् आगतानां मनुजानां वंशावलिसूचकं पत्रमेकम् अलभ्यि
तच्चैतानि वचांसि लिखितान्यासन्।

बाबिलीयन्टपेण निबूखद्नित्सरेण प्रवासिता जनपदस्य ये वन्दिलोका ६
यिरूशालमं यिहूदादेशीयानि निजनगराणि वा प्रत्यागन्तुं यात्रां वि-
धाय सिरुब्बाबिलो येशूयो निहिमियो ऽसरियो रयमाहो नहमानि ७
र्मर्दिखयो बिल्शनो मिस्परो बिग्वयो निहूमो वानाहश्चैतैः समं परा-
वृत्याजग्मुस्तेषाम् इस्रायेलीयलोकानां संख्या। परियोशवंशस्य शताधिके ८
द्वे सहस्रे द्विसप्ततिजनाः। शिफटियवंशस्य द्विसप्तत्यधिकानि त्रीणि ९
शतानि जनाः। आरहवंशस्य पञ्चसप्तत्यधिकानि षट्शतानि जनाः। १०
पहतमोयाबवंशस्य येशूययोयाबवंशीया अष्टादशाधिकाष्टशताधिके ११
द्वे सहस्रे जनाः। एलमवंशस्य चतुःपञ्चाशदधिकशतद्वयाधिकं सहस्रं १२
जनाः। सत्तूवंशस्य पञ्चचत्वारिंशदधिकान्यष्टशतानि जनाः। सक्कयवं- १४
शस्य षष्ट्यधिकानि सप्तशतानि जनाः। बिन्नूयवंशस्याष्टचत्वारिंशदधि- १५
कानि षट्शतानि जनाः। बेबयवंशस्याष्टाविंशत्यधिकानि षट्शतानि १६
जनाः। असगदवंशस्य द्वाविंशत्यधिकशतत्रयाधिके द्वे सहस्रे जनाः। १७
अदोनीकामवंशस्य सप्तषष्ट्यधिकानि षट्शतानि जनाः। बिग्वयवंशस्य १९
सप्तषष्ट्यधिके द्वे सहस्रे जनाः। आदीनवंशस्य पञ्चपञ्चाशदधिकानि षट्- २०
शतानि जनाः। आटेरवंशस्य हिष्कियवंशीया अष्टनवतिजनाः। हस्रू- २२
मवंशस्याष्टाविंशत्यधिकानि त्रीणि शतानि जनाः। बेत्सयवंशस्य चतुर्विं- २३
शत्यधिकानि त्रीणि शतानि जनाः। हारीफवंशस्य द्वादशाधिकं शतं २४
जनाः। गिबियोनवंशस्य पञ्चनवतिजनाः। बैतलेहमीया निटोफाती- २६
याश्च मनुजा अष्टाशीत्यधिकं शतं जनाः। अनाथोतीया मनुजा अष्टा- २७
विंशत्यधिकं शतं जनाः। बैत्स्मावतीया मनुजा द्विचत्वारिंशज्जनाः। २८
किरियतयियारीमीयाः किफीरीयाः बेरोतीयाश्च मनुजास्त्रिचत्वा- २९
रिंशदधिकानि सप्तशतानि जनाः। रामातीया गेबायीयाश्च मनुजा ३०
एकविंशत्यधिकानि षट्शतानि जनाः। मिक्मसीया मनुजा द्वाविंशत्य- ३१
धिकं शतं जनाः। बैथेलीया अयीयाश्च लोकास्त्रयोविंशत्यधिकशतं जनाः। ३२

३४ अन्यनिवोमेर्मनुजा द्विपञ्चाशच्छजनाः। अन्यैलमवंशस्य चतुःपञ्चाशदधि-
३५ कशतद्वयाधिकं सहस्रं जनाः। हारीमवंशस्य विंशत्यधिकानि त्रीणि
३६ शतानि जनाः। यिरीहोवंशस्य पञ्चचत्वारिंशदधिकानि त्रीणि शतानि
३७ जनाः। अपरं लोदवंशस्य हादीदवंशस्य ओनोवंशस्य चैकविंशत्यधि-
३८ कानि सप्तशतानि जनाः। सिनायावंशस्य त्रिंशदधिकनवशताधिकानि
त्रीणि सहस्राणि जना आसन्।
३९ याजकानाम् इयं संख्या। येशूयवंशजयिदयियवंशस्य त्रिसप्तत्यधि-
४० कानि नवशतानि मनुजाः। इम्मेरवंशस्य द्विपञ्चाशदधिकं सहस्रं जनाः।
४१ पशहूरवंशस्य सप्तचत्वारिंशदधिकशतद्वयाधिकं सहस्रं जनाः। हारी-
मवंशस्य सप्तदशाधिकं सहस्रं जनाः आसन्।
४३ लेवीयानामियं संख्या। होदवियवंशे येशूयस्य कद्मीयेलस्य च वंशस्य
चतुःसप्ततिजना आसन्।
४४ गायकानामियं संख्या। आसफवंशस्याष्टचत्वारिंशदधिकं शतं जना
आसन्।
४५ द्वारपालानामियं संख्या। शल्लुमवंशस्याटेरवंशस्य टल्मोनवंशस्या-
क्कूववंशस्य हटीटावंशस्य च साकल्येनाष्टात्रिंशदधिकं शतं जना आसन्।
४६ निथीनीयलोकानामियं संख्या। सीहो हसूफाः टब्बायोतः केरोसः
४८ सीयः पादोनो लिबानो हगाबः शल्मयो हाननो गिद्देलो गहरो
५१ राया रित्सीनो निकोदो गसम उषः पासेहो बेषयो मियूनीयो निफूषी-
५५ यो बक्बूको हकूफा हर्हूरो बसलूतो मिहीदा हर्षा बर्कासः सीषिराः
५६ तेमहो नित्सीहो हटीफाश्चैतेषां निखिलानां वंशनिबन्ध आसीत्।
५७ सुलेमनो दासानां वंशनिबन्धस्येयं संख्या। सोटयः सोफेरतः पिरूदा
५८ यालाहो दर्कोनो गिद्देलः शिफटियो हटीलः पोखेरतहत्सीबायीम
६० आमोनश्चैतेषां सर्व्वेषां सन्ताननिबन्ध आसीत्। निथीनीयाः सुलेमनो
दासानां सन्तानाश्च साकल्येन द्वानवत्यधिकानि त्रीणि शतानि जना
६१ आसन्। अपरं तेल्मेलहात् तेल्हर्षातः किरूबाद् अद्दोनाद् इम्मेरा-
च्चागता एते मनुजा इस्रायेलीयवंशा भवन्ति न वेति निश्चयार्थं निज-
६२ निजपितृवंशस्य गोत्रस्य च प्रमाणं दातुं न पारयामासुः। दिलायः
टोबियो निकोदश्चैतेषां वंशानां द्विचत्वारिंशदधिकानि षट्शतानि
६३ जना आसन्। अपरं याजकवंशस्य मध्ये हबायस्य कोसस्य बर्सिल्लयस्य
च सन्तानाः। एष बर्सिल्लयो गिलियदीयबर्सिल्लयस्य दुहितरमेकां व्यूह्य

तस्य नाम्ना विख्यातो ऽभवत्। वंशावलौ गणितलोकानां मध्य एते स्वेषां ६४
वंशपत्रं मृगयित्वा न लेभिरे तस्मात्कारणाद् अशुचयः सन्तो याजकत्व-
पदाद् भ्रष्टा अभवन्। किन्तु शासकस्तान् अवदत्, यावद् ऊरीम- ६५
तुम्मीमयोरधिकारी याजक एको न भविष्यति तावत् पवित्रं वस्तु
युष्माभि र्न भोक्तव्यं।

अपरञ्च संगृहीताः कृत्स्नसमाजीयाः षष्ट्यधिकशतत्रयाधिकानि द्वा- ६६
चत्वारिंशत्सहस्राणि जना आसन्। तदितरे तेषां दासा दास्यश्च सप्त- ६७
त्रिंशदधिकशतत्रयाधिकानि सप्तसहस्राणि जना आसन्। किन्तु तेषां
मध्ये पञ्चचत्वारिंशदधिके द्वे शते गायका गायिकाश्चासन्। तेषां हयाः ६८
षट्त्रिंशदधिकानि सप्तशतान्यासन् अश्वतराश्च पञ्चचत्वारिंशदधिके द्वे
शते आसन्। महाङ्गाश्च पञ्चत्रिंशदधिकानि चतुःशतानि गर्द्दभाश्च ६९
विंशत्यधिकसप्तशताधिकानि षट्सहस्राण्यासन्।

अनन्तरं पितृवंशानां केचित् मुख्यलोकास्तत्कर्म्मणि दानानि अत- ७०
रन्। विशेषतः शासको भाण्डागारे सहस्रैकादर्कोणपरिमितं काञ्चनं
पञ्चाशद् भाजनानि त्रिंशदधिकपञ्चशतानि याजकानां वसनानि च
अतरत्। अपरं प्रधानपितृकाः कतिपयलोकास्तत्कर्म्मणो भाण्डागारे ७१
विंशतिसहस्रादर्कोणपरिमितानि सुवर्णानि शतद्वयाधिके द्वे सहस्रे
अर्द्धशेटकरजतानि च व्यश्राणयन्। अपरं तदन्यलोकै र्यद्दायि तद्विं- ७२
शतिसहस्रादर्कोणपरिमितानि हेमानि द्वे सहस्रे अर्द्धशेटकरजतानि
सप्तषष्टियाजकीयवसनानि चासन्। अनन्तरं याजका लेवीया द्वार- ७३
पाला गायका अन्ये मनुजा निथीनीया निखिलेस्रायेलीयमनुजाश्च निजे
निजे नगरे निवस्तुम् आरभन्त।

---

## ८ अष्टमोऽध्यायः।

१ व्यवस्थाया वाक्यानां पठनं श्रवणञ्च ९ लोकानाम् आनन्दः ११ उपदेशबोधार्थं मनोभिधानं १६ उटजमहोत्सवाचरणञ्च।

अनन्तरं सप्तमे मासि समुपागत इस्रायेलीयलोकेषु च स्वीयनगरेषु १
वसतिं कृतवत्सु निखिला मनुजा नीरद्वारस्य सम्मुखस्थे सन्निवेशे अनैक-
वत् सम्भूयाध्यापकम् इस्रायेलीयान् अवदन्, परमेश्वर इस्रायेलवंशं यां
व्यवस्थाम् आज्ञापयत् मूससम्बन्धव्यवस्थापुस्तकं भवतानीयताम्। ततः २
सप्तममासस्य प्रथमे दिवसे याजक इस्राः समाजस्य समक्षम् अर्पते।

नारीपुरुषादयो यावन्तो मनुजा निशम्य बोद्धुं शक्नुवन्ति तेषां सन्निधि
२ तत् शास्त्रम् आनिनाय। अपरं नीरद्वारस्य सम्मुखस्थे सन्निवेशे नारी-
पुरुषादयो यावन्तो मनुजा बोद्धुं शक्नुवन्ति तेषामुपकण्ठे स प्रभात-
मारभ्य मध्याह्नकालं यावत् तत् पपाठ तेन निखिला लोका व्यवस्था-
४ ग्रन्थश्रवणे श्रोत्राणि निदधिरे। अध्यापक इष्राइस्तत्कर्म्मणः कृते निर्म्मि-
तस्य काष्ठमयमञ्चस्योपरिष्टाद् उदतिष्ठत्, अपरं मत्तथियः शेमा अनाय
ऊरियो हिल्कियो मासेयाश्चैते तस्य दक्षिणपार्श्वे किन्तु पिदायो
मीशायेलो मल्कियो हशुमो हश्वद्दानाः सिखरियो मिशुल्लमश्चैते
५ तस्य वामपार्श्वे समतिष्ठन्त। ततो ऽध्यापक इष्राः सर्व्वलोकेभ्य उच्चतर-
स्थाने सन्तिष्ठमानो निखिललोकानां साक्षात् पुस्तकं मुक्तीचकार,
६ तेन पुस्तके मुक्तीक्रियमाणे सर्व्वे लोका उदतिष्ठन्। अनन्तरम् इष्राश्च
महतः प्रभोः परमेश्वरस्य धन्यवादम् अकार्षीत् तेन निखिललोका ऊर्द्ध्व-
बाहवो भवन्तस्तथास्तु तथास्त्विति गदितवन्तः किञ्च शिरांसि नम-
७ यित्वा मुखं भूवं संस्पृश्य परमेश्वरस्य भजनम् अकुर्व्वत। अपरं येशूयो
वानिः शेरेवियो यामीनो ऽक्कूवः शब्बिथयो होदियो मासेयाः किलीटो
ऽसरियो योषावदो हाननः पिलायो लेवीयाश्च मनुजान् व्यवस्थाम्
८ अबोधयन् ततो मनुजाः स्वे स्वे स्थाने तस्थिवांसः। अनेन प्रकारेण ते
स्पष्टम् उच्चारयन्त ईश्वरस्य व्यवस्थां पठितवन्तः पठनसमये तदीयार्थं
कुर्व्वन्तो लोकान् अबोधयंश्च।
९ अपरं शासिता निहिमियो अध्यापक इष्राश्च याजको लोकानां
शिक्षयितारो लेवीयाश्च निखिललोकान् अगदन्, इदं दिनं युष्माकं
परिवृढस्य परमेश्वरस्य प्रयतं दिनम्। अद्य युष्माभि र्न शोचितव्यं न वा
क्रन्दितव्यं। यतो व्यवस्थाया वाक्यानि शृण्वन्तः सर्व्वे लोकाः क्रन्दनम्
१० अकुर्व्वन्। पुनः स तान् अवादीत्, गच्छत पुष्टं वस्तु भुङ्ग्ध्वं मिष्टं वस्तु
पिबत च किन्तु येषां कृते किञ्चिदपि नोपकल्पितं विद्यते तेभ्यो भागान्
प्रहिणुत। अद्यतनम् अस्मदीयप्रभोः पवित्रं दिनं यूयं शोकं मा कुरुध्वं,
११ यतः परमेश्वरीयो य आनन्दः सैव युष्माकं शक्तिः। अनेन प्रकारेण
लेवीया निखिलान् लोकान् शान्तयन्तो ऽवदन् नीरवा भवत, अद्य
१२ पवित्रं दिनं, यूयं शोकं मा कुरुध्वं। तदानीं सर्व्वे मनुजाः तान् प्रति
कथितानि वाक्यानि बुद्ध्वा भोजनं पानं भागप्रेषणं महाम् आनन्दञ्च
कर्त्तुम् अगमन्।

अपरं द्वितीये दिने सर्व्वलोकानां प्रधानपितृका नरा याजका लेवी- १३
याश्च मिलित्वा व्यवस्थाया वाक्यानि बोद्धुम् उपाध्यायस्येम्रास्य सन्नि-
धिम् आगमन्। तदानीं परमेश्वरो मूससा यां व्यवस्थाम् आदिष्टवान्, १४
तन्मध्ये लिखितो ऽयं विधिस्तैरलम्भि, यथा, सप्तममासस्य पर्व्वसमय
इस्रायेलीयवंशैरुटजेषु वस्तव्यम्, अपरं यूयं लिप्यनुसारेणोटजान् नि- १५
र्म्मातुं पर्व्वतं गत्वा जितवृक्षाणां वन्यजितवृक्षाणां मेन्धीनां खर्ज्जूरवृक्षा-
णां बहुपर्णतरूणाञ्च शाखा आनयतेति वाक्यं तैः स्वेषां निखिलनगरेषु
यिरूशालमे च घोषयितव्यं प्रचारयितव्यञ्च।
तेन मनुजै र्वहि र्गत्वा शाखा आनीयैकैकस्य गेहपृष्ठे प्राङ्गणे चाप- १६
रम् ईश्वरीयमन्दिरस्य प्राङ्गणेषु नीरद्वारस्य सन्निवेश इफ्रयिमीयद्वारस्य
सन्निवेशे च स्वेषां कृत उटजा निर्म्मिताः। युद्धदासत्वात् परावृत्तानां १७
लोकानां कृत्स्नः समाज उटजान् निर्म्माय तेषूटजेषु प्रावसन्। नूनपुत्रस्य
यिहोशूयस्य समयमारभ्य तद्दिनं यावद् इस्रायेलीयवंशास्तादृशं न कृत-
वन्तः। तस्मात् महानन्दो ऽभवत्। किञ्च प्रथमं दिनम् आरभ्य शेषं १८
दिवसं यावत् प्रतिदिनम् ईश्वरीयव्यवस्थापुस्तकस्य पाठो ऽभवत्। इत्थं
ते सप्तदिनान्युत्सवम् आचरन् किञ्च विध्यनुसारेणाष्टमे दिवसे कार्य्य-
त्यागो ऽजायत।

---

## ९ नवमोऽध्यायः।

१ उपवासस्य पश्चात्तापस्य च कथनं ४ परमेश्वरीयानुग्रहस्य स्वीयपापानाञ्च स्वीकरणं।

तस्य मासस्य चतुर्विंशे दिवस इस्रायेलीयवंशा उपवस्तुं शाणवस- १
नानि परिधातुं मस्तकेषु धूलीं मेलयितुञ्च स्थान एकस्मिन् मिलिताः।
अपरम् इस्रायेलीयवंशाः परजातीयेभ्यो लोकेभ्यः पृथग्भूय सन्तिष्ठ- २
मानाः स्वेषां पापानि स्वपितृलोकानाञ्च दुरितानि च स्वीकृतवन्तः।
किञ्च तेषु स्वेषां स्थाने स्थितवत्सु दिवसस्य चतुर्थांशं यावत् तेषां परि- ३
वृढस्य परमेश्वरस्य व्यवस्थापुस्तकम् अपठ्यत, तदन्यं चतुर्थांशं यावत्
ते पापस्वीकारं स्वेषां परिवृढस्य परमेश्वरस्य भजनञ्चाकुर्व्वत।
अपरं येशूयो बानिः कद्मीयेलः शिबनियो बुन्निः शेरेबियो बानिः ४
किनानिश्च लेवीयानां मञ्च उत्तिष्ठन्तः स्वेषां प्रभुं परमेश्वरम् उद्दिश्य
प्रोच्चैःस्वरेण प्रार्थनाम् अकुर्व्वत। अनन्तरं येशूयः कद्मीयेलो बानि ५

हंशव्नियः शेरेबियो होदियः शिबनियः पिथाहियश्चैते लेवीया अग-
दन्, यूयम् उत्थाय स्वेषां परमेश्वरस्य नित्यस्थायिनं धन्यवादं विधत्त,
यथा, सर्व्वस्माद् धन्यवादात् स्तुतेश्च श्रेष्ठं यत् त्वदीयं गौरवान्वितं
६ नामधेयं तद् धन्यं भवतु। त्वमेवाद्वितीयः परमेश्वरः। गगनं सर्व्वोप-
रिस्थं स्वर्गं तदीयानि सर्व्वाणि बलानि च वसुमती तत्रत्यानि सर्व्वाणि
वस्तूनि च जलधिस्तत्रत्यानि सर्व्ववस्तूनि च त्वयैव सञ्जज्ञिरे त्वमेव तेषां
७ सर्व्वेषां जीवयितासि स्वर्गीयबलानि च तव भजनं कुर्व्वते। हे यिहोवा,
त्वमेव स ईश्वरो य इब्रामं वरित्वा कल्दीयानाम् ऊरनगराद् बहि-
८ ष्कृत्य तदीयं नामधेयम् इब्राहीमित्यकार्षीः। अपरं स्वसाक्षात् तस्य
मनसो विश्वास्यतां दृष्ट्वा तेन समं नियमं विधाय किनानीयानां हित्ती-
यानाम् इमोरीयाणां पिरिषीयाणां यिबूषीयाणां गिर्गाशीयानाञ्च जन-
पदं तदीयवंशाय दातुं प्रतिश्रुतवान् तव तद् वाक्यं साधितवांश्च,
९ यतस्त्वं धर्म्मस्वरूपः। त्वं मिसरदेशेऽस्माकं पूर्व्वपुरुषाणां दुर्गतिम् अद्रा-
१० क्षीरारवीयसागरस्य तीरे तेषां प्रार्थनाम् अश्रौषीश्च। अपरं फिरौण-
स्तस्य दासानां तदीयजानपदानां सर्व्वेषाञ्च समक्षं त्वं लक्षणान्याश्चर्य-
कर्म्माणि च दर्शितवान् यतो मिस्रीयास्तेषां विरुद्धं धर्षम् आचरन्
११ अत्र त्वं मनो निधायाद्येव यशः प्राप्तः। अपरं त्वया तेषां सम्मुखे जलधौ
द्विधा विभक्ते ते स्थलेनेव जलधेर्मध्येन पारं गताः किञ्च जलराशौ
यद्वत् पाषाणा निक्षिप्यन्ते तद्वत् तेषाम् अनुधावकास्त्वया गम्भीरतोयेषु
१२ निक्षिप्ताः। अपरं त्वं दिवा मेघस्तम्भेन रजन्याञ्च तेषां गन्तव्यमार्गदी-
१३ पकेन वह्निस्तम्भेन तान् अनयः। अपरं त्वं सीनयगिरिम् अवरुह्य
गगनात् तैः समम् आलपितवान् तान् प्रति न्याय्यविचाराणां यथार्थ-
१४ व्यवस्था उत्तमान् विधीन् आदेशांश्च समार्पयः। किञ्च निजं पवित्रं
विश्रामदिनं तान् आज्ञापयः, अपरं निजदासेन मूसना तान् विधीन्
१५ आदेशान् व्यवस्थाश्च समादिशः। किञ्च तेषां क्षुन्निवारणाय स्वर्गात् तेभ्यो
भक्ष्यम् अदाः, पिपासानिवारणार्थञ्च शैलात् तोयं निरगमयः, किञ्च
त्वं तेभ्यो यं देशं दातुं शपथमकार्षीस्तत्परिग्रहणार्थं तं प्रवेष्टुं तान् आ-
१६ ज्ञापयामासिथ। तथाप्यस्माकं ते पूर्व्वपुरुषा धर्षम् आचेरुरबाध्याः
१७ सन्तस्त्वदीयाज्ञासु मनांसि न निदधिरे। ते वश्यताम् अस्वीकृत्य तेषां
निमित्तं त्वया कृतान्याश्चर्य्यकर्म्माणि विसस्मरुः, किन्त्ववाध्याः सन्तो नि-
देशकत्वेन पुनर्व्वारं दासत्वावस्थां गन्तुं नायकमेकं नियुयुजिरे। तथापि

क्षमावान् दयालुरनुकम्पावान् क्रोधे धीरो ऽनुग्रहे महान् ईश्वरो यस्त्वं
त्वया ते न तत्यजिरे। ते गलितधातुना वत्सप्रतिमां निर्म्माय जगदुः, १८
एषा सा देवता यया वयं मिसरत आनिन्यामहे। इत्थं महाक्रोधोत्पा-
दकेषु कर्म्मसु तै र्विहितेष्वपि त्वं निजप्रभूतानुकम्पातः प्रान्तरे तान् १९
न तत्यजिथ दिवा तेषां मार्गप्रदर्शको मेघस्तम्भो रजन्याञ्च गन्तव्यवर्त्मदी-
पको वह्निस्तम्भस्तेषां पुरतो नापससार। किञ्च त्वं तेभ्य उपदेशं प्रदातुं २०
निजं सदात्मानं तेभ्यो विश्राणयाञ्चकर्थ त्वया दत्तं मान्नाभक्ष्यं तेभ्यो ना-
पजह्रर्थ किञ्च पिपासायां जातायां तेभ्यो ऽम्भांसि वितेरिथ। त्वं २१
चत्वारिंशद्वत्सरान् यावत् प्रान्तरे तान् परिपालयाञ्चकर्थ तेषां कस्यापि
वस्तुनो ऽभावो न बभूव, तेषां वसनानि न जेरुस्तेषां पदानां स्फीत-
तामपि न बभूवे। अपरं त्वं राष्ट्राणि जातीश्च तेषु समर्प्य सर्व्वदिक्षु २२
तान् विस्तारयामासिथ तेन ते नृपतेः सीहोनो देशम् अर्थतो हिष्-
वोनीयनरपते र्जनपदं वाशनीयनृपतेरोगस्य जनपदञ्च भोगार्थं लेभिरे।
अपरं त्वं विहायसो नक्षत्राणीव तेषां वंशान् वर्द्धयाञ्चकर्थ किञ्च यूयम् २३
एतं जनपदं भोगार्थं प्रविशतेति वाक्यं तेषां पितृलोका यं जनपदमधि
त्वयोक्तास्तं जनपदं तान् आनिनयिथ। अनन्तरं तं जनपदं प्रविशन्त- २४
स्तेषां वंशास्तमधिचक्रिरे किञ्च त्वं तेषां समक्षं तद्देशनिवासिनः किना-
नीयान् पराजिग्यिषे किञ्च राजनिवहेन समं जनपदस्थान् निखिल-
मानवान् तेषां वशीकृत्य तान् प्रति स्वेच्छानुसारतः कर्त्तुं ददिथ। तेन २५
हेतुना ते तेषां गाढानि नगराण्युर्व्वरां भूमिञ्च जगृहुः सर्व्वविधवित्तैः
पूर्णानि गेहानि खनितान् प्रहीन् गोस्तनीक्षेत्राणि प्रभूतान् फलवतो
विटपिनश्च लेभिरे किञ्च भुञ्जानाः सौहित्यम् ईयुः पुष्टाश्च बभुवु
र्भवतो महावदान्यत्वेनापप्यायिरे च। तथापि तैः प्रतीपीभूय भवतः २६
प्रतिकूलाचरणं कृत्वा भवदीया व्यवस्था पृष्ठतश्चक्रे भवतो दासा ये
भविष्यद्वादिनस्त्वां प्रति तान् परावर्त्तयितुं तेषां विरुद्धं साक्षित्वं
ददिरे तान् ते व्यापादयाञ्चक्रु र्महाकृष्टोत्पादकानि कर्म्माणि चक्रिरे
च। ततः परं त्वया तेषु सपत्नानां करेषु समर्पितेषु तैस्ते पिक्लिशिरे २७
किञ्च क्लेशसमये त्वाम् उद्दिश्य तेषु प्रार्थनां कृतवत्सु त्वया स्वर्गे ताम्
आकर्ण्य स्वीयप्रभूतानुकम्पया तेभ्य उद्धारयितारो दत्तास्ते च परिपन्थिनां
करेभ्यस्तान् उद्धारयाञ्चक्रुः। इत्थं विश्रामं लब्ध्वा तेषु पुनर्व्वारं भवतः २८
समक्षं कुत्सिताचारं कर्त्तुं प्रवृत्तेषु भवान् तान् प्रत्यर्थिनां करेषु सम-

र्पयामास ततः प्रत्यर्थिषु तेषाम् उपरिष्टात् प्रभुत्वं कुर्व्वत्सु तैः पराहत्य
त्वाम् उद्दिश्य प्रार्थनायां कृतायां त्वं स्वर्गे तां निशम्य निजभूरिकृपानु-
२९ सारेण बहुवारान् तान् उद्धारयाञ्चकर्थ, किञ्च निजं व्यवस्थावर्त्म तान्
पुनर्व्वारम् आनयिष्यन् तेषां विरुद्धं साक्ष्यं वितेरिथ, तथापि ते गर्व्व-
न्तस्तव निदेशेषु मनांसि न निदधिरे, परन्तु यासाम् आचरणेन मानवो
जीवति भवतस्तासां राजनीतीनां विरुद्धं कलुषं चक्रिरे, दुःशास्य-
स्कन्धाः स्तब्धग्रीवाश्च भूत्वा भवत आदेशे मानसानि न निदधिरे।
३० तथापि त्वं बहून् अब्दान् यावत् तान् प्रति सहिष्णुतां विधाय भवदीय-
दासानां भविष्यद्वादिनां मध्यवर्त्तिना भवदात्मना तेषां विरुद्धं साक्ष्यं
वितेरिथ किन्तु ते मनांसि न निदधिरे तेन हेतुना त्वया ते जनपदस्थ-
३१ जनानां करेषु समर्पयाञ्चक्रिरे। किन्तु महानुकम्पानिदानात् सर्व्वथा
त्वया ते न विनाशयाञ्चक्रिरे न विजहिरे च यतस्त्वं दयावान् कृपामय-
३२ श्चेश्वरः। इदानीं हे अस्माकीन ईश्वर त्वं महान् शक्तिमान् भयङ्करश्च
तथा नियमानुकम्पापालक ईश्वरः, अश्शूरीयन्टपतीनां समयमारभ्य
यावदद्यास्माकं न्टपान् अधिपतीन् याजकान् भविष्यद्वादिनः पितृलो-
कान् भवदीयनिखिलप्रजाश्चार्यतो ऽस्मान् प्रति यानि यानि दुःखान्यघ-
३३ टन्त तानि भवदीयदृष्ट्या क्षुद्राणि न बुध्यन्तां। अस्मान् प्रत्येतेषु सर्व्वेषु
घटितेषु भवान् धर्म्मस्वरूपो ऽस्ति भवता न्याय्यं कर्म्माकारि किन्तु वयं
३४ कलुषम् अकुर्म्महि। अपरम् अस्माकं राजानो ऽधिपतयो याजकाः
पितृलोकाश्च भवदीयव्यवस्थानुसारेण नाचारिषुः, किञ्च भवान् या
आदिशत् ता भवदीयाज्ञा राजनीतीश्च प्रति ते मनांसि न न्यधीयन्त।
३५ अपरं ते स्वकीयराजत्वसमये भवता दत्तस्य प्रभूतप्रसादस्य भोगकाले
भवता तेषां वशीकृते प्रशस्ते पीने देशे भवन्तं नासेवन्त स्वेषां कुत्सितेभ्यो
३६ दुष्कृतेभ्यः पराङ्मुखाश्च न बभूवुः। पश्यतु वयमद्य दासा आस्महे भवान्
अस्माकं पूर्व्वपुरुषेभ्यः फलानां शुभानाञ्च भोगार्थं यं देशम् अददात्
३७ तस्य मध्ये वयं दासेया आस्महे। भवान् अस्माकं कलुषकारणाद् अस्मा-
कम् उपरि यान् नरपतीन् नियुक्तवान् ते जनपदस्य प्रभूतान्युद्भूतवस्तूनि
भुञ्जन्ते स्वेषाम् इच्छानुसारतो ऽस्माकं वपुषां पशूनाञ्चोपरि राजत्वं
३८ क्रियते च वयञ्च महाकष्टापन्ना आस्महे। अतो हेतो वयं सत्यं नियम-
मेकं विधाय लेखिष्यामहे किञ्चास्माकम् अधिपतयो लेवीया याजकाश्च
तत्र मुद्राङ्कं करिष्यन्ति।

# १० दशमोऽध्यायः।

१ नियमस्य मुद्राङ्ककारिणां नामानि १८ नियमस्य विवृतिश्च।

मुद्राङ्ककारकाणां नामानि। शासितार्थतो हखलियस्य तनयो निहि- १
मियः सिदिकियः सिरायाहो ऽसरियो यिरिमियः पशहूरो ऽमरियो २
हटूशः शिवनियो मल्लूको हारीमो मिरेमोत ओवदियो दानियेलो ६
गिन्नथोनो वारूको मिशुल्लमो ऽवियो मियामीनो मासियो विल्गयः ८
शिमयियश्चेमे याजका आसन्। अनन्तरम् असनियस्य तनयो येशूयो ९
हेनाददवंशजो विन्नूयिः कद्मीयेलश्चापरं तेषां भ्रातरो ऽर्थतः शिवनियो १०
होदियः किलीटः पिलायो हाननो मीखा रिहोवो हशवियः सक्कूरः १२
शेरेवियः शिवनियो होदियो वानि विनीनुश्चेमे लेवीया आसन्। १३
अपरं परियोशः पहतमोयाव एलमः सत्तु वानि वुन्निरसगदो वेवयो १५
ऽदोनियो विग्वय आदीन आटेरो हिष्कियो ऽस्सूरो होदियो हशुमो १८
वेत्सयो हारीफो ऽनाथोतो नेवयो मग्पीयशो मिशुल्लमो हेषीरो मि- २१
शेषवेलः सादोको यद्दूयः पिलटियो हाननो ऽनायो होशेयो हनानियो २३
हश्शूवो हल्लोहेशः पिल्हः शोवेको रिहूमो हशव्नाहो मासेयो ऽहियो २६
हाननो ऽनानो मल्लूको हारीमो वानाहश्चेमे मनुजानां प्रमुखा आसन्। २७

अनन्तरम् अवशिष्टा ये जनाः परजातीयेभ्यः पृथग्भूयेश्वरस्य व्यवस्थां २८
प्रति परावृत्तास्ते मनुजा याजका लेवीया द्वारिणो गायका मन्दिरी-
नीयास्तेषां भार्य्याः पुत्त्राः कन्याश्चार्थतः सर्व्वे ज्ञानवन्तो बुद्धिमन्तश्च
मानवाः स्वेषां मान्येषु भ्रातृष्वासक्ताः सन्तः शपथेनेमां प्रतिज्ञां चक्रिरे, २९
यथा, वयम् ईश्वरस्य दासेन मूससा प्रदत्ताम् ईश्वरीयव्यवस्थाम् आ-
चरिष्यामः किञ्चास्माकं परिवृढस्य परमेश्वरस्य सर्व्वा आज्ञा विधीन्
राजनीतीश्च मन्यमानाः पालयिष्यामस्तथा देशीयलोकैः स्वेषां तनुजा ३०
न विवाहयिष्यामः किञ्च तेषां तनयाः स्वेषां सुतै र्न विवाहयिष्यामः,
अपरं विश्रामदिने देशीयलोकेषु विक्रेतव्यानि वा भक्ष्याणि द्रव्याणि ३१
विक्रयार्थम् आनीतवत्सु विश्रामदिने महोत्सवदिने वा तेभ्यस्तानि न
क्रेष्यामो ऽपरं सप्तमे सम्वत्सरे ऋणादानं विहास्याम इति। अधिकन्तु ३२
वयं स्वेषाम् ईश्वरीयमन्दिरस्य परिचर्य्यार्थम् अर्थतो दर्शनीयपूपानां ३३
नित्यनैवेद्यानां नित्यहोमानां विश्रामवाराणाम् अमावस्यानां वार्षिकोत्-
सवानां प्रयतवस्तूनाम् इस्रायेल्वंशस्य प्रायश्चित्तार्थकपापबलीनाञ्च नि-

मित्तम् अस्माकम् ईश्वरीयमन्दिरस्य निखिलकर्म्मणां निमित्तञ्च प्रतिव-
त्सरं शेकलस्य तृतीयांशं दास्याम इति प्रतिज्ञाभारं स्वेषाम् उपरिष्टाद्
३४ अर्पयितुं व्यवस्थाम् अकार्ष्म्हि। अपरं व्यवस्थाया लेखनानुसारेणा-
स्माकं परिवृढस्य परमेश्वरस्य होमवेद्यां ज्वालनार्थम् अस्माकं पितृ-
वंशानामनुसारेण प्रतिवर्षं निरूपिते काले ऽस्माकम् ईश्वरस्य मन्दिरे
काष्ठानि समानेतुं काष्ठान्यधि वयं याजकानां लेवीयानां मनुजानाञ्च
३५ मध्ये गुटिकापातम् अकार्ष्म्हि। अपरम् अस्माकं क्षेत्रभुवः प्रथमफलानि
निखिलतरूणां प्रथमानि फलानि च वत्सरे वत्सरे परमेश्वरस्य मन्दिरं
३६ आनेष्यामः, किञ्च व्यवस्थाग्रन्थस्य लेखनानुसारेणास्माकं प्रथमजाताम्
तनयाम् पशूंश्चार्थतो ऽस्माकं गवां मेषाणाञ्च प्रथमजाताम् अस्माकम्
ईश्वरीयमन्दिरस्य परिचारकाणां याजकानां समीपम् ईश्वरस्य मन्दि-
३७ रम् आनेष्यामः, किञ्च स्वेषां शक्तूनां प्रथमं भागम् उपहाराम् सर्व्व-
विधतरूणां फलानि गोस्तनीरसान् तैलानि चेश्वरीयमन्दिरस्य प्रको-
ष्ठेषु याजकानाम् उपकण्ठम् आनेष्यामो ऽपरम् अस्माकं भुव उत्पन्न-
द्रव्याणां दशमांशं लेवीयानाम् अन्तिकम् आनेष्यामस्ते लेवीया अस्माकं
३८ निखिलकृषीवलनगरेषु दशमांशं लप्स्यन्त इति वयं निश्चितवन्तः। अपरं
यस्मिन् समये लेवीया दशमांशं लप्स्यन्ते तस्मिन् समये हारोणवंशीया
याजका अपि तत्रोपस्थास्यन्ते किञ्च लेवीया अस्माकमीश्वरस्य मन्दिरम्
अर्थतो भाण्डागारस्य कोष्ठानि दशमांशस्य दशमांशम् आनेष्यन्ति।
३९ यतः प्रयतपात्राणि परिचारकयाजका द्वारपाला गायकाश्च येषु कोष्ठेषु
तिष्ठन्ति तन्मध्यम् इस्रायेलीयवंशै र्लेविवंशस्य गोस्तनीरसतैलानाम्
उपहाराः समानेतव्याः, स्वेषाम् ईश्वरस्य मन्दिरम् अस्माभि र्न परि-
त्यक्तव्यम्।

---

## ११ एकादशोऽध्यायः।

१ यिरूशालमे निवस्तुं गुटिकापातेन लोकानां नियोजनं ३ तेषां लोकानां नामानि २० अवशिष्टानां लोकानां ग्रामेषु निवसनं।

१ तस्मिन् समये लोकानाम् अधिपतयो यिरूशालमे न्यवसन् ततः परं
धर्म्मनगरे यिरूशालमे वासार्थं दशजनानां मध्यात् जनमेकं तत् स्थानम्
आनेतुम् अन्यान् नवजनान् अन्यनगरादिषु वासयितुञ्चावशिष्टा लोका

गुटिकापातम् अकुर्व्वत। किञ्च ये ये लोकाः स्वेच्छया यिरूशालमम् २
आवस्तुम् आगमन् मनुजास्तेभ्य आशिषं व्यश्राणयन्।

देशीया ये ये प्रमुखलोका यिरूशालमम् अध्यवसन् तेषां नामानि। ३
इस्रायेलीयवंशा याजका लेवीया निथीनीयाः सुलेमनो दासानां सन्ता-
नाश्च यिहूदादेशस्थनगरेष्वेकैकस्य पैतृकभूमौ नगरे वा न्यवसन्। अपरं ४
यिहूदावंशस्य बिन्यामीनवंशस्य च कतिपयलोका यिरूशालमम् आव-
सन्। यिहूदावंशीयानां मध्ये पेरसवंशोद्भवो मह्ललेलस्यातिवृद्ध-
प्रपौत्रः शिफटियस्य वृद्धप्रपौत्रो ऽमरियस्य प्रपौत्रः सिखरियस्य पौत्र
उषियस्य पुत्रो ऽथायः, किञ्च शीलोनिरतिवृद्धप्रपौत्रः सिखरियस्य वृद्ध- ५
प्रपौत्रो योयारीबस्य प्रपौत्रो ऽदायाहस्य पौत्रो हसायस्य पुत्रो यः
कल्होषिस्तस्य पौत्रो बारूकस्य पुत्रो मासेयः। यिरूशालमनिवासिनः ६
पेरसवंशीया लोकाः साकल्यतो ऽष्टषष्ट्यधिकानि चतुःशतानि बलवन्तो
मनुजा आसन्। किञ्च बिन्यामीनवंशीयानां मध्य एते आसन् यिशायि- ७
यस्यातिवृद्धप्रपौत्र ईथीयेलस्य वृद्धप्रपौत्रो मासेयस्य प्रपौत्रः कोलाया-
हस्य पौत्रः पिदायस्य पुत्रो यो योयेदस्तस्य पौत्रो मिशुल्लमस्य पुत्रः
सल्लुः। तदितरे गब्बयः सल्लयो ऽन्ये लोकाश्च साकल्यतो ऽष्टाविंशत्यधि- ८
कानि नवशतानि मनुजाः। अपरं सिख्रेः पुत्रो योयेलस्तेषाम् अधिप ९
आसीत् किञ्च सिनूयाहस्य सुतो यिहूदा नगरस्य द्वितीयो ऽधिपतिरा-
सीत्। याजकानां मध्य एते आसन् योयारीबस्य तनयो यिदयियो १०
याखीनश्च। अपरम् अहीटूबस्यातिवृद्धप्रपौत्रो मिरायोतस्य वृद्धप्रपौत्रः ११
सादोकस्य प्रपौत्रो मिशुल्लमस्य पौत्रो हिल्कियस्य तनयः सिराय ईश्व-
रीयमन्दिरस्य पतिरासीत्। किञ्च मन्दिरस्य कर्म्मकारिणस्तेषां भ्रातरो १२
द्वाविंशत्यधिकान्यष्टशतान्यासन्। अपरं मल्कियस्यातिवृद्धप्रपौत्रः पश्-
हूरस्य वृद्धप्रपौत्रः सिखरियस्य प्रपौत्रो ऽम्सेः पौत्रः पिललियस्य पुत्रो
यो यिरोहमस्तस्य पुत्रो ऽदायाहः। अपरं तस्य प्रधानपितृका भ्रातरो १३
द्विचत्वारिंशदधिकानि द्विशतानि जनाः किञ्च इम्मेरस्य वृद्धप्रपौत्रो
मिशिल्लेमोतस्य प्रपौत्रो ऽहसयस्य पौत्रो ऽसरेलस्य पुत्रो ऽमशयः।
अपरं तेषां भ्रातृनिवहो ऽष्टाविंशत्यधिकं शतं महावीरा आसन्। १४
किञ्च तेषाम् अधिपतिः सब्दीयेलः। स कस्यचिन् महतो लोकस्य सन्तान
आसीत्। लेवीयानां मध्य एते आसन् बुन्नेर्वृद्धप्रपौत्रो हशबियस्य प्रपौ- १५
त्रो ऽस्रीकामस्य पौत्रो हश्शूबस्य पुत्रः शिमयियः। अपरं प्रमुखलेवी- १६

यासां मध्ये सब्बियो योषावदश्चेश्वरीयमन्दिरस्य बहिर्भूतकार्य्यस्याधि-
१७ पती आस्तां। सिखासफस्य प्रपौत्रः सब्देः पौत्रो मीखायस्य पुत्रो मत्त-
नियः, अपरं तस्य भ्रातृणां मध्ये द्वितीयो बक्बुकियः किञ्च यिदूथूनस्य
प्रपौत्रो गालालस्य पौत्रः शम्मूयस्य तनयो ऽब्द एते प्रार्थनाधन्यवादयो
१८ र्नियन्तार आसन्। पवित्रनगरस्था लेवीयाः साकल्येन द्वे शते चतुर-
१९ शीतिश्च जना आसन्। अपरं द्वारपालकानां मध्य एते आसन् अक्कूबः
टल्मोनश्च तयो द्वारपाला भ्रातरो द्विसप्तत्यधिकं शतं जनाश्च।
२० इत्यवशिष्टा इस्रायेलीयवंश्यानां याजकानां लेवीयानाञ्चान्ये निखिललोका यिहू-
२१ दादेशस्थनगरेष्वेकैकस्य पैतृकभूमौ न्यवसन्। किन्तु निथीनीया ओफ-
लम् अध्यवसन्। किञ्च सीहो गिष्पश्च निथीनीयानाम् अध्यक्षावास्ताम्।
२२ अपरं मीखा वृद्धप्रपौत्रो मत्तनियस्य प्रपौत्रो हशबियस्य पौत्रो बाने-
पुत्रो य उषिरासफवंशीयानां गायकानां मध्यवर्त्ती जन एक आसीत
स ईश्वरीयमन्दिरस्य कर्म्मणि यिरूशालमनिवासिनां लेवीयानाम् अधि-
२३ पतिरासीत्। यतस्तेषां विषये नरपतिरादिदेश, अपरं गायकानां
२४ शते प्रतिदिनं निरूपितांशो ऽदीयत। अपरं यिहूदासुतस्य सेरहस्य
वंशोद्भवो मिशेषबेलस्य तनयः पिथाहियो लोकानां निखिलकार्य्या-
२५ ण्यधि नृपस्य सहकार्य्यासीत्। किञ्च बहवो यिहूदीयाः पल्लीग्रामेषु
निजनिजक्षेत्रेष्ववर्त्तत: किरियदर्बे तदीयग्रामेषु दीबोने तदीयग्रामेषु
२६ यिकब्सेले तदीयग्रामेषु येशूये मोलादायां बैत्पेलटे हत्सर्शूयाले
२७ बेर्शेबायां तदीयग्रामेषु सिक्लगे मिकोनायां तदीयग्रामेष्वैनरिम्मोणे सरिये
३० यर्मूते सानोहे ऽदुल्लमे तेषां ग्रामेषु लाखीशे तदीयक्षेत्रेष्वसेकायां तदीय-
ग्रामेषु च न्यवसन्। इत्थं ते बेर्शेबामारभ्य हिन्नोमोपत्यकां यावत् न्यव-
३१ सन्। अपरं बिन्यामीनवंश्या गेबामारभ्य मिक्मसे ऽयायां बैथेले तदीय-
३४ ग्रामेष्वनाथोते नोबे ऽननियायां हात्सोरे रामते गित्तयिमे हादीदे सि-
३५ बोयीमे निबल्लाटे लोद ओनो शिल्पकाराणाम् उपत्यकायाञ्च न्यवसन्।
३६ अपरं यिहूदादेशीयलेवीयानां कतिपयलोका बिन्यामीनदेशे न्यवसन्।

---

## १२ द्वादशोऽध्यायः।

१ याजकानां लेवीयानाञ्च नामानि १० मुख्ययाजकानां नामानि २२ मुख्यलेवीयानां नामानि २७ प्राचीरप्रतिष्ठाया उत्सवः ४४ याजकानां लेवीयानाञ्च मन्दिरीय-कर्म्मणि निजे निजे पदे नियोजनं।

ये याजका लेवीयाश्च शल्टीयेलस्य तनयेन सिरुब्बाबिलेन येशूयेन १
च समम् आगमन् तेषां नामानि। सिरायो यिरिमिय इश्राहो ऽम- ३
रियो मल्लूको हटुशः शिखनियो रिहूमो मिरेमोत इद्दु गिन्नियोनो ४
ऽबियो मियामीनो मोयदियो बिल्गाहः शिमयियो योयारीवो यिद- ६
यियः सल्लय आमोको हिल्कियो यिदयियश्च। एते येशूयस्य वर्त्तमान- ७
समये याजकानां निजभ्रातृनिवहस्य च मध्ये प्रमुखा आसन्। लेवीयानां ८
नामानि। येशूयो बिन्नूयिः कद्मीयेलः शेरेबियो यिहूदा मत्तनियश्च।
एष मत्तनियस्तस्य भ्रातरश्च धन्यवादस्य नियन्तार आसन्। अपरं तेषां ९
भ्रातरौ वक्बुकिय उन्निश्च रक्षिवर्गाणां नियन्तारावास्ताम्।

अपरं येशूयस्य तनयो योयाकीमः, योयाकीमस्य सुतः इलियाशीवः, १०
इलीयाशीवस्य सुतो योयादः, योयादस्य तनयो योनाथनः योनाथनस्य ११
सुतो यद्दूयः। योयाकीमस्य विद्यमानसमय इमे प्रधानपितृका याजका १२
आसन्। सिरायवंशे मिरायः, यिरिमियवंशे हनानियः, इश्राहवंशे १३
मिस्सुल्लमः, अमरियवंशे यिहोहाननः, मल्लूकवंशे योनाथनः, शिवनिय- १४
वंशे यूषफः, हारीमवंशे ऽद्नः, मिरायोतवंशे हिल्कयः, इद्दवंशे सिख- १५
रियः, गिन्नियोनवंशे मिस्सुल्लमः, अवियवंशे सिखिः, मियामीनवंशे एको १७
अनः, मोयदीयवंशे पिल्टयः, बिल्गावंशे शम्मूयः, शिमयियवंशे यिहो- १८
नाथनः, योयारीववंशे मत्तिनयः, यिदयियवंशे उषिः, सल्लयवंशे कल्लयः, १९
आमोकवंशे एबरः, हिल्कियवंशे हशबियः, यिदयियवंशे निथनेलः। २१

अपरम् इलियाशीवस्य योयादस्य योहाननस्य यद्दुयस्य च समये २२
लेवीयानां प्रधानपितृका लोकाः पारसीकराजस्य दाराः समये याज-
कानामपि प्रधानपितृका लोका वंशावलौ लिलिखिरे। किञ्च लेविवंशीय- २३
प्रधानपितृकाणां लोकानां नामानीलियाशीवस्य तनयस्य योहाननस्य
समयं यावद् वंशावलिग्रन्थे लिखितान्यासन्। लेवीयानां प्रधानलोका २४
हशबियः शेरेबियः कद्मीयेलस्य तनयो येशूयस्तेषां सहकारिणो भ्रातर-
श्चेश्वरीयलोकस्य दायूद आज्ञानुसारेण खखसङ्घे प्रशंसां धन्यवादञ्च
कर्त्तुं न्ययुज्यन्त। अपरं मत्तनियो वक्बुकिय ओवदियो मिस्सुल्लमः २५
टल्मोनो ऽक्कूवश्चेमे रक्षिणो भूत्वा द्वाराणां देहलीषु सन्तिष्ठमाना
रक्षिणां कर्म्म चक्रुवांसः। इमे योषादकस्य पौत्रस्य येशूयस्य पुत्रस्य २६
योयाकीमस्य समये किञ्च देशाधिपस्य निहिमियस्याध्यापकस्येज्राहस्य
याजकस्य च समये विद्यमाना आसन्।

२७ अपरं यिरूशालमस्य प्राचीरस्य प्रतिष्ठासमय आनन्देन धन्यवादै
गीतैः करतालमुरजवीणावाद्यैश्चोत्सवपालनार्थं लेवीयान् यिरूशालमं
२८ आनेतुं मनुजास्तेषां सर्व्वस्थानेषु तान् अन्वगयन्त। किञ्च गायकवंशा
यिरूशालमस्य चतुर्दिक्स्थायाः समभूमे निटोफातीयानां ग्रामेभ्यो
२९ वैतगिल्गलाद् गेवासमावतयोः क्षेत्रेभ्यश्च समागमन्, यतो गायका
३० यिरूशालमस्य चतुर्दिक्षु स्वेषां कृते ग्रामान् आसादयन्। अनन्तरं
याजका लेवीयाश्च स्वान् पवित्रान् अकुर्व्वन्, किञ्च लोकान् पुरद्वाराणि
३१ प्राचीरञ्च पवित्राणि कृतवन्तः। अनन्तरम् अहं यिहूदावंशस्याधिप-
तीन् प्राकारे समारोहयं, किञ्च धन्यवादकारिणौ द्वौ महासंघौ न्यरू-
पयं। तयोरेकः संघः प्राकारस्य पृष्ठेन दक्षिणपार्श्वं सारद्वारं प्रति गत-
३२ वान्। तेषां पश्चात् होशयियो यिहूदावंशस्यार्द्धाधिपतयः किञ्चासरिय
३४ इस्राहो मिसुल्लमो यिहूदा विन्यामीनः शिमयियो यिरिमियश्चाव्रजन्।
३५ अपरं तूरीवादिनो याजकानां कतिपयतनया अर्थत आसफस्यातिवृद्धप्रपौत्रः सक्कूरस्य वृद्धप्रपौत्रो मीखायस्य प्रपौत्रो मत्तनियस्य पौत्रः
३६ शिमयियस्य तनयो यो योनाथनस्तस्य तनयः सिखरियः, तस्य भ्रातॄणां
मध्ये शिमयियोऽसरेलो मिललयो गिललयो माययो निथनेलो यिहूदा
हनानिश्चेम ईश्वरीयलोकेन दायूदा निरूपितानि वादनयन्त्राणि धृत्वा
३७ त्वा व्रजितवन्तः, किञ्चाध्यापक इस्राहस्तेषाम् अग्रे ऽग्रे ऽगमत्। ते प्रस्र-
वणद्वारस्य पृष्ठेन गत्वाग्रे ऽग्रे व्रजन्तो दायूद्नगरस्य सोपानम् अर्थतः
प्राचीरस्थितं सोपानम् आरुह्य दायूदो गेहस्य पृष्ठेन जलद्वारं यावद्
३८ आगच्छन्। अपरं धन्यवादकारी द्वितीयः संघः प्राकारस्य पृष्ठेन तदन्य-
दिशं गतवान् किञ्चाहम अर्द्धमनुजाश्च तेषां पश्चाद् अव्रजाम। ते चुल्लि-
३९ दुर्गात् प्रशस्तं प्राकारं गत्वा तत इफ्रयिमीयद्वारस्य पुरातनद्वारस्य मत्स्य-
द्वारस्य च पृष्ठेन हननेलीयदुर्गस्य मेयादुर्गस्य च मेषद्वारं यावद् अगमन्
४० कारारक्षद्वारे च स्थगिता अभवन्। अपरं धन्यवादकारिणौ तौ द्वौ
संघावहञ्च वयम् ईश्वरीयमन्दिरस्य समीपे स्थगिता अभवाम। मया
४१ सार्द्धम् अधिपतीनाम् अर्द्धजना आसन्। किञ्च याजकानां मध्य इलि-
याकीमो मासेयो मियामीनो मीखाय इलियो-ऐनयः सिखरियो हनानि-
४२ यश्चैमे तूरीवादका जनाः किञ्च मासेयः शिमयिय इलियासर उषि यि-
होहाननो मल्किय एलम एषरश्च तत्रासन्, अनन्तरं गायका उच्चैःस्वरै-
४३ रगायन् यिम्रहियस्तेषां नियन्तासीत्। तस्मिन् दिने ते भृशं यज्ञम्

आनन्दमाकुर्व्वन् यत ईश्वरस्तान् महानन्देनानन्दयत् तेन तेषां जाया
बालकाश्चापि समानन्दन् अतो बहुदूरं यावद् यिरूशालमस्यानन्द-
ध्वनिराकर्ण्यत।

तस्मिन् दिने व्यवस्थानुसारेण याजकेभ्यो लेवीयेभ्यश्च दातव्यानाम् अं- ४४
शानाम् एकैकस्य नगरस्य क्षेत्रेभ्यः सङ्ग्रहणार्थं केचित् मनुजा धनानाम्
अर्पित उत्तोलनीयद्रव्याणां प्रथमजातफलानां दशमांशानाञ्च कोषेषु न्ययु-
ज्यन्त, यतो यिहूदावंशस्तत्र सन्तिष्ठमानान् याजकान् लेवीयांश्चाधि
महानन्दम् अकरोत्। अपरं दायूदस्तदीयतनयस्य सुलेमनश्च निदेशा- ४५
नुसारेण गायका द्वारपालाश्च तेषाम् ईश्वरस्य रक्षणीयं पवित्रताया
रक्षणीयञ्च समरक्षिषुः। यतः पूर्व्वस्मिन् काले ऽर्थतो दायूद आसफस्य ४६
च समये प्रधानगायका ईश्वरस्य प्रशंसाधन्यवादयो र्गाने नियुयुजिरे।
अपरं सिरुब्बाबिलस्य निहिमियस्य च समय इस्रायेलीया निखिल- ४७
लोका गायकेभ्यो द्वारपालेभ्यश्चैकैकस्य दिनस्य कृत एकैकमंशम् अददु
र्लेवीयानाञ्च निमित्तं द्रव्याण्यपावयन् लेवीयाश्च हारोणवंशस्य निमित्तं
द्रव्याण्यपावयन्।

---

## १३ त्रयोदशोऽध्यायः।

१ व्यवस्थानुसारेण मिश्रितलोकेभ्यो यिहूदीयानां पृथक् करणं ४ निहिमिये मन्दिरस्य प्रकोष्ठानां परिष्करणं १० मन्दिरस्य कार्य्ये लोकानां नियोजनं विश्रामवारपालनाय नियमनं २१ अन्यजातीययोषितां त्यागायाज्ञापनञ्च।

तस्मिन् समये लोकानां कर्णगोचरे मूससः पुस्तके पठ्यमाने तत्र लि- १
खित एष आदेशः प्रापि, यथा, अम्मोनीया मोयाबीयाश्चेश्वरस्य समाजं
कदापि न प्रवेक्ष्यन्ति। यतस्त इस्रायेल्वंशान् अन्नजलदानाय पथि न २
साक्षात् कृतवन्तः परन्तु तान् अभिशप्तुं तेषां प्रतिकूलं बिलियमाय
वेतनं दत्तवन्तः किन्त्वस्माकम् ईश्वरस्तम् अभिशापं परावर्त्याशिषं
विहितवानिति। तदानीं ते व्यवस्थामेतां निशम्य मिश्रितजनान् इस्रा- ३
येलीयवंशात् पृथक् अकार्षुः।

इतः पूर्व्वम् अस्माकम् ईश्वरीयमन्दिरस्य प्रकोष्ठानाम् अध्यक्षो याजक ४
इलियाशीवः टोबियस्य मित्रत्वात् तस्य कृते महाप्रकोष्ठमेकम् आसाद- ५
यत्। तत्रैव पुरा लोकै र्निवेदितं वस्तु धूपः पात्राणि च किञ्च लेवीयानां
गायकानां द्वारपालानाञ्च निमित्तम् आज्ञापितः शस्यानां द्राक्षारसानां

६ लेवीयानाञ्च दशमांशो याजकानां नैवेद्यञ्च न्यधीयन्त। किन्त्वेतेषां घटनायाः
समये ऽहं यिरूशालमे नासं, यतो बाबिलीयभूपस्यार्तक्षस्तस्य राजत्वस्य
द्वात्रिंशे वत्सरे राज्ञः समीपम् अहं गतवान्, किञ्च कतिपयवत्सरेभ्यः
७ परं राजानं विसर्जनं याचित्वा यिरूशालमम् आगच्छं। अपरम्
ईश्वरीयमन्दिरस्य चत्वरे टोबियस्य कृते कोष्ठं निर्म्माय इलियाशीवेन यत्
८ कुकर्म्म कृतं तद् विदित्वाहं तस्मिन् कार्य्ये भृशम् असन्तोषं मत्वा
तस्मात् प्रकोष्ठात् टोबियस्य परिजनानां निखिलवस्तूनि बहि र्निक्षिप्त-
९ वान्। अपरं ममादेशात् लोकैस्तेषु प्रकोष्ठेषु पावितेष्वीश्वरीयभवनस्य
पात्राणि निवेदितवस्तूनि धूपाश्च मया पुनर्व्वारं तत्र न्यधीयन्त।
१० अपरं लेवीयेभ्यो भागा न दीयन्ते तत्कारणात् कर्म्मकारिणो लेवीया
गायकाश्च सर्व्वे स्वीयां स्वीयां भूमिं पलायिता इत्यपि मया विदितं।
११ तदाहम् अधिपतीन् भर्त्सयित्वा कथितवान्, ईश्वरीयमन्दिरं कुतो
१२ ऽत्याजि? अनन्तरं मया तान् संगृह्य तेषां पदेषु ते ऽस्थाप्यन्त। अपरं
सर्व्वे यिहूदीया शस्यानां नूतनद्राक्षारसानां तैलानाञ्च दशमांशं को-
१३ षान् आनेतुम् आरभन्त। अपरम् अहं याजकं शेलिमियम् अध्यापकं
सादोकं लेवीयानां मध्यगतं पिदायञ्च तेषां साहाय्यार्थं मत्तनियस्य
पौत्रं सक्कूरस्य पुत्रं हाननञ्च कोषेषु न्ययोजयं यतस्ते विश्वास्यत्वेन
१४ गणिता आसन् किञ्च तेषां भ्रातृनिवहाय वितरणं तैरेव कर्त्तव्यं। हे
मदीश्वर, एतदधि मां स्मर। निजेश्वरस्य मन्दिरकृते तदीयविधानस्य
कृते च यत् शुभं कर्म्म मयाकारि तत् मा लुम्प।
१५ अपरं तस्मिन् समये मया यिहूदावंशीयाः कियन्तो लोका दृष्टाः, ते
विश्रामदिने द्राक्षायन्त्रेभ्यो रसान् निरपीडयन् शस्यगुच्छान् समानयन्
गर्द्दभेषु भारान् आरोपयन् किञ्च विश्रामदिने द्राक्षारसान् द्राक्षोडुम्ब-
रफलानि सर्व्वविधद्रव्याणि यिरूशालमम् आनयन्। ततो ऽहं तेषां भक्ष्य-
१६ वस्तूनां विक्रयदिन एव तेषां विरुद्धं साक्ष्यमददां। अपरं यिरूशालमे
प्रवासिनः सोरीयलोका मत्स्यादीनि नानाविक्रेयवस्तून्यानीय विश्रामदिने
१७ यिहूदावंशीयेषु यिरूशालमे च व्यक्रीणत। तदानीम् अहं यिहूदाः प्रमुखै
र्नरैः समं विवदमानस्तान् अवोचं, यूयं विश्रामदिनम् अपवित्रं कुर्व्वन्तः
१८ कुत एतत् कुकर्म्म कुरुध्वे? युष्माकं पितृलोकेषु तादृशाचारं कृतवत्स्वीश्वरः
किमस्मास्वेतन्नगरे च दुर्दशाः सर्व्वा एता नाघटयत्? तथापि यूयं वि-
श्रामदिनम् अपवित्रं कुर्व्वन्त इस्रायेल्वंशे किम् अधिकं क्रोधं वर्द्धयथ?

अनन्तरं विश्रामदिनस्य पूर्व्वीयसन्ध्यायां जातायामहं यिरूशालमस्य १९
गोपुराणि बद्धुम् आदिष्टवान् विश्रामदिनस्य शेषं यावत् तेषां मोचनं
प्रतिषिद्धवांश्च, किञ्च विश्रामदिने येन कश्चन भारो ऽभ्यन्तरं नानीयेत
तदर्थं मम दासानां कतिपयजनान् द्वारेष्वस्थापयं। तत एकहत्वं द्वि २०
र्वा वणिजः सर्व्ववस्तुविक्रेतारश्च यिरूशालमस्य वहि र्निशाम् अया-
पयन्। तेन मया तेषां विरुद्धं साक्ष्यं प्रदाय ते निगदिता यूयं कुतः २१
प्राकारोपकण्ठे निशां यापयत? यदि पुनर्व्वारं तत् करिष्यध्वे तर्हि
मया धरिष्यध्वे। ततः परं ते विश्रामदिने पुन र्नायातन्। अनन्तरं २२
विश्रामदिनस्य पावनार्थं युष्माभिः पवित्रीभूयागते द्वाराणि रक्षितव्या-
नीति लेवीया मयादिष्टाः। हे मदीश्वर एतदप्यधि मां स्मर स्वीय-
प्रचुरानुकम्पानुसारेण मामनुकम्पस्व च।

अपरं तस्मिन् समये यैरस्दोदीया अम्मोनीया मोयावीयाश्च योषा २३
व्यूढास्तादृशा यिहूदीया मयादृश्यन्त। तेषां बालका अर्द्धम् अस्दोदीय- २४
भाषाम् अभाषन्त यिहूदीयभाषां भाषितुं नाविदुः किन्त्वितरजा-
तीयमनुजानां देशभाषानुसारेण व्यवाहरन्। ततो ऽहं तैः साकं २५
विवदमानस्तान् तिरस्कृतवान्, तेषां कतिपयलोकान् ताडयित्वा तेषां
कचान् उत्पाट्येश्वरस्य नामधेयेन तान् अशपयं, यूयं तेषां तनयैः स्वेषां
तनुजा न विवाहयिष्यथ स्वेषां तनयैश्च तेषां तनुजा न विवाहयिष्यथ।
इस्रायेलीयो राजा सुलेमान् एतादृशं कार्य्यं कृत्वा किम् अपराधी २६
नाभवत्? महतीनां जातीनां मध्ये ऽपि तेन सदृशः को ऽपि राजा
नाविद्यत, स ईश्वरस्यापि प्रिय आसीद् ईश्वरस्तं निखिलेस्रायेलीयवंशस्य
राजानम् अकरोत् तथापि विदेशीया योषितस्तमपि पापाचारे प्रवर्त्त-
यामासुः। अतो विदेशीयानां विवाहेनास्माकम् ईश्वरस्याज्ञालङ्घनाय वयं २७
यथा महापातकमिदं कुर्य्याम तथा किं युष्माकं वचो ऽस्माभिः श्रोतव्यं?
महायाजकस्येलियाशीवस्य पौत्राणां यिहोदायाः पुत्राणाम् एको जनो २८
होरोणीयसन्वल्लटस्य जामातासीत्, तन्निदानाद् अहं निजोपकण्ठात्
तम् अद्रवयं। हे मदीश्वर, तान् स्मर, यस्मात् ते याजकतां याजकानां २९
लेवीयानामपि नियमञ्च विकृतवन्तः। अपरमहं सर्व्वेभ्य इतरजातीये- ३०
भ्यस्तान् शुचीन् अकरवं किञ्च याजकानां लेवीयानाञ्च संघान् विभज्य
स्वीयस्वीयपदेषु तान् न्ययोजयं। किञ्च निरूपिते समये काष्ठानां प्रथमजा- ३१
तफलानाञ्चानयनार्थं लोकान् न्ययोजयं। हे मदीश्वर, मङ्गलार्थं मां स्मर।

# इष्टेरोपाख्यानं।

## १ प्रथमोऽध्यायः।

१ अहश्वेरस्य नृपस्य भोज्यं १० महिष्या वाष्ट्या राजाज्ञालङ्घनं १३ मिमूखनस्य मन्त्रणया योषितां वशीकरणार्थं राज्ञ आज्ञाप्रचारणं।

१ अहश्वेरो नृपः सिन्धुनदमारभ्य कूशदेशं यावत् सप्तविंशत्यधिकशतैक-
२ देशानां राजत्वम् अकरोत्। तस्मिन् समये यदा स महीपालो ऽहश्वेरः
३ शूशनपुरे निजे राजसिंहासने समुपविष्ट आसीत् तदा स निजराज-
त्वस्य तृतीये वत्सरे स्वकीयामात्यानां भृत्यानाञ्च कृते भोज्यम् आसाद-
यामास। तत्र पारसमादियादेशयोः पराक्रमिणो लोकाः कुलीननरा
४ देशाधिपतयश्च तस्यान्तिकम् आगताः। स बहुदिनान्यर्थतो ऽशीत्य-
धिकशतं दिनानि यावत् तेषां पुरस्तात् निजराजत्वस्य गरिम्न ऐश्वर्य्यं
५ निजप्रतापस्य महिम्नस्तेजश्च चकासयाञ्चकार। अपरं तेषु दिनेषु गतेषु
नृपतिः शूशनपुरे समवस्थितानां क्षुद्राणां महताञ्च निखिललोकानां
कृते राजपुर्य्या उद्यानस्य प्राङ्गणे सप्तदिनानि यावद् भोज्यमासादया-
६ मास। तत्र धूम्रवर्णसूक्ष्मसूत्रै र्निर्म्मितै रज्जुभि र्बद्धा शुक्लहरितनीलवर्णा
यवनिका वर्त्तुलासु रौप्यग्रहणीषु मर्म्मरस्तम्भेषु चावालम्बन्त, अपरं रक्त-
नीलशुक्लकृष्णवर्णमर्म्मरप्रस्तरैः शोभिते भूपृष्ठे स्वर्णरूप्यमयितताः शय्या
७ आसन्। किञ्च विविधाकाराणि हैमभाजनानि द्राक्षारसैरपूर्य्यन्त तेषां
८ राजकीयद्राक्षारसानां राजार्हं महाधनमासीत्। तत्र पानसमये राजा-
देशात् को ऽपि केनापि बलान्नापाय्यत, यत एकैको जनः स्वेच्छानुसारेण
कर्म्म करोत्विति नृपतिः स्वीयराजधान्याः सर्व्वान् अधिपतीन् आज्ञा-
९ पयामास। अपरं महिषी वाष्टी तद्वद् अहश्वेरस्य राजनिवेशने नारी-
णां कृते भोज्यम् आसादयाञ्चकार।

१० अपरञ्च सप्तमे दिने राज्ञश्चित्ते द्राक्षारसेन प्रफुल्लिते सति मिहू-
मनो विस्था हर्वोणा विग्था अवगथः सेथरः कर्कसश्च नृपस्याहश्वेरस्य
श्रीमुखस्य परिचारका एते सप्त नपुंसकास्तेनेदम् उचिरे यूयं राजमुकुटेन
११ भूषितां राज्ञीं वाष्टीं नृपस्य समक्षम् आनयतेति। अनेन स लोकान्

अधिपतींश्च तस्याः सौन्दर्य्यं दर्शयितुम् ऐच्छत्, यतः सा परमसुन्दरी
श्रियतवती। किन्तु सा वाष्टी राज्ञी नपुंसकैर्ज्ञापितात् क्षितिपतेरादेशात् १२
समायातुं मतिं न चकार। ततो नृपति र्भृशं चुकोप तस्य क्रोधाग्निः
प्रजज्वाल च।

तदानीं कर्श्शिनाः शेथरो ऽद्‌मायात्तर्शीशो मेरसो मर्षिणा मिमूखन- १३
श्चेतिनामानो नृपस्य मुखदर्शिनो राजसिंहासनस्य पार्श्वस्थे प्रधानस्थाने
समासीनाः पारसमादियादेशयोरेते सप्त कुलीना जना नरपतेः सन्नि-
धावासन्। तदानीं राजा व्यवस्थाज्ञान् राजनीतिज्ञान् मानवान् प्रति १४
कथनस्य रीत्यनुसारेण तान् विदुषः कालज्ञलोकांश्च प्रति वच इदं
बभाषे, राज्ञी वाष्टी नपुंसकैर्ज्ञापितम् अहश्वेरस्य नृपतेरादेशं यन्न १५
समाचारत्, तस्माद् व्यवस्थानुसारेण तां प्रति किं कर्त्तव्यम्? तत्र मि- १६
मूखनो नृपतेरध्यक्षाणाञ्च साक्षात् प्रतिजगाद, महिष्या वाष्ट्या यद्
अपराद्धं तत् केवलं राज्ञो नहि, किन्तु भूपालस्याहश्वेरस्य सर्व्वराष्ट्रेषु
यावन्तो ऽधिपतयो यावन्तो लोकाश्च सन्ति तेषां सर्व्वेषाम् अपराद्धं।
महिष्या एतत्कर्म्मणो वार्त्ता पतीनाम् अवज्ञायै सर्व्वासां नारीणां मध्यं १७
व्याप्स्यति यतो लोकै र्वदिष्यते भूपतिरहश्वेरो वाष्टीं राज्ञीं निजोपक-
ण्ठम् आनेतुम् आदिष्टवान् ततः सा नागमत्। अपरं पारसमादिया- १८
देशयो याः कुलीना महिष्या एतत्कर्म्मणो वृत्तान्तं श्रोष्यन्ति ता अद्यैव
नरपतेः सर्व्वान् अधिपतीन् तादृशं भाषिष्यन्ते तेन महत्तवहेलः क्रो-
धश्च समुद्भविष्यतः। अतो यदि नरपतेरभिमतं जायते तर्हि वाष्टी १९
नृपतेरहश्वेरस्य सन्निधिं पुनरायातुं न लप्स्यते, किञ्च राजा तस्या महि-
षीत्वं परिहृत्य तस्या उत्तमाय कस्मैचित् सीमन्तिन्यै विश्राणयिष्यतीति
राजाज्ञा भवता प्रकाश्यताम्, अपरं तस्या लोपो यन्न भवेत् तदर्थं साज्ञा
पारसमादियादेशयो र्व्यवस्थाया मध्ये लिख्यतां। अपरं जनपदः पृथुलो २०
ऽस्ति तस्मात् तस्य सर्व्वत्र सा राजाज्ञा प्रकाश्यतां तेन सर्व्वा योषितः
क्षुद्रं महान्तं वा निजं निजं पतिं सम्मंस्यन्ते। तदानीं तस्मिन् वचसि २१
नृपतेरध्यक्षाणाञ्च तोषकरे सति नृपो मिमूखनस्य मन्त्रणानुसारेण
चकार। स एकैकस्य जनपदस्य लिप्यनुसारेण एकैकस्या जाते र्भाषा- २२
नुसारेण निजाधीनान् निखिलजनपदान् पत्राणि प्रेषयित्वा वच इदं
प्रचारयामास, एकैकः पुमान् निजे निजे वेश्मनि स्वामित्वं करोतु, निज-
जाते र्भाषया ताम् आज्ञां प्रचारयतु च।

# २ द्वितीयोऽध्याय।

१ बह्वीः युवतीः संग्राहयितुं मन्त्रणाकरणं ५ इष्टेरायाः यिहूदीयत्वात् मर्द्दिखयस्य कथनं ८ इष्टेरां प्रति स्त्रीपालकस्य हेगयस्यानुग्रहः १२ पारस्य भूपतेर्विवाहनियमस्य च रीतिः १५ इष्टेरायां राज्ञस्तुष्टिः २१ राजद्रोहप्रकाशनात् भूपतेः पुरावृत्तपुस्तके मर्द्दिखयस्य नामलेखनं।

१ एतेभ्यो वृत्तान्तेभ्यः परं नृपतेरहश्वेरस्य क्रोधे शान्ते सति स वाष्टीं
२ तस्याः कार्य्यं तस्याः प्रतिकूलं कृतं नियमञ्च चिन्तयितुम् आरेभे। तत्र
राज्ञः सेविनो दासास्तमवदन् नरपतेः कृते सुन्दरीणां युवतीनां गवेषणं
३ क्रियतां। अपरं नरपतिः स्वराज्यस्य सर्व्वदेशेषु नियामकान् नियुङ्क्तां तैः
सर्व्वाः सुन्दरीः युवतीः कन्याः संगृह्य शूशनराजधान्या अन्तःपुरम् आनीय
नारीणाम् अवितरि राजकीयनपुंसके हेगये समर्प्यन्तां किञ्च भूषणार्थ-
४ कद्रव्याणि ताभ्यो दीयन्तां। तत्र या कन्या राज्ञे रोचिष्यते सा वाष्ट्याः
पदे महिषी भवतु। तदानीं राजा तस्मिन् वाक्ये तुष्टः तथैव चकार।
५ तदानीं शूशनपुरे मर्द्दिखयनामक एको यिहूदीयलोक आसीत्
स विन्यामीनवंशीयकीशस्य प्रपौत्रः शिमियेः पौत्रो यायीरस्य पुत्रः।
६ यिहूदीयनृपेण यिहोयाखीनेन सार्कं ये लोका बाबिलीयनृपेण निबूख-
दिनत्सरेण प्रवासयाञ्चक्रिरे तैः समं स मर्द्दिखयो ऽपि यिरूशालमात्
७ प्रवासितः। स निजपितृव्यस्य तनयां हदसाम् अर्थत इष्टेरां पर्य्यपालयत्
यतः सा पितृमातृहीना। सा तु युवती महासुन्दरी सुवदना चासीत्।
तस्या मातापित्रो मरणकाले मर्द्दिखयस्तां स्वदुहितृवद् गृहीतवान्।
८ अनन्तरं नृपस्य तस्मिन् नियमे निदेशे च प्रचारिते सति राजधान्यां
शूशने हेगयस्य समीपे बह्वीनां कन्यानां संग्रहणकाले इष्टेरापि राज-
९ धान्यां रमणीनाम् अध्यक्षस्य हेगयस्य समीपम् आनायि। सः तु तस्यै
रुचित्वा तस्यानुग्रहं लब्धवती, ततः स तस्यै दातव्यानि भूषणार्थकद्रव्याणि
ग्रासांश्च किञ्च राजनिवेशनाद् अभिरुचिताः सप्त दासीश्च तस्यै त्वरितं
ददिवान् अन्तःपुरस्योत्तमस्थाने दासीभिः समं तां वासयामास च।
१० किन्त्विष्टेरा निजजातिवृत्तान्तस्य परिचयं कमपि न जगाद यतो मर्द्दिख-
११ यस्तत्प्रकाशनात् तां प्रतिषिषेध। अनन्तरम् इष्टेरायाः मङ्गलं गतिञ्च
वेदितुं मर्द्दिखयः प्रतिदिनम् अन्तःपुरस्य चत्वरस्य सम्मुखे यातायातम्
अकरोत्।
१२ अपरं द्वादशमासान् तत्र स्थाने रमणीनां नियमितां सेवाम् उपगत्य-

कैका युवती पर्य्यायेण राज्ञः समीपम् आनीयत, यतः षण्मासान् यावद्
गन्धरसतैलसेवया षण्मासांश्च यावत् सुगन्धिद्रव्याणां योषित्परिष्काररा-
र्थकद्रव्याणाञ्च सेवया ताः परिष्कर्त्तुम् एतावन्ति दिनानि व्यतियन्ति।
अपरं राज्ञः समीपं गमिष्यन्ती युवती स्वया सार्द्धम् अन्तःपुराद् राज- १३
निवेशनं गमनार्थं यद्यद् द्रव्यम् अयाचत तत्तत् तस्यै व्यतीर्य्यत। सा १४
सन्ध्याकाले ऽव्रजत् प्रातःकाले चोपपत्नीनाम् अवितु राजनपुंसकस्य
शाश्गसस्य समीपं द्वितीयान्तःपुरं परावृत्यायात्। राजा चेत् तस्यां
तुष्टा तस्या नाम्ना तां नाह्वयत् तर्हि सा नरपतेरुपकण्ठं पुन र्नागमत्।

अपरं मर्दिखयः स्वीयपितृव्यस्याबीहयिलस्य यां कन्याम् इष्टेरां १५
स्वपुत्रीमिव गृहीतवान् राजसन्निधौ गमनाय तस्याः पर्य्याय उपस्थिते
योषिताम् अविता राजनपुंसको हेगयो यद्यत् न्यरूपयत् तदतिरिक्तं
सा नापरं किञ्चिद् अयाचत, किन्तु यावन्तो जना इष्टेरां प्रति दृष्टिम-
कुर्व्वन् ते सर्व्वे तस्याम् अतुष्यन्। नृपस्य राजत्वस्य सप्तमवत्सरस्य दशमे १६
मासर्थतो टेवेतमासि नृपतेरहश्वेरस्य समीपं गमनार्थम् इष्टेरा राज-
निवेशनम् आनीयत। ततो नृपतिरन्याभ्यो योषिद्भ्य इष्टेरायां बह्वप्री- १७
यत किञ्च तदन्याभ्यः सर्व्वकन्याभ्यः सा तस्य दृष्टौ प्रसादम् अनुग्रहञ्च
लेभे तेन स तस्याः शिरसि राजकिरीटं निधाय वाष्ट्याः पदे तां महिषीं
चकार। अनन्तरं नृपतिरिष्टेरायाः सम्मानार्थं स्वस्य निखिलाध्यक्षाणां १८
दासानाञ्च कृते महाभोज्यम् आसादयाञ्चकार, अपरं निखिलप्रदेशानां
राजकरान् मोचयित्वा राजार्हदानम् अकरोत्।

कन्यासु द्वितीयवारं संगृह्यमाणासु मर्दिखयो राजद्वार उपविष्ट १९
आसीत्। इष्टेरा मर्दिखयस्य निदेशात् निजकुटुम्बानां जाते र्वा परिचयं २०
कमपि नावदत्। इष्टेरा मर्दिखयस्य सन्निधौ परिपालनसमये यादृग-
करोत् तदानीमपि तादृक् तस्य निदेशम् अगृह्णात्।

तस्मिन् समये ऽर्थतो राजद्वारे मर्दिखयस्योपवेशनसमये विगथनतेर- २१
शनामानौ द्वारिणां मध्यगतौ द्वौ राजनपुंसकौ क्रोधाद् राजानम् अहश्वेरं
व्यापादयितुं चिचेष्टाते। ततो मर्दिखयस्तद् विज्ञाय राज्ञीम् इष्टेरां ज्ञा- २२
पयामास, इष्टेरा च मर्दिखयस्य नाम कृत्वा तं वृत्तान्तं राज्ञे निवेदया-
मास। अपरं तेनानुसन्धाय प्रमाणे लब्धे तौ द्वौ जनौ दण्डकाष्ठयोरुल्ल- २३
म्बयाञ्चक्राते किञ्च सा कथा नरपतेः साक्षात् पुरावृत्तपुस्तके समलिख्यत।

# ३ तृतीयोऽध्यायः।

१ हामनस्योन्नति र्यिहूदीयानां विनाशाय शुभदिननिरूपणार्थं गुटिकापातनं ८ यि-
हूदीयानां विनाशाय राज्ञः सकाशात् हामनस्याज्ञाप्राप्तिः सम्बन्ध नगरव्याकुलत्वञ्च।

१ अनन्तरं नरपतिरक्षस्वेरो हम्मिदाथाः सुतस्यागागीयहामनस्य पदम्
वर्धयित्वा तम उन्नतं चकार निजसङ्गिनां निखिलकुलीनानाम् आस-
२ नानाम उपरिष्टात् तदीयमासनं स्थापयाञ्चकार च। तेन राजद्वार-
वर्त्तिनः सर्व्वे राजकीयदासा भूमिष्ठा भवन्तो हामनं प्रणन्तुम् आरे-
भिरे यतो राजा तम् उद्दिश्य तादृग् आदिदेश, किन्तु मर्दिखयो भूमि-
३ ष्ठो न भवति न च तं प्रणमति। तेन राजद्वारवर्त्तिनो राजभृत्या मर्दि-
४ खयं जगदुः, त्वं नरपते र्निदेशं कुतो लङ्घयसे? इत्थं ते प्रत्यहं तम् आच-
रन्ति तथापि स तेषां वचांसि न गृह्णाति ततो मर्दिखयो यिहूदीय
इति तस्य प्रमुखाद् विज्ञाय तदीयवाक्यानि निश्चलानि न वेति निश्चेतुं
५ ते हामनं तत् ज्ञापयामासुः। अपरं मर्दिखयो भूमिष्ठो भवन् मां न
६ प्रणमतीति वीक्षमाणो हामनः कोपेन परिपूर्णो बभूव। अपरं मर्दि-
खयो यिहूदीयजातिरित्यवगम्य हामनः केवलं मर्दिखयं प्रति हस्तार्पणं
लघु विज्ञायाक्षस्वेरस्य राज्ञो निखिले राज्ये मर्दिखयस्य स्वजातीयान्
७ निखिलान् यिहूदीयलोकान् व्यापादयितुं येते। अपरम् एतदधि नृपते-
रक्षस्वेरस्य राजत्वस्य द्वादशवत्सरस्य प्रथमे मासे ऽर्थतो नीषणमासे
हामनस्य साक्षाद् अदरनामकं द्वादशं मासं यावद् एकैकस्य दिनस्यैकै-
कस्य मासस्य च कृते गुटिकापातं बभूव।
८ अनन्तरं हामनो राजानम् अक्षस्वेरम् उदितवान् भवतो राज्यस्य नि-
खिलदेशेष्वन्यान्यलोकानां मध्ये विकीर्णा विभिन्ना चैका जाति र्विद्यते।
अन्यलोकानां व्यवस्थातस्तज्जातीयानां व्यवस्था भिन्नाः ते नरपते र्व्यवस्थां
९ न मन्यन्ते तस्मात् ते रक्ष्या न श्लाघ्याः। यदि नरपतेरभिमतं जायेत
तर्हि तेषां व्यापादनार्थं राजाज्ञा लिख्यतां तेनाहं राजकार्य्ये नियुक्त-
लोकानां हस्तेषु राजकोषे स्थापनार्थं दशसहस्रकिक्कारपरिमाणानि रज-
१० तानि समर्पयिष्यामि। तदानीं नृपः स्वीयहस्ताद् अङ्गुरीयकम् अपाकृष्य
यिहूदीयानां परिपन्थिने हम्मिदाथाः पुत्रायागागीयहामनाय ददि-
११ वान्। अपरं नृपो हामनम् आचचक्षे तानि रजतानि ते लोकाश्च तुभ्यम्
१२ अदायिषत तान् प्रति निजेच्छानुसारमाचर। अनन्तरं प्रथममासस्य
त्रयोदशे दिवसे राजलेखका आजुहुविरे तत एकैकस्मिन् देशे ये राज-

प्रतिनिधयो ऽध्यक्षाश्चासन् ताम् प्रति किञ्चैकैकस्या जातेरेकैकस्य देशस्य
च मुख्यनरान् एकैकस्या जातेरक्षरै र्भाषया च नृपतेरहश्वेरस्य नाम्ना
हामनस्यादेशानुसारादेव पत्राणि लिखितानि नृपाङ्गुरीयकेण मुद्रा-
ङ्कितानि च। अपरम् एकस्मिन् दिने ऽर्थतो ऽदरनामकस्य द्वादशमा- १३
सस्य त्रयोदशे दिवसे युववृद्धशिशुयोषिद्भिः समं निखिलयिहूदीया
विनाशयितव्या हन्तव्या लोप्तव्याश्च तेषां वस्तूनि च लोठयितव्या इत्याज्ञा-
सम्बलितानि तानि पत्राणि दूतैः क्षितिपस्य निखिलप्रदेशान् प्रति
प्रेषयाञ्चक्रिरे। किञ्च तस्मिन् दिने सर्व्वे लोका यद् उद्यता भवेयुस्तदर्थं १४
निखिललोकानां ज्ञानायैकैकस्मिन् देशे ताम् आज्ञां प्रचारयितुं तल्लिपे-
रनुरूपं प्रादीयत। अनन्तरं दूता राजाज्ञातस्त्वरितं विधाय वहि- १५
र्व्वव्रजुः। स आदेशो राजधान्यां शूशने प्राकाश्यत। ततः परं राजा
हामनश्च भक्षितुं पातुञ्चोपविविशतुः परन्तु शूशनपौरा उद्विविजुः।

---

## ४ चतुर्थोऽध्यायः।

१ मर्दिखयस्य यिहूदीयानाञ्च शोकस्य कथनं ४ तस्य संवादं श्रुत्वा मर्दिखयस्य समीपम्
इष्टेराया लोकप्रेषणं तस्योत्तरञ्च १० इष्टेराया द्वितीयकथनं मर्दिखयस्योत्तरञ्च १५
इष्टेराया उपवासनिरूपणं।

अपरं मर्दिखयस्तं कृत्स्नं वृत्तान्तं विज्ञाय निजवसनानि चिच्छेद १
किञ्च शाणजं वसनं परिधाय भस्म विलिप्य मध्येनगरं व्रजन् उच्चैःस्वरेण
तीव्रं विलापं चकार। अनन्तरं राजद्वारस्य सम्मुखपर्य्यन्तम् आययौ, २
परन्तु राजद्वारं शाणपरिहितेन केनापि न प्रवेष्टव्यम्। अपरम् एकै- ३
कस्य प्रदेशस्य यद्यत् स्थानं सा राजाज्ञा नियमपत्रञ्च जगाम, तेषां
स्थानानां यिहूदीयानां मध्ये महाशोक उपवासः क्रन्दनं विलापश्च
बभूवुः किञ्च बहवः शाणवसनं परिधाय भस्मसु शिश्यिरे।

अनन्तरम् इष्टेराया दास्यो नपुंसकाश्च समेत्य तं संवादम् इष्टेरां ४
विज्ञापयामासुः। तेन राज्ञी महाशोकवती सती मर्दिखयस्य शाणवस-
नम् अपाकर्षिष्यन्ती तं परिधापयिष्यन्ती च वासांसि प्रेषयामास किन्तु
स तानि न जग्राह। तेन किमभूत् कुतो ऽभूदिति वेदितुम् इष्टेरा ५
निजपरिचारकाणां राजनपुंसकानां मध्यवर्त्तिनं हथकम् आहूय मर्दि-
खयस्य समीपं व्रजेत्यादिदेश। अनन्तरं हथको वहि र्गत्वा राजद्वारस्य ६

७ सम्मुखस्थे नगरस्य सन्निवेशे मर्दिखयं प्राप। तेन मर्दिखयः स्वं प्रति
यद्यद् अघटत किञ्च यिहूदीयानां विनाशार्थं हामनो राजकोषे किय-
८ द्रिमाणं रजतं दातुं प्रत्यजानात् तत् तस्मै कथयामास। अपरं तेषां
विनाशार्थं यद् आज्ञापत्रं शूशने प्रादायि तस्यानुलिपिं तस्मै दत्त्वा
जगाद, इष्टेराम् एतद् दर्शय बोधय चेति। अपरं सा यत् स्वजा-
तीयलोकानां कृते विनेतुं प्रार्थयितुञ्च राज्ञः सन्निधिं प्रविशेत् तदपि
९ स कथयितुम् आज्ञापयामास। अनन्तरं हथकः समेत्य मर्दिखयस्य
वचनानीष्टेरां विज्ञापयामास।

१० अनन्तरम् इष्टेरा मर्दिखयं वच इदं वदितुं पुनर्व्वारं हथकम् आदि-
११ देश। पुमान् योषिद् वा यः कश्चिद् अनाहूतः सन् अभ्यन्तरचत्वरे राज्ञ
उपकण्ठं व्रजति तं प्रति नृपेण हेममये राजदण्डे प्रसारिते स जीवति,
किञ्च तदितरे सर्व्वे हन्तव्या इत्यनन्य आदेशो विद्यत एतत् सर्व्वे राज-
भृत्या राज्ञः सर्व्वदेशीयाः प्रजाश्च विदन्ति किञ्च त्रिंशद् दिनानि यावत्
१२ तानि राज्ञः समीपम् एतुं नाहम् आहूये। अनन्तरं मर्दिखयाय म-
१३ हिष्या इष्टेराया एतस्मिन् वचसि निवेदिते स इष्टेराम् इदं प्रतिवाक्यं
गदितुम् आदिदेश, सर्व्वेषां यिहूदीयानां मध्ये त्वं राजनिवेशने तिष्ठन्ती
१४ रक्षां लप्स्यसे नैतत् चित्ते चिन्तय। यदि त्वं समयेऽस्मिन् वाचंयमा
तिष्ठेस्तर्ह्यपरेण केनाप्युपायेन यिहूदीयानाम् उपकारस्य निस्तारस्य च
पन्थाः सम्भविष्यति त्वन्तु निजपितृवंशेन साकं विनंक्ष्यसि किन्तु बोधो
ऽयं जायते त्वम् अस्य विपत्समयस्य निमित्तं राज्ञीत्वं प्राप्ता।

१५ तदानीम् इष्टेरा मर्दिखयम् इदं प्रतिवाक्यं वक्तुम् आदिदेश, त्वया
१६ व्रजित्वा शूशने संस्थितान् निखिलान् यिहूदीयान् संग्रह्य दिनत्रयं यावत्
मदर्थम् उपवासः क्रियतां भक्ष्यं पेयं वा किमपि न भुज्यतां, किञ्च
मया मम दासीभिश्च उपवत्स्यते। इत्थमेव कृते ऽहं विधिविरुद्धं राज्ञः
१७ समक्षं यास्यामि, तेन यदि हन्तव्याहं तर्हि घानिष्ये। अनन्तरं मर्दिखयो
व्रजित्वेष्टेराया निदेशानुसारेण चक्रवान्।

---

## ५ पञ्चमोऽध्यायः।

१ राज्ञः समीपं व्रजित्वा तस्यानुग्रहं प्राप्येष्टेरया तस्य हामनस्य च निमन्त्रणं ६ द्विती-
यवारं तया निमन्त्रणं ९ अभिमानिना हामनेन मर्दिखयस्यावज्ञा १४ तस्य कृते
दण्डकाष्ठस्थापनञ्च।

अनन्तरं तृतीये दिवस इष्टेरा राजकीयवसनं परिधाय राजनिवेश- १
नस्याभ्यन्तरप्राङ्गणे भूपतेरागारसम्मुखे समुदतिष्ठत। तदानीं राजा
राजकीयागारे स्वीयराजसिंहासने ऽन्तरागारीयद्वारस्य सम्मुख उप-
विष्ट आसीत्। तदा राज्ञा प्राङ्गणे समुपतिष्ठन्तीम् इष्टेरां राज्ञीम् २
अवलोक्य तां प्रति प्रसादः प्रकाशितः। अतो नृपेणेष्टेरां प्रति स्वप्रय-
च्छिते काञ्चनमये राजदण्डे प्रसारित इष्टेरा निकटं प्रगत्य राजदण्डस्या-
ग्रभागं पस्पर्श। ततो राजा तां पप्रच्छ हे इष्टेरे राज्ञि किम् अभूत्? ३
त्वं किं प्रार्थयसे? राजत्वस्यार्द्धमपि यदि याचसे तर्हि तदपि तुभ्यं
वितारिष्यते। तत इष्टेरा प्रतिजगाद यदि राज्ञा इष्टा शुभबोधो ४
जायेत तर्हि भवतः कृते मयासादितं भोज्यम् अद्य राजा हामनेन
चागम्यतां। तदानीं राजा व्याहरत्, इष्टेराया निदेशाचरणाय ५
हामनं त्वरयत। अनन्तरं राजा हामनश्चेष्टेरया समासादितं भोज्यम्
ईयतुः।

अनन्तरं नृपो द्राक्षारसपानसमय इष्टेरां बभाषे त्वया किं प्रार्थ्यते? ६
तत् तुभ्यं दायिष्यते। तव वाञ्छा का? अर्द्धराजत्वेन यदि भवेत् तर्हि
सा सेत्स्यति। तत इष्टेरा प्रत्यवदत्, इयं मम प्रार्थना वाञ्छा चास्ति, मयि ७
यदि नृपः प्रसन्नो भवेत् किञ्च मया प्रार्थितं दातुं वाञ्छितं साधयितुञ्च ८
यदि नृपतेरभिमतं स्यात् तर्हि यद्भोज्यमहम् आसादयिष्यामि, तत्र
हामनेन सार्कं नृपतिरायातु श्वो मया नृपतेरादेश आचरिष्यते।

तेन तस्मिन् दिने हामन आह्लादितो हृष्टचित्तश्च वहिरियाय। ९
परन्तु राजद्वारे यदा हामनो मर्दिखयम् अपश्यत् तदानीं स तस्य
समक्षं नोत्तस्थौ न प्रणनाम च तस्मात् हामनो मर्दिखयस्य विरुद्धं को-
पेन परिपुपूरे। तथापि हामनो धैर्य्यम् आललम्बे किञ्च स्वगेहं समेत्य १०
निजबन्धून् निजां जायां सेरशाञ्च समाहूयानिनाय। अपरं हामनस्तेषां ११
सन्निधौ निजैश्वर्य्यस्य गौरवं निजपुत्राणां बहुसंख्यत्वञ्च निवेदयामास
किञ्च राज्ञा तस्य पदम् एधयित्वा कुलीनानां राजभृत्यानाञ्चोपरिष्टात्
तस्य या उन्नतिः कृता तस्या अपि वर्णनां तान् श्रावयाञ्चकार। हामनो १२
ऽपरं जगाद राज्ञीष्टेरा स्वासादितं भोज्यं मां विना कमप्यपरं राज्ञा
सार्कं न समानिनाय श्वोऽर्थमपि नृपेण समम् अहं तया निमन्त्रितो
ऽस्मि। किन्तु यतिकालान् अहं राजद्वारे समुपविष्टं तं यिहूदीयं १३
मर्दिखयं समीक्षे ततिकालान् एतैः सर्व्वै मंम तृप्ति र्न जायते।

१४ तदानीं तस्य जाया सेरशा बन्धवश्च तम् आचचक्षिरे, पञ्चाशद्धस्त-
योच्चं दण्डकाष्ठमेकं निर्म्माप्यतां तत्र मर्दिखयम् उल्लम्बयितुं श्वो नरपतिं
ब्रूहि, ततः परं हृष्टः सन् नृपेण सार्कं भोज्यं याहि। तदानीं तेन वचसा
हामनस्य सन्तोषे जाते स तादृशं दण्डकाष्ठं निर्म्मापयाञ्चकार।

---

## ६ षष्ठोऽध्यायः।

१ पर[illegible]स्तके मर्दिखयस्य सत्कर्म्मणो विवृतिं पाठयित्वा नृपस्य तस्मै पारितोषिकं दातुं वाञ्छनं ४ मर्दिखयस्य व्यापादनाय प्रार्थनार्थं नृपस्याङ्गनं गतेन हामनेना-विज्ञानात् मर्दिखयाय सम्मानदानस्य मन्त्रणा १० तदनुमितं प्रति हामनस्य मनो-गतकथायाः कथनं तत्तोपकण्ठे तदीयभाविविनाशस्य कथाकथनञ्च।

१ तस्यां यामिन्यां महीपते र्निद्राया अभावात् स स्वकीयपुरावृत्तपुस्त-
२ कस्यानयनम् आदिदेश ततो नृपतेः साक्षात् तत्पुस्तके पठ्यमाने तत्र लि-
खिता कथैषा प्रापि यद् विग्थनतेरशनामानौ यौ द्वारिणौ राजनपुंस-
कौ भूपालम् अहश्वेरं व्यापादयितुम् अचेष्टतां, तयो र्मन्त्रणा मर्दिखयेन
३ प्राकाश्यत। ततो राजा पप्रच्छ तत्कृते मर्दिखयाय किं सम्मानम् उपप-
दत्वदर्श? नृपस्य सेवका दासा जगदुः, तस्य निमित्तं किमपि नाकारि।
४ अनन्तरं भूपतिः पप्रच्छ, प्राङ्गणे को विद्यते? तदानीं हामनो मर्दि-
खयस्य निमित्तं निर्म्मापिते दण्डकाष्ठे तस्योल्लम्बनाय राज्ञा सह सम्भा-
५ षितुं राजनिवेशनस्य बहिःप्राङ्गणम् उपातिष्ठत्। अतो नृपस्य दासा
जगदुः, पश्यतु हामनः प्राङ्गणे सन्तिष्ठमानो विद्यते। ततो नृप उवाच,
६ सोऽभ्यन्तरम् आयातु। अतो हामने प्रविष्टे राजा तम् आचचक्षे, नृपो
यस्य सम्मानेन हृष्यति तं प्रति किं कर्त्तव्यं? तदा हामनो मनसा चि-
७ न्तयामास, मदतिरिक्तं कस्यापरस्य सम्मानेन राजा हृष्येत्? अनन्तरं
८ हामनो राजानम् ऊचिवान् राजा यस्य नरस्य सम्माने हृष्यति तस्य
कृते किङ्करै राज्ञः परिधेयं राजकीयवसनं राजवाहको वाजी राज्ञः
९ शिरोभूषकः किरीटश्च समानीयन्तां। किञ्च तद्वसनं स वाजी च राज्ञः
कस्यचित् प्रधानकुलीनस्य करे समर्प्यतां ततो राजा यस्य नरस्य सम्मा-
नेन हृष्यति लोकास्तं तद् राजकीयवस्त्रं परिधाप्य तं वाजिनम् आरोह्य
नगरस्य सन्निवेशं गमयित्वा तस्य समक्षम् एतां भारतीं घोषयन्तु राजा
१० यस्य नरस्य सम्मानेन हृष्यति तं प्रत्येतादृश आचारः कर्त्तव्यः। तदानीं
नरपति र्हामनं निर्दिदेश त्वयेदं त्वरितं क्रियतां। त्वया यद्वद् उक्तं

तद्वद् राजवसनं राजवाजिनञ्च गृहीत्वा राजद्वारे समुपविष्टं यिहूदीयं
मर्दिखयं प्रति क्रियतां, त्वया यानि वचांसि गदितानि तेषाम् एकमपि
न परिहीयतां। तदानीं हामनस्तद्वसनं वाजिनञ्च गृहीत्वा मर्दिखयं ११
वसनं परिधाप्य वाजिनम् आरोह्य च नगरस्य सन्निवेशं गमयाञ्चकार
राजा यस्य नरस्य सम्मानेन हृष्यति तं प्रत्येतादृश आचारः कर्त्तव्य इति
वार्त्तां तस्य पुरस्तात् पुनः पुन र्घोषयाञ्चकार च।

अनन्तरं मर्दिखयः पुनर्व्वारं राजद्वारं जग्मिवान् परन्तु हामनः १२
शोकान्वित आच्छादितमस्तकश्च निजं भवनं गन्तुं त्वरयाञ्चक्रे। अपरं १३
हामनः स्वस्य तासां घटनानां कथां निजां भार्य्यां सेरशां स्वस्य सर्व्व-
बन्धूंश्च समाचचक्षे। तेन तस्य विज्ञलोकास्तदीया जाया सेरशा च
जगदुः, यस्य समक्षं तव पतनम् आरब्धं स मर्दिखयो यदि यिहूदि-
वंशीयो मनुजो भवेत् तर्हि त्वं तस्य प्रभवितुं न पारयिष्यसि किन्तु
तस्य सम्मुखे पतिष्यसि। तेन सह तेषां सम्भाषणकाल एव राजनपुंस- १४
काः समेत्य इष्टेरयासादितं भोज्यं तं नेतुं त्वरयाञ्चक्रिरे।

---

## ७ सप्तमोऽध्यायः।

१ इष्टेरायाः स्ववाञ्छाप्रकाशनं ५ हामनस्य दोषित्वकरणं ७ हामनस्योल्लम्बनाय राज्ञ आदेशश्च।

अनन्तरं नृपे हामने च महिष्या इष्टेरया समं भोजनं कर्त्तुम् आया- १
तवति राजा तस्मिन् द्वितीये दिने द्राक्षारसपानसमये इष्टेरां पुनर्व्वारं २
व्याजहार हे इष्टेरे राज्ञि तव प्रार्थितं किं? तत् तुभ्यं दायिष्यते, तव
वाञ्छा का? ममार्द्धराजत्वेन यदि भवेत् तर्हि सा सेत्स्यति। तदानीन् ३
इष्टेरा राज्ञी प्रतिजगाद, हे राजन् अहं यदि भवतो दृष्ट्यानुगृही-
ता स्यां यदि च भवतोऽभिमतं भवेत् तर्हि मया प्रार्थिता मम प्राणा
मया वाञ्छिताश्च स्वजातीयानां प्राणा मह्यं दीयन्तां। यतो विनाशार्थं ४
बधार्थं लोपार्थञ्च वयम् अर्थतोऽहं मदीयस्वजातीयाश्च विक्रीता अभ-
वाम। यदि वयं केवलं दासत्वार्थं दासीत्वार्थञ्च व्यक्रेष्यामहि तर्हि नीर-
वाहम् अस्थास्यं किन्तु राज्ञ एतया हान्यापि परिपन्थिनस्तृप्ति र्न जायते।

तदानीं नृपतिरहश्वेरः इष्टेरां राज्ञीं जगाद, एतत् कर्म्म कर्त्तुं को ५
मतिमकरोत्? स कुत्रास्ते? इष्टेरा व्याहरत् स द्वेषी रिपुरेष दुष्टो ६
हामनः। ततो हामनो नृपते र्महिष्याश्च समक्षं वितत्रास।